मुद्रापणं च ग्रन्थस्यैतस्य कथं स्यादिति पर्यालोचयम्। इतिकर्तव्यतामूढश्चाहं समभवम्। भगवानेवात्र शरणमिति तमेव समशिश्रियम्। एतदन्तरे 'कविराजपब्लिकेषन्' अध्यक्षाश्श्रीमन्तो माधवार्या महाशया महोदारा ममैतद्वार्तां श्रुत्वा पत्रिकासमुपलब्धये ममावश्यकं द्रविणं भूरि दत्त्वा महत्साहाय्यमाचरन्। ते महान्तस्सदा संस्मरणीया ममेति निवेदये। कृतज्ञतावादांश्च समर्पये तेभ्यो विबुधकल्पकेभ्यः। एतेभ्यश्श्रीमद्भ्यो भगवान् वितरतु सर्वाणि श्रेयांसीति तमर्थयेऽहं मुहुर्मुहुः।

धर्मप्रभवश्श्रीमोचर्ल रामकोटीश्वरमहाशया अपि ममास्मिन् द्रव्यसाहाय्यं कृत्वा मुद्रापणकार्यमविच्छिन्नं प्रावर्तयन्निति तेभ्योऽपि मम धन्यवादा आशासनानि च।

श्रीकन्नेगंटिरेड्डेम्ममहाशया महोदारास्तेनालिपत्तनशिरोमणयो मयि कृतादराः अवश्यमत्र स्मरणीया मम। ते खलु मधुराविजयस्य वचनकाव्यस्य मुद्रापणं कारयित्वा मम महान्तमुपकारमकुर्वन्। तदागतं द्रव्यं सर्वमत्र निक्षिप्य भूरिकार्यमिदं निरवर्तयमहमिति यदि तान् न स्मरामि तदा कृतघ्नो भवामि, अतोऽभिनन्दनानि महाशिषश्च तेभ्यो मम।

अत्र मुद्रापणप्रयत्नश्च महानयं कार्यभारः। समुचिता यन्त्रशाला, विलम्बनमन्तरा परिशुद्धतयैतन्मुद्रणं च कथं स्यादिति पर्याकुलोऽहमभूवम्। तदर्थमान्ध्रभूमिं सर्वां पर्याटिषम्। मद्रपुरीमप्यगममेतदर्थे। यदि मया तत्र स्थीयते कंचित्कालं तदैवैतद् घटत इति यन्त्रणाधिकारिभिरभाणि। कलाशालायामध्यापकस्य मम तत्र निवासो न घटत इत्येतन्मुद्रणे नितरां निराशोऽस्मि।

एतस्मिन् समये कोल्लूरुपुरवासिनश्श्रीचेरुवु शिवरामशास्त्रिणो



निवेदितैतद्वृत्तान्तास्सकुतूहलमवादिषुर्मदीयमुद्रणालये प्रकटीक्रियतेऽवश्यं व्याख्याग्रन्थोऽयमित्यभयमदुः। तथाऽपि कालस्समासन्नः कार्यभरश्च महानिति न विश्वसिम्येतान्। कार्यशूरा एते कान्पूरुपुर्या नूतनान्यक्षराणि समानयन्। अमुद्रापयंश्च यथोदितं परिशुद्धतया ग्रन्थमिमं महान्तं परिश्रममनुभूय यथाकालम्। तेभ्योऽपि मम कृतज्ञतावेदिका नुतयः।

श्रीकाञ्चीकामकोटिपीठाधिप जगद्गुरुश्रीमच्चन्द्रशेखरेन्द्रसरस्वती श्रीपादा ग्रन्थमिमं श्रुत्वा वात्सल्येन मामन्वगृह्णन्नारायणस्मृत्येति तन्महाभाग्यलाभेन कृतकृत्यमात्मानं मन्यमानस्तेभ्यो भगवद्भ्यः कृताञ्जलिस्सप्रश्रयं नमस्सहस्रमर्पयामि शिष्यपरमाणुरहम्।

अन्ये च विद्वद्वर्या विश्वविद्यालयकलाशालाध्यापका महनीयाः कविसम्राजो महान्तोऽधिकारिणश्च मदभिलषितमुररीकृत्य समप्रैषयंस्तदाशयान् यथाकालमिति तेभ्योऽपि मदीयां कृतज्ञतां निवेदयामि।

अस्य ग्रन्थस्य पुरातनचरित्रांशानामावेदिकां पीठिकामलिखन् श्रीवेङ्कटरमणाख्या मदीयमित्राणीति तानपि संमानयामि हृदयपूर्वकं स्नेहेन। तदीयां पीठिकां, मदीयामेतद्ग्रन्थचरित्रप्रबोधिनीं मधुराविजयचरित्रांशानीत्येतां च भूमिकामाङ्गलभाषायां पृष्टमात्रा एव सोत्साहं परिवर्त्य यथाकालं दत्त्वा मयि वात्सल्यं प्रादर्शयन् B. A. B. L. श्रीकोटंराजु कृष्णरायमहाशया विबुधप्रियाः इति तानपि संभवयामि सादरम्।

मम सनामधेयास्सगोत्रा अस्मन्मित्रवर्याः पोतुकूचि सुब्रह्मण्यशास्त्रिणः 'आक्षेपणीयांशाः – समाधानानि' इत्यस्मत्पीठिकांशं परिवर्त्य पृष्टमात्रा ददुरिति तेभ्योऽपि मत्प्रीतिपूर्वका आशिषः।

श्रीमदलमेलुमङ्गमाम्बासमेतश्श्रीमान् वेङ्कटाचलस्वामी सर्वमेतत्कार्यजातं निरवहन्निर्विघ्नमनया कृत्या साकं। समस्थापयन्मामाचन्द्रतारम्। पर्यग्रहीच्च मत्कृतिमिमां पाणिगृहीतीमिति तस्मै कृतमावेदनं स्तमर्पयेऽहं न विस्मर मामेतावता, संस्मर सदा मदीयामिमाम्, समभिषेचय त्वत्कारुण्यकटाक्षसुधारसैर्मां समुद्धर भवाब्धेरस्मादिति मुहुर्मुहुः। इति शम्॥

इति

**व्याख्याता**



## व्याख्यानप्रमापकग्रन्था:

अमरसुधा ( सुधा )
अमर:
अनेकार्थमाला
अमरमाला
कामिकातन्त्रम्
काव्यप्रकाशम्
कामशास्त्रम्
काशिकावृत्ति:
कुमारसंभवम्
कुवलयानन्दम्
क्रियानिघण्टु:
(अज्ञातकर्तृक:)
क्रियानिघण्टु:
( वीरभूपालरचित: )
केशव:
गणरत्नमहोदधि:
गणव्याख्या
गणरत्नव्याख्या
गणपाठ:
गजशास्त्रम्
गजायुर्वेद:
गजशास्त्रम्
गजागम:

गीता
चम्पूभारतम्
छान्दोग्यम्
ज्योतिश्शास्त्रम्
जयमङ्गलम्
त्रिकाण्डशेष:
दमयन्तीश्लेष:
दशरूपकम्
दण्डनीति:
दशावतारचरितम्
धरणि:
नानार्थरत्नमाला
नाममाला
नीलकण्ठीयम्
पञ्चमवेद:
पालकाप्यसंहिता
पुरुषकार:
( दैवव्याख्यानम् )
ब्रह्मवैवर्तम्
ब्रह्माण्डपुराणम्
ब्रह्मपुराणम्

भावप्रकाशः
भागवतम्
महाभाष्यम्
महावीरचरितम्
महाभारतम्
मत्स्यपुराणम्
मानसोल्लासः
मार्कण्डेयपुराणम्
मालतीमाधवम्
मेघः ( मेघसंदेशम् )
रत्नापणम्
रत्नकोषः
रघुवंशम्
रत्नशास्त्रम्
रामायणम्
रुद्रः
ललितात्रिशती
ललितोपाख्यानम्
वराहसंहिता
वरदराजाभ्युदयम्
वायुपुराणम्
विश्वः
विश्वप्रकाशः
वैजयन्ती
शिशुपालवधम्
षड्विंशब्राह्मणम्
संगीतशास्त्रम्
साहित्यरत्नाकरः
सामुद्रम्
सुधा
सौन्दर्यलहरी
हरिवंशः
हरिहरगौरीसामुद्रिकम्
हलायुधः
हैमः

———:O:———

## व्याख्यानप्रमापकग्रन्थकाराः

अलंकारसर्वस्वकाराः
अहोबलपतिः
आचार्यः
आपस्तम्बः
उद्द्योतकारः (नागेशः)
कल्पद्रुमकारः
कालिदासः (रघुवंशकर्ता)
कामन्दकः
कैयटः
कौटिल्यः
गौतमः
चाक्षुषः
जगद्धरः
(मालतीमाधवव्याख्याता)
दण्डी (काव्यादर्शकारः, आचार्यदण्डी)
देवेश्वरः
(देवेन्द्र इति तु प्रमादः)
धनिकः
नारायणपण्डितः
नारदः
पतञ्जलिः
पदार्थलक्षणसंग्रहकारः
बाहटः
बिल्हणः
भट्टमल्लः
भर्तृहरिः
भट्टबाणः (बाणः)
भास्करः
भागुरिः
भारविः
भवभूतिः
भरतः
भट्टिः
भोजः
मनुः
मल्लिनाथः
मकुटः
महाभाष्यकृत्
महाभाष्यकारः
मातृगुप्ताचार्यः
माघः
मुहूर्तदर्पणकारः
याज्ञवल्क्यः
रुद्रटः
रुचिपतिः
(अनर्घराघवव्याख्याता)
लिङ्गाभट्टीयकारः

(गुरुबालप्रबोधकर्ता)
वराहमिहिर:
वाग्भटः
वाचस्पति:
वामन:
(काव्यालङ्कारसंग्रहकर्ता)
वाल्मीकिः
व्यास:
विद्यानाथ:
विद्याधर:
विदग्धमुखमण्डनकारः
वोपालित:
वैजयन्तीकार:
वृत्तिकारः (काशिकाकृत्)
शब्दार्णवकारः
श्रीहर्षः
संक्षेपशारीरकारा:
संवर्त:
साहित्यदर्पणकारः
स्वामी
सिङ्गभूपाल:
हरदत्त:



# कथासंग्रहः

अस्ति विजयानगरसम्राट् बुक्कराजो हरिहरानुजः। अग्र
महिषी च तस्यासीद्देवायीति। तस्मात्तस्यामजायन्त त्रयः पुत्त्राः।
कम्पनः कम्पनरसङ्गमश्चेति। प्रथमः कम्पनस्तत्र सकलविद्यापारंगतो
निशितबुद्धिस्स्वपितुरेव समधिगतशस्त्रास्त्रतुरङ्गमाधिरोहणादिराजोचित
विद्यश्चाभवत्। प्राप्तयौवने च तस्मिन् (ज्येष्ठपुत्त्रे) राजकन्यका
अनुरूपा गुणशीलादिभिस्स्वयमानीय परिणयमकरोत्तस्य पिता यथा
विधि। तासु च काचन पट्टमहिषी वीरकम्पराजस्यास्य प्रियतमाऽ
वर्तत। तया साकं क्रीडन् कश्चित्कालमनयत्स वीराग्रणीः। कदाचि
द्बुक्कराजोऽस्मै राजनीतिं समुपदिश्य समाज्ञपयदमुं, 'संहृत्य द्रवि
डाधिपं चम्पराजं काञ्चीविजयं साधय, प्रजा रञ्जयन् स्वराज्यं
तत्र सुस्थिरं प्रतिष्ठापय। दक्षिणदेशं सर्वं स्वदुर्नयेन व्यथयन्तं तुरुष्क
सम्राजं नामावशेषं नय मधुराविजयं साधय' इति। पितृदेवोऽयं
तदाज्ञां शिरसि स्रजमिव संधार्य, प्रथमतः काञ्चीविजयाय ससैन्यः
प्रतस्थे। पञ्चषेष्वेव दिवसेषु स कण्टकापत्तनमुपेत्य स्वसैन्यानि तत्र
कानिचिद्दिनानि संनिवेश्य चारैर्विदितशत्रुवृत्तान्तस्सैन्यैस्साकं विरिञ्चिपुरं
प्रति जगाम। तत्समीपे च क्षीरनदीतीरे प्रावर्तत महदायोधनमुभयो
स्सेनयोः। संग्रामे च तस्मिन् कर्णाटयोधैः पराभूता द्रविडसेना पला
यिता स्वप्रभुणा साकं राजगम्भीरं नाम पर्वतदुर्गं प्रविवेश। कम्प
राजोऽपि काञ्चीपुरं स्वशिबिरं विधाय राजदुर्गं रुन्धन् ससैन्यस्तमा
चक्राम। चम्पराजोऽपि दुर्गात्ससंभ्रमं महता रोषेण समागत्य द्वन्द्व
युद्धं प्रादात्कम्पराजाय। प्रवृत्ते च तयोर्युद्धे वीराग्रणीं चम्पराज
मवधीत्कम्पराजः। एवं विजित्य काञ्चीं तस्य प्रभुर्भूत्वा प्रजा
रञ्जयन् कश्चित्कालमनयदयं महाराजः। तदानीं रसज्ञशेखरः कम्पन

स्स्वदेवीं गङ्गां चन्द्रोदयवर्णनाय समादिदेश कदाचित् । तया वर्णयन्त्यां तस्यां तया सह प्रमोदमनुभवन् स्वशयनागारं प्रविश्य सुष्वाप कम्पराजः । निद्रावशमापन्ने च तस्मिंस्तदर्धरात्रे मधुराधिदेवता तस्य पुरतस्साक्षात्कृत्य तुरुष्ककिरातेभ्यस्तदानीमनुभवन्तीं स्वदुर्दशां देशदुस्थितिं च दुर्विषहां निवेद्य तुरुष्कसम्राजं तं संहर्तुमगस्त्यप्रेषितं दिव्यायुधमस्मै प्रायच्छत् । तद्वधाय चैनमचोदयत् । अन्तर्हितायां च तस्यां ससैन्यो मधुरामुपेत्य तुरुष्कसेनाभिस्सह युद्ध्वा दिव्यायुधेन तुरुष्कराजं संजहार द्वन्द्वयुद्धे । एवं मधुराविजयं संसाध्य दक्षिणदेशे शान्तिं स्थापयामास धर्मवीरो युद्धवीरश्च कम्पदेवः ॥



# (व्याख्यातृ) वंशावलिः

आसीन्मनीषी निगमागमानां
मूर्तिर्महानच्युतभट्टनामा ।
आस्थानवीथी विजयानगर्या
भाति स्म यस्याश्रयतस्सुधर्मा ॥ ॥ 1 ॥

आश्रित्य यं मूलपुमांसमास्ते
कीर्त्या महत्या हरितस्य गोत्रम् ।
श्रीपोतुकुच्चीत्युपनामधाम
वाग्देवतासंनिधिभागजस्रम् ॥ ॥ 2 ॥

यस्यानुजोऽभूद् गुरुभट्टनामा
बुद्ध्या गुरुर्ब्रह्मणि नित्यसक्तः ।
श्रीब्रह्मचर्याश्रमनैष्ठिकं यं
भीष्मं द्वितीयं मनुते स्म लोकः ॥ ॥ 3 ॥

लोकान् पातुमवातरत्सुरगणैर्यस्मिन्नगस्त्येश्वरो
यस्मिंस्तस्य सती परा निवसति श्रीराजराजेश्वरी ।
श्रीमन्मूलपुरीतिनाम भजते श्वश्रेयसानां सदा
मूलं सत्पुरमर्थवद्यदवनौ क्षेत्राधिराजप्रथम् ॥ ॥ 4 ॥

तस्मिंस्तपस्तप्तुमनाः कुटुम्बी
समागमन्मूलपुरं जवेन ।
काले गते स प्रवया विरागी
ब्रह्मण्यवर्योऽच्युतभट्टनामा ॥ ॥ 5 ॥

पुत्रोऽभवत्तस्य मुनीन्द्रकल्प
श्श्रीनारभट्टश्श्रुतपारदृश्वा ।
यं सिद्धवाचं प्रणिपत्य भक्त्या
ददुर्नृपाला बहुधाऽग्रहारान् ॥ ॥ 6 ॥

तस्याभवद्वेङ्कटसुब्बयाख्य
स्सुतो महान् ज्यौतिषपारदृश्वा ।
यस्यानुजौ वेङ्कटरायपाप
भट्टाभिधौ वास्तुविशारदौ तौ ॥ ॥ 7 ॥

सती तु तस्याभवदुत्तमा स्त्री
पतिव्रता वेङ्कटसुब्बमाम्बा ।
तयोरजायन्त सुतास्त्रयोऽत्र
ज्येष्ठस्सुतो जानकिरामनामा ॥ ॥ 8 ॥

द्वितीयपुत्रश्च तृतीयपुत्र
श्श्रीवेङ्कटप्पश्चलपत्यभिख्यः ।
गतेऽग्रजे, तत्र तृतीयपुत्रे
संतानशून्ये खलु स द्वितीयः ॥ ॥ 9 ॥

समूढवान् वेङ्कटसुब्बमाम्बां
गुणैरुपेतां प्रथितान्ववायाम् ।
श्रीकन्यकाम्बा जननी तु यस्या
स्तातो नु सीतापदपूर्वरामः ॥ ॥ 10 ॥

यस्यास्सगर्भः क्षितिपालमौलि
नीराजिताङ्घ्रिस्स चिदम्बराख्यः ।
धर्मोत्तरस्सर्वमहांस्तपस्वी
भूलोकभूषायितकीर्तिमूर्तिः ॥ ॥ 11 ॥



तयोरहं भाग्यवशेन पुत्रोऽ
भवं, तृतीये सम एव तातः ।
गतोऽस्तमस्मद्दुरदृष्टयोगा
त्ततो गुरुर्मातुल एव मेऽभूत् ॥ ॥ 12 ॥

कष्टानि भूयांस्यनुभूय सोऽय
मवर्धयन्मां सुतनिर्विशेषम् ।
तस्यानृणत्वं मम नैव साध्य
मिहैव वाऽऽगामिषु वा भवेषु ॥ ॥ 13 ॥

विवाहयोग्ये वयसि प्रपन्ने
निदेशतस्तस्य महात्मनोऽहम् ।
श्रीबुल्सुवंशाम्बुधिचन्द्रपाप
यार्यप्रपौत्रीमुदवाक्षमेकाम् ॥ ॥ 14 ॥

सूराम्बिका सा जननी तु यस्याः
पिताऽभवद्वेङ्कटरायनामा ।
माणिक्यनाम प्रथितं च यस्यां
यस्यास्त्रयः पुत्रवरास्सुते द्वे ॥ ॥ 15 ॥

पूर्वस्तु तेषां खलु वेङ्कटेश
श्श्रीजानकीराम इति द्वितीयः ।
गोत्रर्षिनाम्ना प्रथितोऽम्बरीष
स्तृतीय एषोऽग्रजभक्तिभावः ॥ ॥ 16 ॥

श्रीभार्गवी श्रीललिताम्बिका च
पुत्र्यौ महत्यौ गुणगौरवेण ।
श्रीभार्गवी केशवशर्मनाम्ना
युतं पतिं स्वानुगुणं श्रितास्ते ॥ ॥ 17 ॥

सुतद्वयस्य क्रमशोऽथ पत्न्यौ
लक्ष्मीर्जया यत्तनयो रमेशः ।
राजेश्वरीति प्रथिता द्वितीया
महान्ववाये पतिदेवते ते ॥ ॥ 18 ॥

संबन्धिनौ मे हि कुटुम्बसुब्र
ह्मण्याभिधौ यद्गृहिणीमणी तु ।
माणिक्यनाम्नी महती च सीता
रामाम्बिका विश्रुतनामधेया ॥ ॥ 19 ॥

संबन्धिनौ मे सुतया च सुब्र
ह्मण्याह्वयोऽन्योऽपि च रामचन्द्रः ।
ययोर्गृहिण्यौ क्रमशोऽथ सीता
लक्ष्मीश्च बालात्रिपुराम्बिका च ॥ ॥ 20 ॥

एवं महावंशयुतोऽभिवृद्धि
दिने दिने यामि चिदम्बरस्य ।
आशीर्वचोभिः परदेवतायाः
कटाक्षवीक्षामृतसेचनैश्च ॥ ॥ 21 ॥

जीयान्महावंशमहाद्रुमोऽयं
शाखोपशाखाभिरभिप्रवृद्धः ।
पुष्पैः फलैः पुत्रसुतप्रपौत्रै
राकल्पमीशानकृपावलम्बः ॥ ॥ 22 ॥

## देवतास्तुतिः

चराचरं जगच्चक्रं
यद्भासा भासतेऽन्वहम् ।



विश्वात्मकं महज्ज्योति
स्तच्छ्रये ज्ञानलब्धये ॥ ॥ 1 ॥

श्रीश्रीनिवासकृतिकीर्तनतत्पराणां
किं वा भवन्ति बहुदुःखकृदन्तरायाः ।
चण्डांशुभिर्नभसि दीव्यति भास्करेऽस्मिन्
कर्तुं तमांसि किमु वा प्रभवन्ति लोके ॥ ॥ 2 ॥

## गुरुवन्दनम्

भाष्याम्भोधिरमन्थि यस्य कृपया दुर्वादिनक्रग्रहा
भीलश्शब्दमहामणिप्रचयभूस्सर्वागमालङ्कृतिः ।
यस्याचार्यकमाददान्मम परादेवीकृपापात्रतां
वन्दे तं हनुमद्गुरुं जयतु तत्कारुण्यपारम्परी ॥ ॥ 1 ॥

आन्ध्रपद्मपुराणस्य
स्रष्टा कर्ता शतं कृतेः ।
महीशूरमहास्थानी
विद्वान् योऽभूच्चिदम्बरः ॥ ॥ 2 ॥

आसेतुहिमवद्भूमि
र्वाग्भूतेर्यस्य किङ्करा ।
चिदम्बरकवीशानं
साहितीगुरुमाश्रये ॥ 3 ॥

तान् स्तवीमि महाभागान्
ये चान्ये गुरवो मम ।
शास्त्रसाहित्यविज्ञान
भिक्षां तां कृपया ददुः ॥ ॥ 4 ॥

## उपक्रमः

पितृदेवं मातृदेवीं नमस्कृत्य यथाविधि ।
मधुराविजयं नाम काव्यं व्याख्यातुमारभे ॥ ॥ 1 ॥

मधुराविजयाभिख्या काव्यश्रीर्जयताच्चिरम् ।
बुक्कराजस्नुषागङ्गादेवीसागरसंभवा ॥ ॥ 2 ॥

व्याख्या सेयं तस्या मधुरा भावप्रकाशिकाभिख्या ।
विज्ञानामृतदोग्ध्री काऽपि च सुरभिर्जयत्यवनौ ॥ ॥ 3 ॥

यस्मिन् वास्तुविशारदास्समभवन् यस्मिंस्तपोराशयो
ब्रह्माणस्समुदीयुरन्ध्रजगति प्रख्यातविख्यातयः ।
तस्मिन् दुग्धपयोदधौ कृतजनिश्श्रीपोतुकुच्च्यन्वये
सुब्रह्मण्यकलानिधिर्मधुरवाक्कर्ताऽयमेतत्कृतेः ॥ ॥ 4 ॥

क्व वा गङ्गादेव्या मधुरमधुरा भावसुभगा
गिरां गुम्फास्सद्यो रसिकजनताह्लादनचणाः ।
क्व वाऽयं मन्दात्मा श्रुतिनिचयलोकेष्वकुशल
स्तथाप्यस्तीत्येतां रचयति कृतिं वेङ्कटपतिः ॥ ॥ 5 ॥

उत्सार्य मात्सर्यमहापिशाचं
दोषं गुणं वाऽपि विमृश्य बुद्ध्या ।
विद्वान् विजानातु परिश्रमं मे
विद्वज्जनामोदफला हि विद्या ॥ ॥ 6 ॥

इति
— व्याख्याता

श्रीः

# मधुराविजयम्

## भावप्रकाशिकाख्यव्याख्यासमेतम्

## प्रथमसर्गः

प्रत्यूहध्वान्तमार्तण्ड मण्डलश्शुभमण्डलः ।
हेरम्बस्सर्वदालम्बो भूयात्सवार्थसिद्धये ॥

वागर्थविग्रहौ साक्षाज् शिरोधृतकलानिधी ।
शिवौ क्षेमंकरौ नौमि ज्ञानसंपत्समृद्धये ॥

शरणं तव वाणि संप्रपद्ये
चरणं संश्रितपारिजातभूजम् ।
करुणामृतसेचनैरपाङ्गैः
कुरु मे मातरभीप्सितार्थलाभम् ॥

समन्वयपथेनेह नातिसंक्षेपविस्तरम् ।
व्याख्यायतेऽखिलं भाववैशद्यं तु विशिष्यते ॥

भावप्रकाशिकव्याख्योत्तेजितोऽयं महामणिः ।
मधुराविजयो नाम्ना बुधशीर्षेषु राजते ॥

अथ तत्रभवती गङ्गादेवी नाम कवयित्री "करोति कीर्तिमर्थाय कल्पते हन्ति दुष्कृतम् । उन्मीलयति चाह्लादं किं न सूते कवेः कृतिः ॥" इति वक्ष्य माणदिशा काव्यस्य सर्वार्थसाधकतां पश्यन्ती, भर्तुरात्मनः कम्पराजस्य चरितं मधुराविजयं नाम महाकाव्यं चिकीर्षन्ती, "आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्" इत्याचार्यदण्डिनस्सूक्तिमनुसरन्ती, शिष्टपरंपरागतमनूचान माचारं परिपालयन्ती, विरचयिष्यमाणस्य स्वनिबन्धनस्य निर्विघ्नपरि समाप्तिमाकाङ्क्षन्ती विघ्नेश्वरस्तवात्मकमाशीरूपं मङ्गलमन्तेवासिनामनुजि घृक्षया ग्रन्थतो निबध्नाति —

**कल्याणाय सतां भूयाद् देवो दन्तावलाननः ।**
**शरणागतसङ्कल्प कल्पनाकल्पपादपः ॥ ॥ 1 ॥**

**कल्याणायेति ॥** शरणाय रक्षणाय आगताः प्राप्ताः शरणागताः शरणार्थिन इति यावत् । 'शरणं गृहरक्षित्रोर्वधरक्षणयोरपि' इति मेदिनी । तेषां सङ्कल्पाः मनोरथाः । तेषां कल्पना परिपूर्णतासम्पादनम् परिपूरण मिति यावत् । पर्याप्तिवचनात् कृप्धातोर्ण्यन्तात् 'ण्यासश्रन्थो युच्' इति युच् । 'कृपो रो लः' इति लः । तत्र कल्पपादपः कल्पवृक्षभूतः । कल्पवृक्ष इव स्वाश्रितानामभीष्टप्रदायक इति भावः । पादशब्दश्चात्र 'पादाभ्यां पाति रक्षति' इति व्युत्पत्त्या पादसमाश्रयणमात्रतो देवस्यास्यानुग्राहकत्वं स्फोरयन् परमकारुणिकत्वमस्य बोधयति । दन्तावलम् आननम् मुखम् यस्य दन्तावलाननः । अत्र दन्तावलशब्देन दन्तावलाननमुच्यते । 'समुदाये वर्तमनाश्शब्दा अवयवेष्वपि वर्तन्ते । तैलं भुक्तम्, घृतं भुक्तम् इति यथा' इति महाभाष्यवचनात् । 'दन्ती दन्तावलो हस्ती' इत्यमरः । गजमुखमुख इत्यर्थः । स एव देवः देवता सर्वलोकाराध्यत्वात् स्वामी वा गणनाथत्वात् । दीव्यति देवः सर्वदा प्रकाशनस्वभाव इति परब्रह्मात्मकत्वमस्य स्फुरति । तेन सर्वदेवात्मकतया सर्वसिद्धिप्रदत्वम् सर्वोत्कृष्टत्वं च ज्ञायते । सताम् विदुषाम् साधुजनानां च । 'सन् सत्ये विदुषि श्रेष्ठे साधौ भवति च त्रिषु' इत्युभयत्रापि नानार्थरत्नमाला । कल्याणाय मङ्गलाय मङ्गलं विदधातुम् भूयात् भवतात् । मङ्गलं विदधात्वित्यर्थः । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । 'श्वश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । गजाननत्वं च विघ्नेश्वरस्य पुराणेषु प्रसिद्धम् । ब्रह्मवैवर्ते गजेश खण्डे नवमाध्याये श्रीकृष्णस्यैव गजाननतया जनिमुक्त्वा 'शनिदृष्ट्या शिरश्छेदात् गजवक्त्रेण योजितः । गजाननशिशुस्तेन नियतिः केन वार्यते' इत्युक्तम् । केचित्तु प्रणवात्मकत्वमस्य बोधयति गजाननत्वमित्यपि वर्णयन्ति । यद्यपि कालिदासादयो महान्तः कवयः काव्यारम्भे स्वेष्टदेवता स्तास्तास्तुवन्ति । तथापीयं कवयित्री तासां सर्वासामपि विघ्ननिरासने



पराधीनतां सम्भावयन्ती गणाधिपतिमेव स्वकाव्यमुखे स्तौति । उक्तं च केनचित्कविवरेण—"यत्पादाम्बुरुहावलम्बशरणाः पूर्वे पुमांसस्त्रय । स्त्रैलोक्य स्थितिसर्गसंहृतिविधौ निर्विघ्नसिद्धोद्यमाः" इति । आदौ कल्याणाय सताम् भूयात् देवः दन्तावलाननः इति मङ्गलवाचिनां पदानां बहूनां नैरन्तर्येण प्रयोगात्कल्याणप्राचुर्यं चात्र दर्शितम् । सुवर्णवाचिनः कल्याण शब्दस्य प्रयोगात् सुवर्णजातं सतां ददात्वित्यर्थान्तरमपि । तेन लक्ष्मीगणपतित्व मप्यस्य सूचितं भवति । 'लक्ष्मीकरः कवर्गस्स्यादिति काव्यादौ कवर्गप्रयोग मङ्गलकरः । भूमिदैवतकस्य सर्वगुरोर्मगणस्य प्रयोगोऽतीव क्षेमङ्करः । 'मो भूमिस्त्रिगुरुश्शुभं वितनुते' इति वचनात् । कल्याणादिपदानां भद्रादि वाचकत्वाद्वर्णगणादिशुद्धेरभ्युच्चयस्सिद्धः । गजानने कल्पवृक्षत्वरूपणाद्रूपक मलङ्कारः । 'कल्पकल्पनाकल्प' इति बहूनां वर्णानां पुनःपुनरावृत्तेर्वृत्त्यनु प्रासो नाम शाब्दोऽलङ्कारः । "एकद्वित्र्यादिवर्णानां पुनरुक्तिर्भवेद्यदि । संख्यानियममुल्लङ्घ्य वृत्त्यनुप्रास ईरितः" इति साहित्यरत्नाकरे तल्लक्षण मुक्तम् । अस्मिन् सर्गे वाल्मीक्यादीनां महाकवीनां पन्थानमनुगच्छन्ती प्रथमतश्श्लोकाख्यमानुष्टुभमेव वृत्तमारचयदियं कवयित्री । तल्लक्षणं त्वेवम् 'पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः । गुरुष्षष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षणम्' इति ।

'मनाक्काव्यार्थसूचना' इति काव्यार्थोऽप्यत्र सूच्यते । तथाहि-दन्तशब्देन दन्तरुचयो लक्ष्यन्ते कार्यकारणयोरभेदोपचारात् । तथा च प्रशस्ता दन्ता अस्येति दन्तावलशब्देन मन्दस्मितमुच्यते। तत् आनने यस्य सः दन्तावलाननः मन्दस्मितवदनः । देवः प्रभुः कम्पराजः सतां कल्याणाय भूयात् तुरुष्कराज वधेन देशक्षेमं सन्धाय शिष्टरक्षणं कुर्यादित्याशास्यते । एतेन दुष्टशिक्षण शिष्टरक्षणे कारणजन्मनोऽवतारमूर्तेरवश्यम्भाविनी इति पुरतो वर्ण्यमानं विष्णोर्मूर्त्यन्तरत्वं च कम्पराजस्य सूचितं भवति । 'शरणागतसङ्कल्पे' त्याद्युत्तरार्धेन च, मधुरापुराधिदेवतायाः कम्पराजं प्रति शरणागतिः तन्मनो-रथपूरणाय तुरुष्कराजवधः मधुराविजयश्च प्रस्तूयते ।

एतं श्लोकमारभ्य पञ्चविंशतिश्लोकैः 'देवताप्रार्थना गुरुस्तुतिः कवि प्रशंसा कुकविनिन्दा काव्यस्वरूपप्रयोजने' इत्याद्यनेकांशा अस्मिन् सर्गे वर्णिताः । सर्गोऽयं देवतास्तुत्या समुपक्रान्तः परिसमाप्यते महाराजदम्पत्योः स्सुखानुभूतिकथनेन ॥

अत्रभवती श्रोतॄणामध्येतॄणां च शुभाशिषं प्रयुज्यात्मार्थे स्वेष्टदेवता प्रसादमाशासाना नमस्क्रियारूपमपि मङ्गलमाचरति –

**स्रष्टुः स्त्रीपुंसनिर्माण मातृकारूपधारिणौ ।**
**प्रपद्ये प्रतिबोधाय चित्प्रकाशात्मकौ शिवौ ॥ ॥2॥**

**स्रष्टुरिति ॥** स्रष्टुः सृष्टिकर्तुः अजस्य । स्त्री च पुमांश्च स्त्रीपुंसम् । 'अचतुरविचतुर' इत्यदिना निपातनादच् । तस्य निर्माणम् सृष्टिः तस्मिन् मातेव मातृका । " इवे प्रतिकृतौ " इति कन् । तथाभूतं रूपम् निदान भूता आकृतिः तत् धर्तुम् शीलमनयोः तथोक्तौ । धृञ् धारणे । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । परमेश्वरी परा शक्तिर्ब्रह्मणः स्त्रीनिर्माणानु गुणतया स्वीयामाकृतिमधात् । पुरुषनिर्माणानुगुणतया परमेश्वरोऽप्येवमेवेति भावः । अत्र मनुः । "द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् । अर्धेन नारी तस्यां सा विराज़मसृजत्प्रभुः ॥" इति । अतएव " स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेस्सिसृक्षया । प्रसूतिभाजस्सर्गस्य तावेव पितरौ स्मृतौ" इत्याह महाकविः कालिदासः । मातृकाशब्दोऽत्र वर्णमालापरोऽपि । वर्णमाला च अर्थ वच्छब्दजातमेवेति वागर्थावुच्येते । तस्या रूपम् आकारः तत् धर्तुम् शील मनयोरिति तथोक्तौ । वागर्थरूपधारिणौ शिवावित्यप्यर्थान्तरम् । तथा चोक्तं वायुपुराणे " शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा । अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः" इति । आम्नायरूपाविति भावः । धाता यथापूर्वमकल्पयत् इति वेदमुखेनैव सृष्टेः प्रवृत्तत्वात् सृष्टिकारणत्वं च तस्या उपपद्यते । अनेन यो यद्धत्ते स तद्धत्ते इति न्यायेन शब्दार्थसिद्धिरप्येताभ्यामात्मनः सूचिता । चित् प्रकाशश्च चित्प्रकाशौ । तौ आत्मानौ स्वरूपे ययोः तथोक्तौ ।



चिदात्मिका शक्तिः प्रकाशात्मकश्शिवश्चेत्यर्थः । यद्यपि चित्प्रकाशयोरनन्यता तथाऽप्यग्नेरौष्ण्यस्येव भेदव्यपदेशस्सगुणे ब्रह्मणि न विरुध्यते । शिवा च शिवश्च शिवौ । पार्वतीपरमेश्वरौ । 'पुमान् स्त्रिया' इत्येकशेषः । परमेश्वरः स्वयंप्रकाशात्मकः । "न तत्र सूर्यो भति न चन्द्रतारकाः । नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः । अतएव प्रकाशात्मकत्वं प्रकाशशब्दव्यवहारश्च तस्मिन्नुपपद्यते । तस्य च द्वे शक्ती चिज्जडात्मिके । तत्र परमेश्वरस्य विमलं चैतन्यमेव चिच्छक्ति रित्युच्यते । अन्या तु जडात्मिका अविद्याशक्तिरिति व्यवह्रियते । एतयो स्संसर्गाच्चराचरात्मकं जगदुत्पद्यते । यथाहुस्संक्षेपशारीरककाराः "चिच्छक्तिः परमेश्वरस्य विमलं चैतन्यमेवोच्यते । तस्यैवास्य जडा परा भगवतश्शक्ति स्त्वविद्यात्मिका । संसर्गाच्च मिथस्तयोर्भगवतश्शक्त्योर्जगज्जायते । सच्छक्त्या सविकारया भगवता चिच्छक्तिरित्युच्यते " इति । यदा परमेश्वरस्य सृष्टेरुन्मुखत्वं तदा शक्त्या साकं गाढसम्बन्धस्तस्य भवति । तदानीं स्त्री पुंसात्मकात्तस्माज्जगदुद्भवति । शक्त्या साकं प्रकाशात्मकस्य शिवस्य गाढ संबन्ध एव वर्णित एवं भगवत्पादैस्सौन्दर्यलहर्याम् "शिवश्शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम् । नचेदेवं देवो न खलु कुशल स्पन्दितुमपि" इति । एतन्मूलकान्येव " शिवशक्त्यात्मकं विद्धि जगदेतच्चराचरम् " इत्याद्यागम वाक्यानि । मन्त्रशास्त्ररहस्यार्थोऽप्यत्र कश्चन निगूढं निक्षिप्त इति प्रति भाति । तथाहि – चिदानन्दः प्रकाशानन्दश्चेत्युभौ मन्त्रशास्त्रप्रवर्तकावा चार्यस्वामिनौ । तौ शिवरूपौ । एतन्मनसि निक्षिप्योक्तं ' चित्प्रकाशात्मकौ ' इति । ' शिवौ ' इत्यनेन कामेश्वरीकामेश्वरदेवताभिधीयते । श्रीचक्रं च तस्याः वपुरिति तौ श्रीचक्ररूपधारिणौ । श्रीचक्रं च शिवशक्तिचक्रात्मकम् । अत्र ललितात्रिशती 'त्रिकोणरूपिणी शक्तिः बिन्दुरूपश्शिवस्स्मृतः' "चतुर्भि श्शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः । शिवशक्त्यात्मकं ज्ञेयं श्रीचक्रं शिव योर्वपुः " इति । श्रीचक्रंचेदं प्रपञ्चस्य सर्वस्य, मूलप्रकृतिभूतम् । यथाहुर्भग वत्पादाः सौन्दर्यलहर्याम् – " चतुर्भिश्श्रीकण्ठैश्शिवयुवतिभिः पञ्चभिरपि

प्रभिन्नाभिश्शम्भोर्नवभिरपि मूलप्रकृतिभिः" इति । तस्मादेव योनिशब्द व्यवहार एतेषु (नवसु चक्रेषु) सङ्गच्छते । नवयोनयो नवधात्वात्मकाः इत्युच्यन्ते । तत्र केषांचिच्छक्तिमूलकत्वम् केषांचिच्छिवमूलकत्वम् । विशेषतः कामिकातन्त्रे एवमुक्तम् " त्वगसृङ्मांसमेदोऽस्थिधातवश्शक्ति मूलकाः । मज्जाशुक्लप्राणजीवधातवश्शिवमूलकाः" इति । श्रीचक्रे शक्ति चक्राणि पञ्च शिवचक्राणि चत्वारि । एवं शिवशक्त्यात्मकमेतदेव श्रीचक्र मित्युक्तम् । मातृकाचक्रं च शिवचक्राङ्गम् । मातृका च वर्णात्मिका । अत्रागमः । "मातृकां वशिनीयुक्तां योगिनीभिस्समन्विताम् । गन्धाद्याकर्षिणी युक्तां संस्मरेत्त्रिपुराम्बिकाम् ॥" इति । "वशिन्यादयश्शक्तयः पञ्चाशद्वर्णा त्मिकाः" इतिच । अत्र मातृकाशब्देन श्रीचक्रमुपलक्षणविधया बोध्यते । तच्च स्रष्टुस्सृष्टेर्मूलप्रकृतिभूतमिति पूर्वमुक्तम् । तदेतत्सर्वं मनसि निक्षिप्य "स्रष्टु स्त्रीपुंसनिर्माण" इत्याद्युक्तं कवयित्र्येति संक्षेपः । तौ कर्मभूतौ । प्रति बोधाय ज्ञानार्थे प्रपद्ये सेवे । पद गतौ दिवादिः लट् । "शिवरूपाज् ज्ञानमहं त्वत्तो मुक्तिं जनार्दनाकारात् । शिखिरूपादैश्वर्यं त्वत्तश्चारोग्यमिच्छामि" इति स्मरणादैहिकामुष्मिकज्ञानं शिवरूपाद्वामार्धजानेरहमभिलषामीति भावः ॥

स्वेष्टदेवतां नमस्कृत्य सर्वविद्यानामधिष्ठानदेवतां वाणीं स्तौति–

**महाकविमुखाम्भोज मणिपञ्जरशारिकाम् ।**
**चैतन्यजलधिज्योत्स्नां देवीं वन्दे सरस्वतीम् ॥ ॥3॥**

**महाकवीति** ॥ महान्तः पूज्याः कवयः महाकवयः 'सन्महत्परमोत्तमो त्कृष्टाः पूज्यमानैः' इति समासः। तेषाम् मुखान्येव अम्भोजानि पद्मानि तान्येव मणीनां पञ्जरम् । प्रकृतिविकृतिभावे षष्ठी । मयडर्थस्यान्यथा लाभे मयड भावो न दोषाय । रत्नमयपक्षिबन्धनगेहानीत्यर्थः । जातावेकवचनम् । तत्र शारिकाम् शृणाति दुःखं विरहिणामिति शारिका पक्षिभेदः कीरप्रिया । शॄ हिंसायाम् ण्वुल् । महाकविजिह्वास्थलीषु नरीनृत्यमाना सरस्वती तत्रैव



नियतं तिष्ठन्ती मणिपञ्जरेषु विहरन्ती शारिकेव तासामलङ्कारभूता स्थितेति भावः । चेतनैव चैतन्यम् बुद्धिः । स्वार्थे ष्यञ् । तदेव जलधिः समुद्रः । 'रत्नाकरो जलनिधिर्यादःपतिरपांपतिः' इत्यमरः । जलानि धीयन्ते ऽस्मिन् 'कर्मण्यधिकरणे च' इति किः । बुद्धेः जलधित्वारोपेण तत्तत्प्राणि बुद्धीनां तासामनन्तत्वमुक्तं भवति । तस्य ज्योत्स्नाम् चन्द्रिकाम् । समुद्रस्य ज्योत्स्नेव तत्तत्प्राणिबुद्धीनां विषयदर्शनेन समुल्लासजननीमिति भावः । सरस्वतीम् तन्नाम्नीम् देवीम् देवताम् वागधिष्ठानभूताम् । दिवु क्रीडा विजिगीषाद्युतिस्तुतिव्यवहारमोदमदकान्तिस्वप्नगतिषु - इति धातोरच् । ङीप् । किञ्च देवीम् द्योतनध्वननयोः पर्यायत्वेन ध्वनिरूपाम् उत्तमकाव्या त्मकत्वात् ध्वनेः । तथा स्तुत्याम् वागात्मकतयाभिनन्द्याम् । अथवा देवीम् मोदमानाम् आनन्दरूपाम् श्रवणत एव परमानन्दसंधायिनीम् यतो मोदरूपा तत इयं मोदप्रदा स्वाश्रितानामिति च व्यज्यते । अथवा देवीम् कमनीयाम् सर्वैरप्यभिलषणीयाम् इत्येवंप्रकारेण धात्वर्थानां सर्वेषामप्यत्र सङ्गतिर्ज्ञेया । वन्दे अभिवादये । वदि अभिवादनस्तुत्योः । तस्माल्लिट् । बुद्धीनां जलधित्व रूपणेन देव्यां ज्योत्स्नत्वारोपेण च रूपकमलङ्कारः । पूर्ववत् मुखाम्भोज मित्यनेन कविमुखानां शुचित्वं कोमलत्वं तेन च सरस्वत्याः नित्यनिवासश्च सूच्यते । मुखाम्भोजमणिपञ्जरमिति रूपकरूपकम् । अम्भोजैश्च मुखानि रूप्यन्ते मणिपञ्जरैश्चाम्भोजानीति । यथाह दण्डी "मुखपञ्जररङ्गेऽस्मिन् भ्रूलतानर्तकी तव । लीलानृत्यं करोतीति रम्यं रूपकरूपकम्" इति । 'मुखा म्भोजानि' इत्युपमितसमासोऽप्यत्र सुवचः । विस्तरस्तु मदीयायामान्ध्र व्याख्याभूमिकायां द्रष्टव्यः ॥

इत्थं देवताप्रार्थनां कृत्वा विजयनगरसाम्राज्यराजगुरुं स्तौति –

**असाधारणसार्वज्ञ्यं विलसत्सर्वमङ्गलम् ।**
**क्रियाशक्तिगुरुं वन्दे त्रिलोचनमिवापरम् ॥ ॥ 4 ॥**

**असाधारणेति** ॥ असाधारणम् असदृशम् निरुपमम् । सर्वं जाना

तीति सर्वज्ञः । 'इगुपधे' त्यादिना कः । सर्वज्ञस्य भावः सार्वज्ञ्यम् । भावे ष्यञ् । असाधारणं सार्वज्ञ्यं यस्य तम् । गुरुपक्षे इदम् । अन्यत्र असाधारणम् अनन्यलभ्यम् , अनितरदुर्लभम् ईश्वरसर्वज्ञत्वस्य अविद्यानाच्छादितत्वादितरापेक्षया वैलक्षण्यम् । शेषं प्राग्वत् । विलसत्सर्वमङ्गलम्-विलसन्ति दीव्यन्ति कान्तिमन्ति सर्वाणि मङ्गलानि शुभानि यस्य तम् सर्वश्रेयोनिदानमिति यावत् गुरुपक्षे इदम् । इतरत्र विलसन्ती वामार्धे भासमाना सर्वमङ्गला पार्वती यस्य तम् । 'शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला' इत्यमरः । अपरम् द्वितीयम् । गुरुपक्षे इदम् । अन्यत्र - न विद्यते परः यस्मात्तम् अद्वितीयमित्यर्थः । त्रीणि लोचनानि यस्य तम् महेश्वरम् तमिव स्थितमित्यध्याहारः । क्रियाशक्तिगुरुम्-क्रियाशक्तीशनामानमाचार्यम् 'क्रियाशक्तीश' इत्यस्यैव क्रियाशक्तिरिति व्यवहारः । नामैकदेशे नामग्रहणमिति न्यायात् । वन्दे अभिवादये । वदि अभिवादनस्तुत्योः - लट् । श्लोकेऽस्मिन्नपरस्त्रिलोचन इवेत्यपरशब्दस्य इवशब्दस्य च प्रयोगादलंकृतिरुत्प्रेक्षा । अपरत्रिलोचनस्याप्रसिद्धत्वात् । प्रसिद्धसादृश्यवर्णनाभावान्नोपमा । "उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः" इत्यनेन प्रसिद्धसादृश्यस्यैव तदुपजीवकत्वाभ्युपगमादालङ्कारिकैः । अतएवाप्रसिद्धगुणक्रियाभिसंधानादप्रकृतत्वेन प्रकृतसंभावनमुत्प्रेक्षेति लक्षणज्ञा आलक्षयन् । अत्र अलङ्कारसर्वस्वकाराः – "अपरशब्देन प्रकृतस्याप्रकृतत्वाध्यवसायप्रतीतेरिवशब्देन तस्य साध्यत्वप्रतीतेरुत्प्रेक्षैव" इति । अयमत्र विवेकः – इवशब्दमात्रप्रयोगे उपमा । अपरशब्दमात्रप्रयोगे अतिशयोक्तिः । उभयोः प्रयोगे तु उत्प्रेक्षा । श्लेषस्तूत्प्रेक्षाबीजभूतसाधर्म्यमात्रनिर्वाहकत्वेन समुपक्षीणशक्तिकोऽभवदित्येतदङ्गम् । तस्मात्सङ्करः ॥

अथ वाल्मीक्यादिमहाकवींस्तत्तद्गुणविशेषनिर्देशपूर्वकं प्रशंसति —

**चेतसोऽस्तु प्रसादाय सतां प्राचेतसो मुनिः ।**
**पृथिव्यां पद्यनिर्माण विद्यायाः प्रथमं पदम् ॥** ॥5॥



**चेतस इति ॥** पृथिव्याम् भुवि भूलोके । पद्यानाम् छन्दोमयीनां फणितीनाम् निर्माणम् निर्मितिः रचना सैव विद्या कविताविषयिणी कला काव्यशिल्पमिति यावत् । तस्याः प्रथमम् - आदिमम् पदम् स्थानम् । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । आदिकविरिति यावत् । विद्यायाः सरस्वत्याः साहितीरूपायाः भूलोकमवतरन्त्याः प्रथमम् पदम् मुख्यं स्थानम् । पादनिक्षेपणस्य आदिम आश्रय इति च । प्रचेतसः वरुणस्य अपत्यं पुमान् प्राचेतसः 'प्रचेता वरुणः पाशी' इत्यमरः । तस्यापत्यमित्यण् । वाल्मीकिः वरुणपुत्र इति प्रसिद्धिः । मुनिः वाचंयमः मौनव्रती 'वाचंयमो मुनिः' इत्यमरः । वाल्मीकिमहर्षिरित्यर्थः । सताम् कवीनाम् 'सन् सुधीः कोविदो बुधः । धीरो मनीषी ज्ञः प्राज्ञस्संख्यावान् पण्डितः कविः' इत्यमरः । चेतसः मनसः 'चित्तं तु चेतो हृदयम्' इत्यमरः । प्रसादः प्रसत्तिः नैर्मल्यम् तस्मै तं विदधातुम् अस्तु भवतात् । चित्तनैर्मल्यं विदधात्वित्यर्थः । 'क्रियार्थोपपदस्य च' इति चतुर्थी । अस्त्वित्यस्तेः प्रार्थनायां लोट् । कालुष्येऽपगते दर्पण इवावरणापगमे शुद्धं वस्त्वन्तःकरणे स्फुरति । शुद्धवस्तुस्वरूपावगतिश्च कवेरावश्यिकेति सा प्रार्थ्यते कवयित्र्या । अतएवाह वाग्भटः - "अधीत्य शास्त्राण्यभियोगयोगादभ्यासवश्यार्थपदप्रपञ्चः । तं तं विदित्वा समयं कवीनां मनःप्रसत्तौ कवितां विदध्यात्॥" इति। अर्थोत्पत्तिहेतुप्रदर्शनावसरे च स एव पुनराचख्यौ "मनःप्रसत्तिः प्रतिभा प्रातःकालोऽभियोगिता । अनेकशास्त्रदर्शित्वमित्यर्था लोकहेतवः॥" इति । किञ्च प्रसादो नाम काव्यगुणः । स चालङ्कारिकैरित्थमभिहितः "शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः । व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः॥" इति । एतद्विवरणमपि तैरेव कृतम् "माधुर्यं स्वच्छशर्कराजलवत् यो गुणोऽन्यद्व्याप्य चित्तं झटित्येव रसेन व्याप्नोति स प्रसादः । अयं सर्वेषु रसेष्वाधेयतया सर्वासु रचनासु व्यङ्ग्यतया स्थितः" इति। तं विदधात्वित्यपि काचित्स्फूर्तिः। प्रसादशब्दोऽनुग्रहपरः तं कर्तुमस्त्वित्यर्थान्तरम् । आदिकाव्ये वाल्मीकीये रामायणे प्रसादगुणोऽस्तीति विशेषगुणाविष्करणमपि व्यङ्ग्यमर्यादया क्रियते ॥

अथ अष्टादशपुराणकर्तारं व्यासं नौति –

**वैयासके गिरां गुम्फे पुण्ड्रेक्षाविव लभ्यते ।**
**सद्यस्सहृदयाह्लादी सारः पर्वणि पर्वणि ॥ ॥6॥**

**वैयासक इति ॥** व्यासकेन प्रोक्तम् वैयासकम् तस्मिन् । व्यास प्रोक्ते इत्यर्थः । वेदान् व्यस्यति वेदव्यासः कर्मण्यण् । "नामैकदेशे नाम ग्रहणम्" इति न्यायेन तस्यैव व्यास इति व्यवहारः । तस्मात्स्वार्थिक कन्नन्तात् 'तेन प्रोक्तम्' इत्यण् । 'नय्वाभ्यां पदान्ताभ्याम्' इत्यैजागमः । यस्येति चेति लोपः । वैयसिके इति त्वपपाठः । अतएव महाभाष्यकर्ता 'सुधा तुरकङ्च'इति सूत्रे 'सुधातृव्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्यम्' इति वार्तिकम् प्रत्याख्यायन् "तर्त्तर्हि वक्तव्यं न वक्तव्यम् । प्रकृत्यन्तराण्ये वैतानी" त्याह । कैयटोऽप्येवं व्याख्यात् "प्रकृत्यन्तराणीति" स्वार्थिककन्प्रत्य यान्तत्वादिति भावः । अव्यविकन्यायेन च कन्रहितैर्वाक्यमेव भवति । व्यासकशब्दाच्च कन्नन्तादृषिवाचिनोऽपि बाह्वादेराकृतिगणत्वादिञ् भवति। नतु ऋष्यणिति भावः" इति । अत्रोद्द्योतकारः 'स्वार्थिके' ति ॥ व्यासादि विषयमिदम् । अतएव वैयासकी संहितेत्यस्य सिद्धिः । अतएव वैयासक्यां संहितायामिति पुराणेषु पठ्यते । 'वैयासिक्या' मिति त्वपपाठः इति । विस्तरेण प्रतिपादितमिदं सर्वमान्ध्रचामम्सद्व्याख्यायाम् । गिराम् वाचाम् गुम्फे ग्रन्थने तद्रूपे ग्रन्थे भारत इत्यर्थः । गुम्फ ग्रन्थ इति धातोः भावे घञ् 'घञजपाः पुंसि' इति पुंलिङ्गता च । पुण्ड्रः इक्षुः पुण्ड्रेक्षुः इक्षु विशेषः । 'रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः' इत्यमरः । तत्स्वरूपं तूक्तमन्यत्र "इक्षुः कर्कटको वंशः कान्तारो वेणुनिस्सृतः। इक्षुरन्यः पौण्ड्रकश्च रसालस्सुकुमारके" इति । वाचस्पतिरप्याह – "पुण्ड्रेक्षौ पुण्ड्रकस्सेव्यः पौण्ड्रकोऽतिरसो मधुः" इति । तस्मिन्निव पर्वणि पर्वणि प्रतिपर्वम् । इक्षुपक्षे प्रतिग्रन्थि । भारतपक्षे प्रतिभागम् । सद्यः सपदि यदा आस्वाद्यते तदैवे त्यर्थः । सहृदयान् रसज्ञान् आह्लादयितुं शीलमस्येति तादृशः । 'सुप्यजातौ'



इति ताच्छील्ये णिनिः । पक्षान्तरे सः हृदयाह्लादी इति छेदः । हृदयाह्लादी हृदयानन्दजनकः । सः प्रसिद्धः अनुभवैकवेद्य इति यावत् । सारः इक्षुपक्षे रसः मधुरजलम् । पक्षान्तरे सारशब्दः लक्षितलक्षणया शृङ्गारादीन् रसान् लक्षयति । 'सारो बले स्थिरांशे च मङ्क्षु पुंसि जले धने' इति मेदिनी । सः हृदयाह्लादीति जतुकाष्ठवच्छब्दश्लेषः । अन्यत्रार्थश्लेषः । उभयोरपि सादृश्यसम्पादनमात्रचारितार्थ्यमित्यङ्गभूतोऽयमुपमयाऽङ्गि भूतया सङ्कीर्यते ॥

इदानीं कविकुलतिलकः कालिदासः प्रस्तूयते –

**दासतां कालिदासस्य कवयः के न बिभ्रति ।**
**इदानीमपि तस्यार्था नुपजीवन्त्यमी यतः॥ ॥ 7 ॥**

**दासतामिति ॥** कवयन्ति वर्णयन्तीति कवयः काव्यकर्तारः के केवा । काल्याः दासः कालिदासः 'ङ्यापोस्संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वः । काल्यनुग्रहाल्लब्धवाग्विभूतिरयमिति काचन कथाऽपि लोके श्रूयते । तस्य महाकवेः प्रभोरिति च गम्यते । दासताम् दास्यम् सेवकभावं तदुप जीवित्वम् । तदुपगमितार्थप्राप्तिमत्त्वमिति यावत् । न बिभ्रति न दधिरे इति काकुः । सर्वेऽपि तस्योपजीवका एवेति भावः । तत्र हेतुं दर्शयति । यतः यस्मात् यत एवं तत इति पूर्वार्धेन सम्बन्धः । अमी विप्रकृष्टदेशस्थाः तस्य बहुकालान्तरिता इमे कवय इत्यर्थः । इदानीम् अद्यापि । बहुतिथे काले गतेऽपीति यावत् । तस्य पूर्वमुक्तस्य महाकवेः स्वामिन इति च । अर्थान् अभिधेयानि शब्दार्थान् द्रव्याणीति च गम्यते । 'अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु' इत्युभयत्राप्यमरः । उपजीवन्ति आश्रयन्ति । कालिदासी यानर्थान् स्वकाव्येषु निक्षिप्य तेषां काव्यत्वं संपादयन्तीत्यर्थः । अतस्तदनु सरणं कवीनामसाधारणं लक्षणमिति न तदनुकरणं दोषाय प्रत्युत गुणायैवेति भावः । वेतनादेरादानादनुसृत्य जीवन्तीति च गम्यते । कवीनां सर्वेषामा दर्शभूतः कविसम्राडयं कालिदास इति परमार्थः । अत्र कविषु दासत्वारोप

णेन कालिदासादिषु प्रभुत्वाद्यारोपणं गम्यत इत्येकदेशविवर्तिरूपकमलङ्कारः ॥

अथ 'बाणोच्छिष्टं जगत्सर्वम्' इति प्रथितयशस्कं भट्टबाणं स्तौति –

**वाणीपाणिपरामृष्ट वीणानिक्वाणहारिणीम् ।**
**भावयन्ति कथं वान्ये भट्टबाणस्य भारतीम् ॥ ॥ 8 ॥**

**वाणीति ॥** अन्ये बाणादितरे कवयः । वाण्याः सरस्वत्याः पाणिः हस्तः तेन परामृष्टा तन्त्रीषु संस्पृष्टा तद्ग्रहणेन नादिता वादितेति यावत् । या वीणा तस्याः निक्वाणः ध्वनिः तम् हर्तुम् अपहर्तुम् सर्वात्मना तमनुकर्तुमित्यर्थः । तथाविधं शीलम् अस्या इति ताच्छील्ये णिनिः । ताम् । भट्टश्चसौ बाणश्च भट्टबाणः तन्नामा कविः । 'भट्ट' इति विद्यावतां ब्राह्मणानां बिरुदनाम । 'भट्टिनी द्विजभार्यायां नाट्योक्त्या राजयोषिति' इत्यमरः । एतद्व्याख्यावसरे सुधायां भट्टशब्दस्य द्विजवाचित्वं सूक्तम् । भट्टशब्दस्य पूर्वनिपातस्तु 'देवदत्तब्राह्मणः ब्राह्मणदेवदत्तः' इतिवत् 'विशेषणं विशेष्येण बहुलम्' इति सूत्रे बहुलग्रहणादनियतः । स्पष्टं चेदं सर्वं महाभाष्योद्द्योतादिषु। अतएव 'भट्टनारायणः कुमारिलभट्टः भट्टगोपालः' इत्यादयस्संगच्छन्ते । तस्य भारतीं वाचम् रसाश्रयां गिरमित्यर्थः । 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः । ताम्। कथम् केन प्रकारेण वा भावयन्ति चिन्तयन्ति ध्यायन्ति स्वस्मिंस्तां प्रादुर्भावयन्ति इति काकुः। कविलोके न केनाऽपि प्रकारेण तदन्ये तामधिगन्तुं प्रभवन्तीति भावः। 'भावयेज्ज्योतिरात्मनः' इत्यादौ यथावा भवतेरभूतप्रादुर्भावापरपर्यायध्यानार्थकता दृष्टा तद्वदत्रापि । भुवोऽवकल्कने – इति चुरादिण्यन्ताल्लट् । भू प्राप्तौ – इत्यस्मात्तु नेदं रूपम् । तस्यात्मनेपदित्वात् । समाहितचित्तैरपि कविभिरेतादृशीयमिति ज्ञातुमेव न शक्यते बाणवाणी किमुताधिगन्तुमिति तस्य प्रशस्तिः क्रियते । वाणीवीणानाद इव मृदुमधुरशब्दैश्श्रवणयोरमृतझरीः प्रवाहयन्ती निरुपमा विजेजीयते बाणस्य कवितेति निर्गलितोऽर्थः ।



भावयन्ति इत्यस्य रचयन्ति इति वार्थः । बाणवत् रसवत्कविताशिल्पपारगाः केऽपि न भवन्तीति भावः । 'निर्मिमीते भावयति निर्माति रचयत्यपि' इति भट्टमल्लः । अत्र 'निक्वाणहारिणीम्' इत्युपमा । 'तस्य मुष्णाति' इत्यादीनामुपमावाचकेषु दण्डिना परिगणनात् । 'अन्ये न भावयन्ति' इत्यनेन 'स एव भावयितुं शक्तः' इति तासां सदृश्यस्ता एवेत्यनन्वयो ध्वन्यते । अतो वस्तुनाऽलङ्कारध्वनिरपि ॥

किरातार्जुनीयकर्तारं भारविनामानं कविं श्लाघमाना "भारवेरर्थगौरव' मिति यदुक्तमभियुक्तैः तद्विवृणीते –

**विमर्दव्यक्तसौरभ्या भारती भारवेः कवेः ।**
**धत्ते वकुलमालेव विदग्धानां चमत्क्रियाम् ॥ ॥9॥**

**विमर्देति॥** भारवेः तन्नाम्नः कवेः भारती वाक् । कर्त्री । वकुलस्य पुष्पम् वकुलः 'पुष्पमूलेषु बहुल' मिति लुप् 'लुपि युक्तवद्व्यक्तिवचने' इति लिङ्गवचने यथाप्रकृति । तेषां माला सेव । विमर्देन परिमलेन अतिक्षोदेन पुनःपुनश्चर्वणेन च । विपूर्वकात् मृदेः घञ् । व्यक्तम् आविष्कृतम् । सुरभिनो भावः सौरभ्यम् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ् । तत् यस्यां तथोक्ता । वाचामपि सौरभं सुप्रसिद्धं कवीनां वर्णनेषु । तादृशी सती । विदग्धानाम् परिमलग्रहणे चतुराणाम् । अन्यत्र अन्तःप्रवेशेन काव्यमर्मज्ञानां विदुषां च । चमत्क्रियाम् आह्लादम् धत्ते धारयति जनयतीत्यर्थः । डुधाञ् धारणपोषणयोः । तस्माल्लिट्। अन्तर्भावितण्यर्थोऽत्र धाञ् । 'दत्ते' इति वा पाठः । दत्ते ददाति । डुदाञ् दाने - लट् । अत्र ददातिर्भाक्तः । संप्रदानत्वाविवक्षायां 'रजकस्य वस्त्रं ददाति' इतिवत् शेषे षष्ठी । विदग्धेभ्यश्चमत्क्रियामुत्पादयतीत्यादि पूर्ववत् । चमत्क्रियासार एव काव्यमिति विश्वेश्वरभट्टारकः। अर्थगम्भीरा रसगर्भनिर्भरा भारविकविता पुनःपुनश्चर्वणेन रसज्ञानामतीवाह्लादिकेति परमार्थः। अनेन नारिकेलपाकोऽस्य कवितायां विशिष्यत इति ज्ञायते। उक्तं च मल्लिनाथेन "नारिकेलफल

सम्मितं वचो भारवेस्सपदि तद्विभज्यते । स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्'' इति । श्लेषानुप्राणितेयमुपमा । श्लेष एवायमिति केचित् । केवलशब्दमात्रकृतसाधर्म्यस्य सहृदयहृदयाह्लादकत्वाभावात् ''उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः'' इत्यत्र 'सादृश्यलक्ष्मीः' इत्यनेन चमत्कारकारिसादृश्यस्यैव तत्प्रयोजकत्वाभ्युपगमादालङ्कारिकैः इति ॥

'जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् । कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ' इति प्रशंसाभाजनं कवितल्लजं दण्डिनं विशिष्य नुवति –

**आचार्यदण्डिनो वाचा माचान्तामृतसंपदाम् ।**
**विकासो वेधसः पत्न्या विलासमणिदर्पणः ॥ ॥10॥**

**आचार्येति ॥** आचान्ता कबलिता स्वस्मिन्नैक्यं नीता अमृतसंपत् सुधावैभवम् यासु तासाम् । अमृतमयीनामित्यर्थः । आङ्पूर्वाच्चमेः कर्मणि क्तः । उदित्त्वेन क्त्वायां वेट्कत्वादिडभावः । 'अनुनासिकस्य क्विझलोः' इति दीर्घः । आचार्यः मन्त्रव्याख्याकृत् स इव उपचारात् शास्त्रप्रवक्तापि । ' मन्त्रव्याख्याकृदाचार्यः ' इत्यमरः । चरेराङि ण्यत् । ' गदमदयम ' इति तु न । ' चरेराङि चागुरौ ' इति गुरौ प्रतिषेधात् । काव्यादर्शप्रणयनेन शास्त्रप्रवक्तायं समभवदित्याचार्यशब्दव्यवहारो युज्यतेऽस्मिन् । स चासौ दण्डी एतन्नामा कविः । तस्य वाचाम् वचसाम् विकासः समुल्लासः विजृम्भणम् तद्वाग्विभूतिरिति यावत् । वेधसः ब्रह्मणः पत्न्याः भार्यायाः सरस्वत्या इत्यर्थः । विलासाय तदर्थे मणिदर्पणः रत्नमय आदर्श इति चतुर्थीसमासः । यद्वा विलासानां मणिदर्पण इति तादर्थ्ये षष्ठ्या अश्वघासादिवत्समासो वा । 'आदर्शो दर्पणः प्रोक्तः' इत्यमरः । पत्नीत्यत्र 'पत्युर्नो यज्ञसंयोगे' इति नकारो ङीप् च । विलासश्च प्रियसमीपगमने यः स्थानासनगमनविलोकितेषु विकारोऽकस्माच्च क्रोधस्मितचमत्कारमुखविकूलबनं स इति लक्षणज्ञाः । तादृशविलासावलोकनोपयोगीति



तस्मिंस्तस्या आदरातिशयोक्तिः । सरस्वत्याः हावभावादयस्सर्वेऽपि दर्पणे बिम्बानीव प्रतिफलन्ति प्रस्फुटमस्य कवितायामिति भावः । अनेन 'दण्डिनः पदलालित्यम्' इत्यपि संगृहीतं भवति । यद्वा । विपूर्वाल्लसक्रीडाश्लेषणयोः इति क्रीडार्थकाल्लसतेर्भावे घञि अर्शआद्यजन्तो वायं विलासशब्दः । विलासश्च मणिदर्पणश्चेति कर्मधारयः । तत्क्रीडाश्रयो रत्नमुकुर इत्यर्थः । सरस्वती नित्यं क्रीडति । तत्क्रीडास्सर्वा अपि दर्पणे मुखादिकमिव साक्षात्क्रियते कविजनेन कवितायामस्येति सर्वकवीनामाचार्यभूतत्वमस्य निगदितं भवति । काव्यादर्श इति लक्षणग्रन्थो महाननेन निरमायीति सूचितं भवति । यद्वा । सरस्वत्याः विलासधृतः मणिदर्पण इति वा । सरस्वती सविलासं नित्यमेनं पाणौ धरति सकुतूहलमिति तदत्यन्तप्रीतिपात्रतास्य प्रकथ्यते । अत्र पुरातनी वार्तापि काचन श्रूयते । दण्डिनोऽन्येषां च कवीनां विवादे माध्यस्थ्यमवलम्बमाना भारती "कविर्दण्डी कविर्दण्डी भवभूतिस्तु पण्डितः" इत्यमुं श्लाघयामास - इति । सरस्वतीसौभाग्यसर्वस्वसंवर्धक एतद्वाग्गुम्फ इति परमार्थः । वाचां मणिदर्पणत्वरूपणाद्रूपकम् । आचान्तामृतसम्पदामित्युपमा च वाचामौन्नत्यमभिवर्णयन्ती तस्योपकरोतीत्यनयो रङ्गाङ्गिभावेन सङ्करः ॥

" उत्तरे रामचरिते भवभूतिर्विशिष्यते " इति कालिदासादप्यतिरिच्यमानं विद्वत्कविं श्लाघते –

**सा कापि सुरभिश्शङ्के भवभूतेस्सरस्वती ।**
**कर्णेषु लब्धवर्णानां सूते सुखमयीं सुधाम् ॥ ॥11॥**

**सेति ॥** पूर्वार्धे तच्छब्दो यच्छब्दमाक्षिपति । या भवभूतेः तन्नाम्ना प्रसिद्धस्य कवयितुः । इदं पौरुषनामास्य । पैतृकं तु नाम "श्रीकण्ठ" इति । "तपस्वी कां गतोऽवस्थामिति स्मेराननाविव । गिरिजायास्स्तनौ वन्दे भवभूतिसिताननौ ॥" इति श्लोकमेकमेतद्विरचितं श्रुत्वा कान्यकुब्जाधिनाथ एनं भवभूतिरिति व्याजहार । तदनु तन्नाम्ना प्रख्यातिमयमगादिति

श्रूयते। सरस्वती वाक् वाचःतदधिष्ठानदेवतायाश्चाऽप्यभेदोपचारात् । लब्धः
वर्णः स्तुतिः येषाम्, "वर्ण स्तुतौ" इति धातोः कर्मणि घञ् । तेषाम् धीमताम्
'धीमान् सूरिः कृती कृष्टिः लब्धवर्णो विचक्षणः' इत्यमरः । कर्णेषु
श्रवणेषु सुखमयीम् सुखाकाराम् । ताद्रूप्ये मयट् । चिन्मयमिति यथा ।
सुखैकरूपामिति यावत् । सुधाम् अमृतम् सूते सौति जनयति । भवभूते
र्वाणी विदुषामत्यन्तश्राव्या महान्तमानन्दं संधत्त इत्यर्थः । एतेन तद्वाचा
मतिगम्भीरत्वं तेन प्राकृतजनदुरवगाहत्वं च गम्यते । उक्तं च महावीर
चरिते कविना - "उत्पत्स्यते मम तु कोऽपि समानधर्मा कालोह्ययं निरवधि
र्विपुला च पृथ्वी" इति । षूञ् प्राणिगर्भविमोचने लट्। 'सौति सूते च जनय
त्युत्पादयति सूयते' इति क्रियानिघण्टुः। सा वाक्। कापि आश्चर्यभूता सर्व
धेनुभ्योऽपि विलक्षणा सुरभिः गौः यत इयं सर्वार्थप्रदानेन सौख्यामृतस्यन्दिनी
तत इयं कामधेनुरिति यावत् । आह्लादयतु नाम गौस्सुधासम्मितेन पयसा
सर्वानपि लोके तथापि विद्वज्जनानां श्रवणानन्दामृतानुभूतिसंधानं तु
नैतामन्तरा सम्भवतीत्यनन्यादृशी सेयं वाक्सुरभिरिति तात्पर्यार्थः । अथवा
कापि अपूर्वा गौः कामधेनुः । कामधेनोरप्यतिरिच्यते वागियमित्यर्थः ।
कामधेनुस्सा प्रार्थितैव सर्वानर्थान् प्रददाति वागियं तु "भद्रैषां लक्ष्मी
र्निहिताधिवाचि" इति निखिलार्थाननभ्यर्थितैव श्रवणमात्रेण सन्धत्त इति,
कामधेनुरपि सा नैव विद्वज्जनश्रवणामृतसन्धानमियमिव कर्तुम् प्रभवतीति
च सर्वथा ततोऽधिकेयमिति भावः । 'सुरभिर्गवि च स्त्रियाम्' इत्यमरः।
'सुरभिस्सल्लकीमातृभित्सुरगोषु योषिति' इति मेदिनी च । "एकश्शब्द
स्सम्यग् ज्ञातस्सुष्ठु प्रयुक्तस्स्वर्गे लोके कामधुग्भवति" इति श्रुत्या सौशब्द
मस्यां विशिष्टो गुण इति च ज्ञायते । 'इति' इति शेषः । गम्यमानार्थत्वा
दप्रयोगः । शङ्के इति सम्भावनायाम् । मन्ये नूनमित्यर्थः । अत्र वाचां
सुरभित्वेनोत्प्रेक्षणमिति स्वरूपोत्प्रेक्षेयम् । अत्र च निदानं 'शङ्के' इत्यु
त्प्रेक्षावाचकस्य प्रयोगः । "मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ।।" इति दण्डी । 'सुखमयीं
सुधाम्' इति रूपकं तूत्प्रेक्षायामुपकरोतीत्यनयोरङ्गाङ्गिभावेन सङ्करः ।



अथ कृष्णकर्णामृतकाव्यकर्तारं लीलाशुकमान्ध्रदेशीयं शंसति —

**मन्दारमञ्जरीस्यन्दि मकरन्दरसाब्धयः ।**
**कस्य नाह्लादनायालं कर्णामृतकवेर्गिरः ।।** ।। 12 ।।

**मन्दारेति ।।** कर्णामृतम् कृष्णकर्णामृतनामकं काव्यम् । नामैकदेशे
नामग्रहणमिति न्यायात्तस्यैव एष व्यवहारः । तस्य कविः कवयिता कर्णा
मृतकविः लीलाशुकः । तस्य । शेषे षष्ठी । मन्दाराः देवतावृक्षाः तेषां
पुष्पाणि मन्दाराः 'पुष्पमूलेषु बहुल' मिति विकारार्थकप्रत्ययस्य लुप् ।
'लुपि युक्तवद्व्यक्तिवचने' इति लिङ्गवचने । तेषां मञ्जर्यः पुष्पगुच्छाः
ताभ्यः स्यन्दन्ते स्रवन्ति इति मन्दारमञ्जरीस्यन्दिनः मकरन्दाः पुष्परसाः
'मकरन्दः पुष्परसः' इत्यमरः । त एव रसाः जलानि श्रृङ्गारादिरसा
वा 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । श्रृङ्गारादौ द्रवे वीर्ये
देहधात्वम्बुपारदे' इति विश्वः । तेषाम् अब्धयः समुद्राः तथोक्ताः । गिरः
वाचः । समुद्रा यथा जलनिर्भरास्तथा मधुभरिता रसनिर्भरा वा एता इति
भावः । कस्य कस्यवा जनस्य आह्लादनाय प्रीणनाय । कं वा जनं प्रीणयितु
मित्यर्थः । नालम् न पर्याप्ता इति काकुः । सर्वानप्यानन्दयन्त्येवेति भावः ।
'नमस्स्वस्ती' त्यादिना चतुर्थी । गिर इति बहुवचनेन सर्वा अपि
वाचः मधुस्राविण्य इति तस्य वैलक्षण्यमितरेभ्योऽवगम्यते । गिरामब्धि
त्वरूपणान्मकरन्दे रसत्वरूपणाच्च रूपकमलङ्कारः ।।

आन्ध्रमहाभारतकर्तारं तिक्कयज्वानं स्तुवति साभिमानम् —

**तिक्कयज्वकवेस्सूक्तिः कौमुदीव कलानिधेः ।**
**सतृष्णं कविभिस्स्वैरं चकोरैरिव सेव्यते ।।** ।।13।।

**तिक्कयज्वेति ।।** तिक्कयज्वा तिक्कसोमयाजी सोमयाजी
तिक्काख्य इत्यर्थः । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । क्रियाशब्द
संज्ञाशब्दयोस्समासे संज्ञाशब्दस्यैव विशेष्यतेति नियमात्तस्यैव पूर्वनिपात

इति 'यज्वतिक्कः' इति न। स चासौ कविः तथोक्तः। तस्य। 'तिक्कयस्य' इति तु पाठान्तरम्। तत्र तु तिक्कयस्य तदाख्यस्य। न वैकृतपदाद्विभक्त्युत्पत्तिर्दोषाय। ग्राममनुष्यनामसु लाक्षणिकैर्न तद्दोषायेत्यभ्युपगमात्। अतएवाह कविशिरोमणावहोबलपतिः 'न वैकृतपदाद्विभक्त्युत्पत्तिर्विरुद्धा। कविशिरोमणिभिस्तथाङ्गीकारात्। ....अधिकोण्डवीडु रिपवो निपातिताः' 'अधिकभुजबलात्तानग्रहीत्कोण्डवीडौ' ... अन्येऽपि शब्दा बहुवः कविभिरङ्गीकृताः' इति। अनुकरणे सर्वेषां न दोषायेत्यालङ्कारिका अपि। कवेः कवयितुः सूक्तिः शोभना रसमयी वाक्। कर्म। कविभिः अनन्तरकालिकैरित्यर्थः। कर्तृभूतैः। चकोराः तदाख्याः चन्द्रिकापायिनः पक्षिविशेषाः। येषां दर्शनमात्रेण विषं नश्यति। तैः। कलाः निधीयन्ते अस्मिन्निति कलानिधिः चन्द्रः 'कर्मण्यधिकरणे च' इति किः। तस्य कौमुदी चन्द्रिकेव स्वैरम् यथेच्छम् यथाभिलष्यते तथा, यावदभिलष्यते तावदिति च। 'स्वादीरेरिणोः' इति वृद्धिः। तृष्णया सहितम् सतृष्णम् सस्पृहम् सपिपासमिति च सोत्कण्ठमिति यावत्। 'तृष्णे स्पृहापिपासे द्वे' इत्यमरः। सेव्यते समाश्रियते पुनःपुनश्चर्वणेन स्ववशं नीयते सम्यगनुभूयते च। स्वैरमित्यनेन कवीनां यद्यदावश्यकं काव्यनिर्माणे तत्सर्वमत्र स्थितमिति काव्यसामग्रीपौष्कल्यं तिक्ककविवाचां ध्वनितं भवति। आन्ध्रकवीनामेतदनन्तरभाविनामेतदवलम्बेनैव काव्यनिर्माणमिति कविब्रह्माऽयमिति सुष्ठु ज्ञायते। संस्कृतकवीनां प्रस्तावे तिक्कयज्वनोऽत्र समुल्लेखनेन संस्कृतकाव्यमप्यनेन यत्किमपि व्यरचीति संभाव्यते। 'उभयकविमित्रम्' इत्यस्य पौरुषनामाप्यमुमेवार्थं द्रढयति। अथवा आन्ध्रसतीमणेरस्याः कवयित्र्यास्तस्मिन्नादरातिशयो महानिति तन्मूलेयं प्रशस्तिरिति वा मन्तव्यम्। श्लेषोपमेयम्॥

बहुग्रन्थकर्तारं जगद्विदितनामानं विद्वन्महाकविं स्वगुरोर्मातुलमगस्त्यं श्लाघते।



**चतुस्सप्ततिकाव्योक्ति व्यक्तवैदुष्यसम्पदे।**
**अगस्त्याय जगत्यस्मिन् स्पृहयेत्को न कोविदः॥ ।।13।।**

**चतुस्सप्तेति**॥ अस्मिन् जगति एतस्मिन् लोके। सप्तदशतः परिमाणमस्य सप्ततिः। 'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्' इति सप्तानां दशतां सप्तभावः, त्रिप्रत्ययश्च निपात्यते। चतुरधिका सप्ततिः चतुस्सप्ततिः। सा च, काव्यानि चतुस्सप्ततिकाव्यानि। विंशतिर्गाव इतिवत्। 'विंशत्याद्यास्सदैकत्वे संर्वास्संख्येयसंख्ययोः' इत्यमरः। कवयति वर्णयतीति कविः। तस्य कर्म काव्यम्। 'गुणवचनब्राह्मणादिभ्य' इत्यादिना ब्राह्मणादित्वात् ष्यञ्। तच्च पङ्कजादिपदवद्योगरूढत्वेन रससमुल्लसितचमत्कारकारिवाक्यसङ्घटनात्मकमेव। न तु कवयितुस्सर्वं कर्म। तथाविधानि चतुरुत्तरसप्ततिसंख्यानि काव्यानि तेन कृतानीत्यर्थः। तेषाम् उक्तयः गद्यपद्यात्मकानि वचनानि। ताभिः व्यक्ता स्फुटा लोके सर्वैर्विदिता। विदुषो भावः वैदुष्यम्। भावे ष्यञ्। तस्य सम्पत् आधिक्यम् पाण्डित्यप्रकर्ष इत्यर्थः। सा यस्य तस्मै अगस्त्याय तन्नाम्ने कवये कः कोविदः कोवा विद्वान् न स्पृहयेत् नाभिलषेदिति काकुः। सर्वेऽपि विद्वांसस्तदुक्तिसमाकलने नितरां श्रद्दधतीति सम्भाव्यत इत्यर्थः। सर्वविबुधजनसमाह्लादका अगस्त्यस्य वाग्गुम्फा इति भावः। 'स्पृहेरीप्सित' इति चतुर्थी। फलेभ्यः स्पृहयतीतिवत्। सम्भावनायां लिङ्॥

अथ सिद्धनाथतनयं गङ्गाधरभट्टनामानं स्वगुरोर्गुरुं प्रस्तौति –

**स्तुमस्तमपरं व्यासं गङ्गाधरमहाकविम्।**
**नाटकच्छद्मना दृष्टां यश्चक्रे भारतीं कथाम्॥ ।।15।।**

**स्तुमइति**॥ यः विद्वान् नाटकम् इति छद्म व्याजः तस्य दृश्यकाव्यत्वात्। निमित्तमात्रत्वेन तदुपादानमिति भावः। तेन भारतीम् — भारताः भरतवंश्याः योद्धारः अस्य संग्रामस्य भारतः। 'संग्रामे

प्रयोजनयोद्भ्यः' इत्यण्। तम् अधिकृत्य कृतो ग्रन्थः भारतः। 'अधिकृत्य कृते ग्रन्थे' इत्यण्। तस्य इयम्। 'तस्येदम्' इत्यण्। 'टिढाणञ्' इत्यादिना ङीप्। ताम् भारतसम्बन्धिनीम् महाभारत प्रतिपाद्यामिति यावत् । कथाम् गाथाम् । दृष्टाम् दृष्टिगोचरां सतीम् कविना प्रत्यक्षमवलोकिताम् इतिहासभूतां सतीमिति च गम्यते। चक्रे अकरोत् आरचयत्। पुराकृतसुकृतसमुपलब्धेन स्वभावनाबलेन भावकानामद्यतनानामपि नेत्रबद्धां तामकरोद्व्यास इवायमपीति भावः। अत एव तम् अपरव्यासम् व्यासाद्भिन्नं व्यासम् द्वितीयं व्यासमित्यर्थः। व्याससदृशमिति यावत् । तादृशम् गङ्गाधर इति महाकविः गङ्गाधर महाकविः तम् महाकविं गङ्गाधरनामानमित्यर्थः । स्तुमः नुमः वयमिति शेषः । अहं स्तौमीत्यर्थः। 'अस्मदो द्वयोश्च' इत्येकत्वविवक्षायामपि बहुवचनम्। सर्वथा व्यासवदत्यन्तं पूजार्हो विद्वन्महाकविरयं स्वरचनयेति सारांशः। अपरं व्यासमित्युक्तेरतिशयोक्तिरलङ्कारः। नाटकं न चक्रे केवलं भारतकथामेव दृष्टां चक्रे इत्युक्त्या नाटकत्वस्य मिथ्यात्व प्रतिपादनं कृतं छद्मशब्देनेति कैतवापह्नुतिरपि। सेयमपह्नुतिरतिशयोक्तावुपकरोतीत्येतयोरङ्गाङ्गिभावेन संकरश्च ॥

तांस्तान् कवीन् स्तुत्वा स्वगुरुदेवं सौगन्धिकापहरणकर्तारं कीर्तयति —

**चिरं स विजयी भूया द्विश्वनाथः कवीश्वरः ।**
**यस्य प्रसादात्सार्वज्ञ्यं समिन्धे मादृशेष्वपि ॥ ॥16॥**

**चिरमिति** ॥ यस्य गुरुदेवस्य पक्षान्तरे ईश्वरस्य च, प्रसादात् अनुग्रहेण 'विभाषा गुणेऽस्त्रियाम्' इति पञ्चमी। अहमिवायं ज्ञानविषयो भवति मादृशः। 'त्यदादिषु दृशोऽनालोचने कञ्च' इति अस्मच्छब्दात् कञ्। 'त्वमावेकवचने' इति मादेशः । तेषु अस्मादृशेषु मन्दबुद्धि



ष्वपीत्यपिशब्दार्थः। स्त्रियामस्यां कवयित्र्यां पुंलिङ्गनिर्देशो न विरुध्यते। यथाह रत्नापणे कुमारसोमपीथी – "प्राचामियं शैली – यदयं लिङ्ग व्यत्यासेन निर्देशः' इति। यथा स्त्रीव्यक्तौ शिखण्डी इति पुंस्त्वेन व्यवहारः। यथाचेन्द्रं पुमांसमपि श्रुतिरेव सुब्रह्मण्येति स्त्रीत्वेन निर्दिशति– तथाच षड्विंशब्राह्मणम् - 'सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्यो'मिति स्त्रियमिव विराह" इति। अतएव नाट्यशास्त्रादिषु नट इत्यादिनिर्देशाः स्त्री पुरुषसाधारण्येन सङ्गच्छन्ते। महाकवयोऽपि "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इत्यादीनुभयसाधारण्येनैव प्रयुञ्जते। यद्वा 'मादृश्यश्च मादृशाश्च' इति विग्रहे 'पुमान् स्त्रिया' इत्येकशेषेण निर्देशो वा। सर्वज्ञस्य भावः सार्वज्ञ्यम् सर्वज्ञत्वम् भावे ष्यञ्। सर्ववस्तु विषयकज्ञानम्। अन्यत्र – ईश्वरभावः सोऽहमीश्वर इत्यात्मनि ब्रह्मदर्शन मित्यर्थः। समिन्धे प्रज्वलति प्रस्फुरति सम्यक् प्रकाशते। सः तादृक् कवीनाम् कवयित्रृणाम् । ईश्वरः ईश्वर इव। ईश्वरो यथा जगन्नियन्ता तद्वदयमपि कविलोकस्येति ईश्वरशब्दः राजपर्यायः। 'ईश्वरो मन्मथे शम्भौ नाऽऽढ्ये स्वामिनि वाच्यवत्' इति विश्वमेदिन्यौ। एतेन 'कविराज' इत्यस्य पौरुषनामाप्युक्तं भवति। ईश्वरपक्षे कवीनाम् क्रान्तदर्शिनाम् इन्द्रियातीतविषयज्ञानवताम् सर्वज्ञानामिति यावत्। ईश्वरः प्रभुः इत्यपि। विश्वनाधः तन्नामा कविः, पक्षान्तरे विश्वेश्वरश्च। चिरम् बहुकालम्। विजयः सर्वोत्कर्षः सोऽस्यास्तीति विजयी सर्वमूर्धसु स्थितस्सन् अन्यत्र सर्वदेवताचक्रवर्ती सन्। 'अत इनिठनौ' इति मत्वर्थीय इनिः। भूयात् भवतादित्याशास्यते। 'गुरुर्देवो महेश्वरः' इति स्वगुरुमीश्वरतया भावयन्ती स्वभक्त्यतिशयं तस्मिन्नाविष्करोति कवयित्री। अत्र प्राकरणिकार्थमात्रपर्यवसितार्थाश्शब्दाः अर्थान्तरधियमुत्पादयन्तीति शब्देनार्थान्तर धीकृद् ध्वनिरयम्। नचेयं तुल्ययोगिता। प्रकृताप्रकृतविषयोऽयमिति तदनुत्थानात्। नचायं श्लेषः। प्रकृताप्रकृतश्लेषे विशेष्यश्लेषायोगात्। नैव समासोक्तिः। विशेषणसाम्यमात्रोपजीवित्वात्तस्याः। अतएवोक्तं

काव्यप्रकाशे "अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते। संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥" इति ॥

काव्येष्वनेकेषु सत्सु किमनेनेत्याशङ्कां निराचष्टे –

**क्वचिदर्थः क्वचिच्छब्दः क्वचिद्भावः क्वचिद्रसः ।**
**यत्रैते सन्ति सर्वेऽपि स निबन्धो न लभ्यते ॥ ॥17॥**

**क्वचिदर्थ इति ॥** क्वचित् कुत्रचित् केषुचित्काव्येष्वित्यर्थः । 'किमोऽदि'ति सप्तम्यन्तात्किमः अत् । 'क्वाति' इति किमः क्वादेशश्च । अर्थः प्रशस्तः अर्थः वाच्यलक्ष्यव्यङ्ग्यरूपः । अर्थशब्दश्चायं निरुपपदः प्रशस्तमर्थमभिदधाति । यथावा निरुपपदो गुणशब्दश्शोभनं गुणं शब्दशक्तिस्वाभाव्यात् । एवमुत्तरत्राऽपि । प्राशस्त्यं चाप्यर्थानां तत्तद्दोषराहित्येन गुणपरिग्रहणेन च । अस्तीत्यध्याहारस्सर्वत्र क्रियापेक्षायाम् । "अस्ति भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति" इति महाभाष्यवचनात् । तथा चार्थपौष्कल्यमेव केषुचिन्न शब्दादिसौष्ठवमिति भावः । क्वचित् । शब्दः प्रशस्तशब्दजातम् । प्राशस्त्यं च शब्दानां साधुत्वादिना । केषुचिच्छब्दसौष्ठवमेव नार्थपौष्कल्यादय इति भावः । क्वचित् भावः – भावसम्पत्तिः भावौन्नत्यम् – भावगाम्भीर्यमिति यावत् । यद्वा असन्तमप्यर्थं सन्तमिव साक्षात्कुर्वन्त्या कविप्रौढोक्त्या सिद्धाः कल्पनाविशेषा परपर्याया भावशब्देनोच्यन्ते । सामान्यवाचिनश्शब्दा विशेषेष्वपि वर्तन्ते । यथावा वृक्षशब्देन तद्विशेषश्चूतः । केषुचिद्भावपौष्कल्यं वर्तते नार्थगौरवशब्दसौष्ठवादय इति भावः । अथवा भावशब्देन रत्यादिः स्थायी सजातीयैर्विजातीयैश्च भावैरतिरस्कृतमूर्तिमानुच्यते । केषुचिद्रत्यादयस्सुष्ठु सम्पद्यन्ते न शब्दसौष्ठवादयस्तदितरे इति भावः । क्वचित् । रस्यते आस्वाद्यते तादात्म्यभावनयाऽनुकार्यस्य सुखदुःखाद्यानन्दमयत्वेन सामाजिकैरिति रसः । "रसो वै सः, रसग्ं ह्येवायं लब्ध्वाऽऽनन्दी भवती"ति



श्रुती अपीममेव प्रत्यपादयताम् । यस्मिश्च तत्तत्पदार्थानां विभावादीनां सर्वेषामपि परब्रह्मणि मायाप्रपञ्चस्येव लयः, तस्य च भेदाश्शृङ्गारादयो नव त इत्यर्थः । अङ्गाङ्गिभावेन सम्यक्सङ्घटितास्ते केषुचित् । तथापि शब्दसौष्ठवादयस्तत्र न सन्तीति भावः । असाधुशब्दैरपि साक्षाद्वा साधुशब्दस्मरणाद्वा अर्थबोध इत्यङ्गीकृतत्वेन तैरपि रसः पुष्यत इत्यत्र बाधकाभावात् । यत्र यस्मिन् काव्ये एते पूर्वोदिता शब्दार्थरसभावाः सर्वेऽपि नैकमप्यपरित्यज्य चत्वारोऽपीत्यर्थः । सन्ति तिष्ठन्ति । असेर्लट् । 'श्नसोरल्लोपः' इत्यल्लोपः । सः तादृक् निबन्धः काव्यम् न लभ्यते न प्राप्यते । लोके न दृश्यत इत्यर्थः । अतएव स्वकाव्यस्यावश्यकतेति भावः । अनेनास्य काव्यस्य शब्दार्थभावरसपौष्कल्यं व्यज्यते । किञ्च शब्दार्थादीनां सर्वेषामपि सम्यक्सङ्घटनं केनाऽपि दुश्शकम् । अतो मच्चापलमवश्यं क्षन्तव्यमिति स्वविनयसम्पत्तिराविष्क्रियते च व्यङ्ग्यमर्यादया । अप्रकृतेन स्वेतरकाव्यप्रसङ्गेन प्रकृतस्वकाव्यस्य प्राशस्त्यं वर्ण्यत इत्यप्रस्तुतप्रशंसालङ्कारः । तदुक्तम् "अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया" इति । क्वचित्क्वचिदिति पुनःपुनरावृत्तेः वृत्त्यनुप्रासो नाम शाब्दोऽलङ्कारोऽपि ॥

कवयित्री स्वगुरुपरम्परां संस्तुत्य स्वनिबन्धनस्य स्वरूपमिदानीमाविष्करोतीव काव्यस्वरूपं तावदाचष्टे –

**प्रबन्धमीषन्मात्रोऽपि दोषो नयति दूष्यताम् ।**
**कालागरुद्रवभरं शुक्तिक्षारकणो यथा ॥ ॥18॥**

**प्रबन्धमिति ॥** शुक्तेः क्षारः मौक्तिकसुधा तस्य कणः लेशः लवः कालं च तदगुरु च कालागुरु कृष्णागर्वित्यर्थः । 'अगुर्वगरु राजर्हे'मिति हैमः । "नागरुचितस्तिलकः" इति दमयन्तीश्लेषः । तस्य द्रवभरः अतिशयितो द्रव इत्यर्थः । पूर्वपदार्थम् विशेष्यम् मत्वा तत्प्राधान्येनैवान्वयस्य स्वीकारे चमत्कारात् । "तथैव तस्थुः

फणरत्नशोभाः " इत्यत्र कुमारसंभवे यथा । तर्कशास्त्रमर्यादाप्येव मेव " सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुप संक्रामतः । सति विशेषणे बाधे विशेष्यमुपसंक्रामतः " इति । तम् यथा तमिव 'व वा यथा तथैवैवं साम्ये' इत्यमरः । ईषत् अल्पम् मात्रा परिमाणम् यस्य तथोक्तः । 'मात्रा परिच्छदे । अल्पे च परिमाणे स्यात्' इत्यमरः । तादृक् दोषः अपि काव्यदोषलेश संभावनाऽपीत्यर्थः । अपिः संभावनायाम् । काव्यदोषांश्च पदपदार्थ वाक्यवाक्यार्थादिगतत्वेन बहुधा प्रत्यपादयन् काव्यज्ञाः । प्रबन्धम् काव्यम् । प्रबन्धशब्दश्च काव्यवाची । " पद्यप्रबन्धमिव दर्शितसर्गभेदम् " इत्यादौ तथा दर्शनात् । प्रबन्धस्येत्यर्थः । नयतेर्द्विकर्मकत्वात् 'अकथितं च' इत्यप्रधाने कर्मणि द्वितीया । दूष्यम् दूषणीयम् तस्य भावः दूष्यता ताम् । प्रबन्धपक्षे गर्हणीयताम् विद्वज्जनैरपरिग्राह्यताम् । अगरुपक्षे ( दुष वैकृत्ये ) विकृतिभाजनताम् सौरभराहित्येन वैरूप्यापादनेन च सर्वजनहेयतामित्यर्थः । दुष वैकृत्ये – इति दिवादेर्ण्यन्तात् 'अचो यत्' इति यत् । 'दोषो णौ' इत्युपधाया ऊकारः । नयति प्रापयति जनयति आपादयति इत्यर्थः । काव्येऽल्पोऽपि दोषो नोपेक्ष्य इति भावः । तथाचाह दण्डी – " तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन । स्याद्वपुस्सुन्दरमपि श्वित्रेणैकेन दुर्भगम् " इति । " एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः " इत्यादयस्तु काव्यव्यतिरिक्तविषया इत्यवगन्तव्यम् । अलङ्कृतिस्तु श्लेषोपमा ॥

काव्ये गुणानामप्यवश्यंभावितां तावदाचष्टे –

**निर्दोषाऽप्यगुणा वाणी न विद्वज्जनरञ्जिनी ।**
**पतिव्रताऽप्यरूपा स्त्री परिणेत्रे न रोचते ॥** ॥19॥

**निर्दोषेति ॥** दोषेभ्यः काव्यदोषेभ्यः निर्गता बहिर्गता निर्दोषा दोषरहितेत्यर्थः । तादृश्यपि वाणी कवेः वाक् काव्यमित्यर्थः । अविद्यमानाः



गुणाः यस्यां सा अगुणा 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपश्च' इत्युत्तरपदलोपः । तादृशी सत्यपि । विद्वज्जनान् रञ्जयितुम् आह्लादयितुम् शीलमस्या इति विद्वज्जनरञ्जिनी पण्डितजनाह्लाद जननीत्यर्थः । हेतुमण्ण्यन्ताद्रञ्जेः 'सुप्यजातौ' इति णिनिः । " तौ हनूमन्तमानेतुमोषधीं मृतजीविनीम् " इत्यादिवत् । आन्ध्रचामस्मदीय व्याख्यायां द्रष्टव्यमत्र चर्चाविस्तरमभिलषद्भिः । तादृशी न नभवति । उक्तविषये दृष्टान्तः प्रदर्श्यते । पत्यौ भर्तरि व्रतम् नियमः सर्वदा मनोवाक्कायकर्मभिस्तदनुसरणरूपः यस्याः सा तथोक्ता । तादृश्यपि सौशील्यवत्यपि इति यावत् । अपिः अपर्याप्तिवचने । तावता नाल मित्यर्थः । अविद्यमानं रूपम् आकृतिविशेषः सौन्दर्यम् यस्याः तथोक्ता । रूपविरहितेत्यर्थः । 'रूपं तु श्लोकशब्दयोः । पशावाकाशे सौन्दर्ये नाणके नाटकादिके । ग्रन्थावृत्तौ स्वभावे च' इति हैमः । स्त्री वनिता । स्त्यायतेः ड्रट् औणादिकः । ङीप् । परिणेत्रे भर्त्रे न रोचते न स्वदते । भर्त्रभिमता न भवतीत्यर्थः । रूपगुणयोरुभयोरपि सत्त्वे यथा प्रीयते भर्ता न तथा शीलेनैकेनेति भावः । 'रुच अभिप्रीतौ' इत्यस्माल्लट् । 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी । दोषराहित्यमात्रेण काव्यं न शोभते । रसधर्मैश्श्लेषप्रसादादिभिर्गुणैरपि तत्रावश्यंभाव्यमित्युच्यते । अत एव प्राणा इति गुणान् व्यवहरन्त्यालङ्कारिकाः । " यत्र गुणास्तत्र रूपम् " " न रूपमित्यव्यभिचारि तद्वचः " इत्यादिभिर्गुणानां रूपस्य च यद्यपि समनैयत्यमवगम्यते तथापि लोके तद्वैपरीत्यमपि प्रत्यक्षदृष्टमिति तेषां वचनानां प्रायशस्तथेत्यत्र तात्पर्यमित्यवगन्तव्यम् । अत्र सौशील्य संवलितं कान्तासौन्दर्यं भर्तारं यथा नन्दयति गुणैरलङ्कृतं दोषरहितं काव्यं सहृदयांस्तथैवानन्दयतीति वैधर्म्येण साधर्म्यस्य वस्तुप्रतिवस्तुभावतो निर्देश इति प्रतिवस्तूपमालङ्कारः ॥

काव्यस्वरूपमाख्याय दोषैकपरान् कुकवीनाक्षिपति –

**गुणं विहाय काव्येषु दुष्टो दोषं गवेषते ।**
**वनेषु त्यक्तमाकन्दः काको निम्बमपेक्षते ॥ ॥20॥**

**गुणमिति** ॥ दुष्टः गर्ह्यः जनः दुष्कविरित्यर्थः । काव्येषु महाकविनिर्मितेषु प्रबन्धेषु । गुणम् जातावेकवचनम् । काव्यगुणान् रसाश्रयानित्यर्थः । विहाय त्यक्त्वा बुद्धिपूर्वकं निरस्येत्यर्थः । विहायेति विभक्तिप्रतिरूपकं ल्यबन्तमव्ययम् । दोषम् जातावेकवचनम् । दोषान् काव्यदोषान् रसभञ्जकानित्यर्थः । गवेषते मृगयते दोषप्रकथनार्थेऽत्यन्तं प्रयतत इत्यर्थः । अत्र दुष्टः - दोष इति च पदे अस्य दोषस्वीकारः प्रकृतिसिद्धो गुण इति, तत्र च हेतुस्तस्य दौष्ट्यमेवेति च द्योतयतः । अमुमेवार्थं दृष्टान्तमुखेन विशदयति – वनेषु अटवीषु । बहुवचनेन तत्र महौषधिलताफलवृक्षाणां रमणीयानां नैकविधानां सत्त्वं प्रतीयते । एवं काव्येष्विति बहूक्त्यापि तत्र रमणीयार्थप्रतिपादकानां शब्दार्थप्रभृतीनां बहूनां सत्त्वं द्योत्यते । काकः वायसः, त्यक्तः परिहृतः विसृष्टः माकन्दः चूतवृक्षः येन तथाभूतस्सन् । निम्बम् तिक्तगुणाश्रयम् अरिष्टतरुम् अपेक्षते आश्रयते । स्वनिवासाश्रयं करोतीत्यर्थः । अरिष्टः काकः, अरिष्टतरुश्च निम्बः । द्वयोरप्यमङ्गलप्रदत्वेन कश्चन सम्बन्धो वर्तत इति तस्य तदपेक्षायां हेतुः प्रतिभाति । एवमेव दुष्टोऽयम्, दोषश्च स इति तदन्वेषणे तस्य प्रवृत्तिर्युज्यत इति प्रतीयते । यथावा माकन्दतरुवर्जनेन काकस्य मन्दबुद्धित्वमेव प्रकटितं भवति नैव तस्य वृक्षस्य न्यूनता, तथा गुणपरित्यागेन स्वाज्ञानपरिकल्पितदोषाभासप्रदर्शनेन च लोकस्य तदसूयापरत्वहेतुकमज्ञानप्राबल्यमेव विदितं भवति न तेन सत्काव्यस्य कश्चिदप्यपकर्ष इति भावः । 'दुष्टो दोषं गवेषत' इत्यत्र यतोऽयं दुष्टस्ततोऽयं दोषं गवेषत इति पदार्थस्य वाक्यार्थे हेतुत्वात्काव्यलिङ्गमलङ्कारः । गुणदोषयोर्माकन्दनिम्बयोश्च सादृश्यात्काकदुष्टयोस्साम्यमवगम्यते । साम्यं च वस्तुप्रतिवस्तुभावेन निर्दिष्टमिति प्रतिवस्तूपमा । माकन्दपदेन च 'कं सुखं ददाति' कन्दः ।



'आतोऽनुपसर्गे' इति कः । 'मायाः कन्दः माकन्दः' इति वा 'मां कं च ददाति' इति वा विगृह्य – लक्ष्म्या अपि सुखप्रद इति, लक्ष्मीसुखयोरुभयोरपि दातेति वा समुपलभ्यत इति साभिप्रायतया विशेष्यस्य परिकराङ्कुरोऽपि । एतासां सापेक्षत्वादङ्गाङ्गिभावेन सङ्करः ॥

काव्यचौर्यपरान् दुष्कवीनेव निन्दति –

**चौर्यार्जितेन काव्येन कियद्दीव्यति दुर्जनः ।**
**आहार्यरागो न चिरं रुचिरः कृत्रिमोपलः ॥ ॥21॥**

**चौर्यार्जितेति** ॥ चुरा शीलमस्य चोरः 'छत्रादिभ्यो णः' तस्करः । तस्य कर्म चौर्यम् । । ष्यञ् । तेन आर्जितेन संपादितेन समुपलब्धेन । आङ्पूर्वादर्जेः क्तः । काव्येन कविनिर्मितेन पद्येन पद्यजातेन वा । कियत् - किंशब्दात् 'किमस्संख्यापरिमाणे डति' च' इति मतुप् । 'किमिदंभ्यां वो घः' इति वकारादेशश्च । का संख्या परिमाणमस्येति विग्रहः । कियन्तं कालमित्यर्थः । दीव्यति प्रकाशते कविरिति प्रख्यातिं गच्छति इति काकुः । यावद्वस्तुस्थितिर्न ज्ञायते तावदेव नतु चिरमित्यर्थः । सत्यं छादयितुं न कोऽपि चिरं क्षमत इति भावः । अर्थमेनं दृष्टान्तमुखेन विवृणीते । आहार्यः आरोपितः रागः रक्तिमा लौहित्यं यस्य । आहार्यः आरोपितः रागः जनानामनुराग इति च गम्यते । 'क्रियया निर्वृत्तः कृत्रिमः' 'डुकृञ्' इत्यस्मात् 'ड्वितः क्त्रिः' 'क्त्रेर्मम्नित्यम्' इति मप् । सचासौ उपलः मणिः चिरं बहोः कालात् रुचिरः कान्त्या मनोज्ञः 'सुन्दरं रुचिरं चारु' इत्यमरः । प्रकाशवान् सन्नित्यर्थः । न - न भवति न विद्यते नैव तिष्ठतीत्यर्थः । पद्मरागसान्निध्ये कश्चन पाषाणः तत्तेजोमहिम्ना संक्रान्ततदीयरागः मणिरिव भासमानोऽपि चिरं न तथा तिष्ठेत् । मणौ तस्मिन् अपसरति मानोज्ञकस्य तस्याप्यपसरणात् । एवं दुष्कविरन्यदीयं काव्यम् स्वकीयमिव ख्यापयन् अचिरादेव लोकविदित

याथार्थ्यस्स्वसंक्रान्तजनादरणपात्रतां त्यजतीति निष्कृष्टोऽर्थः । अलङ्कारस्तु प्रतिवस्तूपमा ॥

" कवित्वं दुर्लभं लोके " इत्युक्तदिशा काव्यकर्तॄणां महाकवीनामत्यन्तदौर्लभ्येन शास्त्रविद्भ्योऽपि ते नितरामतिरिच्यन्ते इत्यभिधाय तन्मुखेन शास्त्रेभ्योऽपि जनादरमर्हन्ति महाकाव्यानीति सूचयन्ती महाकवीन् प्रशंसति –

**तार्किका बहवस्सन्ति शाब्दिकाश्च सहस्रशः ।**
**विरलाः कवयो लोके सरलालापपेशलाः ॥ ॥22॥**

**तार्किकाइति ॥** लोके जगति बहवः संख्यातोऽनन्ताः तार्किकाः तर्कशास्त्रज्ञाः तर्कं विदन्ति 'क्रतूक्थादिसूत्रान्ताट्ठक् ' इति ठक् । उक्थादिगणे च तर्कशब्दः पठितोऽयं गणरत्नमहोदधौ । तेनेदं सिद्धम् । सन्ति तिष्ठन्ति । उत्तरत्राप्यस्य संबन्धः । सहस्रशः सहस्रम् बहव इत्यर्थः । स्वार्थे शस् । " एकां कपिलामेकैकशस्सहस्रकृत्वो दत्त्वा " इति महाभाष्यप्रयोगात् । शतसहस्रशब्दौ बहुत्ववाचकावपि । 'शतं सहस्रमयुतं सर्वमानन्त्यवाचकम् ' इत्युक्तेः । शब्दं करोति प्रकृतिप्रत्ययविभागेन व्युत्पादयति शाब्दिकः । करोतिर्व्युत्पादनार्थः । 'शब्ददर्दुरं करोति ' इति ठक् । ते सन्ति वैयाकरणाश्च बहवो वर्तन्त इत्यर्थः । सरलाः अवक्राः ऋजवः 'सरलः पूतिकाष्ठे नाथोदारा वक्रयोस्त्रिषु ' इति मेदिनी । आलापाः संभाषणानि उक्तय इत्यर्थः । आङ्पूर्वाल्लपेर्भावे घञ् । आलापानां ऋजुत्वं च प्रसादगुणभरितत्वम् प्रसादलक्षणं च पूर्वमवोचाम । तत्र पेशलाः दक्षाः 'दक्षे तु चतुरपेशलपटवस्सूत्थान उष्णश्च ' इत्यमरः । तादृशः कवयः काव्यकृतः 'शक्तिः कवित्वबीजं हि प्राक्तनी संस्क्रिया मता ' इत्युक्तलक्षणलक्षिता महान्तः कवय इत्यर्थः । विरलाः अल्पाः अल्पसंख्याकाः सन्ति । दुर्लभास्त



इति भावः । प्रयत्नसाध्यं वैदुष्यम् । सुकविता तु जन्मजन्मान्तरार्जितमदृष्टविशेषं कमपि विना नैव लभ्यत इत्यतश्शास्त्रज्ञापेक्षयाऽपि महाकवयोऽवश्यमादरातिशयेन पूजनीया लोकस्येति सारोंऽशः । अत एवाहुरभिज्ञा अपि - " पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठित कालिदासा । अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव " इति ॥

काव्यप्रशंसां विधाय मन्दात्मनोऽनुजिघृक्षया काव्यप्रयोजनानि ब्रूते–

**करोति कीर्तिमर्थाय कल्पते हन्ति दुष्कृतम् ।**
**उन्मीलयति चाह्लादं किं न सूते कवेः कृतिः ॥ ॥23॥**

**करोतीति ॥** कवेः कृतिः कर्त्री । अर्थाय धनाय तदर्थे कल्पते प्रभवति तदार्जनसाधनं भवतीत्यर्थः । कीर्तिम् प्रख्यातिम् यशः 'क्लृपि संपद्यमाने च ' इति तादर्थ्ये चतुर्थी । दुष्कृतम् पापम् - दुष्टम् कृतम् करणमनेनेति व्युत्पत्तिः । 'इदुदुपध'स्येति षत्वम् । हन्ति संहरते नाशयतीत्यर्थः । सत्काव्यश्रवणस्य पापापनोदकत्वादिति भावः । आह्लादम् संतोषम् उन्मीलयति वर्धयति । उत्पूर्वकान्मीलनिमेषणे इत्यस्मात् हेतुमण्ण्यन्ताल्लट् । किञ्च आह्लादमानन्दम् तद्रूपं ब्रह्म सच्चिदानन्दत्वेन ब्रह्मणः आनन्दमयत्वात् । उन्मीलयति अविद्यापनयनेन प्रकाशयति । अविद्यापसरणे ब्रह्म स्वयमेव प्रकाशत इति भावः । तेन परां निर्वृतिमपि काव्यमापादयतीति परमपुरुषार्थसाधनत्वमप्यस्य सूक्तं भवति । अतएवोच्यते – किं न सूते कवेः कृतिरिति । कवेः कवयितुः महाकवेरित्यर्थः । कृतिः काव्यम् । करोतेः कर्मणि क्तिन् । किं कमर्थम् 'सामान्ये नपुंसकम् ' न सूते न जनयतीति काकुः । सर्वानप्यर्थान् सङ्घटयतीत्यर्थः । 'षूङ् प्राणिगर्भविमोचने ' लट् । चो हेतौ । यतः कीर्तिं करोति यतो वार्थाय कल्पते यतश्च दुष्कृतम् हन्ति यतो वाह्लादमुन्मीलयति तत इत्यर्थः । 'षूङ् प्राणिगर्भविमोचने' इति

यद्यप्यर्थनिर्देशः क्रियते धातुपाठे, तथापि मैत्रेयरक्षितेन 'प्राणिग्रहण मतन्त्रम्' अप्राणिप्रसवेऽपि वर्तते, प्रसूनं धान्यमिति व्याख्यातत्वादत्र न दोषः। एवं सत्काव्यस्य बहूनि प्रयोजनानि सन्तीत्यभिधाय महा काव्यसंस्तुत्या पण्डितान् मन्दात्मनश्च काव्यश्रवणप्रवणानकरोदियं कवयित्री। "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः पर निर्वृतये कान्तासम्मिततयोपदेशयुजे॥" इत्यालङ्कारिकैर्यान्युक्तानि काव्य प्रयोजनानि तानि सर्वाण्यत्र संगृहीतानीत्यवधेयम्॥

भावकाः स्वतएव काव्येषु दत्तमनस इति व्यक्तमाभाषते –

**न प्रार्थनीयस्तत्काव्य श्रुत्यै सहृदयो जनः।**
**स्वादुपुष्परसास्वादे कः प्रेरयति षट्पदम्॥** ॥24॥

**न प्रार्थनीय इति॥** तत् पूर्वोक्तम् पूर्वप्रसक्तमित्यर्थः। काव्यम् सत्काव्यमिति यावत्। तस्य श्रुत्यै आकर्णनाय 'श्रु श्रवणे' भावे क्तिन्। सहृदयः हृदयेन सहितः। हृदयं च रसाद्यनुभूतिविशेषभाजन मन्तःकरणं विवक्षितम्। प्रार्थनीयः अभ्यर्थयितव्यः ममेदं काव्यम् श्रूयतां भवानिति प्रेरयितव्यः। न न भवति। रसग्रहणलुब्धत्वात् सहृदयस्येति भावः। तत्र च हेतुं दृष्टान्ततो विवृणुते :– षट् पदानि यस्य तम् षट्पदम् भ्रमरम् 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इत्यमरः। स्वादुः इष्टः मधुरश्च 'इष्टमधुरौ स्वादू' इत्यमरः। यः पुष्परसः मकरन्दः 'मकरन्दः पुष्परसः' इत्यमरः। तस्य आस्वादः पानम् अनुभवश्च, तस्मिन् तद्विषये कः कोवा जनः प्रेर यति चोदयतीति काकुः। न कश्चिदपीत्यर्थः। तत्र तस्य प्रवृत्तिः प्रकृतिसिद्धा तथैव सहृदयस्यापीति भावः। अत्र पूर्वार्धप्रत्युत्तरार्धस्य हेतुत्वात्काव्यलिङ्गमलङ्कारः॥

इदानीं स्वकाव्यार्थमुपक्रममाणा प्रस्तावमुपसंहरति –



**तन्मदीयमिदं काव्यं विबुधाः श्रोतुमर्हथ।**
**मधुराविजयं नाम चरितं कम्पभूपतेः॥** ॥25॥

**तन्मदीयमिति॥** विबुधाः विशेषेण बुध्यन्ते जानन्ति काव्य मर्माणीति ते, तस्य संबुद्धिः विबुधाः। 'बुध अवगमने' इति दिवादेः 'इगुप' धेति कः। तत् - यत् सहृदया यूयं तत इत्यर्थः। मम इदम् मदीयम्। 'त्यदादीनि च' इति वृद्धसंज्ञायाम् 'वृद्धाच्छः' इति छः। इदम् सन्निहितम् बुद्धिस्थम् बुद्ध्या परि गृहीतस्यैव सर्वनाम्ना निर्देशः क्रियते, सर्वनाम्नां बुद्धिस्थपरामर्शकत्वात्। मधुरायाः तदाख्यायाः दक्षिणदिक्स्थाया नगर्याः। कर्मणि षष्ठी। विजयः विजयनम् शात्रवाभिभवपूर्वकग्रहणम् - आक्रमणमिति यावत्। विपूर्वाज्जयतेर्भावे 'एरच्'। 'कर्तृकर्मणोः कृति' इति कर्मषष्ठ्या समासः। 'न च कर्मणि' इति षष्ठीसमासनिषेधश्शङ्क्यः। 'उभयप्राप्तौ कर्मणि' इति विहितषष्ठ्या एवायं निषेधः। नतु 'कर्तृकर्मणोः कृति' इत्यस्य। 'उभयप्राप्तौ कर्मणि' इत्यत्र प्राप्तिग्रहणसामर्थ्यात्कर्तृकर्मणो रुभयोस्सन्निधान एव तन्निषेधप्रवृत्तेः प्रामाणिकैरभ्युपगमात्। अत्र च कर्तुः कम्पराजस्यानुपादानमिति न तत्प्राप्तिसंभावनापि। अतएव कैयट आह - " शब्दानुशासन " मिति' – अत्र चाचार्यस्य कर्तुः प्रयोजनाभावा दनुपादानादुभयप्राप्त्यभावान्नोभयप्राप्तौ कर्मणीत्यनेन षष्ठी। अपितु कर्तृकर्मणोः कृतीत्यनेनेति कर्मणि चेति समासप्रतिषेधाप्रसङ्गादिध्म प्रव्रश्चनादिवत्समासः' इति। सः अस्मिन्नस्ति प्रतिपाद्यत्वेनेति 'अर्श आदिभ्योऽच्। तथोक्तम्। नामेत्यव्ययं प्रसिद्धौ। मधुराविजय मिति नाम्ना प्रख्यातमित्यर्थः। कम्पः कम्पनः सचासौ भूपतिः राजा तथोक्तः। तस्य चरितम् चरित्रम् तदात्मकमित्यर्थः। काव्यम् कवेः कर्म। पङ्कजादिवद्योगरूढमिदमिति पूर्वमुक्तम्। महाकाव्य मित्यर्थः। अनेन 'वीरकम्पराजचरितम्' इत्यपरं नामाप्यस्य सूच्यते। तत् श्रोतुम् आकर्णयितुम् प्रेरणां विनैव श्रवणपेयं कर्तुम् अर्हथ

अर्हा भवथ । 'अर्ह् – पूजायाम्' लट् । काव्यश्रवणे दत्तचित्ता स्थ यूयमिति सहृदयान् विद्वज्जनान् स्वकाव्यारम्भमवगमयतीयं कवयित्री एतच्छ्लोकमुखेन ग्रन्थमात्रस्यावश्यंभाव्यनुबन्धचतुष्टयं च निर्दिश्यते – 'विबुधा अर्हथ' इत्यनेन विद्वज्जनाः कवयोऽस्मिन्नधिकारिण इत्युक्तं भवति । तच्छब्दश्च पूर्वपरामर्शी सन् काव्यप्रयोजनानि पुनरुपाददत् कीर्त्यादयः प्रयोजनानीत्यभिदधाति । 'चरितं कम्पभूपतेः' इत्यनेन ग्रन्थविषयः प्रतिपाद्यो निर्दिष्टः । ग्रन्थविषययोश्च संबन्धः प्रतिपाद्य प्रतिपादकभाव एवेति सोऽप्यभिहितप्राय इति ॥

स्वनायकचरितं वर्णयितुकामा तदङ्गतया तत्पित्रादीनामिति वृत्तं प्रथमतः कथयितुं प्रक्रमते –

**आसीत् समस्तसामन्त मस्तकन्यस्तशासनः ।**
**बुक्कराज इति ख्यातो राजा हरिहरानुजः ॥ ॥26॥**

**आसीदिति ॥** समस्ताः अशेषाः । समन्तायाः स्वदेशानन्तरायाः भूमेः इमे (राजानः) सामन्ताः । 'तस्येदम्' इत्यण् । तेषाम् मस्तकानि शिरांसि तेषु न्यस्तम् निक्षिप्तम् शिरोभिर्धृतम् आदरातिशयेन परिपालित मिति यावत् । निपूर्वादस्यतेः क्तः । शासनम् आज्ञा यस्य तथोक्तः । शास्ति अनेनेति करणे ल्युट् । बुक्क इति राजा बुक्कराजः । 'विशेषणं विशेष्येण बहुल' मिति सूत्रे बहुलग्रहणेन व्याप्यव्यापकयोर्व्यापकस्य विशेष्यतैवेति वैयाकरणसिद्धान्तः । 'राजाहस्सखिभ्यः' इति टच् । इति एवंप्रकारेण ख्यातः जनैः प्रकथितः हरिहरस्य तन्नाम्नः राज्ञः अनुजः अवरजः कनीयान् भ्राता 'उपसर्गे च' इति डः । राजा अधीश्वरः 'राजा तु प्रणताशेषसामन्तस्स्यादधीश्वरः' इत्यमरः । आसीत् बभूव । अस्तेर्लङ् । 'अस्तिसिचोऽपृक्ते' इतीडागमः । सर्वेऽपि मण्डलेश्वराः विजयनगराधीश्व रस्य बुक्कभूपतेराज्ञावशवर्तिनो बभूवुः । न कश्चिदपि तस्य शासनं



धिक्करोतीति तस्य विभुता प्रशस्यते । एतेन महाभाग्यत्वमभिहितम् । "विश्वम्भराधिपत्यं यत्तन्महाभाग्यमुच्यते" इति लक्षणात् । समस्त सामन्तमस्तकन्यस्तेत्यादौ वर्णानां पुनःपुनरावृत्त्या वृत्त्यनुप्रासो नाम शाब्दोऽलङ्कारः ॥

इतः परं षोडशभिश्श्लोकैः बुक्कराजं प्रस्तौति –

**यश्शेष इव नागानां नगानां हिमवानिव ।**
**दैत्यारिरिव देवानां प्रथमः पृथिवीभुजाम् ॥ ॥27॥**

**य इति ॥** यः राजा । नागाः बहुफणास्सर्पाः तेषाम् । निर्धारणे षष्ठी । तेषां मध्ये इत्यर्थः । शेषः भुजगस्वामी अनन्तः स इव । न गच्छन्तीति नगाः स्थावराः पर्वताः । गमेर्डः । 'नगोऽप्राणिष्व न्यतरस्याम्' इति नञः प्रकृतिभावश्च । तेषां मध्ये हिममस्तीति हिमवान् तन्नामा पर्वतराजः । 'तदस्यास्त्यस्मिन्' इति मतुप् । 'मादुपधा याश्च मतोः' इत्यादिना मतुपो मस्य वः । स इव । देवाः अमराः 'अमरा निर्जरा देवाः' इत्यमरः । तेषां मध्ये । दैत्यानाम् राक्षसानाम् अरिः शत्रुः विष्णुः 'दैत्यारिः पुण्डरीकाक्षः' इत्यमरः । स इव । पृथिवीम् भूमिम् भुञ्जति पालयन्तीति पृथिवीभुजः भूभुजः भूपालाः । 'भुज पालनाभ्यवहारयोः' इति पालनार्थकात् भुजेः 'क्विप्च' इति क्विप् । तेषां मध्ये प्रथमः प्रधानः 'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्य वत्' इति मेदिनी । शेषादयो यथा भगवतो नारायणस्य विभूति विशेषास्तथा बुक्कराजोऽयमपीति भावः । तथाचोक्तं शेषादीनां भगव दंशसम्भूतत्वं गीतायाम् – "आदित्यानामहं विष्णुः .... .... अनन्त श्चास्मि नागानां स्थावराणां हिमालयः" इति । एकस्यैवोपमेयस्य बहूपमानताऽत्रेति मालोपमेयम् । रुद्रटस्तु धर्मभेदे सत्येव मालोपमेति मन्यते ॥

**तिग्मांशोरपि तेजस्वी शीतांशोरपि शीतलः ।**
**सागरादपि गम्भीर स्सुमेरोरपि य स्थिरः ॥ ॥28॥**

**तिग्मांशोरिति ॥** यः राजा । तिग्माः तीक्ष्णाः अंशवः किरणाः यस्य तस्मात् तिग्मांशोः सूर्यादपि प्रशस्तं तेजोऽस्य तेजस्वी पराभिभावकपराक्रमवान्, तादृशदीप्तिमांश्च । 'तेजः प्रभावे दीप्तौ च' इत्यमरः । 'तेजो धाम्नि पराक्रमे' इति विश्वोऽपि । शीताः हिमाः अंशवः किरणाः यस्य तस्मात् शीतांशोः चन्द्रादपि । शीतम् शैत्यम् तदिव सुखजनकत्वम् (तदिव) प्रसन्नता आह्लादकत्वं च अस्यास्तीति शीतलः 'सिध्मादिभ्यश्च' इति लः । सगराणामयम् सागरस्समुद्रः "तस्येद' मित्यण् । तस्मादपि गम्भीरः गाम्भीर्यवान् । गाम्भीर्यं च निम्नत्वम्, सत्यपि विकारे सावहित्थत्वं च । सुमेरुः हेमाद्रिः 'मेरुस्सुमेरुर्हेमाद्रिः' इत्यमरः । तस्मादपि स्थिरः निश्चलः धीरश्च । तेजस्वित्वादयो नायकगुणाः अस्मिन् वर्ण्यन्ते । उपमानमुपमेयापेक्षया यद्यप्युत्कृष्टधर्म तथाप्युपमेयस्याधिक्यवर्णनमत्रेति व्यतिरेकः । 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः' इति तल्लक्षणात् ॥

**विवेकमेव सचिवं धनुरेव वरूथिनीम् ।**
**बाहुमेव रणोत्साहे यस्सहायममन्यत ॥ ॥29॥**

**विवेकमिति ॥** यः राजा रणस्य उत्साहः रणोत्साहः युद्धार्थः उद्यमः 'उत्साहस्तूद्यमे सूत्रे' इत्यमरसुधा । अश्वघासादिवत् षष्ठीसमासः । तस्मिन् शात्रवविजयसम्पादन इत्यर्थः । विवेकः शास्त्रजनितविज्ञानसंस्कृतबुद्धचा कार्याकार्यविवेचनम् । विचिर् पृथग्भावे—इत्यस्माद्भावे घञ् । 'चजोः कुघिण्ण्यतोः' इति कुत्वम् । तमेव सचिवम् मन्त्रिणम् तद्वत् कार्याकार्यनिर्णायकम् । मन्त्रिणस्तु तस्य छत्रचामरादितुल्या इति भावः । धनुः स्वकार्मुकम् तदेव वरूथिनीम् सेनाम् चतुरङ्गबलम् 'वरूथिनी बलं सैन्यम्' इत्यमरः । तद्वत् विजयसाधकम् । सैन्यं तु



तस्य केवलमुपकरणमेवेति भावः । बाहुः भुजौ । जातावेकवचनम् । तमेव सहायम् सहायौ पार्श्वानुचरौ । तद्वत् स्वस्य रक्षकौ । पार्श्वचरौ तु राज्ञोऽवश्यंभाविनाविति धियैवेति भावः । अमन्यत अबुध्यत अजानात् ऐच्छत् स्वीचकारेति यावत् । साधनान्तरनिरपेक्षयैव शत्रून् विजितवानित्यर्थः । मन - ज्ञाने इत्यतो दैवादिकाल्लङ् । मन्त्र्यादिभिस्साधनीयानर्थान् विवेकादिभिस्स्वयमेव संपादयन् राजसु नितरामतिरिच्यते राजायमिति तात्पर्यार्थः । अत्र सचिवादिकार्यकारित्वाद्विवेकादिषु तत्तदारोपोऽभवदिति रूपकमलङ्कृतिः ॥

**जिष्णुना भुवनेशेन श्रीदेन समवर्तिना ।**
**सान्निध्यं लोकपालानां धरणौ येन दर्शितम् ॥ ॥30॥**

**जिष्णुनेति ॥** येन राज्ञा कर्त्रा । जिष्णुना इन्द्रेण जयशीलेन च सता 'जिष्णुर्ना वासवेऽर्जुने जित्वरे वाच्यवत्प्रोक्तो विष्णावर्के वसुष्वपि' इत्युभयत्रापि मेदिनी । जि - जये अभिभवे वा । 'ग्लाजिस्थश्च' इति ग्स्नुः । भुवनस्य जलस्य ईशः पतिः अप्पतिः वरुणः तेन लोकाधिपतिना च सता 'भुवनं खाम्बुलोकेषु' इति नानार्थरत्नमाला । श्रियं ददातीति श्रीदः कुबेरः 'श्रीदः पुण्यजनेश्वरः' इत्यमरः । तेन लक्ष्मीप्रदेन च सता । दाणो दाञो वा कः । समं वर्तितुं शीलमस्य समवर्ती यमः । 'समवर्ती परेतराट्' इत्यमरः । तेन सर्वत्र समानुरागेण पक्षपातरहितेन च सता । धरणौ पृथिव्याम् । लोकान् पालयन्तीति लोकपालाः । कर्मण्यण् । दिशां पतयः इन्द्रादयः । लोकशब्देन तदेकदेशभूता दिग्लक्ष्यते । ग्रामो दग्ध इत्यादौ यथा । तेषाम् कर्तरि षष्ठी । संनिधानमेव सान्निध्यम् स्वार्थे ष्यञ् । संनिकर्षणम् समीपस्थितिः धरणिमाश्रित्य स्वात्मना तेषां वर्तनमिति यावत् । दर्शितम् बोधितम् सर्वजनविदितं कृतम् । "अष्टानां लोकपालानां मात्राभिर्निर्मितो नृपः" इति स्मृतेस्स्वस्मिन्न

र्थवत्तां संपाद्य सर्वान् जनान् प्रत्यक्षप्रमाणेन समधिगततदर्थाश्चकारेति भावः । दृशेर्ण्यन्तात्कर्मणि क्तः । अत्र 'जिष्णुना' इत्यादिपदार्थानां लोकपालसान्निध्यबोधनरूपवाक्यार्थे विशेषणगत्या हेतुत्वमिति काव्यलिङ्गमलङ्कारः । तच्च श्लेषानुप्राणितमिति तयो र्विस्पष्टस्संकरः । एकोऽयं जिष्णुत्वादिभिर्लोकपालास्सर्वेऽपि भूत्वा स्थित इति वर्णनादेकैकश स्थितान् सर्वांस्तानतिशेतेऽयमिति ध्वननमत्रेति व्यतिरेकालङ्कारध्वनिरपि ॥

**हृदये चन्दनालेपैः कर्णे मौक्तिककुण्डलैः ।**
**सतां मुखे च कर्पूरैर्यस्याभावि यशोभरैः ॥ ॥31॥**

**हृदय इति ॥** यस्य प्रभोः यशोभरैः कीर्त्यतिशयैः अतिशयिताभिः कीर्तिभिः कर्तृभूतैरित्यर्थः । सताम् विदुषाम् सज्जनानां वा । उत्तरत्राप्यस्य संबन्धोऽवगन्तव्यः । हृदये वक्षसि चन्दनानाम् मलयजानाम् आलेपैः विलेपनैः चर्चाभिः सतीभिः । सताम् कर्णे श्रवणेषु जातावेकवचनम् । मुक्ताएव मौक्तिकाः रत्नभेदाः । विनयादित्वात् स्वार्थे ठक् । तेषां कुण्डलानि कर्णाभरणानि । प्रकृतिविकृतिभावे षष्ठी । मुक्ताखचितकर्णालङ्कारा इत्यर्थः । तैस्सद्भिः । सताम् मुखे मुखेषु 'च' इति पादपूरणे । 'तु हि च स्म ह वै पादपूरणे' इत्यमरः । कर्पूरैः घनसारखण्डैस्सद्भिः अभावि आस्यत भावे लुङ् । पुण्यपुरुषचरितश्रवणमननादीनामतीव दुरितनिवारकत्वस्य शास्त्रदृष्टत्वादिति भावः । तस्य राज्ञस्सुचरितानि हृदि धारणात् मलयजमिव सतां सुखमुत्पादयन्ति । कर्णसंयोजनात् मुक्तामयकर्णालङ्कारा इव शोभाजनकानि भूत्वा क्षेमंकराणि भवन्ति । मुखसमाकलनात् घनसारस्सौगन्ध्यमुत्पाद्य तन्मालिन्यमिव नीचपुरुषस्तुतिमृषाभाषणादिसंजातं कालुष्यमपनोद्य तत्पावयन्तीति श्लोकार्थः । तस्य कीर्तयस्सतां हृदयाह्लादका भवन्ति । श्रवणपेया भवन्ति । नित्यं



रसनाभिर्गीयमानाः रमाह्लादका भवन्तीति सारांशः । अत्र यशस्संपदां चन्दनालेपनत्वादिकथनमनुपपन्नं सत् सादृश्यपर्यवसायि संजातमिति पदार्थनिदर्शना । रूपकमित्येके । उल्लेख इत्यपरे ॥

**विरोधिवाहिनीनाथ विक्षोभणपटीयसा ।**
**भुजेन भूभृता यस्य प्राप्ता कीर्तिमयी सुधा ॥ ॥32॥**

**विरोधीति ॥** विरोधः एषामस्तीति विरोधिनः शात्रवा राजानः । तएव वाहिनीनाथाः नदीपतयः समुद्राः । यद्वा विरोधिवाहिनीनाथाः शत्रुसेनापतयः तएव विरोधिनः आकाशोपरोधिनः – व्योममार्गसंचारिणः – अतिविवृद्धाः वाहिनीनाधाः समुद्रा इति वा । 'वाहिनी स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयोः' इति विश्वः । तेषाम् विक्षोभणम् व्याकुलीकरणम् पीडनम् तदेव विक्षोभणम् संचालनम् मथनम् । क्षुभ संचलने – ण्यन्ताद्भावे ल्युट् । तत्र पटीयसा अत्यन्तं पट्वा अतिचतुरेण दक्षेण च । 'पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत्' इति मेदिनी । "बहुषु पुत्रेष्वेतदुपपन्नं भवति । अयं मे ज्येष्ठोऽयं मध्यमोऽयं कनीयान्" इत्याद्यन्तवत्सूत्रस्थभाष्यप्रयोगाद्द्वचर्थोपपदेऽपीयसुन् । यस्य राज्ञः भुजेन बाहुना तद्रूपेण भूभृता पर्वतेन मन्दराद्रिणा । कीर्तिरेव कीर्तिमयी । ताद्रूप्ये मयट् । तदाकारा सुधा अमृतम् 'पीयूषममृतं सुधा' इत्यमरः । प्राप्ता लब्धा संपादिता आसादिता च । कर्तृभूत देवादिगता प्राप्तिः करणे उपचर्यते । अस्य राजचन्द्रस्य वैरिविमर्दन संजाता निजभुजबलार्जिता कीर्तिर्देवासुरकृतमन्थानाचलमथनसंभवा सुधेव सर्वजनसमादरणीया समभवदिति परमार्थः । अत्र ह्यवयवानामवयविनश्च सामस्त्येन रूपणमिति समस्तवस्तुविषयं सावयवं रूपकम् । एकत्र श्लिष्टरूपकं च । पुरा देवा असुराश्च मन्दराचलं मन्थदण्डं कृत्वा क्षीरोदं ममन्थुः । तेन समुत्पन्ना सुधा देवताजीविकेति

पौराणिकी गाथाऽत्रानुसंधेया ॥

**यस्य कीर्त्या प्रसर्पन्त्या गुणकर्पूरशालिनः ।**
**जगदण्डकरण्डस्य क्षौमकञ्चुलिकायितम् ॥ ॥33॥**

**यस्येति** ॥ यस्य राज्ञः प्रसर्पन्त्या सर्वतो व्याप्नुवत्या ब्रह्माण्ड माच्छादयन्त्येत्यर्थः । गुणास्सुगुणा एव कर्पूरः घनसारखण्डः तैः शालते शोभते इति गुणकर्पूरशाली । शाडृ श्लाघायामित्यस्माण्णिनिः । डलयो रैक्यात् शालत इति काश्यपः । धातूनामनेकार्थत्वादस्य दीप्त्यर्थकता । यद्वा 'शल संचलने' इत्यस्माद्धेतुमण्ण्यन्ताण्णिनिः । गुणकर्पूरान् शालयति शोभयतीति वार्थः । तस्य तथोक्तस्य जगदण्डम् ब्रह्माण्डः तदेव करण्डः संपुटः तस्य क्षौमकञ्चुलिकायितम् — क्षुमायाः विकारः क्षौमी धवलदुकूलम् । कीर्तेर्धावल्यं कविसमयसिद्धमित्येवमुच्यते । 'क्षौमपट्टे दुकूलेऽस्त्री' इति मेदिनी । तथाऽपि 'दश त्रिषु । वाल्कं क्षौमादि' इत्यमरव्याख्यावसरे – 'वाल्कक्षौमकालकार्पासत्रादरकौशेय राङ्कवानाहतनिष्प्रवागितन्त्रकाणि' ( दश त्रिलिङ्गानि ) इति स्वामी । अत स्त्रीलिङ्गताऽस्य न विरुद्धा । 'तस्य विकारः' इत्यण् । ङीप् । साचासौ कञ्चुली स्त्रीणां स्तनावरणं चोलकं सैव कञ्चुलिका । स्वार्थे कः । 'केऽण' इति ह्रस्वः । तत्सादृश्याल्लक्षणया आच्छादकः पट उच्यते । सैव आचरितम् तद्वत् स्थितम् । कञ्चुलिकाशब्दात्सुबन्तात् 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । तदन्ताद्भावे क्तः । यथा वाऽमूल्यस्य कस्य चन वस्तुनस्समाश्रयस्य संपुटस्य संरक्षणार्थे पटसंवरणं क्रियते लोके तद्वदिति भावः । बुक्कराजेन्द्रस्य गुणाः कर्पूरवत्सर्वजनाह्लादका वर्तन्ते । तैर्जनितं तद्यशो जनैर्जेगीय्यमानं ब्रह्माण्डमभितो व्याप्तं तद्रक्षणे जागरूकं वर्तत इति तात्पर्यार्थः । अत्र क्षौमकञ्चुलिकायितमित्युपमा जगदण्डकरण्डमित्यादिरूपकमपेक्षत इति तयोस्संकरः ।



आभ्यामाधेयभूतायाः कीर्तेराधारभूताद् ब्रह्माण्डादाधिक्यं गम्यत इत्यधिकालङ्कारध्वनिरपि ॥

**परिपन्थिनृपप्राण पवनाहारदारुणः ।**
**असृजद् भुजगो यस्य कृपाणः कीर्तिकञ्चुकम् ॥ ॥34॥**

**परिपन्थीति** ॥ यस्य कृपाणः खड्गः । परिपन्थिनः शात्रवाः नृपाः भूपालाः 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि' इति निपातनात्साधुः । यद्यपि छन्दस्येवायं निपातः तथापि छान्दसा अपि क्वचिद्भाषायां भवन्ति 'मासश्छन्दसि' इति वार्तिके छन्दोग्रहण सामर्थ्यात् । अत एव बहुलं कवय एनं प्रयुञ्जते । अमरश्चाह 'प्रत्यर्थिपरिपन्थिनः' इति । तेषां प्राणाः असवः त एव पवनाः वायवः, तेषाम् आहारः भक्षणम् अपहरणं च । आङ्पूर्वाद्धरतेर्भावे घञ् । तेन कर्मणा दारुणः भयावहः दयाविरहितश्च । सर्पाणां पवनाशनत्वादेवमुक्तिः । कृपाणः खड्गः सएव भुजगः सर्पः भुजेन कौटिल्येन गच्छतीति भुजगः । 'गमेस्सुपि वाच्य' इति डः । कीर्तिः यशः 'यशः कीर्तिस्समज्ञा च' इत्यमरः । सैव कञ्चुकः निर्मोकः 'समौ कञ्चुकनिर्मोकौ' इत्यमरः । तम् असृजत् विससर्ज निर्ममौ च । सृजतेः लङ् । सृज विसर्गे - अयमकर्मक एव न सकर्मकोपि । अतएव 'कर्मवत्कर्मणा तुल्यक्रिय' इति सूत्रे सृजियुज्यो स्सकर्मकयोः कर्मवद्भाव इति नागेशः । संग्रामभूमिषु वीरविहारं कुर्वतस्तस्य राज्ञः करपालः शत्रुसंहरणे नितरामुपकुर्वन् सर्पो यथा निर्मोकत्यागेन सुखी सम्पद्यते तथा शात्रवसंहरणेन दिगन्तेष्वनन्तमस्य यशो निर्माय कृतकृत्योऽहं समभवमित्यमन्यतेति भावः । समस्तवस्तुविषयकं रूपकमलङ्कारः ॥

**यदीयो दक्षिणः पाणिः कृपाणीग्रहणच्छलात् ।**
**अशिक्षत विपक्षश्री वेणीकर्षणकौशलम् ॥ ॥35॥**

**यदीय इति ॥** यस्य अयम् यदीयः राज्ञः अवयवीभूत इत्यर्थः । तस्येदमित्यर्थे 'त्यदादीनि च' इति वृद्धत्वाच्छः । दक्षिणः वामेतरः पाणिः हस्तः कर्ता । कृपाणी छुरिका असिपुत्रिका तस्याः ग्रहणम् स्वीकरणम् धारणमिति यावत् । तदेव छलम् व्याजः तथा बहिर्दशनं वस्तुतो न तथेति भावः । 'छलं छद्मस्खलितयोः' इति हैमः । तस्मात् तद्व्याजीकृत्येत्यर्थः । विरुद्धः पक्षः येषां तेषाम् विपक्षाणाम् शत्रूणाम् श्रीः लक्ष्मीः राज्यलक्ष्मीः । तस्याः वेणी केशपाशः तस्य कर्षणम् बलादाकर्षणम् । कृषेर्ल्युट् । तत्र कौशलम् नैपुणम् अशिक्षत अभ्यस्यत् । शिक्ष विद्योपादाने लङ् । अत्र कृपाणीग्रहणं मिथ्या, विपक्षश्रीवेणीग्रहणं तु सत्यमिति छल शब्देन प्रतिपादनात् कैतवापह्नुतिः । तस्य लक्षणं तु "कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः' इति । अनेन शात्रववधार्थमसिपुत्रिकां स राजा यदा धत्ते तदानीमचिरादेव तेषां राज्यलक्ष्मीरनाकृष्टेवाकृष्टा नृपमेनं वृणुते इति वर्णनेन तस्य युद्धेष्वपराजय इत्येवंरूपं वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥

जगद्रक्षणे नितरामयं जागर्तीति स्वधर्मनिरततामस्य बोधयति –

**लक्ष्मीश्चिराज्जगद्रक्षा जागरूकमुपेत्य यम् ।**
**योगनिद्राजडं विष्णुं कदाचिदपि नास्मरत् ॥ ॥36॥**

**लक्ष्मीरिति ॥** लक्ष्मीः विष्णुप्रिया राज्यसंपत् इति च गम्यते । 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः । 'लक्ष्मी



स्संपत्तिशोभयोः' इति नानार्थरत्नमाला । जगतः लोकस्य, रक्षा परिपालनविधिः तस्मिन् जागरूकम् उन्निद्रम् श्रद्धानं च यम् बुक्क राजम् चिरात् चिरकालस्य । उपेत्य प्राप्य तस्मिन् सन्निधाय तत्सन्निधौ प्राप्तानन्देत्यर्थः । योगः ध्यानम् सएव निद्रा बाह्येन्द्रिय निमीलनम् चक्षुर्मीलनं च । तथा जडम् मूढम् कर्तव्येषु अलसम् निरुद्धेन्द्रियमिति च । युगान्ते श्रीमहाविष्णोरिन्द्रियसंरोधः योगनिद्रे त्युच्यते । सा जले यस्य तमित्यप्यर्थान्तरम् । डलयोरभेदात् । विष्णुम् व्यापनशीलमित्यपि गम्यते । कदाचिदपि एकदापि न अस्मरत् नैव चिन्तयामास । स्मृ चिन्तायाम् लङ् । बहुकालं प्रतीक्ष्य स्वभाग्यवशेन यथाकथमपि लब्धस्य गुणवद्वस्तुनः त्यागः विवेकिना जनेन केनाऽपि कथंवा क्रियेतेति भावः । जगद्रक्षाजागरूकत्वयोग निद्राजडत्वादयः पदार्थाः राजोपसर्पणे विष्णुविस्मरणे च हेतव इति काव्यलिङ्गम् । महदाश्रयस्य लाभे सत्यल्पाश्रयस्य त्यागः लोकसिद्ध एवेत्यर्थान्तरन्यासोऽपि लक्ष्म्याः राजसमाश्रयणविष्णुविस्मरणात्म काभ्यां वाक्यार्थाभ्यां प्रतीयत इत्यलङ्कारध्वनिः । सकलगुणसंपूर्ण निरतिशयानन्दरूपं भगवन्तं कथं लक्ष्मीरत्यजदिति प्रतीयमानस्य विरोधस्य अनौचित्यस्य च श्लिष्टतत्तत्पदैः परिहार इति विरोधाभासश्चालङ्कारः । अत्र वर्णितस्य लक्ष्मीकृतविष्णुपरित्यागस्याऽसंबन्धेऽपि संबन्धः कवि कल्पित इत्यतिशयोक्तिभेदोपि । एकत्र संसृष्टिरपरत्र सङ्करश्चेति विवेकः ॥

**कलिकालमहाघर्म प्लुष्टो धर्ममहीरुहः ।**
**यस्य दानाम्बुसेकेन पुनरङ्कुरितोऽभवत् ॥ ॥37॥**

**कलिकालेति ॥** कलिश्चासौ कालः कलिकालः कलियुगसमयः 'चतुर्थेऽपि युगे कलिः' इत्यमरः । 'कालो मृत्यौ महाकाले समये यमकृष्णयोः' इति मेदिनी । स एव महान् घर्मः भयङ्करो निदाघः 'घर्मस्स्यादातपे ग्रीष्मेऽप्युष्णभेदाम्बुनोरपि' इत्यमरसुधा । 'सन्मह'

दिति समासः । तेन प्लुष्टः दग्धः 'प्लुषु दाहे' इत्यस्मात् क्तः । 'यस्य विभाषा' इति नेट् । 'प्रुष्टप्लुष्टोषिता दग्धे' इत्यमरः । धरति विश्वमिति धर्मः न्यायः सुवृत्तं वा 'धर्माः पुण्ययमन्याय स्वभावाचारसोमपाः' इत्यमरः । धृञ् औणादिको मनिन् । स एव मह्यां रोहतीति महीरुहः वृक्षः । 'वृक्षो महीरुहश्शाखी' इत्यमरः । रुहेः कः । यस्य राज्ञः । दानाम्बु दानजलम् तस्य सेकः क्षरणम् स्रावः 'षिच क्षरणे' घञ् । जलसेचनेन आर्द्रीकरणमित्यर्थः । तेन पुनः भूयः अङ्कुरस्सञ्जातोऽस्य अङ्कुरितः । तारकादित्वादितच् । अङ्कुरवान् कृत इति मतुबन्तादङ्कुरशब्दाण्णिचि णाविष्ठवद्भावे मतुपो लुग्वा । तथाभूतस्सन् अभूत् आसीत् अतिष्ठदित्यर्थः । अधर्मं विनाशय्य सुकृताचरणेन कलियुगमिमं कृतयुगं कृतवान् स इति भावः । दग्धानामपि केषांचन वृक्षाणां पुनरङ्कुरितत्वं प्रसिद्धं बदर्यादौ । कलौ दानस्य प्रशस्तत्वेन धर्मज्ञस्स भूपतिस्तदाचरणे प्रवृत्तः इत्याकूतम् । बुक्कराजस्य विप्राणामग्रहारादिदानेन वेदभाष्यादिसमुद्धरणेन वैदिकधर्मोद्धरणं लोके सुविदितमेव । अत्र रूपकालङ्कारः स्पष्टः ॥

**यस्याङ्घ्रिपीठसंघर्ष रेखालाञ्छितमौलयः ।**
**आशास्वरिनृपा एव जयस्तम्भतया स्थिताः ॥ ॥38॥**

**यस्याङ्घ्रीति ॥** अङ्घ्रिपीठः पादपीठः तस्य संघर्षः संघट्टनम् तेन साकं संपीडनम् तस्मात् रेखाः तज्जनिता रेखाः लिखितलिपय इति च गम्यते । ताभिः लाञ्छिताः संजातचिह्नाः संप्राप्तप्रत्यभिज्ञा इति च गम्यते । तारकादित्वादितच् । तादृशाः मौलयः किरीटानि, ( शिरांसि ) अग्रभागा इति च गम्यते । तानि येषां तथोक्ताः । 'किरीटे मौलिरक्लीबे चूडासंयतकेशयोः'- इति रभसः । तादृशः अरिनृपाः शत्रुभूपालाः त एव ( कर्तारः ) आशासु दिक्षु । दशस्वपीत्यर्थः । 'आशा ककुभि तृष्णायाम्' इति हैमः ।



यस्य राज्ञः । जयस्तम्भतया – जयस्य विजयप्रशस्तेः स्तम्भाः आधारभूताः स्थूणाः । अश्वघासादिवत्तादर्थ्यषष्ठ्या समासः । जयप्रख्यापनाय स्थापिताः शासनस्तम्भा इत्यर्थः । तेषां भावः तत्ता तया । उपलक्षणे तृतीया । तदुपलक्षिताः । यदीयजयस्तम्भा भूत्वेति यावत् । स्थिताः अतिष्ठन् अवर्तन्त । तिष्ठतेः 'गत्यर्थाकर्मक' इति क्तः । सामन्तभूपतयस्तदीयपादपीठेषु स्वमस्तकानि विन्यस्य तं नित्यं नमस्कुर्वन्ति । तत्समये स्वशिरोधृतकिरीटैस्तत्पादपीठसंमर्दनसंजातलेखाः लिखितलेखा इव मौलिषु विराजन्ते । तथा दिगन्तेषु स्थितास्ते राजानः तस्य कीर्तिं जगति प्रख्यापयन्ति । अतएव भूपतयस्ते जयस्तम्भतया रूप्यन्त इति रूपकमलङ्कारः । तत्र च 'अङ्घ्रिपाद' इत्यादि पदार्थो विशेषणगत्या हेतुतामापन्नस्तस्य साम्यसंपादने बहूपकरोतीति काव्यलिङ्गं च रूपकेण संकीर्यते ॥

**यत्प्रतापानलज्वाला मालाकबलिता इव ।**
**कीर्तयश्शत्रुभूपाना मासन्मलिनमूर्तयः ॥ ॥39॥**

**यदिति ॥** शत्रुभूपानाम् विरोधिनरपालानाम् कीर्तयः यशांसि (कर्त्र्यः) यस्य प्रतापः कोशदण्डजं तेजः "अधिक्षेपावमानादेः प्रयुक्तस्य परस्य यत् । प्राणात्ययेऽप्यसहनं तत्तेजस्समुदाहृतम्" इति भरतः । स एवानलोऽग्निः परेषां तापकारित्वात् । तस्य ज्वालाः शिखाः । 'वह्नेर्द्वयोर्ज्वालकीलौ' इत्यमरः । तेषाम् मालाः श्रेणयः पङ्क्तयः ताभिः कबलिताः कबलवत्यः कृताः भक्षिताः निरवशेषं दग्धा इति यावत् । मतुबन्तात्कबलशब्दात् 'प्रातिपदिकाद्धात्वर्थे' इति णाविष्ठवद्भावे मतुपो लुक् । तथाभूता इव । इवेत्युत्प्रेक्षायाम् । मलिनाः - मलः मालिन्यमासामस्ति 'ज्योत्स्ना तमिस्रा' इत्यादिना साधुः । मलीमसाः कच्चराः मलदूषिताः अत्यन्तं नैल्यवत्य इति यावत् । तथाभूताः मूर्तयः आकाराः यासाम् तथोक्ताः । तादृशाः

आसन् अभूवन् । अपयशसो नैल्यस्य कविसमयसिद्धत्वादेवं संभाव्यते । तत्प्रतापमसहमानाश्शात्रवास्स्वपराजयमङ्गीकुर्वाणास्तस्य दासा अभवन्निति परमार्थः । लोके दग्धस्य वस्तुनो नैल्यं दृश्यत इति शत्रुभूपालकीर्तिषु जनैरीक्ष्यमाणं मालिन्यं नरेन्द्रप्रतापानलदाहप्रभवमेव भवेदिति कीर्तीनां मलिनीभावस्य हेतुरुत्प्रेक्ष्यते । प्रतापेऽनलत्वरूपणाद्रूपकमपि । एतच्चोत्प्रेक्षायामतीवोपकरोतीत्येतयोरङ्गाङ्गिभावेन सङ्करः ॥

**बद्धास्सभाङ्गणे यस्य भान्ति स्म जयसिन्धुराः ।**
**बन्दीकृता इवाम्भोदा जैत्रयात्रानिरोधिनः ॥ ॥40॥**

**बद्धाइति ॥** यस्य । जयनम् जयः । जि जये एरच् । जयावहास्सिन्धुराः जयसिन्धुराः गजविशेषाः सभायाः आस्थानमन्दिरस्य ( सभाश्रयत्वात्सभाशब्देन सभामन्दिरो लक्ष्यते ) अङ्गनम् प्राङ्गणम् तस्मिन् बद्धाः संयताः । बन्धेः क्तः । राजभिस्तदनुग्रहसंपादनायोपदीकर्तुमानीतास्तत्र बद्धा वर्तन्त इत्यर्थः । जेतुं शीलमस्य तृच् । जेता जेतैव जैत्रः । प्रज्ञादित्वादण् । 'जैत्रस्तु जेता' इत्यमरः । तस्य यात्रा प्रस्थानम् शत्रुजयाय दण्डयात्रेति यावत् । 'यात्रा तु यापनेऽपि स्याद् गमनोत्सवयोः स्त्रियाम्'इति मेदिनी । तां निरोद्धुं शीलमेषां तथोक्ताः । ताच्छील्ये णिनिः । तथाभूतास्सन्तः वर्षाकालस्य राज्ञां जैत्रयात्राया अननुकूलत्वादिति भावः । बन्दीकृताः बन्द्याम् कारागृहे कृताः निक्षिप्ताः उपग्रहीकृता इत्यर्थः । 'प्रग्रहोपग्रहौ बन्द्याम्' इत्यमरः । सप्तमीति योगविभागात्समासः । यद्वा । अबन्द्यः बन्द्यः कृता इति विग्रहः । 'श्रेण्यादयः कृतादिभि' रिति समासः । श्रेण्यादिराकृतिगण इति गणरत्नमहोदधिः । बन्दीशब्दश्चात्र शुद्धान्तादिवत् तत्स्थान् लक्षयति । अम्भः उदकम् ददतीति अम्भोदाः । ददातेः कः । त इव भान्ति स्म प्राकाशत । 'लट् स्म' इति भूते लट् । लोके कश्चन दुष्टस्सत्कार्याचरणस्य विघ्नमाचरन् राज्ञा शिक्ष्यते । यदि स राज्ञ एव



द्रुह्यति तदा किमुतेति भावः । गजानामम्भोदानां च साम्यं प्रसिद्धं कविसमये । राज्ञस्सभाङ्गणे बद्धास्ते बन्दीकृतजलदत्वेन संभाव्यन्त इति स्वरूपोत्प्रेक्षा । जैत्रयात्रानिरोधिन इत्ययं तत्र हेतुं निर्दिशतीति तस्याः काव्यलिङ्गेन सङ्करः । देवस्य पर्जन्यस्याप्यनुशासने समर्थस्स इति तस्य प्राभवमनितरसाधारणमित्युत्प्रेक्षया द्योत्यत इत्यलङ्कारकृतो वस्तुध्वनिः ॥

तस्य राज्ञः दण्डसमुद्भवं तेजः प्रस्तौति –

**यस्य सेनातुरङ्गाणां खुरैरुत्थापितं रजः ।**
**अकाण्डे राहुसन्देहं मार्ताण्डस्योदपादयत् ॥ ॥41॥**

**यस्येति ॥** यस्य राज्ञः । सेना चतुरङ्गबलम् तत्रत्याः तुरङ्गाः अश्वाः । तुर त्वरणे - घञर्थे कः । तुरेण गच्छन्तीति गमश्चेति डः । अरुर्द्विषदजन्तस्येति मुम् । तेषां खुरैः शफैः पादैः उत्थापितम् उद्यापितम् आकाशं प्रापितम् । उत्पूर्वात्तिष्ठतेः ण्यन्तात् क्तः । 'अर्तिह्रीव्लीरीक्नूय्याताम्' इति पुगागमः । 'उद स्थास्तम्भोः' इति पूर्वसवर्णः । रजः धूलिः । कर्ता । अकाण्डे असमये अपर्वणीत्यर्थः । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । मार्ताण्डः सूर्यः । मृतम् अण्डम् ब्रह्माण्डम् मृतण्डम् । शकन्ध्वादित्वात्पररूपम् । तत्र भवः अण् । ब्रह्माण्डं द्विधा भिन्नं सदमुमुत्पादयामासेति मत्स्यपुराणादवगम्यते । तस्य । राहुसन्देहम् राहुर्वाऽन्यद्वेति कोटिद्वयरूपानुभूतिविशेषम् । उदपादयत् अजनयत् आपादयामासेत्यर्थः । प्रायशो राहुः पर्वणि ग्रसते इदानीमपर्वण्यपि कथमत्तुं मामायाति अतोऽयं राहुर्वाऽन्यद्वेति सूर्यस्संदेग्धीति भावः । मनोजवेन धावतामश्वानां पादघट्टनैरुत्थितो धूलिनिचयो वियत्तलस्य स्वव्याप्त्या नैल्यमापादयन् सर्पाकारो राहुरिवाभाति । राहुश्च कृष्णसर्पाकारः । तच्च रजस्सूर्यं स्थगयतीति तादृशसंदेहे बीजमभवत्तत् । अपर्वणि राहुसमागमोऽयं

महान्तमुत्पातं जनयिष्यतीति सूर्योऽप्याशङ्कतेति च गम्यते। अत्र रजसि राहुसंदेहस्य सूर्येऽसम्बन्धेऽपि तत्सम्बन्धो वर्णित इत्यतिशयोक्तिः। कोटिद्वयावगाहिज्ञानविषययोः प्रत्यक्षतोऽनिर्देशेऽपि संदेहपदेन तदवगमात् संदेहालङ्कारध्वनिश्च। पुरा मोहिनीरूपधरं विष्णुं वञ्चयित्वा सुधापाने प्रवृत्तः कश्चन दैत्यस्सूर्यचन्द्राभ्यामावेदितो दैत्यारिणा कृतवधो राहुकेतू भूत्वा ताभ्यां बद्धवैरः पर्वणि पर्वणि तौ ग्रसत इति पुराणेषु प्रसिद्धम्। अपर्वण्यपि राहुग्रहणं चन्द्रसूर्ययोररिष्टसूचकतया शास्त्रेषूक्तम् – यथाऽह वराहमिहिरः – "अपर्वणि तथा राहुग्रहणं चन्द्रसूर्ययोः। चन्द्रार्कमण्डलच्छिद्रं दृष्ट्वा जनपदक्षयः" इति॥

**यद्विभूतिस्तुतौ स्वल्पा लक्ष्मीर्यक्षामरेशयोः।**
**दूरे दुर्योधनादीनां सम्पत्सादृश्यकल्पना॥** ॥42॥

**यद्विभूतीति**॥ यस्य राज्ञः। विभूतिः ऐश्वर्यम् यद्विभूतिः। 'विभूतिर्भूतिरैश्वर्यम्' इत्यमरः। तस्याः स्तुतिः श्लाघनम्। स्त्रियाम् क्तिन्। तस्यां सत्याम् तत्प्रस्तावनाप्रसङ्गे संभवतीत्यर्थः। यक्षाश्च अमराश्च यक्षामराः। यक्षाः देवयोनिविशेषाः। अमराः देवाः। तेषाम् ईशौ प्रभू। यक्षेशः कुबेरः अमरेशः इन्द्रश्चेत्यर्थः। तयोः लक्ष्मीः सम्पत्। स्वल्पा सुष्ठु अल्पा परिमाणतः अत्यन्तं सूक्ष्मा अतिन्यूना असत्कल्पेत्यर्थः। 'कुगतिप्रादयः' इति समासः। तदीयाया एतदीयायाश्च सम्पदस्साम्यमेव नास्तीति यावत्। तद्विभूतिस्तुतौ - इत्यर्थादापतति। दुःखेन युध्यत इति दुर्योधनः दुर्योधनसंपदिति संपदि प्रख्यातिं गतो धार्तराष्ट्रः 'भाषायाम् शासियुधिदृशि' इत्यादिना युच्। सः आदिः सदृशः येषाम्। तेषाम्। संपत् तस्याः 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' इति पक्षे षष्ठी। तयेत्यर्थः। सादृश्यम् साम्यम्। तस्य कल्पना संभावना तद्विषयक ऊह इत्यर्थः। दूरे दूरा दूरस्था नतु सन्निहिता। हस्तिनामेव दूरापास्तत्वे मशकानां



तु का गतिरिति न्यायादिति भावः। 'सप्तम्यधिकरणे च' इति प्रातिपदिकार्थमात्रे सप्तमी। तत्प्रसङ्गलेशस्याप्यत्र नैवावकाश इति तात्पर्यम्। इन्द्राद्यैश्वर्यसम्पत्तिमपि नितरामत्येत्यस्य राजेन्द्रस्यैश्वर्यसमृद्धिरित्यत्युक्तिः। अत्र चैतदैश्वर्यापेक्षया विबुधेश्वरादिविभूतेर्न्यूनतावर्णनेन दुर्योधनादिसम्पत्साम्यनिराकृतिर्दण्डापूपिकान्यायादवातरदिति काव्यार्थापत्तिरलङ्कारः। "दण्डापूपिकया यत्रार्थान्तरापतनं भवेत्। काव्यार्थापत्तिरेषा स्यादलङ्कारविदां मता॥" इति तल्लक्षणात्। "अर्थेन केनचित्तुल्यन्यायादर्थान्तरस्य चेत्। आपत्तिः कथ्यते सैषा काव्यार्थापत्तिरुच्यते॥" इति लक्षणान्तरमुक्तं नवीनैः। "का वार्ता सरसीरुहा" मित्यादौ तदव्याप्तिदूषितमिति त्वन्यदेतत्॥

**तस्यासीद्विजया नाम विजयार्जितसंपदः।**
**राजधानी बुधैश्श्लाघ्या शक्रस्येवामरावती॥** ॥43॥

**तस्येति**॥ विजयते इति विजयः शात्रववशीकरणम्। 'विपूर्वात् जि अभिभवे इत्यस्मादेरच्। तेन आर्जिता संपादिता साधितेत्यर्थः। आङ्पूर्वादर्जेः क्तः। तादृशी संपत् संपत्तिः विभवः यस्य तथोक्तस्य। स्वपराक्रमेण स दश दिशो विजित्य संपदं स्वयमार्जयामासेति भावः। तस्य राज्ञः विजया नाम विजयेति प्रसिद्धा तन्नाम्ना सर्वजनविदितेत्यर्थः। न्यूनीकरणं सर्वोत्कर्षस्थितिर्वा जिधातोरर्थ इति सर्वान् शत्रूनधःकरोति सर्वोत्कर्षेण वर्तत इति वा विजयाशब्दस्तस्यां सर्वथाऽर्थवानिति तात्पर्यम्। विपूर्वाज्जयतेरच्। राजधानी राज्ञो निवासभूता प्रधाननगरी। शक्रस्य इन्द्रस्य अमरावती नगरी स्वर्गराजधानीव। अमरास्सन्त्यस्यामिति मतुप्। 'मतौ बह्वचोऽनजिरादीनाम्' इति दीर्घः। बुधैः कविभिः देवैश्च 'बुधः कवौ रौहिणेये' इति विश्वः। बुध्यते इति बुधः 'इगुपधज्ञा' इति कः। श्लाघ्या स्तुत्या तैर्बहुधा वर्ण्यमानेत्यर्थः। श्लाघृ कत्था

याम् । ऋहलोर्ण्यत् । तादृशी आसीत् बभूव स्थितेत्यर्थः । विजया नगरी भुवमवतीर्णा द्वितीया देवनगरीव स्थित्वा सौन्दर्यवैभवाद्यति शयैस्सर्वा नगरीः अतिशेत इति परमार्थः । अत्र श्लेषोपमा श्लेषो वा मतभेदात् ॥

इतः परम् द्वाविंशश्लोकैः तामेव राजधानीं वर्णयति –

**सुरलोकान्तसंक्रान्त स्वर्णदीमत्सरादिव ।**
**परिखाकारतां यान्त्या परीता तुङ्गभद्रया ॥ ॥44॥**

**सुरेति** ॥ सुराणां लोकः देवलोकः 'सुरलोको द्योदिवौ द्वे' इत्यमरः । तस्य अन्तः स्वरूपम् देवलोक इति यावत् । 'अन्त स्स्वरूपे निकटे प्रान्ते निश्चयनाशयोः' इति विश्वः । तस्य संक्रान्ता संक्रान्तः संक्रमः दुर्गसंचरः काष्ठनिर्मितो दारुमयस्सेतुः सः अस्याम् अस्तीति मत्वर्थीयोऽकारः । परिखेत्यर्थः । 'अस्त्री तु संक्रमो दुर्ग संचरः' इत्यमरः । 'संक्रान्तिर्द्वारभूमिका' इति हैमोऽपि । संपूर्वात् क्रमेः 'क्तोऽधिकरणे ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इत्यधिकरणे क्तः । परिखानामुपरि दुर्गसंचारवत्त्वं च रामायणे वर्णितम् — "सौवर्णश्च महांस्तस्याः प्राकारो दुष्प्रधर्षणः । .... सर्वतश्च महा भीमाश्शीततोयवहाश्शुभाः । अगाधा ग्राहवत्यश्च परिखा मीनसेविताः । द्वारेषु तासां चत्वारस्संक्रमाः परमायताः । त्रायन्ते संक्रमास्तत्र परसैन्यागमे सति । यन्त्रैस्तैरवकीर्यन्ते परिखासु समन्ततः ॥" इति । सा चासौ स्वर्णदी आकाशगङ्गा तथोक्ता । 'स्वर्णदी सुरदीर्घिका' इत्यमरः । तस्याम् मत्सरः ईर्ष्या 'मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु' इत्यमरः । तस्मात् तेन हेतुना । हेतौ पञ्चमी । इवेति संभावनायाम् । एवं संभाव्यत इत्यर्थः । परितः खन्यत इति परिखा खेयम् 'खेयं तु परिखा' इत्यमरः । खनु अवदारणे 'अन्येभ्योऽपि दृश्यते' इति डः । तस्याः आकार इव आकारः यस्य परिखा



कारः । तस्य भावः तत्ताम् परिखात्वमिति यावत् । यान्त्या लभन्त्या धरन्त्या । यातेरादादिकाल्लटश्शता । 'आच्छीनद्योः' इति पक्षे नुम् । ङीप् । तुङ्गभद्रया 'तुङ्गा भद्रा' इति नदीद्वयमिदमेवं व्यवह्रियते । एतन्नामकनद्या परीता अभितो व्याप्ता । समानानामुत्तमश्लोकत्वस्य सर्वैरप्यभिलष्यमाणत्वादिति भावः । परिपूर्वादिणः कर्मणि क्तः । देव लोकपरिखात्वं च स्वर्णद्याः प्रसिद्धम् – अतएव कालिदास एवमाह – "गङ्गास्रोतः परिक्षिप्तं वप्रान्तर्ज्वलितौषधि । बृहन्मणिशिलासालं गुप्तावपि मनोहरम्" इति । अत्र मल्लिनाथः – "गङ्गायाः स्रोतोभिः प्रवाहैः परिक्षिप्तम् परिवेष्टितम् तैरेव सपरिखमित्यर्थः" इति । अत्र तुङ्गभद्रायाः परिखात्वे वस्तुतस्स्वर्णदीमत्सरोऽहेतुरित्यहेतोर्हेतुत्व कल्पनात् हेतूत्प्रेक्षा । अनया गङ्गावदगाधत्वं परिखाया अस्याः ऐश्वर्यादिभिस्स्वर्लोकसाम्यं विजयानगर्याः, सुमनस्त्वं च तत्रत्यजनानां व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥

**लक्ष्मीलतालवालेन क्ष्मावधूनाभिशोभिना ।**
**चक्राचलप्रकारेण प्राकारेण परिष्कृता ॥ ॥45॥**

**लक्ष्मीरिति** ॥ लक्ष्मीः संपत् सैव लता वल्ली तस्या आलवालम् (आसमन्ताल्लवमल्पजलम् आलाति गृह्णातीत्यालवालम् इति व्युत्पत्तिः) आवापः वृक्षमूलकृतो जलाधारः । 'स्यादालवालमावापः' इत्यमरः । लक्ष्म्याः नित्यनिवास इत्यर्थः । तेन तथाभूतेनेत्यर्थः । प्राकारस्यालवालत्वोक्त्या आलवालं यथा लतायाः परिपोषकं जलादिना तथा लक्ष्म्यास्संवर्धकं शात्रवनिरोधनेनायमित्युक्तं भवति । क्ष्मा भूमिः सैव वधूः स्त्री 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः । तस्याः नाभिः तथाभूता शोभत इति स तथोक्तः । ताच्छील्ये णिनिः । भूभागमध्य स्थितत्वादगाधत्वाच्च नाभिसदृशः प्राकार इति भावः । तेन । चक्रः चक्रवालः चक्रम् भूमण्डलम् वलते वेष्टत इति चक्रवालः लोकालोकः

सप्तद्वीपाया भूमेरवधिभूतः पर्वतः (चक्रवालशब्दे 'विनापि प्रत्ययेन पूर्वोत्तरपदयोर्वा लोपो वक्तव्यः' इति वालशब्दस्य लोपे चक्र शब्दस्य शेषः) चक्र इत्यचलः पर्वतः चक्राचलः तस्य प्रकारः विधा यस्य तेन। सर्वथा तत्सदृशेनेत्यर्थः। सर्वां भूमिमावृत्य व्योमस्पर्शी वर्ततेऽयमित्यहो अस्य परिणाहः औन्नत्यं चेति भावः। प्राकारेण सालेन दुर्गमभितो वर्तमानेन 'प्राकारो वरुणस्सालः' इत्यमरः। परिष्कृता अलंकृता। परिपूर्वकात्कृञः कर्मणि क्तः। 'संपरिभ्यां करोतौ भूषणे' इति सुट्। 'परिनिविभ्याम्' इति षत्वम्। परंपरितरूपकमलङ्कारः ॥

**स्फुरन्मणिप्रभाहूत पुरुहूतशरासनैः।**
**सुमेरुशृङ्गसंकाशै गोंपुरैरुपशोभिता ॥** ॥46॥

**स्फुरदिति ॥** स्फुरन्त्यः शोभमानाः मणीनां प्रभाः कान्तयः ताभिः आहूतम् आकारितम्। स्पर्धयेति भावः। आङ्पूर्वात् ह्वयतेः क्तः। 'वचिस्व' पीति संप्रसारणम्। (पुरु बहुलम् हूतम् आह्वानम् यज्ञेषु यस्य तस्य) पुरुहूतस्य इन्द्रस्य (शरा अस्यन्ते क्षिप्यन्तेऽनेन) शरासनम् धनुः इन्द्रधनुरित्यर्थः। तत् यैस्तैः तथाविधैः। नवरत्नकान्तयः इन्द्रधनुषः प्रभा इव नैकविधास्तत्र विद्योतन्त इति भावः। सुमेरुः हेमाद्रिः 'मेरुस्सुमेरुर्हेमाद्रिः' इत्यमरः। तस्य शृङ्गाणि शिखराणि तैः सदृशानि तथोक्तानि। तैः 'स्युरुत्तरपदे त्वमी निभसंकाशनीकाशप्रती काशोपमादयः' इत्यमरः। गोपुराणि पुरद्वाराणि द्वाराणि वा 'पुर द्वारं तु गोपुरम्' इति 'द्वारमात्रं तु गोपुरम्' इति चामरः। तैः उपशोभिता विद्योतिता संप्रापितप्रकाशेत्यर्थः। उपपूर्वात् शुभ भासने इत्यस्मात् ण्यन्तात् कर्मणि क्तः। गृहद्वाराणि पुरद्वाराणि च काञ्चन निर्मितानि महोन्नतानि भूत्वा प्रकाशन्ते। तस्मान्मेरोरग्रभागैस्सदृशास्ते राजन्त इत्युपमीयन्ते ॥



**उत्फुल्लचम्पकाशोक नागकेसरकेसरैः।**
**वसन्तवासभवनै रारामैरभितो वृता ॥** ॥47॥

**उत्फुल्लेति ॥** उत्फुल्लाः सुष्ठु विकसिताः 'फुल्ल विकसने' पचाद्यच्। चम्पकाः चाम्पेयपुष्पाणि 'पुष्पमूलेषु बहुलम्' इति विकार प्रत्ययस्य लुक्। अशोकाः वञ्जुलाः तेषाम् पुष्पाणि। नागकेसराः काञ्चनाह्वयपुष्पाणि। केसराः वकुलपुष्पाणि 'लुपि युक्तवद्व्यक्तिवचने' इति प्रकृतिलिङ्गता। ते येषु तैः। वसन्तस्य तदाख्यस्य ऋतोः तदधिष्ठानदेवस्य माधवस्येत्यर्थः। वासः निवासः तस्य तदर्थे – तादर्थ्ये षष्ठी। यानि भवनानि गृहाः तैः तैरिव स्थितैरित्युत्प्रेक्षा। सर्वकालेषु सर्वदा वृक्षाः पुष्प्यन्तीति तेषामाश्रयाः आरामाः वसन्तवासभवनानि स्युरिति संभाव्यन्ते। तैः आरामैः क्रीडार्थं कल्पितैरुपवनैः 'आरामस्स्या दुपवनं कृत्रिमं वनमेव तत्' इत्यमरः। अभितः परितः सर्वत्र वृता आवृता व्याप्ता। वृञ् आवरणे क्तः। वसन्तलक्ष्मीस्तत्र सदा सन्निहिता नित्यविकासं तेषामारामाणां घटयतीति वैलक्षण्यमितरेभ्यस्तेषां कथ्यते। तत्रत्या आरामास्सर्वे नन्दनवनसदृशा इति पर्यवसितोऽर्थः ॥

**कस्तूरीहरिणाक्रान्त कर्पूरकदलीतलैः।**
**मनोभवमहीदुर्गै र्महिता केलिपर्वतैः ॥** ॥48॥

**कस्तूरीति॥** कस्तूरी मृगनाभिः तस्याः। जन्यजनकभावे षष्ठी। तज्जनकाः हरिणाः कस्तूरीमृगाः, येषां नाभितः मृगमदस्संजायते। अतएव मृगनाभिरिति तस्या व्यवहारः। तैः आक्रान्ताः आच्छादिताः। कर्पूरकदलीनाम् रम्भाविशेषाणाम् तलाः (सम) प्रदेशाः येषां ते तादृशैस्सद्भिरित्यर्थः। मनोभवः मनसिजः मन्मथः महीदुर्गैः स्थलदुर्गैः यद्वा मह्यां भूम्यां निर्मितानि महीनिर्मितानि। तानि दुर्गाणि। शाक पार्थिवादित्वादुत्तरपदलोपः। वैरिराजानां दुरधिगमतया निर्मितानि

राज्ञां पुराणि । दुर्गाणि षडिति मनुरेवमाह - "धन्वदुर्गं महीदुर्गं मब्दुर्गं वार्क्षमेव वा । नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम्" इति । एतेषां विवृतिस्तु मदीयान्ध्रव्याख्यातोऽवगन्तव्या । तैरिव स्थितै रित्युत्प्रेक्षा । केलिपर्वतैः क्रीडाचलैः । महिता पूजिता । लोकैरादृतेत्यर्थः । मन्मथो मह्यां शत्रुभ्यस्स्वरक्षणाय गिरिदुर्गाणि निर्माय सुखं तत्र वसति त एवैते क्रीडागिरय इत्यभिधीयन्त इति भावः । क्रीडागिरिषु च तेषु कदलीवनानि तेषु च क़स्तूरीमृगा इत्येवंरीत्यात्यन्तं मन्मथो द्दीपकत्वं तेषामुक्त्वा तेषु मदनस्य निर्निरोधसंचारत्वमभिधीयते । तेन गिरीणां गिरिदुर्गत्वसंभावना नितरां युज्यते । अस्मिन् श्लोके शृङ्गारसमृद्धिर्वर्णितेति समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारोऽपि । गम्यो त्प्रेक्षायाश्च सापेक्ष्यात्सङ्कर एतेन ॥

**कमलामोदमधुरैः कलहंसकुलाकुलैः ।**
**क्रीडासरोभिस्सहिता मणिसोपानमञ्जुलैः ॥ ॥49॥**

**कमलामोदैरिति** ॥ कमलानाम् पद्मानाम् 'सहस्रपत्रं कमल' मिति पद्मपर्यायेष्वमरः । तेषाम् आमोदाः सौगन्ध्यानि 'आमोदो गन्ध हर्षयोः' इत्यमरसुधा । तैः मधुराणि प्रीतिकराणि 'स्वादुप्रियौ च मधुरौ' इत्यमरः । कमलायाः लक्ष्म्याः आमोदः प्रीतिः तेन मधुरैः दर्शनी यैरित्यप्यर्थान्तरम् । पद्मालया लक्ष्मीस्तत्र नित्यं सन्निहिता मोदमनु भवतीति तस्याः कान्तिमत्त्वेन नितरां दर्शनीयतेति भावः । कलहंसाः राज हंसाः । तेषां कुलानि समूहाः श्रेणय इत्यर्थः । तैः आकुलानि व्याप्तानि 'व्यस्ते त्वप्रगुणाकुलौ' इत्यमरः । 'व्यस्तन्तु व्याकुले व्याप्ते' इति विश्वः । श्रेणीकृताः राजहंसाः तत्र कूजन्ति । तेन च मनोज्ञानि वर्तन्ते तानीति भावः । मणीनां सोपानानि आरोहणानि । 'आरोहणं स्यात्सोपान' मित्यमरः । तैः मञ्जुलानि मनोहराणि 'मनोज्ञं मञ्जु मञ्जुलम्' इत्यमरः । मञ्जु मनोहरत्वम् अस्यास्तीति



मञ्जुलः । 'लोमादिपामादि' इत्यादिना लः । मञ्जु लाति आदत्ते 'आतो ऽनुपसर्गे कः' इत्यमरसुधा । तैः । क्रीडायाः जलक्रीडार्थे । तादर्थ्ये षष्ठी । सरांसि कासाराः 'कासारस्सरसी सरः' इत्यमरः । तथोक्तानि तैः । सहिता युक्ता शोभितेत्यर्थः । अत्र सरश्शोभापौष्कल्यं वर्ण्यत इत्युदा त्तालङ्कारः । "तदुदात्तं वस्तु यत्र वर्ण्यते सुसमृद्धिमत्" इति तल्लक्षणात् ॥

**यशस्तोमैरिवाशेष नगरीविजयार्जितैः ।**
**सौधैः प्रकाशितोत्सेधा शरदम्भोदपाण्डरैः ॥ ॥50॥**

**यश इति** ॥ अशेषाः सर्वा नगर्यः तासाम् विजयाः अभिभव नानि वैभवादिना अधःकरणानि तैः आर्जितैः सम्पादितैः समुपलब्धै रित्यर्थः । 'जि अभिभवे' इत्यतो विपूर्वादच् । तैः । यशसां स्तोमाः समूहाः यशोराशयः कीर्तिपरम्पराः तैरिव स्थितैरित्युत्प्रेक्षा । कीर्तीनां धवलत्वात् सौधा एवं संभाव्यन्ते । शरदि अम्भोदाः शरदम्भोदाः । शरत्कालमेघाः त इव पाण्डराः धवलाः 'विशदश्येतपाण्डराः' इत्यमरः । तैः सौधैः सुधालेपवद्भिः राजगृहैः । करणभूतैः । 'सौधोऽस्त्री राजसदनम्' इत्यमरः । सुधा सुधालेपः एषु अस्तीति ज्योत्स्नादि त्वादण् । प्रकाशितः प्रख्यापितः सर्वजनवेदितः उत्सेधः दैर्घ्यम् आत्मो त्कर्ष इति च गम्यते । स यया सा तथोक्ता । 'नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः' इत्यमरः । तादृशी स्थितेत्यर्थः । शारदाभ्रव त्सुधालेपैरतिधवलैः राजसदनैस्सर्वनगराण्यतीत्य वर्तमाना सा नगरी स्वार्जितकीर्तिपरम्पराभिस्सर्वजनविदिततया स्वीयमौन्नत्यं प्रकाशयन्ती विराजते इति निर्गलितोऽर्थः ॥

**विकसद्वनितावल्ली विलासवनवाटिका ।**
**दक्षिणाशासरोजाक्षी फ़ाललीलाललाटिका ॥ ॥51॥**

**विकसदिति** ॥ विकसन्त्यः विलसन्त्यः पुष्प्यन्त्यश्च वनिता

वल्ल्यः स्त्रिय एव लताः। 'वल्ली तु व्रततिर्लता' इत्यमरः। पुंवद्भावः। तासां विलासाः विभ्रमाः तेषाम् वनवाटिका – गृहोद्यानपरम्परा। करिकलभादिवत् वनशब्दप्रयोगः। वाटिका उद्यानपङ्क्तिः 'वाटी वास्तौ गृहोद्यानेत्कटयोः' इति हैमः। वाट्येव वाटिका। स्वार्थे कः। 'केऽणः' इति ह्रस्वः। लताविलासैरुद्यानशोभेव तत्रत्यसुन्दरीजनविभ्रमैः पत्तनशोभातीव पोष्यत इति भावः। किञ्च। दक्षिणाशा दक्षिणा दिक् सैव सरोजाक्षी स्त्री। सरोजे इव अक्षिणी यस्याः इति विग्रहः। 'बहुव्रीहौ सक्थ्यक्ष्णोस्स्वाङ्गात्' इति षच्। षित्त्वात् ङीष्। तस्याः फालम् अलिकम् तस्य। लीलाललाटिका - लीला विलासः "लीलां विदुः केलिविलासखेलाश्शृङ्गारभावप्रभवक्रियासु' इति विश्वः। तस्याः तदर्थे ललाटिका – ललाटस्य अलङ्कारः भूषणम् 'पत्त्रपाश्या ललाटिका' इत्यमरः। 'ललाटात्कनलङ्कारे' इति कन्। टाप्। 'प्रत्ययस्थात्' इतीत्त्वम्। लीलाधृतललाटभूषणमिति यावत्। शृङ्गारसर्वस्वभूताभिः स्त्रीभिरलङ्कृता सा नगरी दक्षिणदेशस्य सर्वस्यापि ललाटधृतं परमं मण्डनमिव परां शोभां जनयन्ती विराजत इति निष्कृष्टोऽर्थः। मालारूपकमलङ्कारः। लीलाललाटिकेत्यादौ वृत्त्यनुप्रासश्च ॥

**द्विजराजसमुल्लास नित्यराकानिशीथिनी ।**
**गन्धर्वगणसान्निध्य नव्यदिव्यवरूथिनी ॥ ॥52॥**

**द्विजेति ॥** द्विः जायन्ते द्विजाः। 'जन्मना जायते शूद्रः' इत्यादिस्मरणात्। 'अन्येभ्योऽपि दृश्यते' इति डः। ते राजानः नृपा इव द्विजराजाः ब्राह्मणश्रेष्ठाः। 'उपमितं व्याघ्रादिभिः' इति समासः। 'राजाहस्सखिभ्यः' इति टच्। तेषाम् समुल्लासः संतोषातिशयः स एव। द्विजराजस्य चन्द्रस्य 'द्विजराजश्शशधरो नक्षत्रेशः' इत्यमरः। समुल्लासः प्रकाशः चन्द्रिका तस्य। नित्या नियतभवा। ननु तदा तदेति भावः। राकानिशीथिनी पूर्णिमारात्रिः। निशीथः अर्धरात्रः



सोऽस्यामस्तीति मत्वर्थे इनिः। ङीप्। 'निशा निशीथिनी रात्रिः' इत्यमरः। 'राका नद्यन्तरे कच्छ्वां नवजातरजस्त्रियाम्। संपूर्णेन्दुतिथौ' इत्यमरसुधा। पूर्णिमारात्रिश्चन्द्रिकाया यथा समुज्जृम्भणं करोति तथा सा नगरी बहुश्रुतानां प्रतिक्षणमनेकथा संतोषमुत्पादयतीति भावः। किञ्च गन्धर्वाः अश्वाः तेषां गणः समजः तस्य सान्निध्यम् सन्निधिः समीपस्थितिः। सन्निधिरेव सान्निध्यमिति स्वार्थे ष्यञ्। तदेव। गन्धर्वाः देवगायनाः देवयोनिविशेषाः तेषां गणः समाजः संघः तस्य सान्निध्यम् समीपस्थितिः। तस्मात् नव्याः सदापि नूत्नाः अभिनवतारुण्यवन्त इत्यर्थः। ते च ते दिव्याः देवाः। देवानां त्रिदशत्वेन वार्धकाभावादेवमुक्तिः। तेषाम् वरूथिनी सेना यस्यां सा तथोक्ता। 'वरूथिनी बलं सैन्यम्' इत्यमरः। तादृशी सती स्थितेत्यर्थः। विजयानगरीसेना बलसंपदा सर्वेषां विस्मयावहा सर्वलोकैः प्रस्तूयमाना भूमावजरामरा देवसेनेव विराजत इति भावः। गन्धर्वाः केवलं देवानां गायना एव न योद्धारश्च चित्ररथादीनां योद्धृत्वेन भारतादिषु बहुत्र वर्णितत्वात्। उत्तमाश्वैर्वीरवरेण्यैश्च समलङ्कृता विजयानगरसेना देवसेनां विडम्बयन्ती शात्रवाणामप्रधृष्या वर्तत इति परमार्थः। श्लिष्टपरम्परितरूपकमलङ्कारः॥

**भुजङ्गसङ्घसंवास भूतेशमकुटस्थली ।**
**सुमनस्तोमसंचार सुवर्णगिरिमेखला ॥ ॥53॥**

**भुजङ्गेति ॥** भुजङ्गाः विटाः। तेषां सङ्घः समूहः तस्य संवासः निवासः। स एव। भुजङ्गाः सर्पाः 'भुजङ्गौ विटपन्नगौ' इति नानार्थरत्नमाला। तेषां सङ्घः निवहः तस्य संवासः निवासः। तस्य भूतेशः भूतानामीशः प्रमथगणानां प्रभुः शिवः 'भूतेशः खण्डपरशु' रित्यमरः। तस्य मकुटम् किरीटः सइव शिरसि धार्यमाणत्वात् लक्षणया जटाजूटः कथ्यते। 'अथ मकुटं किरीटं पुन्नपुंसक' मित्यमरः।

तदेव स्थली तद्रूपा स्थलीत्यर्थः। स्थली अकृत्रिमा भूमिः अटवी। जानपदेत्यादिना ङीष् । सर्पसङ्घातस्य यथेच्छसंचरणमटव्यामेवेती तथमुक्तम्। विषधरा अपि शिवमकुटमलङ्कुर्वाणाः यथावाऽश्रयमहिम्ना पूजाभाजनं लोकस्य, तथा विटानामप्येतदाश्रयगौरवेण समादर इति सूच्यते। सर्पैश्शिवमौलिरिव पल्लवैर्भूषिता सा नगरीति भावः। सुमनसः विद्वांसः - शोभनं मनः येषामिति विग्रहः। तेषां स्तोमः सन्दोहः तस्य संचारः विहरणम् सएव सुमनसाम् देवानाम् 'सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयो' रिति मेदिनी। स्तोमः संघः। तस्य संचारः तस्य। सुवर्णगिरिमेखला सुवर्णस्य गिरिः सुवर्ण गिरिः हेमाद्रिः मेरुः। प्रकृतिविकृतिभावे षष्ठी। 'मेरुस्सुमेरुर्हेमाद्रिः' इत्यमरः। तस्य मेखला - नितम्बः (शैल) मध्यभागः 'मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः' इति मेदिनी। तथाभूता स्थितेत्यर्थः। मेरुगुहासु देवा विहरन्तीति प्रसिद्धिः। अतएव सुरालय इति तस्य नाम। सुवर्णगिरौ देवा इव पण्डिता नित्यमत्र विहरन्तो मोदन्त इति भावः। विद्यानगरमिति विजयानगरीनामाप्यन्यदनेन संभाव्यते। अत्रत्यानां पण्डितानां देवतुल्यप्रभाववत्त्वम् नगर्यास्स्वर्ग तौल्यं च प्रतीयते। श्लिष्टपरंपरितरूपकमलङ्कारः॥

**लीलेव दिष्टिवृद्धीनां शालेव सकलश्रियाम्।**
**मालेव सर्वरत्नानां वेलेव सुकृताम्बुधेः॥ ॥54॥**

**लीलेति॥** दिष्टयः भागधेयानि जन्मान्तरार्जितसुकृतानि 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः। ताभ्यः वृद्धयः तत्कृतानि अभिवर्धनानि पुराकृतसुकृतश्रेयांसीति यावत्। तासाम् लीला क्रीडा आश्रयाश्रयिणोरभेदोपचारः। क्रीडास्थानमित्यर्थः। इवेति संभावनायाम्। नूनमित्यर्थः। एवमुत्तरत्रापि। प्राक्तनपुण्यानि तत्र नित्यं फलदायीनि भवन्तीति भावः। जन्मजन्मार्जितसुकृतवतामेव तन्नगर्यां



स्थितिः ननु दुष्कृतिनामिति परमार्थः। किञ्च। सकलानाम् समस्तानाम् श्रियाम् सम्पदाम् शाला गृहम् निवासभूमिः सेवेत्युत्प्रेक्षा। सम्पदां चाञ्चल्यं तत्र नास्तीति भावः। नित्यश्रीविराजिता सा नगरीति तात्पर्यम्। अथवा कलाभिस्सह वर्तन्त इति सकलाः तेषाम् कलावताम् श्रियाम् तत्संबन्धिनीनां कीर्तीनाम् शालेवेत्यर्थान्तरम्। कलानिपुणाः तत्रस्थास्सन्तो नित्यं स्वशिल्परचनया कीर्तिमार्जयन्तीत्यर्थः। शिल्पवतामनन्यसाधारणकलानैपुणीभिस्समलंकृता सा नगरीति भावः। 'शाला तु स्कन्धशाखायां गेहगेहैकदेशयोः' इति नानार्थरत्नमाला। किञ्च। सर्वाणि रत्नानि श्रेष्ठवस्तूनि 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इति वचनात्। तेषाम् माला एकत्र गुम्फितो हार इवेत्युत्प्रेक्षा। सृष्टौ स्थावरजङ्गमात्मिकायां यद्यदुत्कृष्टं वस्तुजातं तत्सर्वमत्र राशीकृत्य स्थापितमिति भावः। अथवा - सर्वेषाम् सर्वविधानाम् रत्नानाम् मणीनाम् माला एकत्र गुम्फितो हार इवेति वा। शुक्त्यादिषु तत्र तत्र स्थितानि तानि तानि रत्नान्येकत्र समृद्धतयात्र स्थितानीति भावः। पद्मरागादयः कलौ ये दुष्प्रापा मणयः तेऽप्यत्र समुपलभ्यन्त इति सर्वरत्नसंपत्समृद्धिस्सर्वशब्देन सूच्यते। 'मालमुन्नतभूर्माला पङ्क्तौ पुष्पादिदामनि' इति नानार्थरत्नमाला। किञ्च। सुकृतानि पुण्यकर्माणि तदाचरणानीत्यर्थः। तान्येव अम्बुधयः समुद्राः तेषाम् वेला तीरम् निर्णीतावधिकः प्रदेशः सीमेति यावत्। सर्वपुण्यकर्मानुष्ठानस्य सामग्र्येणात्रैव विश्रान्तिरिति भावः। अत्र यन्नाचरितं पुण्यकर्म तत्कुत्राऽपि नास्तीति तात्पर्यार्थः। दैविकवृद्ध्या सर्वसंपत्समृद्ध्या निखिलपुण्यकर्माचरणाभिवृद्ध्या निरुपमेयं नगरीति निर्गलितोऽर्थः। इयं च वर्णना रामायणीयामयोध्यावर्णनां संगृह्णातीव - "सर्वरत्नसमाकीर्णाम्" "कुटुम्बी यो ह्यसिद्धार्थो गवाश्वधनधान्यवान्। नाकुण्डली नामकुटी नास्रग्वी नाल्पभोगवान्" "नाऽनाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः। दीर्घायुषो नरास्सर्वे धर्म

सत्यं च संश्रिताः" इति रामायणम् । अत्र सुकृताम्बुधेरिति रूपकम् । अन्यत्रोत्प्रेक्षा । कुलकम् । "द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिश्श्लोकैः विशेषकम् । कालापकं चतुर्भिस्स्यात्तदूर्ध्वं कुलकं स्मृतम्" इति तल्लक्षणात् ॥

**यस्यां प्रासादशृङ्गेषु लग्नं मार्ताण्डमण्डलम् ।**
**संधत्ते वीक्षमाणानां सौवर्णकलशभ्रमम् ॥ ॥55॥**

**यस्यामिति ॥** यस्याम् यन्नगर्याम् । प्रसीदति मनः अत्रेति प्रासादाः राजगृहाणि 'हर्म्यं तु धनिनां वासः प्रासादो देवभूभुजाम्' इत्यमरः । 'हलश्च' इति घञ् । 'उपसर्गस्य घञ्' इति सादकारयोः कृत्रिमयोः बहुलग्रहणाद्दीर्घः । अतएव प्रसाद इत्यत्र दीर्घो नेति काशिका । तेषाम् शृङ्गाणि शिखराणि अग्रभागाः । तेषु लग्नम् सक्तम् तैः निरुद्धं सत् तत्र स्थितमित्यर्थः । मार्ताण्डमण्डलम् सूर्यबिम्बम् । कर्तृ । वीक्षमाणानाम् पश्यतां जनानाम् । 'समेन धावति । विषमेण धावति' इत्यत्र 'समेन पथा धावति । विषमेण पथा धावति' इति यथा । सौवर्णः सुवर्णस्य विकारः स्वर्णनिर्मित इत्यर्थः । विकारेऽण् । सचासौ कलशः कुम्भः तस्य भ्रमः भ्रान्तिः अतस्मिंस्तदिति मिथ्याज्ञानम् तम् संधत्ते विदधाति उत्पादयतीत्यर्थः । पूर्णकलशानां मङ्गलप्रदत्वेन राजगृहोपरि संस्थाप्यमानत्वादेवं संभाव्यत इति भावः । संपूर्वात् धाञो लट् । तत्रत्याः प्रासादास्सूर्यमण्डलं स्पृशन्तीति तैस्सूर्यगमनस्य निरुद्धत्वात् तदुपरिस्थितं सूर्यबिम्बं सौवर्णकलशभ्रान्तिं जनयतीति भ्रान्तिमानलङ्कारः । सूर्यस्य लौहित्यं कविसमयसिद्धम् - यथाह - देवेन्द्रस्स्वकविकल्पलतायाम् - "शोणानि भौमतीक्ष्णांशुताम्रकुङ्कुमतक्षकाः" इति ॥

**यत्सौधचन्द्रशालासु विहरन्त्यो मृगेक्षणाः ।**
**शशाङ्कमवलम्बन्ते मुक्ताकन्दुकशङ्कया ॥ ॥56॥**



**यत्सौधेति ॥** मृगेक्षणाः स्त्रियः । कर्त्र्यः । मृगस्य हरिणस्य ईक्षणे नेत्रे मृगेक्षणे 'मृगः पशौ कुरङ्गे च' इति विश्वमेदिन्यौ । 'ईक्षणं चक्षुरक्षिणी । दृग्दृष्टी' इत्यमरः । त इव ईक्षणे यासामिति विग्रह. 'सप्तम्युपमानपूर्वपदस्य' इत्युत्तरपदलोपः । लक्षणा वा मृगशब्दस्य मृगेक्षणे । यस्याः नगर्याः सौधाः यत्सौधाः यदीयानि राजसदनानि । 'सौधोऽस्त्री राजसदनम्' इत्यमरः । तेषाम् चन्द्रशालाः शिरोगृहाणि तासु विहरन्त्यः संचरन्त्यः क्रीडन्त्यः इति यावत् । तादृश्यस्सत्यः । मुक्तानाम् मौक्तिकमणीनां कन्दुकः कन्दुः वर्तुलाकारं क्रीडासाधनम् । प्रकृतिविकृतिभावे षष्ठी । तस्य शङ्का भ्रान्तिः स एवायमिति भ्रमः । उभयोरत्यन्तं सदृशत्वादिति भावः । तया । शशः मृगविशेषः अङ्कः लाञ्छनम् यस्य तम् मृगाङ्कम् चन्द्रम् अवलम्बन्ते आददते, पाणिभिरिति शेषः । सौधानामुपरिगृहेषु क्रीडन्त्यः स्त्रियस्तत्रत्यमिन्दुबिम्बं दृष्ट्वा धवलतया वर्तुलतया च भ्रान्ताः मुक्तामयं केलिकन्दुकमिदमिति चन्द्रबिम्बमेव पाणौ कुर्वन्तीति श्लोकार्थः । चन्द्रमण्डलस्पर्शिनः प्रासादास्तत्रत्यास्सर्वेऽपीति तात्पर्यार्थः । अत्र चन्द्रपरिग्रहणासम्बन्धेऽपि तत्सम्बन्धो वर्णित इत्यतिशयोक्तिः । परिग्रहणे च हेतुः कन्दुकभ्रम इति भ्रान्तिमता सङ्कीर्यते चैषा ॥

**यत्र सौधेषु संगीत मृदङ्गप्रतिनादिषु ।**
**अकाण्डे ताण्डवारम्भं वितन्वन्ति शिखण्डिनः ॥ ॥57॥**

**यत्रेति ॥** यत्र यस्यां नगर्याम् । सप्तम्यास्त्रल् । शिखण्डः बर्हः एषामस्ति शिखण्डिनः मयूराः । कर्तारः । 'शिखण्डो बर्हचूडयोः' इति हैमः । मत्वर्थीय इनिः । सौधेषु राजसदनेषु संगीतम् गानम् मृदङ्गः मुरजः गानाङ्गत्वेन वाद्यमान इत्यर्थः । 'मृदङ्गा मुरजाः' इत्यमरः । तयोः प्रतिनादः प्रतिध्वनिः सः एष्वस्तीति मत्वर्थीय इनिः । तथाविधेषु सत्सु । 'यस्य च भावेन' इति भावलक्षणा सप्तमी ।

अकाण्डे असमये वर्षाकाले अनागते मेघोदये अजाते इत्यर्थः । 'काण्डो ऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । तण्डुः नन्दिकेश्वरः तेन प्रोक्तम् ताण्डवम् नाटचम् 'ताण्डवं नटनं नाटचम्' इत्यमरः । प्रोक्तार्थेऽण् । तस्य आरम्भम् उपक्रमम् वितन्वन्ति आचरन्ति तदर्थे सन्नद्धा भवन्तीत्यर्थः । संगीतकं राजगृहेषु तत्र नित्यं प्रवर्तत इति भावः । संगीतमृदङ्गप्रतिध्वनयस्ते मधुरगम्भीरा वर्तन्त इति तेषु मयूराणां मेघनादभ्रान्तिर्व्यज्यते । एतच्च व्यङ्ग्यं वाच्यसिद्धचङ्गम् । एतेन विना वाच्यार्थस्यानुपपत्तेः । अत्र शिखण्डिनां नर्तनासम्बन्धेऽपि तत्सम्बन्धः कविप्रौढोक्तिमूल इत्यतिशयोक्तिरलङ्कारः । 'अकाण्डे' इत्युक्तेः कारणं विनाऽपि कर्योत्पत्तिरत्र वर्णितेति विभावनापि । तयोः परस्परं नैरपेक्ष्यात्संसृष्टिः । 'विभावना विनापि स्यात्कारणं कार्यं जन्म चेत्' इति तल्लक्षणम् ॥

**पद्मरागोपलोत्कीर्ण प्रासादप्रान्तवर्तिनः ।**
**सन्ततं यत्र दृश्यन्ते सान्ध्या इव वलाहकाः ॥ ॥58॥**

**पद्मरागेति** ॥ पद्मरागाः तन्नामानः मणिविशेषाः रक्तवर्णाः ते च उपलाः मणयः तथोक्ताः । चूतवृक्षादिवत्समासः । तैः उत्कीर्णाः खचिताः पद्मरागमणिनिर्मिता इत्यर्थः । उत्पूर्वकात् कॄधातोः क्तः । इत्त्वदीर्घौ । 'रदाभ्याम्' इति निष्ठातो नः । णत्वं च । तथा विधाः प्रासादाः सौधाः तेषाम् प्रान्ताः असन्नप्रदेशाः तेषु वर्तितुं शीलम् एषामिति तथोक्ताः । ताच्छील्ये णिनिः । वलाहकाः वारिवाहकाः मेघाः । वारिवाहक इत्यस्यैव वलाहक इति रूपम् । पृषोदरादित्वात् वारिशब्दस्य व इत्यादेशः । उत्तरपदादेर्वकारस्य लादेशश्च । पद्मरागमयतत्सौधप्रान्तसंचारिणस्तदीयकान्तिसमाच्छादिता मेघा इत्यर्थः । सान्ध्याः – संध्यासु भवाः संध्याकालस्थिता मेघाः । त इव तद्वदारुण्यवन्त इत्यर्थः । सततम् सदा कालविशेषमनपेक्ष्यैवेत्यर्थः । दृश्यन्ते



ईक्ष्यन्ते । जनैरिति शेषः । दृशेः कर्मणि लट् । पद्मरागनिर्मितास्तत्रत्य प्रासादाः मेघमण्डलं स्पृशन्तीति भावः । लोके यदा संध्याकालस्तदानीमेव मेघानामरुणिमा दृश्यते । अत्र तु न तथा, सर्वकालेष्वपि पद्मरागकान्तिसंपर्कात्तेषामारुण्यं दृश्यत इति तु विशेषः । अत्र मेघास्स्वीयं नैर्मल्यं परित्यज्य पद्मरागमणीनां लौहित्यं स्वीकुर्वन्तीति वर्णनात्तद्गुणालङ्कारः । "तद्गुणस्स्वगुणत्यागादन्यदीयगुणग्रहः" इति तल्लक्षणात् ॥

**संध्यासु यत्र निर्यान्ति जालेभ्यो धूपराजयः**
**अन्तःप्रदीपिकालोक चकितध्वान्तसन्निभाः ॥ ॥59॥**

**संध्यास्विति** ॥ यत्र यस्मिन् पत्तने संध्यासु संध्याकालेषु । अत्र संध्याशब्देन सायंसंध्यैवोच्यते । सायंसमय एव गृहादिसंस्काराय प्रायशो धूपसंस्कारस्य दृष्टत्वात् । बहुवचनं तु सायंसंध्याया अपि दिनदिन भिन्नत्वादनन्तत्वाभिप्रायेण । अन्यथा प्रातस्सायंसन्ध्ययोः प्रदीपिकापेक्षायास्सत्त्वेऽपि मध्याह्ने तदसम्भवात् । धूपानाम् अगर्वादिसुवासनद्रव्यजनित धूमानाम् राजयः रेखाः मालिकाः अविच्छिन्नधूपपरम्पराः । कर्त्र्यः । 'लेखास्तु राजयः' इत्यमरः । चोरश्रेण्य इति च गम्यते । दीपयन्तीति दीपाः । प्रकृष्टा दीपाः प्रदीपाः । प्रदिसमासः । प्रदीपा एव प्रदीपिकाः । स्वार्थे कः । टाप् । इत्त्वम् । स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यति वर्तन्ते क्वचिदिति ज्ञापनात् स्त्रीत्वम् । अन्तः गृहाभ्यन्तरेषु याः प्रदीपिकाः तास्तथोक्ताः । अन्तर्गृहस्थशुद्धान्तपालिका इति च गम्यते । तासाम् आलोकाः तेजांसि दर्शनानीति च गम्यते । 'आलोकौ दर्शनोद्योतौ' वित्यमरः । तेभ्यः चकितानि भीतानि तथोक्तानि । 'पञ्चमी भये' नेत्यत्र 'कर्तृकरणे कृता बहुल' मित्यतो 'बहुल' ग्रहणानुवृत्तेः ग्रामान्निर्गत इत्यादीनां सिद्धिरिति काशिका । तस्य बहुल ग्रहणस्य प्रपञ्चभूतमेव 'भयभीतभीभिरित्या'दीति च । तेनैवात्रापि

**समास** इति ज्ञेयम् । तानि, ध्वान्तानि अन्धकाराः तैस्सदृशाः तथोक्ताः नीलवर्णा इति च गम्यते । चौर्याय सन्नह्यतां दस्यूनामवयवेष्वेरण्ड तैलादिलेपनस्य सर्वलोकविदितत्वात् । 'स्युरुत्तरपदे त्वमी, निभसंकाश नीकाशप्रतीकाशोपमादयः ' इत्यमरः । सन्निभशब्दे समित्युपसर्गस्तु उप सर्गान्तरनिवृत्त्यर्थः । उत्तरपद एवैतेषामेतदर्थबोधकतेत्युक्तेरेषामस्वपद विग्रह इत्युक्तं भवति । तास्सन्त्यः, जालेभ्यः गवाक्षेभ्यः अपमार्गेभ्य इति च गम्यते । 'जालं समूह आनायो गवाक्षक्षारकावपि ' इत्यमरः । निर्यान्ति अपयान्ति बहिर्गच्छन्ति । दीपप्रकाशेन निरवकाशा अन्धकारास्तस्करा इव भीतभीता बहिरपयान्तीति भावः । दीपैरन्ध कारः बहिरपस्रियत इवेत्युत्प्रेक्षा । ध्वान्तसन्निभैरित्युपमा । सा चानुक्त साम्येति लुप्ता । अपहर्तुमन्तः प्रविष्टाः केचन चोरास्तत्र जागरूकान् गृहरक्षकान् दृष्ट्वा भीतभीता विमार्गेभ्यः प्रधावन्तीति श्लिष्टविशे षणसाम्यादप्रकृतार्थस्य कस्यचन प्रतीत्या धूमराजेश्चोरसाम्यं गम्यत इति समासोक्तिः । परस्परमेतेषां नैरपेक्ष्यात्संसृष्टिश्च । लक्षणं तु समा सोक्तेः – " विशेषणानां तौल्येन यत्र प्रस्तुतवर्तिनाम् । अप्रस्तुतस्य गम्यत्वे सा समासोक्तिरिष्यते ।। " इति ।।

**यद्दीर्घिकासु माणिक्य मयसोपानचारिभिः ।**
**क्षणदास्वपि चक्राह्वै र्विरहो नानुभूयते ।।   ।।60।।**

**यद्दीर्घिकेति** ।। दीर्घा एव दीर्घिकाः । संज्ञायां कन् । वाप्यः क्रीडासरांसि 'वापी तु दीर्घिका ' इत्यमरः । यस्याः नगर्याः दीर्घिकाः यद्दीर्घिकाः । यदीयानि क्रीडासरांसीत्यर्थः । तासाम् माणिक्यमयसोपा नानि - माणिक्यानाम् मणीनां विकाराः । ताद्रूप्ये मयट् । मणि स्थगितानीत्यर्थः । तानि च सोपानानि आरोहणानि तथोक्तानि । 'आरोहणं स्यात्सोपान ' मित्यमरः । तेषु चरितुम् संचरितुम् शील मेषाम् तथोक्ताः । तैः चक्राह्वैः चक्रस्येव आह्वा आख्या येषां तैः



चक्रवाकैः 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ' इत्यमरः । 'आख्याह्वे अभिधानं च ' इत्यपि । क्षणम् उत्सवम् चोराणाम् अन्येषां निर्व्यापारस्थितिं वा ददतीति क्षणदाः रात्रयः । 'निर्व्यापार स्थितौ कालविशेषोत्सवयोः क्षणः ' इत्यमरः । ददातेः 'आतोऽनुप सर्गे ' इति कः । तास्वपि । विरहः वियोगः न अनुभूयते न उप भुज्यते । विरहिणो न भवन्तीत्यर्थः । चक्रवाका रात्रौ वियुज्यन्ते, तथा च स्मर्यते - "वैमुख्यं गन्धफल्यास्तु भ्रमरानशपत्प्रभुः । कोकान् निशीथे विश्लेषं पिकमन्यविवर्धनम् । चन्दनं सर्पनिलयं वायुं सर्पाशनं तथा । ज्योत्स्नां कलङ्कसंछन्नां शशाप रघुनन्दनः ।। " इति । वापीषु मणिकान्तय स्सूर्यप्रकाशा इव देदीप्यमानास्तमसामपसारणेन रात्रीरपि दिवसी कुर्वन्तीति विरहहेतुभूतानां रात्रीणामेवाभावे कथं तज्जन्यो विरहस्तेषा मिति भावः । माणिक्यमयसोपानसंचारित्वं विशेषणगत्या चक्रवाक वियोगानुभवाभावात्मके वाक्यार्थे हेतुरिति वाक्यार्थं प्रति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । मणिप्रकाशानां सूर्यप्रकाशानां चातीव साम्यं गम्यत इति मणिप्रकाशास्तमोऽपसरणेन सूर्यकान्तय इव राजन्त इत्यु पमालङ्कारध्वनिः । विरहाननुभवासम्बन्धेऽपि तत्सम्बन्धवर्णनादतिशयोक्ति भेदश्च । विरहाननुभवे वस्तुतोऽहेतोरपि मणिमयसोपानसंचारिताया हेतुत्वकल्पनं कविप्रौढोक्तिसिद्धम् । तच्च सहृदयानामतीव चमत्कार कारीति प्रौढोक्तिरित्यन्योऽप्यलङ्कारः । एषां सर्वेषां परस्परसापेक्षेति सङ्करश्च । प्रौढोक्तेर्लक्षणं चेत्थमुक्तमालङ्कारिकैः - " प्रौढोक्तिरुक्तार्था हेतोस्तद्धेतुत्वप्रकल्पनम् " इति ।।

**यदङ्गनामुखाम्भोज लावण्यालाभलज्जितः ।**
**कलङ्कच्छद्मना चन्द्रो व्यनक्ति हृदयव्यथाम् ।। ।।61।।**

**यदङ्गनेति** ।। यस्याः अङ्गनाः यदङ्गनाः इति विग्रहः । यदीया स्त्रियः पौरस्त्रिय इति यावत् । 'अङ्गात्कल्याणे' इति मत्वर्थीयो नः ।

तासाम् । मुखानि अम्बुजानीव इत्युपमितसमासः । मुखपद्मानि । तेषाम् लावण्यम् सौन्दर्यम् "मुक्ताफलेषु या छाया तरलत्व मिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते" इति तल्लक्षणम् । तस्य अलाभः - लाभः प्राप्तिः 'अकर्तरि च कारके संज्ञाया' मिति घञ्, संज्ञायामित्यस्य प्रायिकत्वात् । न लाभः अलाभः अप्राप्तिः । प्रयत्नं कृत्वापि तदनधिगम इत्यर्थः । अभावार्थकनञा 'नञ्' इति समासः । तेन लज्जितः संजातलज्जः प्राप्तव्रीड इत्यर्थः । तारका दित्वादितच् । स्वकृतप्रयत्नवैफल्यस्य लोकविदितत्वादिति भावः । चन्दति आह्लादयति चन्द्रः सर्वलोकाह्लादकः इन्दुः । चदि आह्लादने । औणादिको रक् । अम्बुजशब्देन स्वशात्रवकृतपराभव इति च सूच्यते । अतएव भूयसी लज्जेति भावः । हृदयम् मनः 'चित्तं तु चेतो हृदयम्' इत्यमरः । तस्य व्यथा बाधा । 'पीडा बाधा व्यथा दुःखम्' इत्यमरः । ताम् स्वमानसिकीं व्यथाम् आधिमित्यर्थः । कलङ्कः अङ्कः स्वस्य ख्यापकं चिह्नम् ध्वजादिवत् । तस्य छद्मना स इति व्याजेन । असत्यस्य वस्तुनः सत्यत्वेन प्रकाशः व्याजः 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । तेन । करणे तृतीया । व्यनक्ति बहिः प्रकाशयति । अङ्गनामुखैस्साम्यमभिलषंश्चन्द्रस्तदर्थे प्रयत मानस्तदलाभाल्लज्जते खिद्यति च । बलीयसीमेतां पीडामन्तर्धत्तु मशक्नुवन् कलङ्कमिति लोकस्य दर्शयते वस्तुतो न तथेति भावः । चन्द्रबिम्बातिशायि तत्रत्ययुवतिजनमुखलावण्यमिति निर्गलितोऽर्थः । अत्र छद्मन्शब्देन नैवायं कलङ्कः, किन्तु मानसिकं दुःखमिति कलङ्कस्य मिथ्यात्वप्रतिपादनादपह्नवः । "छलादिशब्दैरसत्यत्वप्रतिपादन मपह्नव" इत्यलङ्कारसर्वस्वसूत्रम् ॥

**यत्र स्त्रीणां कटाक्षेषु यूनां हृदयहारिषु ।**
**पुष्पास्त्रसंचये वाञ्छां मुञ्चते पञ्चसायकः ॥ ॥62॥**



**यत्र स्त्रीति ॥** यत्र यस्यां नगर्याम् कटाक्षेषु अपाङ्गदृष्टिषु यूनाम् तारुण्यवतां पुरुषाणाम् हृदयानि मनांसि हर्तुम् बलाद्वशं नेतुं शीलं येषु तेषु हृदयहारिषु सत्सु । ताच्छील्ये णिनिः । अत्र भावलक्षणाभावेऽपि 'पाथसि पीते तृष्णा शाम्य' तीतिवत् हेतुहेतुमद्भावे सप्तमी । पञ्च पञ्चसंख्याकाः सायकाः बाणाः 'शरे खड्गे च सायकः' इत्यमरः । 'अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः' इति चामरः । स्यति सायकः । षोऽन्तकर्मणीत्यस्मात् ण्वुल् । ते यस्य सः पञ्चसायकः मन्मथः 'कामः पञ्चशरः स्मरः' इत्यमरः । पुष्पाणि कुसुमानि तद्रूपाणि अस्त्राणि शराः तेषाम् संचयः संचयनम् - पुष्पपक्षे तत्रत्यानां तत्रत्यानामेकत्र राशीकरणम्, अस्त्रपक्षे धनुषि संधानं च । चिञ् चयने - एरच् । तस्मिन् वाञ्छाम् – तद्विषयिकामिच्छाम् मुञ्चते उज्झति । मुच्लृ – मोक्षणे तुदादिः । 'शे मुचादीना' मिति नुम् । अस्त्रसाध्यस्य कार्य स्याश्रमेणान्यथा सिद्धेस्तदर्थे स्वप्रयत्नः केवलं क्लेशावह इति हेतोरित्यर्थः । पौरनारीणां तासां कटाक्षा अतीव मन्मथोद्दीपका वर्तन्त इति भावः । अत्र चोत्तरार्धं प्रति पूर्वार्धस्य हेतुत्वेन वाक्यार्थं प्रति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । मन्मथस्य स्वास्त्रसंचयवाञ्छापरित्यागासम्बन्धेपि तत्सम्बन्धोक्तेरतिशयोक्तिः । तयोः परस्परसापेक्षत्वेन च सङ्करः ॥

**मरालैर्मञ्जुमञ्जीर शिञ्जिताकृष्टमानसैः ।**
**लीलागतिमिव प्राप्तुं सेव्यन्ते यत्र योषितः ॥ ॥63॥**

**मरालैरिति ॥** यत्र – यस्यां नगर्याम् योषितः स्त्रियः 'स्त्री योषिदबला योषा' इत्यमरः । मञ्जूनाम् मनोहराणाम् 'मनोज्ञं मञ्जु मञ्जुलम्' इत्यमरः । मञ्जीराणाम् नूपुराणाम् पादाङ्गदानाम् 'पादाङ्गदं तुलाकोटिः मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः ।

शिञ्जितानि अव्यक्तमधुरस्वनानि 'भूषणानाञ्च शिञ्जितम्' इत्यमरः । शिजि – अव्यक्ते शब्दे । तस्माद्भावे क्तः । तैः आकृष्टानि बलाद् गृहीतानि वशीकृतानीत्यर्थः । आङ्पूर्वात्कृषेः क्तः । मनांस्येव मानसानि 'स्वान्तं हृन्मानसं मन' इत्यमरः । प्रज्ञादित्वादण् । येषां तैः "शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी" इति न्यायेन पश्वादीनामपि गानमाधुर्यस्यानन्ददायकत्वादिति भावः । मरालैः हंसैः । कर्तृभिः । लीलागतिम् विलासगमनम् प्राप्तुम् आदातुम् अभ्यसितुमिवेति फलोत्प्रेक्षा । योषितः वनिताः – कर्म । सेव्यन्ते श्रीयन्ते परिचर्यन्ते उपास्यन्ते । विद्याग्रहणार्थं शिष्यैर्गुरव इवेति भावः । पौरनारीणां नूपुरध्वनिना तिर्यग्जन्तवोऽपि बलादाकृष्टा भवन्ति । किमुतन्ये इत्यर्थापत्त्यलङ्कारध्वनिः । हंसयानास्सर्वा अपि तत्रत्या स्त्रिय इति सारोंऽशः ॥

**यत्रावलग्नसादृश्य वाञ्छाविमतमम्बरम् ।**
**प्रायः पयोधरोत्सेधै निरुन्धन्ति पुरन्ध्रयः ॥** ॥64॥

**यत्रावलग्नेति** ॥ पुराणि गृहाणि धरन्तीति पुरन्ध्रयः कुटुम्बिन्यः स्त्रियः । धृञ् धारणे । अच इः । गुणः । पृषोदरादित्वाद्धात्वकारलोपः मुमागमश्च । 'स्यात्तु कुटुम्बिनी पुरन्ध्री' इत्यमरोऽमुं दीर्घान्तं पपाठ । कृदिकारादक्तिन इति वा ङीष् । अतएव ह्रस्वान्तमपि बहुलं कवयः प्रयुञ्जते । तथा च कालिदासः - "तौ स्नातकैर्बन्धुमता च राज्ञा, पुरन्ध्रिभिश्च क्रमशः प्रयुक्तम्" इति । ताः - कर्त्र्यः । अवलग्नानि मध्याः स्त्रीणामुदराणि 'अवलग्नं मध्योऽस्त्री' इत्यमरः । तैः सादृश्यम् साम्यम् तस्य वाञ्छा तद्विषयकोऽभिलाषः अहमपि तथा भवेयमित्येवं संभाव्यमाना इच्छा । तया । वस्त्रपक्षे - विमतम् विशेषेण मतम् अत्यन्तं प्रियं मित्रमित्यर्थः । अवलग्नवदतिसूक्ष्मस्य स्तनावरणवस्त्रस्य सौन्दर्यपोषकत्वेन ताभिरत्यन्तमभिलष्यमाणत्वादेवमुक्तिः । आकाशपक्षे विरुद्धं मतम् अभिलषणम् यस्येति विग्रहः । मतमिति भावे क्तः ।



अप्रियं शत्रुमित्यर्थः । सौन्दर्याधिकरणाय सादृश्यवाञ्छात्रेति तासामप्रियत्वेन शत्रुत्वमत्रेति भावः । इच्छयोस्समानत्वेपि तत्तद्धेत्वोर्भिन्नत्वेन मित्रत्वामित्रत्त्वे संगच्छेते । तादृशम् अम्बरम् वस्त्रम् संव्यानम् आकाशश्च । 'अम्बरं न द्वयोर्व्योम्नि सुगन्ध्यन्तरवस्त्रयोः' इत्यमरसुधा । तत् - कर्म । धरन्तीति धराः । पचाद्यच् । पयसां धराः पयोधराः स्तनाः तेषाम् उत्सेधाः औन्नत्यानि उच्छूनताः तएव पयोधराः मेघाः तेषाम् उत्सेधाः दैर्घ्याणि तैः आयतैर्मेघैरित्यर्थः । निरुन्धन्ति आवृण्वन्ति गमननिरोधमुत्पादयन्ति । एकत्र मित्रत्वाद् गाढालिङ्गनेन अन्यत्र शत्रुत्वादाक्रमणेन चेत्यर्थः । स्ववृद्धिं कामयमानस्य संभावनं स्वोत्कर्षमसहमानस्य समाक्रमणं च समुचितमेवेति भावः । प्राय इति संभावनायाम् । एवं संभाव्यत इत्युत्प्रेक्षा । पयोधरोत्सेधादिभिः पयोधरोत्सेधादीनां श्लेषभित्त्याऽभेदोक्तेः श्लेषमूलातिशयोक्त्युत्थापितेयम् ॥

**यत्र वामभ्रुवामेव काठिन्यं स्तनमण्डले ।**
**कौटिल्यं कबरीभारे कार्श्यं मध्ये च दृश्यते ॥** ॥65॥

**यत्र वामेति** ॥ यत्र यस्यां नगर्याम् वामौ सुन्दरे भ्रुवौ यासाम् तासाम् सुभ्रुवाम् स्त्रियामित्यर्थः । स्तनमण्डलम् कुचसमूहः तस्मिन्नेव । एवकारोऽन्यत्र निषेधमवगमयति । नान्यत्रेति भावः । एवमुत्तरत्रापि । कठिनस्य भावः काठिन्यम् द्रढिमा । गुणवचनेत्यादिना ष्यञ् । स्त्रियस्तत्र सर्वा अपि कठिनकुचा इत्यर्थः । निषेधपक्षे निर्दयत्वम् । जनास्तत्र दयावन्त इति भावः । दृश्यते वीक्ष्यते ज्ञायत इति वा । वामभ्रुवामित्यस्य दृश्यते इत्यस्य च परवाक्यार्थेष्वपि संबन्धः । वामभ्रुवाम् कबर्यः केशपाशाः केशसंनिवेशाः । जानपदेत्यादिना ङीष् । तेषां भारः भरः अतिशयिताः कबर्य इत्यर्थः । तत्रैव कौटिल्यम् वक्रता स्त्रियस्तत्र सर्वा वक्रकेश्य इत्यर्थः । अन्यत्र कपटहृदयत्वं च । सर्वेपि तत्र निष्कल्मषहृदया इत्यर्थः । गुण

वाचकत्वात् ष्यञ् । वामभ्रुवाम् मध्ये अवलग्ने उदर एव कार्श्यम् तनुता सूक्ष्मता सूक्ष्ममध्यास्तत्पुरस्त्रिय इत्यर्थः । अन्यत्र वित्तादिना क्षैण्यं च । सर्वेऽपि तत्र महैश्वर्यभाज इति भावः । अत्र पुरस्त्रीणां सौन्दर्येण साकं पौराणां वर्तनं वर्णितम् । स्तनादिषु काठिन्यादे र्नियमनेन तदन्यत्र तत्तन्निषेधस्योक्तत्वात्परिसंख्यालङ्कारः । श्लेषानुप्राणिता चेयमित्यनयोस्संकरः । अनया च तद्राजा महामहिमवानिति व्यज्यत इत्य लङ्कारेण वस्तुध्वनिः । परिसंख्याया लक्षणं तु "परिसंख्या निषिध्यैक मेकस्मिन् वस्तुयन्त्रणम्" इति । सिङ्गभूपालोऽपि स्वरसार्णवसुधाकरे एतां कवयित्रीमनुकुर्वाण इव समवर्णयदेवम् - "यस्मिन् शासति सिङ्ग भूमिरमणे क्ष्मामन्नपोतात्मजे । काठिन्यं कुचमण्डले चपलता नेत्राञ्चले सुभ्रुवाम् । वैषम्यं त्रिवलीषु मन्दपदता लीलालसायां गतौ । कौटिल्यं चिकुरेषु किंच कृशता मध्ये परं बध्यते ॥" इति ॥

**यच्छाखानगरीं पम्पा मनेकधनदाश्रिताम् ।**
**अधितिष्ठन् विरूपाक्षो न स्मरत्यलकापुरीम् ॥ ॥66॥**

**यच्छाखेनि ॥** अनेकधनदाः असंख्याकाः कुबेराः धनदातारश्च तैः । धनं दयते पालयतीति धनदः कुबेरः । 'मनुष्यधर्मा धनदः' इत्यमरः । देङ् पालने आतोऽनुपसर्गे कः । अन्यत्र धनं ददाति - दाञ् दाने कः । आश्रिताम् सेविताम् स्वाश्रयतयाऽङ्गीकृताम् पम्पाम् पम्पानदीतीरस्थितत्वात् पम्पेति व्यवहृताम् । यस्याः विजयानगर्याः शाखानगरी - शाखा चासौ नगरी चेति विग्रहः । वृक्षस्य शाखेव प्रधाननगर्या अङ्गभूता नगरीत्यर्थः । शाखाशब्दश्च शाखासदृशे लाक्ष णिकः । 'अन्यत्तु यन्मूलनगरात्पुरं तच्छाखानगरम्' इत्यमरः । राज धान्यामपर्याप्तस्य जनौघस्य निवासार्थे सरिदङ्के सरोऽङ्के वा निर्मिता नगरी । ताम् । अधितिष्ठन् तस्यां निवसन् सन् 'अधिशीङ्स्था साम्' इत्याधारस्य कर्मत्वम् । विरूपाक्षः तदाख्यः शिवः । विरू



पाणि विविधरूपाणि रविचन्द्राग्निरूपाणि अक्षीणि यस्येति विग्रहः । 'वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः' इत्यमरः । अलकापुरीम् – तन्नाम्नीं कुबेरनगरीम् । न स्मरति न कदाचिदपि चिन्तयति । धनदसखत्वेन पूर्वं तत्र वसन्नपीति भावः । 'अधीगर्थदयेशां कर्मणि' इति षष्ठी तु न । कर्मणश्शेषत्वेनाविवक्षितत्वात् । कैलासवासी धनद सखो विरूपाक्षः पम्पायामवतीर्णोऽपि धनदसखत्वं न तत्याज । तत्रतावत्सखा धनद एक एव । अत्रतावद्बहवो धनदा इति कथं वालकास्मरणं तस्योपपद्यत इति निर्गलितोऽर्थः । विरूपाक्षदेवस्यालका विस्मरणेऽनेकधनदाश्रितत्वं विशेषणगत्या हेतुरिति काव्यलिङ्गमल ङ्कारः । अनेककुबेराश्रितत्वं पम्पायाः कथमिति पुरतो विरोध प्रतीतिः । धनदातारो बहवोऽत्र वर्तन्त इति श्लेषेण तद्विरोधपरिहार इति विरोधाभासोऽपि । परस्परापेक्षया च तयोरङ्गाङ्गिभावेन सङ्करः । "आभासत्वे विरोधस्य विरोधाभास उच्यते" इति तल्लक्षणात् । आभ्यां पम्पानगरी स्ववैभवेन नितरामतिशेते तदलकापत्तनमिति वस्तु ध्वन्यत इत्यलङ्कारध्वनिः ॥

**स तस्याममरावत्यां पुरुहूत इव स्थितः ।**
**अशिषद्द्यामिव क्षोणी मनवद्यपराक्रमः ॥ ॥67॥**

**स तस्यामिति ॥** तस्याम् पूर्वं वर्णितायां विजयायामित्यर्थः । अवद्यः गर्ह्यः पराक्रमः यस्य अवद्यपराक्रमः । स न भवतीति अनवद्य पराक्रमः । युद्धेष्ववक्रविक्रम इत्यर्थः । तादृक् सः राजा अमरावत्याम् सुरराजधान्याम् । अमरा अस्यां सन्ति मतुप् । 'मतौ बह्वचोऽनजि रादीनाम्' इति दीर्घः । पुरुहूतः इन्द्रइव पुरु प्रभूतम् हूतम् यज्ञे ष्वाह्वानम् यस्येति विग्रहः । स्थितः तिष्ठन् इन्द्रवैभवमनुभवन् सन्नित्यर्थः । ष्ठा गतिनिवृत्तौ - कर्तरि क्तः । 'स्थाघ्वोः' इतीत्वम् । क्षोणीम् भुवम् भूलोकम् अशिषत् द्याम् स्वर्गम् सुरलोकमिव ।

अन्वशासत् पर्यपालयदित्यर्थः। शासु अनुशिष्टौ - 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ्। 'शासइदङ्हलोः' इतीत्त्वम्। षत्वम्। देवेन्द्रवदसदृशपराक्रमस्स बुक्कभूपतिस्स्वर्लोकमिव निरुपमवैभवोपेतं भूलोकममरावतीमिव सर्व सौभाग्यसंपत्समृद्धां विजयामधिष्ठाय चिरमप्रतिशासनः परिपालया मासेति श्लोकार्थः। अनेकेवशब्दयुक्तेयं वाक्यार्थोपमा। यथाह दण्डी- "एकानेकेवशब्दत्वात्सा वाक्यार्थोपमा द्विधा" इति ॥

**मित्त्राभ्युदयशालिन्या भूत्या नीत्या प्रभूतया ।**
**मनुमेव पुनर्जातं तममन्यन्त मानवाः ॥ ॥68॥**

**मित्त्रेति ॥** मनोरपत्यानि पुमांसः मानवाः प्रजाः। 'तस्यापत्यम्' इत्यपत्यविवक्षायामौत्सर्गिकोऽण्। 'मनोर्जातौ' इति तु न। अपत्यार्थे तदविधानात्। अतएव मनुषा इति बहुषु न लुक्। मित्त्राणां सुहृदाम् मित्त्रस्य सूर्यस्येति च गम्यते। 'अथ मित्त्रं सखा सुहृत्। मित्त्रो रवावपि' इत्युभयत्राप्यमरः। अभ्युदयः अभिवृद्धिः स्वसुतप्रवृत्तिसंजातमहोत्सव इति च गम्यते। तं दातुं शीलमस्या इति ताच्छील्ये णिनिः। ङीप्। तया। प्रभूतया प्रचुरया महत्या इति च गम्यते। नीत्या सामाद्युपायप्रयोगेण सत्प्रवर्तनेनेति च गम्यते। णीञ् - स्त्रियां क्तिन्। भूत्वा ऐश्वर्येण सर्वेषामुपरिवर्तनेन चेति गम्यते। उभयत्रापि इत्थंभूतलक्षणे तृतीया। ताभ्यामुपलक्षितम्। तं राजानम् पुनः भूयोऽपि जातम् प्रादुर्भूतम् उत्पन्नम् जनी प्रादुर्भावे क्तः। 'ज्ञाजनोर्जा' इति जादेशः। मनुम् तन्नामानं वैवस्वतं मनुमेवेत्यर्थः। अमन्यन्त अवागच्छन् स एवैष इति संभावयामासुरित्यर्थः। स्वपितुस्सूर्यस्य स्वीयप्रवृत्त्या संतोषमभिवर्धयन् मनुरिव राजायमपि स्वनीतिचातुर्यैणैश्वर्यसमृद्ध्या च हितानामुपकुर्वन् प्रजानामानन्ददायकोऽभवदिति निर्गलितोऽर्थः। अत्र राज्ञि मनुत्वारोपाद्रूपकमलङ्कारः। तच्च श्लेषानुप्राणितं सत् मनोः पुनर्जातित्वसंभावनो



त्थापितायामुत्प्रेक्षायामुपकरोतीति परस्परमेतेषां सङ्करः ॥

**समोऽपि पुरुषार्थेषु स धर्मे सम्मतस्सताम् ।**
**बह्वमंस्त पुमानाद्य स्सत्त्वं त्रिषु गुणेष्विव ॥ ॥69॥**

**समोऽपीति ॥** सताम् सम्मतः सद्भिः पूजितः विद्वत्पूजाभाजनम् सर्ववेत्तेत्यर्थः। 'मतिबुद्धिपूजार्थेभ्यश्च' इति संपूर्वात् मनु - अवबोधने इत्यस्मात् वर्तमाने क्तः। 'क्तस्य च वर्तमाने' इति षष्ठी। सः राजा। पुरुषैः अर्थ्यन्त इति पुरुषार्थाः धर्मार्थकामाः त्रिवर्ग इति यावत्। 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गस्समोक्षकैः' इत्यमरः। अर्थयतेः कर्मणि घञ्। पुरुषस्य इमे पुरुषार्थाः इति वा। "अर्थेन सह नित्यसमासो विशेष्यलिङ्गता च' इति समासः। तेषु समः साम्यभाक् समबुद्धिः पक्षपातराहित्येन तान् सेवमान इत्यर्थः। "धर्मार्थकामास्सममेव सेव्या यो ह्येकसक्तस्स जनो जघन्यः" इत्यागमादिति भावः। आदौ भवः आद्यः सर्वेषामादिभूतः। दिगादित्वाद्यत्। पुमान् पुरुषः शुद्धसत्त्वप्रधानो भगवान् विष्णुरित्यर्थः। यद्वा आद्यः मुख्यः उत्तमः 'आद्यमादिभवे मुख्ये भक्ष्ये चापि त्रिलिङ्गकम्' इति नानार्थरत्नमाला। पुरुषः पुरुषोत्तमः विष्णुः। त्रिषु त्रिसंख्याकेषु गुणेषु सत्त्वरजस्तमस्सु 'मौर्व्यां द्रव्याश्रिते सत्त्वशुक्लसंध्यादिके गुणः' इत्यमरः। सत्त्वम् तन्नामकं गुणमिव बहु अधिकं यथा तथा अमंस्त अमन्यत आद्रियत। तेषु धर्मोत्तरोऽभवदित्यर्थः। यथाऽऽह गौतमः – "न पूर्वाह्णमध्यंदिनापराह्णानफलान् कुर्यात्। तेषु धर्मोत्तरस्स्यात्" इति। त्रिवर्गेऽसक्तस्तान् समं सेवमानोऽपि धर्मस्तस्मिन् स्वयमेव प्रवृद्धस्तं धर्मोत्तरमकरोदित्यर्थः। यथा अविद्याकार्याणि सत्त्वरजस्तमांसि सममनुसरत्यपि भगवति जनार्दने (तस्य वशंगतप्रकृतित्वात्) सत्त्वजा एव गुणास्तस्मिन् स्वयं प्रवृद्धाः रजस्तमस्संभवान् गुणानधःकृत्य तं शुद्धसत्त्वप्रकृतिं कुर्वन्ति तद्वदित्युपमार्थः।

अयं राजा धर्मोपकारितया तदितरांस्तेष्वसक्तोऽनुसेवते । अतस्तान्ना द्रियत इति न । किन्तु न धर्ममिवोपकार्यतयेति परमार्थः । बहुशब्दोऽमुमेवार्थं गमयति । अत्र समोऽपि धर्मं बह्वमंस्तेति विरोधः । तस्य चोक्तदिशा परिहार इति विरोधाभासो नामालङ्कारः । उपमा चैतस्मिन् बह्वपकरोतीति परस्परमेतयोरङ्गाङ्गिभावेन सङ्करः ॥

**दानं पाणेश्श्रुतेस्सूक्तं मौलेस्त्र्यम्बकपादुकाम् ।**
**भूषाममंस्त यश्श्रीमान् श्रेयोऽवाप्तिसमुत्सुकः ॥ ॥70॥**

**दानमिति ॥** श्रीमान् लक्ष्मीवान् कीर्तिमान् बुद्धिमान् वा यः राजा । श्रेयसः सुकृतस्य निश्श्रेयसस्य वा 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इति, 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिश्श्रेयसामृतम्' इति चामरः । अवाप्तिः प्राप्तिः आर्जनमित्यर्थः । अत्र समुत्सुकः समुद्युक्तः । 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः । तादृशस्सन् दानम् वितरणम् पात्रभूतायार्थिने सादरमभिलषितार्थप्रदानम् तदेव नत्वन्यत्केयूरादि, तस्य बन्धहेतुत्वेनाश्रेयस्करत्वात् । पाणेः हस्तस्य दक्षिणस्येत्यर्थः । तस्यैव दानविधावर्हत्वात् । भूषाम् अलंक्रियाम् विभूषणविधाम् अलंकृतिरचनामित्यर्थः । 'भूषा तु स्यादलंक्रिया' इत्यमरः । यद्वा भूषाम् विभूषणम् तथाविधमिति यावत् । यथावा केयूरादिभिः पुरुषस्य लोके प्रशंसार्हता तथा दानेनापि तद्दातुरिति विभूषणत्वं दानस्योपपद्यते । अमंस्त अज्ञासीत् । ज्ञानपूर्वकधर्माचरणस्यौचित्यात्तथा करोदिति भावः । अफलार्थी सन् राजायमग्रहारादिदानेन सतः प्रीणयामासेति तात्पर्यार्थः । मन – ज्ञाने । लुङ् । क्रियापेक्षायामुत्तरत्राप्यस्य संबन्धः । किञ्च सूक्तम् सूक्तिः शोभना कल्याणाश्रया वाक् "भद्रैषां लक्ष्मीर्निहिताधिवाचि" इति श्रुत्या विद्वज्जनवाचां कल्याणाश्रयत्वस्याभिहितत्वात् । ताम् तथाविधां वाचमेव नतु कुण्डलादीत्यर्थः । श्रुतेः श्रवणयोः । जातावेकवचनम् । श्रूयते अनयेति करणे



क्तिन् । भूषाम् विभूषणे अमंस्तेति पूर्ववत् । विद्वद्भ्यः श्रुतिस्मृतिपुराणेतिहासादीनश्रृणोत् श्रद्धयेति तात्पर्यार्थः । किञ्च । त्रीणि अम्बकानि नेत्राणि यस्य त्र्यम्बकः विरूपाक्षः तस्य पादुकाम् पादुके । पद्यते अनया इति पादूः । पद्यतेरौणादिकः ऊप्रत्ययः । सैव पादुका । स्वार्थे कः । ह्रस्वः ताम् तएव नतु मकुटादीत्यर्थः । मौलेः स्वशिरसः भूषाम् भूषणे अमंस्तेति पूर्ववत् । नित्यं भक्त्या विरूपाक्षदेवं यथाविधि सप्रश्रयमयमर्चयामासेति तात्पर्यार्थः । निष्कामकर्माचरणस्यैव निश्श्रेयससाधनत्वात् स्वकर्तव्यं सर्वं (दानादि) तथैवायमकरोदिति श्लोकार्थः । भर्तृहरिरप्येवमाह-स्वसुभाषितत्रिशत्याम् - "श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्नतु कङ्कणेन । विभाति कायः करुणाकुलानां परोपकारेण न चन्दनेन ॥" इति ॥

**आ विन्ध्यादा च मलया दास्ताद्रेरा च रोहणात् ।**
**प्रकम्पिताहितप्राणं प्राणंसिषुरमुं नृपाः ॥ ॥71॥**

**आ विन्ध्यादिति ॥** विन्ध्यः एतन्नामा उत्तरदिक्स्थः पर्वतः तस्मात् आ आरभ्य तमारभ्येत्यर्थः । मर्यादायामाङ् । 'आङ् मर्यादाभिविध्योः' इति पञ्चमी । मलयः एतन्नामा दक्षिणदिशि सेतुसमीपस्थः कश्चन गिरिराट् । तस्मात् आ च तमभिव्याप्येत्यर्थः । अभिविधावाङ् । पूर्ववत् पञ्चमी । विन्ध्यमारभ्य सेतुपर्यन्तं व्याप्ते दक्षिणोत्तरदिग्भागे इत्यर्थः । रोहणः एतदाख्यः पूर्वस्यां दिशि वर्तमानः कश्चन रत्नोत्पत्तेर्निदानभूतः पर्वतः तस्मात् आ च आरभ्य तमारभ्येति पूर्ववत् । अस्ताद्रिः पश्चिमाचलः तस्मात् आ अभिव्याप्य तमभिव्याप्येति पूर्ववत् । रोहणास्ताचलमध्यस्थे पूर्वपश्चिमदिग्भागे इत्यर्थः । 'निपात एकाजनाङ्' इत्यत्र 'अनाङ्' इत्युक्तेः न प्रगृह्यसंज्ञा । अतएव तत्प्रयुक्तः प्रकृतिभावोऽत्र न । नृपाः राजानः एतावदवधिदेशस्था इत्यर्थः । प्रकम्पिताः प्रकम्पवन्तः कृताः स्थानात् प्रभ्रंशिताः

अहितानाम् शात्रवाणाम् प्राणाः येन तम् शत्रुप्राणापहारिणमित्यर्थः। स्वप्रतापख्यापनाय कृतदिग्विजयमिति भावः। अमुम् बुक्कराजम् प्राणंसिषुः प्रण्यपतन्। दासवत्सेवन्त इत्यर्थः। सर्वा भूमिरनेन निस्सपत्ना कृता स्वायत्तीकरणेनेति निर्गलितोऽर्थः। प्रपूर्वकात् णमु - प्रह्वत्वे इति धातोर्लुङ्। 'यमरमनमातां सक्च' इति सगिटौ। 'उपसर्गादसमासेऽपि' इति णत्वम् ॥

**कुलक्रमानुसंप्राप्त क्षोणीरक्षणजागरः।**
**अभुङ्क्त विपुलान् भोगा ननासक्तमनाः प्रभुः॥ ॥72॥**

**कुलक्रमेति ॥** प्रभुः राजा कुलम् वंशः तास्थ्यात्तद्व्यवहार इति कुलशब्देन तस्थाः राजानो लक्ष्यन्ते। तस्य क्रमः परिपाटी तस्मात् अनुसंप्राप्तम् तदनुसरणेन लब्धम् पितृपितामहप्रपितामहादिभ्यः स्वस्य संक्रान्तम् स्ववंशेऽनादिसिद्धमित्यर्थः। अनेन संप्रदायशुद्धिस्सूचिता। क्षोण्याः भूम्याः रक्षणम् परिपालनम् प्रजासंरक्षणमिति यावत्। तस्मिन् जागरः श्रद्धावान् नित्यमतन्द्रित इत्यर्थः। जागर्ति सदा प्रबुध्यति श्रद्दधातीति जागृ निद्राक्षये इत्यस्मात् पचाद्यच्। अनासक्तमनाः आसक्तम् तत्परम् मयेदमनुभूयत इत्यनुभूतिविषयेष्वास्थायुतम् मनः यस्य आसक्तमनाः, तथाविधो न भवतीति तथोक्तः। अपेक्षारहित एव सन्नित्यर्थः। विपुलान् विस्तृतान् भोगान् सुखानि अभुङ्क्त बुभुजे अन्वभूत्। 'भुजोऽनवने' इत्यात्मनेपदम्। निर्लिप्तोऽपि लिप्त इव सर्वाणि कर्माणि समाचरन् राज्याश्रमपदस्थः कश्चन कर्मयोगी सोऽभवदिति परमार्थः।

अथ राज्ञीं प्रस्तौति —

**देवायी नाम तस्यासी द्देवी वसुमतीपतेः।**
**पद्मा पद्मेक्षणस्येव शङ्करस्येव पार्वती॥ ॥73॥**



**देवायीति ॥** तस्य वसुमत्याः धरण्याः पत्युः भर्तुः बुक्कभूपतेरित्यर्थः। 'सर्वंसहा वसुमती' इत्यमरः। वसुशब्दात् 'तदस्यास्त्यस्मिन्' इति मतुप्। 'उगितश्च' इति ङीप्। देवायी नाम देवायीत्याख्यया लोके प्रसिद्धिं गता। नामेति प्रसिद्धौ। देवान् अयते नित्यं प्राप्नोति मनसा इति अयतेः कर्मण्यण्। ङीप्। देवी कृताभिषेका पट्टमहिषी 'देवी कृताभिषेकायाम्' इत्यमरः। पद्मे इव ईक्षणे नयने यस्य तस्य पद्मेक्षणस्य पुण्डरीकाक्षस्य विष्णोः। 'दैत्यारिः पुण्डरीकाक्षः' इति 'ईक्षणं नयनं नेत्रम्' इति चामरः। पद्मा लक्ष्मीरिव 'लक्ष्मीः पद्मालया पद्मा' इत्यमरः। किञ्च। शङ्करस्य शिवस्य। शमिति मान्तमव्ययम्। शं करोति उत्पादयतीति 'शमि धातोस्संज्ञायाम्' इत्यच्। पार्वती हिमवतो दुहितेव। 'तस्येदम्' इत्यण्। अणन्तत्वात् ङीप्। ते इव नित्यानपायिनी रूपसौशील्यादिभिर्भर्तुर्बहमता जगदाराध्या च सतीति भावः। आसीत् अतिष्ठत्। अस - भुवि लङ् ॥

भर्तृप्रियत्वमस्यां यदुक्तं तत्प्रपञ्चयति —

**सत्स्वप्यन्येषु दारेषु तामेव मनुजाधिपः।**
**बहुमंस्त निशानाथो नक्षत्रेष्विव रोहिणीम्॥ ॥74॥**

**सत्स्वपीति ॥** मनुजाधिपः नरेन्द्रः बुक्कराजः अन्येषु दारेषु देवाय्याः इतरासु भार्यासु 'दाराः पुंसि च भूम्न्येव' इत्यमरः। सत्स्वपि तिष्ठत्स्वपि आभिजात्यसौशील्यरूपादिभिरसदृशेष्वित्यर्थः। अपिशब्दोऽमुमेवार्थं गमयति। तासु मध्ये इति शेषः। निशानाथः निशापतिः चन्द्रः 'ओषधीशो निशापतिः' इत्यमरः। नक्षत्रेषु रोहिण्याः इतरासु अश्विन्यादितारकासु दारेष्विति गम्यते बहुवचनाद् बहुष्विति च। सत्स्वपि तेषु मध्ये इत्यर्थः। न क्षरतीति नक्षत्रमिति 'नभ्रा

णणपा ' न्नित्यादिना साधुः । रोहिणीम् एतन्नाम्नीं तारकामिव । तामेव देवायीमेव नतु तत्सदृशीमप्यन्यां कामपि तामिवेत्यर्थः । बहु अधिकं यथा तथा अमंस्त अमन्यत आदृत अत्यादरं तस्यां सोऽकरोदित्यर्थः । रोहिणी चन्द्रस्येव देवायीयं बहुवल्लभस्यापि तस्य नितरां स्वगुणरूपसंपदादिभिः परां प्रीतिं जनयामासेति निर्गलितोऽर्थः । रोहिण्यामतिप्रीतिश्च चन्द्रस्य पुराणेषु प्रसिद्धा । अतएव 'दक्ष शाप इव चन्द्रमक्षिणोत्' इत्यस्य व्याख्यावसरे मल्लिनाथ एव माह रघुवंशे - "दक्षः किलान्यास्स्वकन्या उपेक्ष्य रोहिण्यामेव रममाणं राजानं सोमं शशाप । स शापश्चाद्यापि क्षयरूपेण तं क्षिणोतीत्युपाख्यायते ॥" मन ज्ञाने दैवादिकाल्लङ् । उपमालङ्कारः । स च नक्षत्राणामन्यदाराणां च साम्यं द्योतयतीत्येकदेशवर्ती ॥

नायकस्य कम्पराजस्य जननमग्रे वर्णयितुकामा राजदम्पत्योस्सौख्यानुभूतिमद्य कथयन्ती सर्गमिमं मङ्गलान्ततया समापयति —

**कर्णाटलोकनयनोत्सवपूर्णचन्द्र**
**स्साकं तया हृदयसम्मतया नरेन्द्रः ।**
**कालोचितान्यनुभवन् क्रमशस्सुखानि**
**वीरश्चिराय विजयापुरमध्यवात्सीत् ॥** ॥75॥

**कर्णाटेति** ॥ कर्णाट इति देशनाम । तस्य लोकः जनः कर्णाटीयाः प्रजा इत्यर्थः । तस्य नयनानाम् नेत्राणाम् चकोराणामिति गम्यते । उत्सवः आनन्दः तज्जनको व्यापारः आह्लादनमित्यर्थः । उत्सूते हर्षमिति सूतेस्सुवतेर्वा पचाद्यच् । तत्र पूर्णचन्द्रः – पूर्णः षोडशकलाभिः परिपूर्णः चन्द्रः इन्दुः पूर्णिमाचन्द्र इत्यर्थः । तस्यामेव तिथौ सर्वकलापरिपूर्णत्वस्य तस्मिन् संभवादेवमुक्तिः । किञ्च । वीरः पराक्रमवान् नरेन्द्रः राजश्रेष्ठः । हृदयस्य सम्मता मनसो बहुमता 'क्तेन च पूजायाम्' इति षष्ठीनिषेधः कारकषष्ठ्या एव



नतु शेषषष्ठ्याः । तेन समासः । यद्वा तेनेत्यधिकारे 'उपज्ञाते' इति निर्देशात् भूते क्तः । तेन तृतीयासमासो वा । तया देवाय्या साकम् । कालस्य कालविशेषस्य तत्तदृतूनामित्यर्थः । उचितानि अर्हाणि तथोक्तानि । तादृशानि सुखानि सौख्यानि क्रमशः क्रमेण । 'संख्यैक वचनाच्च वीप्सायाम्' इति शस् । अनुभवन् आस्वदन् वसन्तादि ऋतूनामानुगुण्येन यथोचितं स्वपत्न्या देवाय्या सह विहरन्नित्यर्थः । चिराय बहुकालम् विजया इति पूः विजयापुरम् । 'ऋक्पूरब्धूः पथामानक्षे' इति समासान्तोऽच् । यद्वा पुरशब्दोऽकारान्तोऽप्यस्ति "क्षेमे सुभिक्षे कृतसंचयानि पुराणि राज्ञां विनयन्ति कोपम्" इति महाभाष्यकृत् । तेन साकं समास इति वा । अध्यवात्सीत् अध्यतिष्ठत् तस्मिन् न्यवसदित्यर्थः । 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मत्वम् । नगर्यां तस्यामात्मपत्न्या तया सह भोगान् भुञ्जानस्य महाराजस्य तस्य कालो महानयासीदिति परमार्थः । वृत्तं तु वसन्ततिलका । 'उक्ता वसन्ततिलका तभजा जगौ गः' इति तल्लक्षणात् । सर्गान्तं सूचयति वृत्तभेदः । यथाह दण्डी – 'सर्गैरनतिविस्तीर्णैश्श्रव्य वृत्तैस्सुसन्धिभिः । सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जकम्' इति ॥

इति

श्री गङ्गादेव्या विरचिते
मधुराविजयनाम्नि वीरकम्परायचरिते
प्रथमसर्गः

* * * *

**इतीति** ॥ श्रीगङ्गादेव्या - श्री इति स्ववृद्धचाशंसनम् 'गङ्गा' इति कवयित्र्या नाम । वक्ष्यति च पुरस्तादियमेव 'भुवि गङ्गेत्य

भिनन्दिताह्वयाम् ' इति । गङ्गेव गङ्गा परमपावनी इति सौशील्यादिसंपत्तिमप्यस्या अन्वर्थं नामेदं गमयति । ' देवी ' इति शब्दः राजकुमारीत्वं महिषीत्वं चास्या अवगमयति । अन्या ज्येष्ठा पट्टमहिषी काचन वर्तेत इति चारित्रिका अभिप्रयन्ति । उत्तरत्र ' शचीव शक्रस्य रमेव शार्ङ्गिणः ' इति कांचन प्रधानपट्टमहिषीं कम्पराजस्येयमेव निर्दिशति । तत्र तस्याः नाम किमिजुष्टमासीदित्यन्या वा सा स्यादियमेव वेति न वयं निर्णीय वक्तुं पारयामः । इयं राजकुमारी, अस्य महिषीष्वियमप्येकेत्यत्र तु न कोऽपि संशयः । गङ्गा देवीति सामान्यविशेषयोस्समासः । श्रिया युता श्रीयुता । सा च गङ्गादेवीति मध्यमपदलोपी समासः । यद्वा - श्रीश्चासौ गङ्गादेवी चेति विग्रहो वा । साक्षाल्लक्ष्मीरूपेयम् - यत इयमुभयोः कुलयोस्सम्पत्समृद्धिं जनयति । अथवा कीर्तिरूपेति वा । तया विरचिते निर्मिते मधुराविजयनाम्नि एतदाख्यया प्रसिद्धे । अनेन काव्यस्य नामाभिहितं भवति । कम्प इति राजा कम्पराजः ' राजाहस्सखिभ्यः ' इति टच् । वीरः कम्पराजः वीरकम्पराजः । वीर इति व्यावर्तकम् अन्यस्य कम्पराजस्यैतत्सोदर्यस्य । ' पूर्वापरप्रथमचर ' इत्यादिना समासः । अनेन काव्यनायकस्य नामोक्तं भवति । अत्र ' कम्पराजः इत्येव समुचितः पाठः । अस्मिन् काव्ये ' कम्परायः ' इत्येतादृशानां प्रयोगाणां कुत्राप्यदर्शनात् । ( वीर ) कम्परायः इति पाठे तु ' कम्परायः ' इति लोकव्यवहृतनाम्नोऽनुकरणमिति मन्तव्यम् । अनुकरणवाचिनां देश्यशब्दानां संस्कृतेन समासो न दोषायेति पूर्वमवोचाम । तस्य चरितम् तच्चरित्रप्रतिपादकं काव्यमित्यर्थः । अनेन वर्ण्यमिति वृत्तं कथितं भवति । तस्मिन् प्रथमः आदिमः सर्गः अध्यायः काव्यभागः ' सर्गस्स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ' इत्यमरः । इति



**समाप्तौ** । सर्गोऽयं समाप्त इत्यर्थः । ' इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ' इत्यमरः ।

इति

श्रीपरमेश्वरीकृपासमुपलब्धशास्त्रसाहित्तीवैदुष्य
' साहित्यालङ्कार ' ' विद्वत्कवीशान '
**पोतुकुच्चि सुब्रह्मण्यशास्त्रिणा**
' काव्यकलानिधि ' ' महीशूरमहाराजास्थानमहाविद्वत्कवि '
श्रीचिदम्बर शास्त्रिणां भागिनेयेन विरचितया
**भावप्रकाशिका**ख्यव्याख्यया समलङ्कृतायाम्
श्री गङ्गादेव्याः कृतौ मधुराविजये महाकाव्ये
राजदम्पत्योस्सुखानुभूतिर्नाम
**प्रथमसर्गः**

*　*　*　*

श्रीः

# मधुराविजयम्

## भावप्रकाशिकाख्यव्याख्यासमेतम्

## द्वितीयसर्गः

अस्मिन् सर्गे नायकजननं वर्णयितुकामा तदङ्गत्वेन देव्याः
गर्भधारणमादौ प्रशंसति —

**अथास्य वंशप्रतिरोहबीजं**
**महीभुजो गर्भमधत्त देवी ।**
**जगत्त्रयोद्भूतिनिदानभूतं**
**तेजो विधातुः प्रथमेव सृष्टिः ॥** ॥ 1 ॥

**अथेति ॥** अथ अनन्तरम् राजदम्पत्योस्सुखानुभूतेरुत्तरकाल
इत्यर्थः। अस्य सन्निकृष्टस्य पूर्वसर्गे वर्णितस्य 'इदमस्तु सन्निकृष्टे' इति वच
नात् । महीं भुनक्ति रक्षतीति महीभुक् राजा । 'क्विप्चे'ति क्विप् । तस्य
बुक्कराजस्य देवी कृताभिषेका राज्ञी देवायी । भूमिरिति गम्यते । 'देवी
कृताभिषेकायाम्' इत्यमरः । नाट्योक्तावित्येतस्मिन्नधिकारे पठितस्यापि
देवीशब्दस्य प्रयोगोऽत्र न विरुध्यते । तत्र पठितासु कासुचिन्नियमस्य
कासुचिद्विधेश्च प्रामाणिकैरभ्युपगमात् । एतदेवाचष्ट शब्दार्णवकारः -
"अथैषां रूपकाराणामुक्तीर्वक्ष्याम्यशेषतः । कासुचिन्नियमस्तत्र विधिरेव
च कासुचित्" अम्बादीनां नाट्ये प्रायशः प्रयोगाद्विधिः । अज्जुका
दीनां त्वन्यत्राप्रयोगान्नियमः" इत्यमरसुधाटीकापि । अतएव महाकव
योऽपि प्रायुञ्जतार्यपुत्रादीन् रामायणादिषु श्रव्यकाव्येषु, मात्रादींश्च
रूपकेषु । वंशः राजसंतानः 'वंशोऽन्ववायस्संतानः' इत्यमरः । वृक्ष



इति गम्यते । तस्य प्रतिरोहः प्रादुर्भावः वृद्धिः अङ्कुरजन्म च ।
रुह बीजजन्मनि प्रादुर्भावे च इत्यस्माद् घञ् । तस्य बीजम्
कारणभूतम् 'बीजं तु रेतसि । स्यादाधाने च तत्त्वे च
हेतावङ्कुरकारणे' इति मेदिनी । गर्भम् भ्रूणम् बीजं च । बीजा
द्यथावा वृक्षो भवन् शाखोपशाखाभिः प्रवर्धिष्यते पुत्रपौत्रादिक्रमेण
राजवंशोऽप्येवमेवेति भावः । विधातुः ब्रह्मणः परमेश्वरस्येत्यर्थः ।
सर्गावस्थायां तस्य तथैव व्यवहारस्य सत्त्वात् । प्रथमा आद्या 'पुंस्यादिः
पूर्वपौरस्त्यप्रथमाद्याः' इत्याद्यपर्यायवाचिष्वमरः । सृज्यत इति सृष्टिः
जलम् कर्मणि 'स्त्रियां क्तिन्' इति क्तिन्, 'अकर्तरि च कारके
संज्ञाया'मिति घञोऽपवादत्वेन कर्मण्यपि विहितत्वात्तस्य । अतएव
"संबन्धमनुवर्तिष्यत" इति फणिनांपत्युक्तौ 'संबध्यत इति संबन्धः'
'कर्मणि घञ्' इति व्याख्यायि कैयटादिभिः । त्रयोऽवयवा यस्य
तत् त्रयम् 'संख्याया अवयवे तयप्' इति तयप् 'द्वित्रिभ्यां
तयस्यायज्वा' इति तयपोऽयच् । जगतां त्रयम् जगत्त्रयम् त्रयो
लोकाः । तस्य उद्भूतिः उद्भवः जननम् । तस्याः निदानं भूतम्
निदानभूतम् । प्रधानकारणत्वेन स्थितम् प्रधानकारणमिति यावत् ।
भूतमिति भूधातोः सत्तार्थकात् 'गत्यर्थे'ति कर्तरि क्ते रूपम् ।
तेजः वीर्यमिव 'तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः' इति
मेदिनी । अत्र मनुः – "ततस्स्वयंभूर्भगवानव्यक्ताद् व्यञ्जयन्निदम् ।
अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥ तदण्डमभवद्धैमं सह
स्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥
तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् । स्वयमेवात्मनो ध्याना
त्तदण्डमकरोद्द्विधा ॥ ताभ्यां सशकलाभ्यां स दिवं भूमिं च निर्ममे"
इति । अधत्त अधात् देवायी गर्भवती बभूवेत्यर्थः । यथावा पारमेश्वर
मंभोनिक्षिप्तं तेजश्चराचरात्मकं विश्वं प्रावर्तयदेवं देवाय्या राज्ञो
धृतो गर्भः भविष्यद्राजवंशमशेषं प्रसविष्यत इति भावः । श्रौती

पूर्णोपमेयम्। उपमानं तु पुराणप्रसिद्धम्। भगवत्साम्यं बुक्कराजस्य निग्रहानुग्रहसमर्थतामद्भिस्साम्यं देव्याः परमपवित्रताम् तेजस्साम्यं शिशोर्महामहिमत्वं द्योतयन्ति। अथशब्दस्सर्गादौ प्रयुक्तो माङ्गल्यमभि दधत् सर्गारम्भमाचष्ट। अस्मिन् सर्गे प्रायेण वृत्तमुपजातिः। क्वचि दुपेन्द्रवज्रेन्द्रवज्रे च। तल्लक्षणं तु - 'स्यादिन्द्रवज्रा यदि तौ जगौ गः।' 'उपेन्द्रवज्रा जतजास्ततो गौ।' 'अनन्तरोदीरितलक्ष्म भाजौ पादौ यदीयावुपजातयस्ताः' इति। सर्गोऽयं देवाय्याः गर्भ धारणेन समारब्धः परिसमाप्यते स्वसुताभिवर्धनेन साकं महा रजाभिवृद्धिप्रकथनेन ॥

गर्भधारणं प्रस्तुत्य गर्भवत्यां तस्यां गर्भलक्षणानि वर्णयति —

**मुखेन तन्वी शरपाण्डरेण**
**विमुक्तरत्नाभरणा विरेजे।**
**विलूनराजीववना दिनान्ते**
**छायाशशाङ्केन शरन्नदीव ॥** ॥ 2 ॥

**मुखेनेति** ॥ तन्वी कृशाङ्गी देवायी 'श्लक्ष्णं दभ्रं कृशं तनु।' इत्यमरः। 'वोतो गुणवचनात्' इति ङीष्। अङ्गानां कृशत्वमपि दौहृदलक्षणम्। यतः कृशाङ्गी अतएव। रत्नानाम् आभरणानि भूषणानि मणिमयभूषा इत्यर्थः। प्रकृतिविकृतिभावे षष्ठी। विमुक्तानि परित्यक्तानि (अङ्गानामपाटवेन स्वस्थानस्थितेरसंभवाच्चेति भावः।) रत्नाभरणानि वलयादीनि, माङ्गल्यहेतून् ताटङ्कादीन्विनान्यानि, (तत्परित्यागे दोषश्रवणात्) यया सा तथोक्ता। तादृशी सती, शरः तृणविशेषः 'शरो दध्याद्यग्रसारे बाणे काण्डे तृणान्तरे' इति नानार्थ रत्नमाला। स इव पाण्डरम् धवलम्। पण्ड्यते मनः अस्मिन्नित्यधि करणे बाहुलकादरः दीर्घश्च। 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इत्य



मरः। तेन मुखेन उपलक्षितेत्यर्थः। 'लक्षणेत्थंभूताख्याने' ति तृतीया। तथासती, दिनस्य अन्ते चरमे भागे साय इत्यर्थः। 'दिनान्ते तु सायः' इत्यमरः। तस्मिन्, अस्तमिते सूर्ये इति यावत्। तदानीमेव चन्द्र मसः प्रतिबिम्बस्य प्रतिफलनसम्भवात्। विलूनानि छिन्नानि अपचि तानि राजीवानाम् पद्मानाम् वनानि समूहाः यस्यां सा तथोक्ता। सा परित्यक्तसकलसरोरुहा सतीत्यर्थः। छाया चासौ शशाङ्कश्च छायाशशाङ्कः प्रतिबिम्बितश्चन्द्रः। तेन उपलक्षिता। उपलक्षणे तृतीया। 'छाया कान्तिस्सूर्यजाया प्रतिबिम्बमनातपः' इति नानार्थरत्नमाला। शरदि या नदी शरत्कालप्रवाहः सेव। वर्षाप्राप्तप्रवाहोल्बणस्य शर द्यपगमेन नदीप्रवाहानामल्पत्वं लक्ष्यत इति तथोक्तम्। रेजे बभौ। गर्भधारणेन कार्श्यमनुभवन्ती भूषाभारमसहमाना सा भूषणानि विहाय मुखपाण्डिम्ना प्रकाशन्ती प्रतिबिम्बितचन्द्रेण कृशा शरन्नदीव स्थिते त्युत्प्रेक्ष्यते। अत्र यद्यपि राजीववनेति वनशब्देन भूषणकार्त्स्न्यस्य परित्याग उच्यते तथापि माङ्गल्यहेतूनां तु तेषामपरिहार एव विवक्षितः कवयित्र्या। वनशब्दस्तु बहुलत्वमभिदधत् भूषणानां बाहु ल्यमेव द्योतयति नतु सर्वात्मना तदभावम्। अतएव कविकुल तिलकः कालिदासः एवमाह - "शरीरसादादसमग्रभूषणा मुखेन साऽ लक्ष्यत लोध्रपाण्डुना। तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशि नेव शर्वरी ॥" इति। भोजस्तु चम्पूरामायणे "अपाटवात्केवलमङ्ग कानाम् मनोज्ञकान्तेर्महिषीजनस्य। शनैश्शनैः प्रोज्झितभूषणानि चकाशिरे दौहृदलक्षणानि ॥" इति कौसल्यामवर्णयत्। गर्भलक्षणेषु कार्त्स्न्यमुक्तं बाहटेन "क्षामता गरिमा कुक्षेः मूर्छा छर्दिररोचनम्। जृम्भः प्रसेकः स्खलनं रोमराज्याः प्रकाशनम् ॥" इति। अत्र विलूनराजीववनायाश्शरन्नद्याः अप्रसिद्धत्वादुत्प्रेक्षेयम्। इवशब्दस्सम्भाव नायाम्। दण्डिमते तु स्वरूपोत्प्रेक्षाया अनुत्थानादभूतोपमेयमित्युच्यते। एतादृशेष्वतिशयोक्तिरिति "पुष्पं प्रवालोपहितं यदि स्या" दित्याद्युदा

हृत्य स्फुटीचक्रारालङ्कारसर्वस्वकारः ॥

तस्मिन् समये तस्यामभिव्यक्तान् दोहदान् विशदयन्ती प्रह्लादादिषु भक्तिरिव साम्राज्यधौरेयताधैर्यशौर्यपौरुषसाहसादयो गुणाः आगर्भसिद्धा एतस्येति वर्णयति कैश्चन श्लोकैः । तत्र धुरीणता तावदत्र प्रस्तूयते –

**गर्भस्थितस्येव शिशोर्विधातुं**
**वसुन्धरामण्डलभारशिक्षाम् ।**
**अरोचयत्पार्थिवधर्मपत्नी**
**मन्ये मृदास्वादरसानुबन्धम् ॥** ॥ 3 ॥

**गर्भस्थितस्येति ॥** पृथिव्याः ईश्वरः पार्थिवः । 'तस्येश्वर' इत्यञ् । तस्य धर्मपत्नी सहधर्मचरी भार्या न तु भोगिनीत्यर्थः । अश्वघासादिवत्समासः । गर्भे कुक्षौ स्थितस्य विद्यमानस्य गर्भे धृतस्येत्यर्थः । शिशोः अर्भकस्य । वसु धारयति 'संज्ञायां भृतॄवृजि' इति खच् । खित्यनव्ययस्येति मुम् । वसुन्धरा भूमिः । 'सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा' इत्यमरः । तस्याः मण्डलस्य मण्डलाकारेण परिणतस्य समूहस्य वा । 'मण्डलं देशबिम्बयोः । भुजङ्गभेदे परिधौ शुनि द्वादशराजके संघाते' इति सुधा । भारः धारणम् पोषणं च तस्य शिक्षाम् अध्यापनम् तद्विषयकोपदेशमित्यर्थः । 'शिक्ष विद्योपादाने' इत्यस्माण्णिजन्तात् 'गुरोश्च हलः' इति भावे अप्रत्ययः । विधातुं शिक्षां कर्तुमिव "कृतौ करोत्यावहति विदधात्यादधाति च" इति भट्टमल्लः । इवेति संभावनायाम् । मृदः मृत्तिकायाः आस्वादः भक्षणम् । तस्मिन् रसः रागः अभिलाषातिशयः । "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । तस्य अनुबन्धः अविच्छिन्ना प्रवृत्तिः । तम् सदा मृद्भक्षणैकतत्परता



मिति यावत् । अरोचयत् प्राकाशयत् । 'रुच दीप्ता' वित्यस्माण्णिजन्ताल्लङ् । इतीति शेषः । एवमित्यर्थः । मन्ये तर्कयामि । अत्र च मृदास्वादरसस्य वसुन्धरामण्डलभारशिक्षाफलकत्वेनोपनिबद्धस्य वस्तुतोऽफलस्य फलत्वेन संभावनमभूदिति फलोत्प्रेक्षा ॥

तस्याः दोहदान्येव वीरप्रसूरियं भविष्यतीति वदन्तीति वीरविषयकाणि तानि प्रस्तौति –

**अनन्यसामान्यभुजापदान**
**मुत्पत्स्यमानं तनयं नृपस्य ।**
**अनारतं वीररसानुबन्धं**
**न्यवेदयद्दौहृदमेव देव्याः ॥** ॥ 4 ॥

**अनन्येति ॥** देव्याः राज्ञ्याः देवाय्याः । आरतम् - आङ्पूर्वो रतिः विरामे वर्तते । तस्माद्भावे क्तः । अविद्यमानम् आरतं विरतिः यस्मिंस्तत् अनारतम् अविरतमित्यर्थः । 'सततानारताश्रान्तसन्ततविरतानिशम्' इत्यमरः । वीरः वीररसः उत्साहः । वीरस्योत्साहस्थायिकत्वात् भाविसंज्ञाश्रयणेन "ओदनं पचती" त्यादिवदत्र रसव्यवहारः । अत एवोक्तमाचार्यैः - "विभावैरनुभावैश्च युक्तो वा व्यभिचारिभिः । आस्वाद्यत्वात्प्रधानत्वात् स्थाय्येव तु रसो भवेत्" इत्यादि । तस्मिन् रसः प्रीतिः अभिलाषः तद्विषयकगाढकुतूहलमिति यावत् । तस्य अनुबन्धः अनिवृत्तगमनम् यस्मिन् । तत् दोहदम् मनोरथः 'दोहदो गर्भलक्षणे । अभिलाषे तथा गर्भे' इति हैमः । तदेव दौहृदम् 'दोहदं दौहृदम् श्रद्धा लालसं च समं स्मृतम्' इति हलायुधः । द्विहृदयायाः संबन्धीत्यर्थे 'तस्येद' मित्यण् । 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः । 'हृद्भगसिन्ध्वन्ते" इति तु न भवति, प्रतिपदोक्तस्य हृच्छब्दस्यैव तत्र ग्रहणात् । पृषोदरादित्वा

त्साधुः । द्वे हृदये यस्याः इति व्युत्पत्त्या द्विहृदया गर्भिणी । तदानीं शिशोर्हृदयेन साकं संबद्धं मातुर्हृदयमिति तथोक्तिः । तथाचोक्तं बाहटेन – "मातृजन्यस्य हृदयं मातुश्च हृदयेन तु । संबद्धं तेन गर्भिण्या नेष्टं श्रद्धावमाननम् ॥" इति । संग्रहे चैतदुक्तम् - "द्विहृदयां नारीं दौहृदिनीमाचक्षत" इति । उत्पत्स्यमानम् जनिष्यमाणम् आसन्नोदयकालमित्यर्थः । उत्पूर्वात् पद्यतेर्लृटश्शानच् । नृपस्य राज्ञः तनयम् सुतम् राजकुमारमित्यर्थः । अन्येषां साधारणम् अन्यसाधारणम् इतरैस्तुल्यम् 'वाच्यलिङ्गास्समस्तुल्यस्सदृक्षस्सदृशस्सदृक् । साधारणस्समानश्च' इत्यमरः । तन्नभवतीति तथोक्तम् निरुपमानमित्यर्थः । तादृशम् भुजयोः अपदानम् पराक्रमः 'अपदानं पराक्रमे' इति केशवः । तत् यस्मिन् तत्तथोक्तम् । तादृशं यथा भवति तथा । न्यवेदयत् व्यजिज्ञपत् अबुबोधयत् प्राकाशयदिति यावत् । अबलायां तस्यामभिव्यक्तान् दोहदान् धैर्यारम्भौदार्याद्युत्साहसामग्रीसमग्रान् श्रुत्वा गर्भस्थशिशुरयं वीरवतामग्रेसर इति कथनं विनापि लोकोऽयमज्ञानादिति भावः ॥

कानि तानीत्याकाङ्क्षायां वीरस्य स्थायिनमुत्साहं दोहदैः प्रशंसन्ती प्रथमतस्तद्धेतुभूतां तां धीरतां वर्णयति –

**सा तुङ्गभद्रां सविधे वहन्तीं**
**सुभ्रूरनादृत्य सुखावगाहाम् ।**
**विहर्तुमैच्छन्निजसैन्यनागै**
**स्तरङ्गिते वारिणि ताम्रपर्ण्याः ॥** ॥ 5 ॥

**सा तुङ्गेति** ॥ शोभने भ्रुवौ यस्यास्सा सुभ्रूः देवायी । सुखयन्तीति सुखाः सुखकराः अवगाहाः अवताराः यस्याः ताम् । सविधे स्वस्याः समीपे वहन्तीम् प्रवहन्तीम् । तुङ्गभद्राम् तन्नाम्नीं नदीम् । अनादृत्य अविगणय्य परित्यज्येत्यर्थः । निजम् स्वीयम् यत् सैन्यम् सेना । स्वार्थे ष्यञ् । तस्य ये नागाः गजाः । अवयवावयविभावे षष्ठी । तैः तरङ्गिते संजातकल्लोलवति । तारकादित्वादितच् । मदगजकृतसंक्षोभेण मुहुर्मुहुरुद्भूतवीचीपरम्पराभिरतीव भयावहे इत्यर्थः । ताम्रपर्ण्याः एतन्नाम्नी मुक्तानामाकरभूता काचिन्नदी तस्याः वारिणि जले । विहर्तुम् क्रीडितुम् जलक्रीडामनुभवितुमित्यर्थः । ऐच्छत् इयेष । इषधातोः लङि शपि इषुगमियमामिति छः । आडागमः । आटश्चेति वृद्धिः । गजैरत्यन्तं भयावहापि ताम्रपर्णी वीरप्रसवसंगत्या तस्याः प्रीतिमेव जनयामासेति धीरतातिशयस्तस्यां कीर्त्यते ॥



तस्यास्साहसरसिकतां प्रकथयति —

**अपारयन्ती चरितैणशावं**
**क्रीडाचलोपान्तमपि प्रयातुम् ।**
**आखेटरागादधिरोढुमैच्छ**
**न्माद्यन्मृगेन्द्रान् मलयाद्रिकूटान् ॥** ॥ 6 ॥

**अपारयन्तीति** ॥ चरिताः चरन्तः । (गत्यर्थकाच्चरतेः 'गत्यर्थाकर्मके'ति कर्तरि क्तः ।) एणशाबाः हरिणशिशवः यस्मिंस्तम् । एणोनाम पृथुनेत्रः कृष्णवर्णो मृगभेदः 'गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः' इति मृगभेदोक्तावमरः । 'पृथुकश्शाबकश्शिशुः' इत्यपि स एव । क्रीडायाः अचलः क्रीडाचलः । क्रीडापर्वतः दिवाविहारप्रदेशः "सरितः पुलिनं वेला क्रान्तारारामभूधराः । लतागृहाणि चित्राणि शय्या किसलयाञ्चिता दिवा विहारदेशास्युः" इति भावप्रकाशः । तस्य उपान्तम् समीपप्रदेशः । विभक्त्यर्थेऽव्ययीभावः । तत् तदुद्दिश्येत्यर्थः । प्रयातुम् प्रस्थातुम् गन्तुमिति यावत् । अपारयन्ती अशक्नुवानापि गर्भभारादिति भावः । तदशक्ततामविगणय्येत्यपिशब्दार्थः ।

'पारतीरकर्मसमाप्ता' विति चुरादिण्यन्तात् शतरि 'शप्श्यनोः' इति नुमि 'उगितश्चे' ति ङीप्। 'शक्नोति पारयति पर्याप्नोति प्रभवत्यपि' इति क्रियानिघण्टुः। आखेटः मृगया। 'आखेटो मृगया स्त्रियां' मित्यमरः। तस्मिन् रागः अभिलाषः तस्माद्धेतोः। माद्यन्तः दृप्यन्तः मृगेन्द्राः सिंहाः 'सिंहो मृगेन्द्रः पञ्चास्यः' इत्यमरः। ते येषु तथोक्ताः। तान् भयजनकानपीति भावः। मलयः तन्नामा अद्रिः दाक्षिणात्यः पर्वतः। चूतवृक्षादिवत् सामान्यविशेषयो स्समासः। तस्य कूटान् शिखराणि 'कूटं पूर्द्वारिश्रृङ्गयोः। माया दम्भाद्रिश्रृङ्गेषु' इति हैमः। अत्र करिकलभादिवदद्रिशब्दप्रयोग उप पद्यते। तान् अधिरोढुम् आरोढुम् पर्वतोपरिप्रदेशमधिगन्तुमित्यर्थः। 'अधिशीङ्स्थासामि' ति कर्मत्वम्। ऐच्छत् आचकाङ्क्ष। गर्भभरालसा सा परं खिद्यमानापि नैव श्रृङ्गारलालसा इव मनोज्ञवस्तुदर्शनादिना दिवाविहारप्रदेशेष्वात्मानं विनोदयितुमिच्छन्ती वीरपुरुषा इव क्रूर मृगैर्दुरधिगमेषु भयहेतुषु प्रदेशेषु मृगयाविनोदेनैव सुखयितुमात्मानं प्रावर्ततेत्येतदतिविस्मयावहमिति भावः। अद्भुतपर्यवसायी वीर इति वीरत्वं शिशोरत्र प्रस्तूयते। तेन शिशोः धीरवीरत्वं महापुरुषत्वं च कथितं भवति। अद्भुतपर्यवसायित्वं च वीरस्य धनिकेनोक्तम् — "श्रृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो मतः। वीराच्चैवाद्भुतोत्पत्तिः बीभत्साच्च भयानकः॥" इति॥

तस्याः पौरुषैकप्रवणतां व्याचष्टे श्लोकद्वयेन —

**सा दैत्यनाथप्रथनाय पूर्वं**
**विष्णोरधस्तात्कृतपौरुषस्य।**
**आकर्णयन्ती कुहनाप्रपञ्चा**
**दासी[द्ध्रुवं वामन इत्यमंस्त]॥** ॥7॥

**सा दैत्येति॥** पूर्वम् प्राक् पूर्वस्मिन्काले 'प्राक्पूर्वमग्रतः' इति



धरणिः। दैत्यनाथः राक्षसराजः बली। तस्य प्रथनाय प्रख्यातये दानवीर इति प्रतिष्ठामुत्पादयितुम्, तं तथा प्रख्यापयितुमित्यर्थः। प्रथ प्रख्याने-भावे ल्युट्। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी। अधस्तात् अधरदेशे पृष्ठत इत्यर्थः। अधरशब्दा दस्तातिप्रत्यये 'अस्ताति' चेत्यधादेशः। अस्ताति चेति विधान सामर्थ्यादसिरस्तातिं न बाधते। कृतम् न्यस्तम् अनादृतम् अपरि गृहीतमिति यावत्। पौरुषम् पुरुषस्य कर्म धर्मो वा मनस्वित्वमिति यावत्। 'पुंभावे तत्क्रियायां च पौरुषम्' इत्यमरः। पुरुषशब्दात् भावकर्मणोरर्थयोः 'प्राणभृज्जातिवयोवचने' त्यादिना अञ्। तत् यस्य तम्। बलिन्यतिशयितप्रीतिमता भगवता स्वावज्ञापि न परि गणितेति भावः। आच्छादितस्वब्रह्मभावस्येति च गम्यते। 'पुरुषा वात्ममानवौ' इत्यमरः। तस्य विष्णोः श्रीमन्नारायणस्य व्यापन शीलस्येति च गम्यते। एतेन पद्भ्यां द्वाभ्यामेव भूम्याकाशयोराक्र मणे सामर्थ्यं च सूचितं भवति। पुरा नारायणो बलिं समुद्धर्तु कामस्स्वयं काश्यपो भूत्वा वामनभूमिकां पर्यग्रहीत्। पदत्रयपरिमितां भूमिमभ्यर्थयन् तस्मिन् याच्ञादैन्यमप्यपरिगणय्य तां प्रतिजग्राहेति पौराणिकी कथात्रानुसंधेया। आकर्णयन्ती तादृशं विष्णुं श्रृण्वन्ती तत्कथाश्रवणं कुर्वन्तीत्यर्थः। भगवतो नारायणस्यानुकरोतीतिवत् कर्मणश्शेषत्वविवक्षायां 'षष्ठी शेषे' इति षष्ठी। कुहना दम्भचर्या मायाचरणम् 'कुहना दम्भचर्यायामीर्ष्यालौ कुहनस्त्रिषु' इति मेदिनी। 'कुह विस्मापने' इति चुराद्यदन्तः। तस्मात् 'ण्यासश्रन्थोयु' जिति युच्। तस्याः यः प्रपञ्चः प्रतारणम् वञ्चना 'प्रपञ्चस्संचयेऽपि स्याद्विस्तरे च प्रतारणे' इति मेदिनी। तस्माल्ल्यब्लोपे पञ्चमी। तं समालोच्येत्यर्थः। वामनरूपं परित्यज्य त्रिविक्रमरूपेण त्रिलोक्या साकं बलिमाचक्रामेत्येवंरूपाणि तस्य मायाविडम्बनानि सम्यगवबुध्येति यावत्। ध्रुवम् निश्चितम् असंदिग्धं यथा भवति तथा - सर्वथेति यावत्।

‘ ध्रुवो भभेदे क्लीबे तु निश्चिते शाश्वते त्रिषु ’ इत्यमरः । वामनः नाम्नैव न चेष्टाभिरपि वामनः । विष्णुश्चेति गम्यते । ‘ अथ वामने न्यङ्नीचखर्वह्रस्वास्स्युः ’ इत्यमरः । ‘ वामनो वाच्यवत्खर्वे विष्णुदिग्गजयोः पुमान् ’ इति नानार्थरत्नमाला च । णिजन्ताद्वमतेरुद्गिरणार्थकान्नन्द्यादित्वाल्ल्युप्रत्यये वामयति प्रकाशयति मायामित्येकत्र, प्रकाशयति भक्तेषु स्नेहमित्यन्यत्र ध्वन्यर्थे च कृतार्थोऽयं वामनशब्दो व्युत्पत्त्या रूढ्या च तस्मिन्नर्थवान् प्रावर्ततेति परमार्थः । तादृशः आसीत् अभवत् । इति इत्थम् उक्तविधया । अमंस्त अमन्यत । ‘ प्राणानपि परित्यज्य मानमेवाभिरक्षये ’ दिति दिशा तस्मिन् प्रशंसार्हो न तथा प्रवृत्तिरिति भावः । सर्वान्तर्यामिनश्शुद्धसत्त्वस्य तस्य विश्वसमुद्धरणाय तथाचरणं भगवतस्तस्यैव समुचितमिति शब्दशक्तिमूलो ध्वनिरप्यत्र विद्यत इति वक्तुं युक्तम् । निरुक्तिरलङ्कारः । तल्लक्षणं तु “ निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम् ” इति ॥

लोकैकवीरमीशानमपि नाजीगणदियमिति शिशोः पौरुषातिशयं प्रस्तौति –

**पृथ्वीरथस्सारथिरब्जसूतिः**
**शेषेण सज्यं धनुरद्रिराजः ।**
**शरश्च शौरिः किल हन्त लक्ष्यं**
**त्रयं पुरामित्यहसत्पुरारिम् ॥** ॥ ४ ॥

**पृथ्वीति** ॥ पृथ्वी पृथिवी भूमिः महतीति च गम्यते । महत्त्वे तस्याः रत्नगर्भत्वं सर्वसहत्वं च हेतू । अस्त्राग्निभिरदाह्यत्वमेतेन तस्यास्सूच्यते । ‘ गोत्रा कुः पृथिवी पृथ्वी ’ इति भूमिपर्यायेष्वमरः । ‘ पृथु बृहद्विशालं पृथुलं मह ’ दित्यपि महदर्थकात्पृथुशब्दात् ‘ वोतो गुणवचना ’ दिति ङीष् । अत्र मल्लिनाथस्तु



प्रथत इति पृथिवी । प्रथेरौणादिकः षिवुन् ‘ षिद्गौरादिभ्य ’ श्चेति ङीषित्याह । तादृशः रथः स्यन्दनः स्वस्य अधिष्ठानमित्यर्थः । शताङ्गस्स्यन्दनो रथ ” इत्यमरः । अब्जात् सूतिः प्रसवः जन्म यस्य सः तथोक्तः । षूङ् – प्राणिप्रसवे भावे क्तिन् । नाभिकमलादुत्पन्नो विष्णोरौरसस्सुतो ब्रह्मेत्यर्थः । अनेन तस्य रथिनमपि रक्षितुं सामर्थ्यं शत्रुभिरवध्यत्वं च व्यज्यते । तादृशः सारथिः यन्ता रथचोदकः । ‘ यन्ता सूतः क्षत्ता च सारथिः ’ इत्यमरः । शेषेण तदाख्येन सर्पराजेन अनन्तेन ‘ शेषोऽनन्ते तथा सीरिण्युपयुक्तेतरेऽपि च ’ इति हैमः । शिष्यते कल्पान्ते सर्वेषां विलयेऽपि स्वयमिति शेषतेर्घञ् । एतेन, प्रयत्नेन महतापि छेत्तुमशक्यत्वं तस्मिन् द्योत्यते । तद्रूपेण ज्यया मौर्व्या सह वर्तत इति तथोक्तम् ‘ तेन सहे ’ ति बहुव्रीहिः । ‘ वोपसर्जन ’ स्येति सहस्य सभावः । गमकत्वात्समासः । धनुरित्यर्थः । अद्रीणां राजा अद्रिराजः । ( ‘ राजाहस्सखिभ्य ’ इति टच् । ) महागिरिस्सुरालयो मेरुः ‘ मेरुस्सुमेरुर्हेमाद्री रत्नसानुस्सुरालयः ’ इत्यमरः । अद्रिराज इत्ययं केनाप्युपायेन तस्य दुर्भेदत्वं गमयति । तादृशः धनुः शरासनम् ‘ धनुः पियाले ना न स्त्री राशिभेदे शरासने ’ इति मेदिनी । शौरिः - शूरस्य तदाख्यस्य यदुवंश्यस्य अपत्यम् । बाह्वादित्वादिञ् । शूरशब्दस्तस्मिन्न केवलं नाम्ना चरितार्थ इति तदपत्यस्यास्य शूराग्रगत्वं ज्ञायते । तेन शत्रुहनने स्वयमेव स समर्थ इति सूच्यते । तादृक् शरः बाणः शत्रुहननसाधनम् । किलेति वार्तायाम् । ‘वार्तासंभाव्ययोः किल’ इत्यमरः । एवं समभूत् तथापीत्यर्थः । लक्ष्यं शरव्यं भेद्यं वस्त्वित्यर्थः । ‘ लक्षं लक्ष्यं शरव्यं च’ इत्यमरः । पुराम् नगरीणाम् ‘पू स्त्री पुरीनगर्यौ वा’ इत्यमरः । त्रयम् त्रितयम् धातुमयानि त्रीणि पुराणीत्यर्थः । चो विनिश्चये । न तत्र संशय इत्यर्थः । ‘ चः पादपूरणे पक्षान्तरे हेतौ विनिश्चये ’ इति त्रिकाण्डशेषः । हन्तेत्यनुकम्पायाम् । ‘ हन्त हर्षेऽनुकम्पाया ’ मित्यमरः ।

लक्ष्ये दयनीयतेयमतितुच्छत्वं तस्मिन् दर्शयन्नतिसुलभभेद्यत्वं तस्य गमयति । इति इत्थम् एवमुक्त्वेत्यर्थः । इतिशब्दः पूर्वोक्तानामनुकर्षणं वक्ति । 'इति प्रकरणे हेतौ प्रकाशादिसमाप्तिषु । निदर्शने प्रकारे स्यादनुकर्षे च सम्मतम्' इति विश्वः । पुराणाम् अरिम् शत्रुम् अन्तकम् त्रिपुरान्तकमीशानमित्यर्थः । पुरशब्दोऽकारान्तोऽप्यस्ति "क्षेमे सुभिक्षे कृतसञ्चायानि पुराणि राज्ञां विनयन्ति कोपम्" इत्याह महाभाष्यकृत् । अहसत् पर्यहासीत् । हसे इत्यस्माल्लङ् । हसिरयं हासजन्यपरिहासं लक्षयति । कार्यकारणयोरभेदोपचारात् । अतएव हसेरकर्मकस्यापि सकर्मकतेत्यवधेयम् । साधनसम्पत्तिरित्थमनन्या - दृश्यपि पर्वतं खात्वा बालमूषिकामेकां लब्धवतः पुंस इव, गिरिशस्यापि संरम्भो महान् फललाभाय भूयसे नाभवदिति तस्यास्तस्मिन्ननादरो जात इति भावः । पुरा राक्षसास्त्रयो महादेवं तपसा समाराध्य स्वर्णरजतलोहनिर्मितानि दुर्भेदानि कामगमनानि त्रीणि पुराणि महामहिमसंपन्नानि ततो लब्ध्वा लोकांस्त्रीनुद्वेजयामासुः । शरणागतान् देवान् लोकांश्च पालयितुकामो भगवान् पार्वतीजानिरात्मनो ब्रह्माणं सारथिं, रथं च वसुन्धरां, धनुश्च मेरुं, मौर्वीं चापि सहस्रशिरसं विधाय स्वयं च रथीभूय तानवधीत्त्रिपुरदहनेन साकमित्येषा स्कान्दी कथात्रानुसंधेया । अन्यैर्दुरासदस्य त्रिपुरविजयस्य तदेकसाध्यस्य तुच्छत्वसमर्थनाय साधनसम्पत्तेरौत्कृष्ट्यमुपवर्ण्य वस्तुतस्तदहेतोर्हेतुत्वकल्पनमत्रेति प्रौढोक्तिरलङ्कारः । स च परमेश्वरवीर्यातिशयादप्यतिरिच्यते कम्पराजस्य पराक्रमातिशय इति वर्णनरूपाया अत्युक्तेरुज्जीविकेति तयोरङ्गाङ्गिभावेन सङ्करः । तयोर्लक्षणं त्वेवमुक्तम् - "प्रौढोक्तिरुक्ताथहितोस्तद्धेतुत्वप्रकल्पनम् अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम्" इति । जगन्नियन्तुस्सर्वसंहारकस्य भगवतो लोकवदियं साधनापेक्षा तस्य सङ्कल्पमात्रसाध्येऽस्मिन्नर्थे लोकविडम्बनार्थो महान् संरम्भश्च तस्याः हासहेतुरिति च व्यज्यतेऽत्रेति



नैव पूज्यपूजाव्यतिक्रमदोषप्रसङ्गोऽस्मिन्नित्यलं ग्रन्थविस्तरेण ॥

शिशोर्जननं वर्णयिष्यन्ती दोहदवर्णनानन्तरं गर्भाभिवृद्धिमाचष्टे–

**क्रमाज्जहद्भिः कृशिमानमङ्गै**
**र्मुखेन मुग्धालसलोचनेन ।**
**मध्येन च व्यक्तवलित्रयेण**
**नरेश्वरं नन्दयति स्म राज्ञी ॥** ॥ 9 ॥

**क्रमादिति ॥** राज्ञी राजपत्नी देवायी कृशिमानम् कृशत्वम् क्षैण्यम् (गर्भधारणादागतम्) 'वर्णदृढादिभ्यः ष्यञ्चे' ति कृशशब्दादिमनच् । 'र ऋतो हलादेर्लघो' रिति ऋतो रादेशः । कृशशब्दोऽयं 'परिगणनं क्रियते 'पृथुमृदुकृशभृशदृढपरिवृढानामिति वक्तव्य' मिति महाभाष्ये रविधौ परिगणितः । क्रमात् क्रमेण शनैश्शनैः दिनक्रमेणेति यावत् । जहद्भिः उत्सृजद्भिः दूरीकुर्वद्भिः वर्धमानैरित्यर्थः । ओहाक् त्यागे - इत्यस्मात्परस्मैपदिनः लटश्शतरि रूपम् । अङ्गैः अवयवैः । करणैः । 'अङ्गं प्रतीकोऽवयवोपघनः' इत्यमरः । मुग्धानि सौम्यानि प्रसन्नानि 'मुग्धस्सौम्ये नवे मूढे' इति वैजयन्ती । अलसानि मान्द्यवन्ति मन्दमन्दप्रसरणानीत्यर्थः । तथाविधानि लोचनानि नेत्राणि यस्य तेन । 'लोचनं नयनं नेत्र' मित्यमरः । मुखेन आननेन 'आननं लपनं मुख' मित्यमरः । व्यक्तम् स्फुटम् प्रकाशमानम् दृष्टिगोचरतां गतमिति यावत् । वलीनां त्रयम् उदरगतास्तिस्रो रेखाः 'वलिर्वली चाप्युदरे रेखा' इति नानार्थरत्नमाला । ताः यस्य तेन । मध्येन मध्यभागेन अवलग्नेन 'मध्यमं चावलग्नं च मध्योऽस्त्री' इत्यमरः । च समुच्चये । एतैरङ्गनेत्रमध्यभागैस्सविशेषैस्त्रिभिरपीत्यर्थः । नरेश्वरम् नरपतिम् राजानम् नन्दयति स्म आनन्दयदित्यर्थः । 'टुनदि समृद्धौ' णिच् । 'लट् स्म' इति लिटोऽपवादो लट् । त्यक्तवलीत्रयेणेति

मातृकापाठस्तु — त्यक्तं वलीनां त्रयम् त्रित्वम् येन तेन। इदानीं गर्भवर्धनेन पृथक् पृथक् वलयः त्रिधा न ज्ञायन्ते एकतयैव दर्शनं तासामिति यथाकथञ्चिद्योज्यः। पूर्वं कृशाङ्ग्यास्तस्याः इदानीं गर्भेण साकं दिनदिनमेधमानान्यङ्गानि, सुप्रसन्नमलसालसं प्रसर्पन्त्यो दृष्टयः, सूक्ष्ममध्यायाः पूर्वं नितरां दृष्टेरविषया इदानीं स्वरूपदर्शनेन स्वर्णदाममिभिरिव गर्भमलंकुर्वाणाः वलयश्च नितरां भूपतेस्तस्य सन्तोषमापादयन्, चित्तमरञ्जयन्, मन आहरन्निति भावः। राज्ञस्सन्तोषजनने वाक्यार्थे विशेषणगत्या कार्श्यत्यागादिपदार्था हेतव इति काव्यलिङ्गविशेषोऽलङ्कारः। लक्षणं तु - "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति॥

गर्भलक्षणेषु रोमराज्याः प्रकाशनमित्युक्तम् तदेतद्वर्ण्यते —

**सौभाग्यगन्धद्विपदानलेखा**<br>
**रराज तस्या नवरोमराजिः।**<br>
**तेजोनिधिं गर्भतले निषण्णं**<br>
**कालोरगी रक्षितुमागतेव॥** ॥ 10 ॥

**सौभाग्येति**॥ सुभगः सुन्दरः 'सुन्दरेऽधिकभाग्ये च दुर्दिनेतरवासरे। तुरीयांशे श्रीमति च सुभगः' इति शब्दार्णवः। तस्य भावः सौभाग्यम्। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ्। तदेव गन्धप्रधानो द्विपः गन्धद्विपः राज्ञां विजयावहो हस्तिविशेषः "यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः। स वै गन्धगजो नाम नृपतेर्विजयावहः" इति तल्लक्षणमुक्तमन्यत्र। तस्य दानलेखा मदरेखा। 'दानं गजमदे त्यागे' इति विश्वमेदिन्यौ। 'रेखा लेखा भवेदिति च' द्विरूपकोशः। तथाभूता। नवा अभिनवा तदानीमेव अङ्कुरिता नवोद्गतेति यावत्। रोम्णां लोम्नां



राजिः श्रेणिः कुक्षिस्था रोमपङ्क्तिः 'तनूरुहं रोम लोम' इत्यमरः। 'राजी रेखायां पङ्क्तौ च' इति हैमः। राजृ दीप्तावित्यस्मादौणादिक इन्। 'कृदिकारादक्तिन' इति ङीषो विकल्पः। अतएव द्विरूपकोशकार अह - 'राजी राजिश्च कथ्यते' इति। मदरेखा गन्धगजस्येव तस्या रोमपङ्क्तिः सौभाग्यस्य दीप्त्यतिशयमजनयदियमित्येवमुक्तिः। सा कर्त्री। गर्भतले अधरायां भूमेर्मध्यभागे। गुणगुणिनोरभेदविवक्षायां प्रवृत्तिनिमित्तभेदेन विशेषणविशेष्ययोरग्रहस्तादिवत्कर्मधारयः। यथाह वामनः - "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात्" इति। अन्यत्र तलस्स्वरूपार्थकः। कुक्षावित्यर्थः। 'तलं स्वरूपाधरयोरस्त्री' इत्युभयत्रापि नानार्थरत्नमाला। निषण्णम् उपविष्टम् स्थितमित्यर्थः। निपूर्वकात् सदेः गमननिरोधकार्थात् कर्तरि क्तः। तेजोनिधिम् कान्तिमन्निधानम्। भूमिं खनित्वा तदन्तरा निक्षिप्तं रत्नादिस्वमित्यर्थः। अन्यत्र तेजसः निधिमिव पराक्रमस्य कान्त्यतिशयस्य वा आश्रयभूतं गर्भमित्यर्थः। रक्षितुं त्रातुम् परापहरणभयात् अन्यत्र दृष्टिदोषभयाच्च। आगता उपस्थिता। अन्यत्र निस्सृता। कालोरगी कृष्णभुजङ्गी। लोके निधिनिक्षेपावाक्रम्य सर्पा रक्षन्तीति प्रसिद्धिः। रराज रेजे अशोभत। गर्भोपरि प्रकाशमाना देव्या रोमराजिः तस्यास्सौन्दर्यमतीव वर्धयन्ती महान्तं निधिमावृत्य स्थिता कृष्णसर्पिणीव स्थितेत्युत्प्रेक्ष्यते। रोमराज्यां सौन्दर्याधिक्यवर्णनेन शब्दकृतसाम्यसमाकलनेन च कृतार्थौ रूपकश्लेषावुत्प्रेक्षाया अस्याः उपकुरुत इत्यङ्गभावमनुभवतः। इवेति सम्भावनायाम्॥

लक्षणान्तराणि वर्णयति —

**श्यामायमानच्छविना मुखेन**<br>
**स्तनद्वयं तामरसेक्षणायाः।**

**संदष्टनीलोत्पलयोरभिख्यां**
**रथाङ्गनाम्नोरधरीचकार ॥** ॥ 11 ॥

**श्यामायमानेति ॥** तामरसम् पद्मम् 'तामरसं पद्मे ताम्र काञ्चनयोरपि' इति सुधा। तद्वत् ईक्षणे नयने यस्याः तस्याः। अर्थात् देवाय्याः 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः। स्तनयोर्द्वयं द्वौ कुचौ। कर्तृभूतौ। 'स्तनौ कुचौ' इत्यमरः। अश्यामा श्यामा भवति श्यामायमाना कृष्णीभवन्ती 'त्रिषु श्यामौ हरित्कृष्णौ' इत्यमरः। श्यामशब्दात् भृशादित्वेन क्यङन्तात् शानच्। 'अकृत्सार्वधातुकयो' रिति दीर्घः। "लोहितजिह्मश्यामा स्सुखदुःखे धूमचर्वगर्वाश्च हर्षो मूर्छा निद्रा कृपा च करुणादयो प्यवृत्करणात्" इति लोहितादिषु भट्टमल्लः। 'श्यामादिभ्यः क्यङेव' न तु क्यष्। लोहितादिडाज्भ्यः क्यष्वचनं भृशादिष्वितराणीति वार्तिकप्रामाण्यात्। तथाभूता छविः कान्तिः यस्य। 'शोभा कान्ति र्द्युतिश्छविः' इत्यमरः। तेन मुखेन अग्रेण चूचुकेन। जातावेकवचनम्। 'चूचुकं तु कुचाग्रं स्या' दित्यमरः। संदष्टे दन्ताभ्यां दृढं परि गृहीते मुखस्थिते इत्यर्थः। नीलोत्पले नीलाब्जे 'कुवलयमिन्दीवरं च नीलाब्ज' मिति नाममाला। ते याभ्याम् तयोः। भूयस्साम्य सिद्ध्यर्थमिदम्। रथाङ्गनामा च रथाङ्गनाम्नी च रथाङ्गनामानौ चक्रवाकदम्पती। 'चक्रवाको रथाङ्गाह्वयनामक' इत्यमरः। 'पुमान् स्त्रिये' त्येकशेषः। तयोः अभिख्याम् शोभाम् कान्तिम् 'अभिख्या नामशोभयोः' इत्यमरः। अधरीचकार लघूचकार। अभूततद्भावे च्विः। 'अस्य च्वा'विति दीर्घः। तभ्यामपि सुन्दरौ भूत्वा तयोः ख्यातिं ह्रासीभावमनयतामिति भावः। कनककलशोपमौ तस्या स्तनौ गर्भवृद्धिहेतुकं चूचुकयोर्नीलिमानं वहन्तौ मुखनिक्षिप्तनीलोत्पलौ चक्र वाकाविव स्थितावित्युपमा। अतएव – "तस्य मुष्णाति सौभाग्यं



तस्य कान्तिं विलुम्पती" त्यादीनुपमावाचकेष्वपठदाचार्यदण्डी। अत्र बाहटः - "आम्लेष्टता स्तनौ पीनौ श्वेतान्ते कृष्णचूचुके" इति। कालिदासोऽपि - "दिनेषु गच्छत्सु नितान्तपीवरं तदीयमानील मुखं स्तनद्वयं। तिरश्चकार भ्रमराभिलीनयोस्सुजातयोः पङ्कजकोशयो श्श्रियम्" इति प्रशशंस सुदक्षिणाम्। बाणोऽपि "गृहीतनीलो त्पलयोरिव चक्रवाकयोस्तमाललाञ्छितमुखयोरिव कनककलशयोः श्यामायमानचूचुकयोः पयोधरयो" रित्येवं विलासवतीमवर्णयत्॥

**तामम्बुगर्भामिव मेघमालां**
**वेलामिवाभ्यन्तरलीनचन्द्राम्।**
**अन्तस्थरत्नामिव शुक्तिरेखा**
**मापन्नसत्त्वां प्रभुरभ्यनन्दत्॥** ॥ 12 ॥

**तामिति ॥** प्रभुः राजा 'राजा प्रभौ नृपे चन्द्रे' इति विश्वः। आपन्नः प्राप्तः सत्त्वः गर्भे धृतः जन्तुः यया तां गर्भि णीम् 'अपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः। (ताम्) देवायीम्। अम्बु जलम् गर्भे कुक्षौ यस्याः तथोक्ताम् अन्तस्थितजलामित्यर्थः। मेघानां माला श्रेणिः पङ्क्तिः 'माला तु पङ्क्तौ पुष्पादिदामनी' इति हैमः। तामिव। किञ्च अन्तरम् अभिगतः अभ्यन्तरम् अन्तरालम् मध्यभागः 'अभ्यन्तरन्त्वन्तराले' इत्यमरः। तस्मिन् लीनः मग्नः अन्तरित इत्यर्थः। तादृशः चन्द्रः यस्याम्। ली श्लेषणे क्तः। 'ल्वादिभ्य' इति क्तस्य तस्य नः। ताम् वेलाम् समुद्राम्बु विकृतिम् समुद्रजलपूरमिति यावत्। 'वेला काले च सीमाया मब्धेः कूलविकारयोः' इति मेदिनी। तामिव। किञ्च अन्तः अन्तरा मध्ये तिष्ठन्तीति अन्तस्थानि। 'सुपि स्थ' इति तिष्ठतेः कः। रत्नानि मणयः यस्याम् ताम्। शुक्तिलेखाम् मुक्तास्फोटपङ्क्तिमिव। 'मुक्ता

स्फोटः स्त्रियां शुक्तिः' इत्यमरः । 'राजौ लिपौ च लेखा स्त्री पुंस्ययं लेख्यदेवयोः' इति नानार्थरत्नमाला । अभ्यनन्दत् अङ्गीचकार अमन्यतेत्यर्थः । अभीत्युपसर्गबलात् टुनदि समृद्धावित्यस्याङ्गीकारार्थकत्वं दृष्टम् । तथा च कालिदासः - "ज्येष्ठाभिगमनात्पूर्वं तेनाप्यनभिनन्दिता । साभूद्रामाश्रया भूयो नदीवोभयकूलभाक् ॥" इति । अत्र "अनभिनन्दिता नाङ्गीकृता" इति मल्लिनाथः । एतादृश एव प्रकरणे कविकुलतिलकोऽप्येवं प्राकथयत् - 'निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकां । नदीमिवान्तस्सलिलां सरस्वतीं नृपस्ससत्त्वां महिषीममन्यत ॥" इति । यद्वा अभ्यनन्दत् एवं मत्वा प्रशशंसेत्यर्थः । क्रियान्तरोपसर्जनस्वार्थाभिधायकत्वं धातूनां कुसूलान्पचतीत्यादौ दृष्टमिति तद्वदेवेदमित्यपि सुवचम् । आदानक्रियापेक्षयैव कर्मत्वमभिहितं कुसूलानित्यादीनामभियुक्तैः । उक्तोपमात्रयेण गर्भस्य दानवीरत्वं प्रजाह्लादकत्वं तेजस्वित्वमिति त्रयो गुणा विवक्षिताः । अस्मिन् श्लोके यथामार्गमुपक्रमोऽभवदिति समता नाम गुणः । "मार्गभेदस्समता" इति लक्षणात् । मालोपमाचालङ्कारः । "एकस्यैवोपमेयस्य यद्यनेकोपमानता । तदा मालोपमामेतामाहुः केचिद्विचक्षणाः ॥" इत्येतस्या लक्षणमाह दण्डी ॥

गर्भसंस्कारान् वर्णयति —

**ततः परं तापहरः प्रजानां**
**पुरोहितोक्त्या पुरुहूतकल्पः।**
**व्यधत्त काले विभवानुरूपं**
**पुंसां वरः पुंसवनक्रियां सः ॥** ॥ 13 ॥

**तत इति ॥** ततः गर्भस्य किञ्चित्किञ्चित्प्रकाशः पूर्वमभिहितः । तस्मात्प्रकाशात् गर्भाभिव्यक्तेरित्यर्थः । परः उत्तरकालः यस्मिन्कर्मणि तथा 'परश्श्रेष्ठादिदूरान्योत्तरे क्लीबन्तु केवले' इति मेदिनी । गर्भ







स्पन्दने जाते तृतीये मासीति यावत् । प्रजानाम् जनानाम् । 'प्रजा स्यात्सन्ततौ जने' इत्यमरः । हरतीति हरः । हृञ् हरणे पचाद्यच् । तापानां हर इति षष्ठ्या समासः । अन्यथा कर्मण्यणः प्रसङ्गात् । जनानां सर्वदुःखापनुद इत्यर्थः । अतएव पुरुहूतकल्पः ईषदूनः इन्द्रः इन्द्रसदृश इत्यर्थः । 'पुरुहूतः पुरन्दरः' इत्येवमिन्द्रपर्यायेष्वमरः । "अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः" इति स्मरणादिन्द्रांशत्वेन तस्य तस्मात्किञ्चिदूनता । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति कल्पप् । दण्डी तु 'कल्पब्देशीयदेश्यादिप्रख्यप्रतिनिधी अपि' इति सादृश्यवाचकप्रस्तावे पपाठ कल्पपमपि । तस्य ईषद्वैषम्यमविवक्षितमिति तात्पर्यं वर्णनीयमिति प्रतिभाति । पुंसाम् पुरुषाणाम् । पातेर्डुमसुन् । 'यतश्च निर्धारण' मिति निर्धारणे षष्ठी। 'न निर्धारण' इति न समासः । वरः श्रेष्ठः पुरुषोत्तम इति यावत् । 'वरो जामातरि श्रेष्ठे षिद्गे दैवाद्वृतेऽपि च' इति केशवः । 'ना विष्णुः पृथिवीपतिः' इति स्मरणात्पुरुषोत्तमोऽयमिति च सूच्यते । तादृशः बुक्कराजः । पुरोहितस्य- पुरः धीयते अग्रतः क्रियते सर्वकर्मसु इति दधातेः क्तः । 'दधातेर्हि' रिति हिरादेशश्च । तथोक्तस्य पुरोधसः कुलगुरोः "पुरोधास्तु पुरोहितः" इत्यमरः । उक्तिः वचनम् आज्ञा । तया । काले विहिते समये तृतीये मासीत्यर्थः । तत्रैव विहितत्वात्तस्य । यथाह याज्ञवल्क्यः - 'पुंसस्सवनं स्पन्दनात्पुरा' इति । गर्भस्पन्दनञ्च तृतीये मासि भवति । अतएव मुहूर्तदर्पणकार एवमाह - "कुर्यात्पुंसवनं प्रसिद्धविषमे मासे तृतीये" इति । अयं च क्षेत्रसंस्कार इति पुनः पुनरस्य नावश्यकता । एतदुक्तं देवलकेन - "सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता । यं यं गर्भं प्रसूयेत स सर्वस्संस्कृतो भवेत् ॥' इति । पुमान् पुरुषः सूयते जायते अनेनेति पुंसवनम् । तदेव क्रिया तदाख्यं कर्मेत्यर्थः । तत् । इदमुपलक्षणं सीमन्तोन्नयनादीनाम् । विभवस्य निजैश्वर्यस्य 'विभवो धननिर्वृत्यो' रिति हैमः । अनुरूपम्

अनुकूलम् उचितम् यथा भवति तथा। व्यधत्त अकृत आचरितवान्। महता संरम्भेण तदुत्सवं निरवर्तयदित्यर्थः। अनेन राज्ञस्तस्य पुत्रो दयकुतूहलातिशयो धर्मनिष्ठा च व्यज्येते। तेन तस्य गृहमेधित्वं धर्मसाधनैकप्रवणमिति च ज्ञायते ॥

कुमारस्य जननं वर्णयति —

**अथ प्रशस्ते दिवसे समस्तैः**
**मौहूर्तिकैस्साधितपुण्यलग्ने।**
**असूत सूनुं नरनाथपत्नी**
**देवी महासेनमिवेन्दुमौलेः ॥** ॥ 14 ॥

**अथेति ॥** अथ संस्कारकरणानन्तरम् दशमे मासीत्यर्थः। तथा च श्रुतिः — "पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥" इति। नरनाथपत्नी राजदाराः। कर्त्री। 'पत्नी भार्याथ पुंभूम्नि दारास्स्यात्तु कुटुम्बिनी' इत्यमरः। प्रशस्ते दोषवर्जितत्वेन शुभङ्करत्वेन च श्रेष्ठे। दिवसे दिने। समस्तैः सर्वैः नत्वेकेन द्वाभ्यां वा मानवबुद्धेः प्रमादाक्रान्तत्वाद्वस्तुदर्शने। मुहूर्तः षड्वर्गरूपः कालविशेषः। स च क्रूरसौम्यग्रहवशाद् द्विविधः। तदुक्तम् — " लग्नमर्धतृतीयांशो नवांशो द्वादशांशकः। त्रिंशांशश्चेति षड्वर्गः क्रूरसौम्यवशाद् द्विधा " इति। तादृशम् कालविशेषम् विदन्तीति। अथवा मुहूर्तम् कालम् कालविशेषवाचिनोऽप्यस्य सामान्यवाचित्वं वृक्षादौ चूतादिवत्। तं विदन्तीति वा 'क्रतूक्थसूत्रान्ता' दिति ठक्। पठितश्चायमुक्थादिषु गणव्याख्याने — 'स्याद्विशेषपरिषन्मुहूर्तमप्येके' इति। वृत्तिकारादिभिरन्यैः ऋगयनादिष्वस्य पाठात्तन्मते 'अणृगयनादिभ्य' इति अणेव भवति मौहूर्त इति। अतएव "स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि" इत्युभय



मुदाजहारामरकारः। मुहूर्तम् तत्प्रतिपादकम् शास्त्रम् विदन्तीति मौहूर्तिकाः ज्यौतिषिकाः - 'तदधीते तद्वेद' इति ठगित्याह मल्लिनाथः। "शशंस मौहूर्तिकसंसदंशकम्" इति श्रीहर्षनैषधीयपद्यव्याख्यानावसरे अत्रैव मुहूर्तं वेदेत्यर्थे 'क्रतूक्था' दीत्युक्थादित्वात् ठगिति व्याचख्यौ नारायणपण्डितः। तैः साधितम् सम्पादितम् परीक्ष्य परीक्ष्य निर्णीतम्। पुण्यम् पावनम् शुभग्रहवीक्षणोच्चत्वादिगुणसाहित्येन ग्रहविशेषाणामुदयास्तमयनिबन्धनादिदोषराहित्येन च शुद्धमित्यर्थः। पुण कर्मणि शुभे इत्यस्मात् 'इगुपधेति' के 'तदर्हं' तीत्यर्थे यः। 'पुण्यन्तु सुन्दरे सुकृते पावने धर्मे' इति सुधा। तादृशम् लग्नम् मेषवृषादिराश्युदयरूपम् 'राशीनामुदयो लग्नम्' इत्यमरः। तस्मिन्। इन्दुः चन्द्रः मौलिः मकुटम् शिरोलङ्कारः। 'किरीटे मौलिरक्लीबे चूडासंयतकेशयोः' इति रभसः। सः यस्य स तथोक्तः। चन्द्रशेखरश्शङ्कर इत्यर्थः। 'शङ्करश्चन्द्रशेखरः' इत्यमरः। तस्य देवी कृताभिषेका पट्टमहिषी पार्वतीति यावत्। देवट् इति पचादौ पाठादच्। 'टिड्ढाणञ्' इत्यादिना ङीप्। शिवयोः पट्टाभिषेकश्च वर्णितो ललितोपाख्याने - "अथाभिषेकमातेनुस्साम्राज्ये सशिवं शिवाम्" इत्यादिना। सा महती जेतुमशक्या विस्तृता वा। सेना सैन्यम् देवानाम् सैन्यम् यस्य तम्। षडाननम् कुमारमिव। 'कार्तिकेयो महासेनश्शरजन्मा षडाननः' इत्यमरः। सूनुम् सुतम् 'आत्मजस्तनयस्सूनुस्सुतः पुत्रः' इत्यमरः। असूत सुषुवे अजनयदित्यर्थः। कुमारो यथा देवानां सेनानीर्भूत्वा तारकमवधीत्, अरक्षदपि च लोकान् तदुद्वेजितान् देवैस्सह, तथायमपि महतीं सेनामाकर्षन्नरीनुपसृत्य तुरुष्कादिवधेन देशक्षेमं विधास्यतीत्येतदुपमार्थो वेदितव्यः। साधितपुण्यलग्ने मौहूर्तिकैः इत्यादिना शिशोरनितरसाधारणी ग्रहसंपत्तिः, तया च दीर्घायुरारोग्यैश्वर्यादिसर्वगुणसमृद्धिश्च सूचिता। एतादृशप्रस्तावे "कुमारकल्पं सुषुवे कुमारम्" इत्याह कालिदासः। धर्मलुप्तेयमुपमा॥

दिव्यानि, भौमानीति निमित्तानि द्विविधानि । तत्र 'अथ प्रशस्ते दिवस' इत्यादिना दिव्यानि वर्णितानीति भौमानि वर्णयति 'महौजस' इत्यारभ्य प्रस्तावित इत्यन्तेन श्लोकसमूहेन —

**महौजसस्तस्य निजैर्यशोभि**
**रुद्वेलदुग्धोदधिपूरगौरैः ।**
**प्रक्षालितानीव तदा बभूवु**
**र्धृतप्रसादानि दिशां मुखानि ॥** ॥ 15 ॥

**महौजस इति ॥** तदा तस्मिन् काले शिशोर्जननसमय इत्यर्थः । दिशः ककुभः । स्त्रिय इति च गम्यते । 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः । तासाम् मुखानीव मुखानि मुखसदृशाः श्रेष्ठाः वैशाल्यादिगुणसंपत्त्या प्रशस्ताः प्रदेशा इत्यर्थः । आननानीति च व्यज्यते । 'मुखमुपाये प्रारम्भे श्रेष्ठे निस्सरणास्ययोः' इत्युभयत्रापि हैमः । वेलाम् मर्यादाम् उत्क्रान्ताः अतिक्रान्ताः उद्वेलाः । प्रादिसमासः । उत्कटा इत्यर्थः । दुग्धोदधेः क्षीरसमुद्रस्य 'दुग्धं क्षीरं पयस्समम्' इत्यमरः । पूरः प्रवाहः 'पूरो जलप्रवाहे स्याद् व्रणसंशुद्धिखाद्ययोः' इति मेदिनी । तद्वत् गौरैः सितैः शुभ्रैः अतिधवलैरिति यावत् । 'गौरोऽरुणे सिते पीते' इत्यमरः । यशसां धावल्यं च कविसमयसिद्धम् । महत् निरुपमम् ओजः दीप्तिः वर्चः यस्य । 'ओजो दीप्तौ बले' इत्यमरः । 'शेषाद्विभाषा' इति वैकल्पिकत्वान्न कप् । वर्चस्विन इत्यर्थः । अनेन कारणजन्मायमिति जनैर्मुहुर्मुहुश्श्लाघ्यमानत्वं सूचितं भवति । तस्य शिशोः । निजैः स्वकैः पूर्वोक्तविधया स्वार्जितैरित्यर्थः । 'स्वके नित्ये निजं त्रि' ष्वित्यमरः । यशोभिः प्रतापादिप्रभवैः स्तवैः । "दानादिप्रभवा कीर्तिः प्रतापप्रभवं यशः" इत्यभियुक्ताः । अमरस्तु "यशः कीर्तिस्समज्ञा" चेत्युभयं समानार्थकमेवाह । जलैरिति



गम्यते । प्रक्षालितानि सुष्ठु निर्णिक्तानि, परिशुद्धानि कृतानीति च । तथाविधानीवेत्युत्प्रेक्षा । इवेति संभावनायाम् । क्षल शौच कर्मणि इत्यस्माच्चुरादिण्यन्तात्कर्मणि क्तः । धृतः भृतः मालिन्यापगमेन संप्राप्तः समुज्जृम्भित इति च । प्रसादः प्रसन्नता नैर्मल्यम्, शीतलः कान्तिविशेष इति च । 'प्रसादोऽनुग्रहः काव्यप्राणस्स्वास्थ्यं प्रसन्नता' इति नानार्थरत्नमाला । सः येषु तथाविधानि । बभूवुः आसन् । राज्ञो दिक्पालांशकत्वेन दिक्सतीमुखसमुल्लासस्समुचित एवेति भावः । अत्र 'दुग्धोदधिपूरगौरैः' इत्युपमा, 'महौजसः' इति विशेषणस्य साभिप्रायत्वेन समुत्थापितः परिकरश्च प्रक्षालितानीवेति क्रियोत्प्रेक्षायास्समुल्लासकाविति परस्परमङ्गाङ्गिभावेन सङ्करः ॥

**ज्ञात्वा वशे तस्य भुवं भवित्रीं**
**भयादिवास्पृष्टपरागलेशः ।**
**आकृष्टकल्पद्रुमपुष्पगन्धो**
**मरुद्ववौ मन्दममन्दशैत्यः ॥** ॥ 16 ॥

**ज्ञात्वेति ॥** मरुत् मारुतः वायुः । 'समीरमारुतमरुज्जगत्प्राणसमीरणाः' इति वायुपर्यायोक्तिष्वमरः । भुवम् भूमिम् भूमण्डलमित्यर्थः । तस्य कुमारस्य वशे अधीने । 'त्रिष्वधीने वशो वाञ्छाप्रभुत्वाधीनतासु ना' इति भास्करः । भवित्रीम् अचिरकाल एव भविष्यन्तीम् सतीम् 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानसमीपे भविष्यति तृच् । यद्यपि ण्वुल्तृचौ वर्तमानादन्यत्र न भवतोऽनभिधानादिति महाभाष्यकार आह - तथापि वर्तमानवत्त्वातिदेशे भविष्यति तौ न विरुध्येते । ज्ञात्वा विज्ञाय स्वस्य दिव्यत्वेन अथवा तस्य महावर्चस्कत्वेन अथवा शुभनिमित्तानां प्राभवसूचकानां प्रादुर्भावेन वा सम्भाव्येत्यर्थः । भयात् भीतिमवाप्य । ल्यब्लोपे पञ्चमी । इवेति सम्भावनायाम् । नूनमित्यर्थः । लोकैकवीरो महा

राज्ञोऽयमपराधिनं मां न क्षमते अवश्यं निग्रहीष्यति इति धिया भीतभीत इत्यर्थः। अस्पृष्टः अपृक्तः असंस्पृष्टः अस्वीकृत इति यावत्। स्पृशेः कर्मणि क्तः। परागस्य धूलेः। 'परागः कौसुमे रेणौ धूलिस्स्नानीययोरपि' इति मेदिनी। लेशः लवः अल्पः येन तादृशस्सन्। 'लवलेशकणाणवः' इत्यल्पपर्यायेष्वमरः। आकृष्टः बलाद् गृहीतः कल्पते प्रभवति वाञ्छाप्रदाने इति कल्पः। क्लृपेरच्। स एव द्रुमः देवतावृक्षः। सामान्यविशेषयोः कर्मधारयः। तस्य पुष्पाणाम् कुसुमानाम् गन्धः परिमलः सौरभम् येन। तादृक्सन्। अमन्दम् अनल्पम् अत्यधिकम् शीतस्य भावः शैत्यम् अनुष्णता प्रसन्नता च यस्य। तादृशस्सन्। 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ्। मन्दं शनैः। क्रियाविशेषणमेतत्। ववौ वीजयामास तं सिषेवे इत्यर्थः। यथा कश्चित् राजपुरुषः स्वापराधं शङ्कमानः स्वदण्डनभिया राजानुग्रहं सम्पादयितुं मन्दमन्दं तमुपसर्पति सेवते, यथावा स्वजनहस्तादुत्कृष्टं महद्वस्तु बलादाकृष्य तस्मा उपहरति तद्वदेवाय मपीत्युक्तं भवति। एतेन क्रुद्धस्य तस्य देवा अपि बिभ्यतीति रामादिष्विव क्रोधानुग्रहयोरमोघत्वमेतस्मिन् वर्णितं च भवति। "भीषास्माद्वातः पवत" इति श्रुतिप्रामाण्येन परमेश्वरांशसम्भूतत्वं चास्य ध्वनितं भवति। मृदुसुगन्धि शीतवायुस्पर्शश्शुभनिमित्तमिति पांसुसम्मिलितप्रतिकूलवायुसंस्पर्शो दुर्निमित्तमिति निमित्तज्ञा वदन्ति। उत्प्रेक्षा॥

'प्रदक्षिणार्चिर्हविरग्निराददौ' इत्यादिभिः प्रदक्षिणार्चिस्त्वमग्नेश्शुभाशंसनमिति तद्वर्णयति –

**आगामिनीमध्वरहव्यसिद्धिं**
**निश्चित्य देशेष्वपि दक्षिणेषु।**
**प्रदक्षिणीभूतशिखाकलापो**
**ननर्त हर्षादिव हव्यवाहनः॥** ॥ 17 ॥



**आगामिनीमिति**॥ हव्यं हविः वाहयति देवान् प्रापयतीति हव्यवाहनः अग्निः। 'अग्निमुखा वै देवा' इति श्रुतेः। 'हुतभुग्दहनो हव्यवाहनः' इत्यग्निपर्यायेष्वमरः। वहतेर्ण्यन्ताल्ल्युः। "वहती त्येतत्स्यन्दने प्रापणे धृता" विति भट्टमल्लः। दक्षिणेषु दक्षिणदिक्स्थेषु 'दक्षिणस्सरले याम्यदिक्स्थे छन्दानुवर्तिनि' इति नानार्थरत्नमाला। देशेषु विषयेषु ग्रामसमुदायरूपेषु 'देशविषयौ तूपवर्तनम्' इत्यमरः। आगमिष्यतीत्यागामिनी भविष्यन्ती। आङ्पूर्वाद् गमेः 'भविष्यति गम्यादयः' इतीनिः। 'आङि णि' दिति णित्त्वादिनेरुपधावृद्धिः। ताम्। अध्वराः यज्ञाः 'यज्ञस्सवोऽध्वरो याग' इत्यमरः। तेषु हव्यानि देवान्नानि 'हव्यकव्ये दैवपैत्रे अन्ने' इत्यमरः। तेषां सिद्धिम् वृद्धिम् हविस्समृद्धिमित्यर्थः। 'सिद्धिस्त्री योगनिष्पत्तिपादुकान्तर्धिवृद्धि' ष्विति मेदिनी। षिधु संराद्धावित्यस्मात् क्तिच्। निश्चित्य निर्णीय अवश्यंभविष्यतीति निश्शङ्कं मनसि समालोच्येत्यर्थः। हर्षात् हर्षं प्राप्य। ल्यब्लोपे पञ्चमी। चिरात्पुष्कलमाहारमलभमानस्य 'जीवन्भद्राणि पश्यती'ति न्यायेन कथंकथमपि प्राणधारणं कुर्वतः क्षुधार्तस्य पुंसश्शाश्वतिकसमृद्धान्नलाभो भविष्यतीति जानानस्य सत उत्पाद्यमानं हर्षपारवश्यमनुभवैकवेद्यमिति भावः। अतएव अप्रदक्षिणः प्रदक्षिणः भूतः प्रदक्षिणीभूतः दक्षिणेन मार्गेण वलयीकृतः। शिखानां ज्वालानाम् केशानामिति च गम्यते। चूडावाचिशिखाशब्दः कलापशब्दसमभिव्याहारेण 'तैलं भुक्तं घृतं भुक्तम्' इत्यादाविव केशमात्रोपलक्षकः। 'शिखा ज्वाला बर्हिचूडा लाङ्गलक्यग्रमात्रके' इति सुधा। तासां कलापः समूहः ज्वालासन्दोहः, अन्यत्र केशसमूहः तदात्मिका कुञ्चिका चामर इति यावत्। 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' इत्यमरः। सः यस्य तादृशस्सन्। ननर्त अनृत्यदिवेत्युत्प्रेक्षा। नृत्यमिदं देशिकमिति सूचितं चामरभ्रमणवर्णनेन। 'दुकूलदण्डिकामाला

खड्गचामरगोलकैः । हस्तसञ्चारिभिः कुर्युः नृत्तं तद्देशिकं मतम् ॥ ' इति च तल्लक्षणम् ॥

कुमारेऽस्मिन्नौदार्यं प्रस्तौति –

**कल्पद्रुमास्तेन हरिष्यमाणां**
**मत्वा निजां त्यागयशःपताकाम् ।**
**पयोधरप्रेषितपुष्पवर्षाः**
**प्रागेव सन्धानमिवान्वतिष्ठन् ॥** ॥ 18 ॥

**' कल्पद्रुमा ' इति ॥** कल्पः संकल्पः वाञ्छितार्थः तेषां द्रुमाः । जन्यजनकभावे षष्ठी । योगतः पञ्चापि विवक्षिताः । अतएव बहुवचनम् । अथवा छत्रिणो गच्छन्तीत्यादावच्छत्रिषु छत्रित्वारोपेण यथा छत्रिशब्दप्रयोगः तद्वद्वाप्युपपद्यते पारिजातादिषु कल्पद्रुमत्वारोपेण कल्पशब्दप्रयोगः । स्पष्टं चेदं ' सप्तमीशौण्डै ' रिति सूत्रे कैयटोद्द्योतयोः । अतएव ' कल्पद्रुमाणामिव पारिजातः ' इति प्रायुञ्जत महाकवयः । देवतावृक्षाः पञ्चेत्यर्थः । ' पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ' इत्यमरः । निजाम् आत्मीयाम् त्यागः दानम् ' त्यागो दाने च वर्जने ' इति मेदिनी । तस्मात् यशः तत्प्रभवा कीर्तिः । तस्य पताकाम् वैजयन्तीम् ध्वजम् असाधारणचिह्नमित्यर्थः । ' पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रिया ' मित्यमरः । कल्पवृक्षाणामंशुकवत्त्वं प्रसिद्धम् " एषां पल्लवमंशुकानि कुसुमं मुक्ताः फलं विद्रुमम् । वैदूर्यं दलमङ्कुरो मरकतं हैमं च शाखाशतम् । एते के जगतीरुहा वनजुषोऽप्यज्ञातपूर्वा मया । प्रायस्सारममी दिवो विटपिनः किं तैर्मयाऽन्यो भरः ॥ " इत्यादिभिः । ताम् । हरिष्यमाणाम् आहरिष्यमाणाम् परिग्रहीष्यमाणां सतीमिति यावत् । हरतेः कर्मणि लृटश्शानच् ।



आने मुगिति मुक् । मत्वा बुद्ध्वा, भाव्यनर्थप्रतीकारस्यापि मन्त्र एव साधनमिति सम्यगालोच्येत्यर्थः । धरन्तीति धराः । पचाद्यच् । पयसां धराः पयोधराः मेघाः ' स्त्रीस्तनाब्दौ पयोधरा ' वित्यमरः । तैः प्रयोज्यकर्तृभिः । दूतैरिति गम्यते । प्रेषिताः तद्द्वारा समीपं प्रापिता इत्यर्थः । प्रपूर्वादिषेः कर्मणि क्तः । ' प्रोषितपुष्पवर्षा ' इति यथास्थितमातृकापाठे तु - प्रोषिताः वियुक्ताः वियोगं प्राप्ताः तेभ्यः वियुज्य कुमारोपरि च्युताः तस्मै तद्द्वारा दत्ता इति यावत् । अथतिपयोधरेभ्यो दत्त्वा तै र्दापिता इति यथा कथंचित्समन्वयः । प्रपूर्वाद्वसेः कर्तरि क्ते यजादित्वात्संप्रसारणम् । तथाभूताः । पुष्पाणां वर्षाः वृष्टयः अविच्छिन्नकुसुमपरम्परा इत्यर्थः । ते यैस्ते तथोक्ताः । तादृशास्सन्तः । प्राक् पूर्वमेव अग्निदाहे जाते कूपखननस्यान्याय्यत्वादिति भावः । संधानम् संधिम् स्वर्णादिदानपूर्वकप्रीत्युत्पादनकृतमैत्रीलक्षणरूपां षड्गुणेष्वन्यतमाम् । संधीयतेऽनयेति करणे ल्युट् । अन्वतिष्ठन् समाचरन्निवेति संभाव्यते । अतएव कौटिल्य आह – " समज्यायोभ्यां संदधीत हीनेन विगृह्णीयात् " इति । ' बलीयसाभियुक्तो दुर्बलस्सर्वत्रानुप्रणतो वेतसधर्ममातिष्ठे ' दिति च । भाविनमनर्थमपनेतुकामाः दुर्बला देवतरवो बलवन्तं तेजस्विनं कुमारं वशीकर्तुम् दूतीकृतपयोधरमुखेन सर्वोत्कृष्टं स्वं संप्रेष्य तेन साकं मैत्रीं संपादयितुं प्रयतन्त इत्यस्य कविप्रौढोक्तिसिद्धत्वादत्र क्रियोत्प्रेक्षा । कल्पवृक्षाणां पुष्पवर्षणं प्रसिद्धम् – " कल्पद्रुमप्रसववृष्टिरभून्नभस्तश्शम्भोस्सुतस्य शिरसि त्रिदशारिशत्रोः " " सन्तानकमयी वृष्टिर्भवने चास्य पेतुषी " इत्यादिभिः । औदार्यमस्य कल्पवृक्षातिशायीति निष्कृष्टोऽर्थः । जलधरस्य कामरूपवत्त्वेन पुष्पवृष्टिः तस्मिन् सम्भाव्यत एवेति नातिशयोक्तेरत्रावकाशः । अतएव " जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः " " तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा पुष्पासारैस्स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः " इत्याद्याह कालिदासः । देवतरूणां तेषां कुसुमानि

मुक्तामयानीति, मौक्तिकमणीन् तस्मा उपायनतया प्रैषयन्नेत इति च ज्ञायते ॥

महावीरता शिशौ वर्ण्यते —

**स्ववैरिभूतान् मृगयासु सिंहान्**
**हन्ता प्रवीरोऽयमिति प्रहर्षात् ।**
**प्रभिन्नगण्डस्रुतदानधारा**
**जगर्जुरुच्चैर्जयकुञ्जरेन्द्राः ॥ ॥ 19 ॥**

**स्ववैरीति** ॥ जयावहाः कुञ्जरेन्द्राः जयकुञ्जरेन्द्राः। विजय दन्तिवराः गन्धगजश्रेष्ठाः। अयम् सन्निकृष्टः प्रकृतः। प्रकृष्टो वीरः प्रवीरः। प्रादिसमासः। वीरवर्यः कुमार इत्यर्थः। मृगयासु आखेटेषु। 'आखेटो मृगया स्त्रियाम्' इत्यमरः। स्वेषाम् हस्तिनामित्यर्थः। वैरिणः शात्रवाः भूताः जाताः सहजवैरिण इत्यर्थः। सिंहस्वप्नोऽपि गजानां मारक इति प्रसिद्धेः। तान् सिंहान् मृगेन्द्रान् 'सिंहो मृगेन्द्रः पञ्चास्यः' इत्यमरः। हिंसि हिंसायामित्यस्मादचि पृषोदरादिपाठात्सिंहः। तथाचोक्तमभियुक्तैः - "हिंसिधातोस्सिंहशब्दो वशकान्तौ शिवस्स्मृतः। वर्णव्यत्ययतस्सिद्धौ पश्यकः कश्यपो यथा" इति। हन्ता हनिष्यति संहरिष्यति इति एवम् " इति हेतुप्रकारप्रकर्षेवमर्थव्यवस्थास्वरूपविवक्षानियमसमाप्तिप्रकृतिवक्ष्यमाणपरामर्शमतेषु " इति गणव्याख्या। हर्षात् हर्षं प्राप्येवेत्यर्थः। वाचकानुपादानात् गम्येयमुत्प्रेक्षा। प्रभिन्नाः मदोदयेन स्फुटिताः गण्डाः। कटाः 'गण्डौ कटौ' इत्यमरः। तेभ्यः स्रुताः स्रवन्त्यः। स्रु स्रवणे आदिकर्मणि क्तः। दानधाराः मदप्रवाहाः येषु तथोक्ताः। तथाभूतास्सन्तः। उच्चैः उत्कृष्टं यथा भवति तथा। महता रवेणेति यावत्। जगर्जुः दध्वनुः अबृंहन्नित्यर्थः। 'जीमूतानां स्तनयति गदयत्यपि गर्जति'



इति भट्टमल्ल आह। तथापि गर्जितं बृंहिते मेघध्वनौ ना तु मदद्विपे' इति नानार्थरत्नमाला। गर्जतेर्लिट्। गजबृंहितमपि राज्ञां शुभावहं निमित्तमिति निमित्तविदो वर्णयन्ति। मृगयाचरणं च राज्ञां धर्मः। अत्यासक्तिरेव तु निषिद्धा। अत एव व्यसनेषु तस्याः परिगणनं युज्यते। तत एव श्रीहर्षादय एवमकथयन् - "मृगया न विगीयते परैरपि धर्मागममर्मकोविदैः" "अबलस्वकुलाशिनो झषान् निजनीडद्रुमपीडिनः खगान्। अनवद्य तृणार्थिनो मृगान्। मृगयाऽघाय न भूभृतां घ्नताम्" इति। मुक्तकण्ठमुक्तोऽयमर्थो भगवता वाल्मीकिनापि — "कदाहं पुनरागम्य सरय्वाः पुष्पिते वने। मृगयां पर्यटिष्यामि मात्रा पित्रा च सङ्गतः॥ राजर्षीणां हि लोकेऽस्मिन् रत्यर्थं मृगया वने। काले वृतां तां मनुजैर्धन्विनामभिकाङ्क्षिताम्॥ नात्यर्थमभिकाङ्क्षामि मृगयां सरयूवने। रतिर्ह्येषा तुला लोके राजर्षिगणसम्मता॥" इति॥

यशस्सुभगत्वं कुमारे कथयति —

**अस्योपवाह्यत्वमुपेत्य लभ्यां**
**कीर्तिं भवित्रीमिव भावयन्तः।**
**क्ष्मामुल्लिखन्तश्चटुलैः खुराग्रै**
**र्जिहेषिरे हर्षजुषस्तुरङ्गाः॥ ॥ 20 ॥**

**अस्येति** ॥ अस्य कुमारस्य। उपवाह्यः – वाह्यः उह्यमानः (राजा) (वहतेः कर्मणि ण्यत्) तमुपगतः तस्य समीपस्थः तथोक्तः। राज्ञः प्रधानवाहनं राजाश्व इत्यर्थः। तस्य भावः तत्त्वम् राजवाहनत्वम् राजवहनमिति यावत्। उपेत्य प्राप्य। लभ्याम् आप्तव्याम् संप्राप्याम् 'पोरदुपधा' दिति कर्मणि यत्। टाप्। भवित्रीम् अचिरेणैव कालेन सम्भविष्यन्तीम्। भूधातोः सत्तार्थकात्

'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानसामीप्ये भविष्यति तृच्। कीर्तिम् यशः। भावयन्तः चिन्तयन्तः इयती स्यादिति स्मरन्त इत्यर्थः। भुवोऽवकल्कने – अवकल्कनं चिन्तेत्यस्मात् स्वार्थणिजन्ता ल्लटश्शतृप्रत्ययः। इवेति सम्भावनायाम्। नूनमित्यर्थः। हर्षं जुषन्ते सेवन्त इति हर्षजुषः सन्तोषभाजस्सन्तः। जुष प्रीतिसेवनयोः क्विप्। चटुलैः तीक्ष्णैः नितरां शातैः खुराणाम् शफानाम् 'शफं क्लीबे खुरः पुमान्' इत्यमरः। अग्राणि शिखराणि तैः। क्ष्माम् भूमिम् 'क्ष्मावनिर्मेदिनी महिः' इति भूमिपर्यायेष्वमरः। उल्लिखन्तः विलिखन्तः खनन्तस्सन्तः। जिहेषिरे ह्रेषांचक्रिरे। अश्वास्तदानीं महोत्साहभाजो बभूवुरिति भावः। अश्वहर्षोऽपि राज्ञां शुभावहनिमि त्तेष्वेक इति तदत्र वर्णितः। हर्षे सति भूमिखननं ह्रेषाकरणं च तुरङ्गमानां स्वभावः। तादृशसंतोषं प्रति कुमारवहनसञ्जातकीर्तिलाभस्य कारणत्वेन सम्भावनात्रेत्युत्प्रेक्षेयम्। राजवाहत्वं सर्वेषां तेषामसम्भाव्य मपि तेषां तेषां तथा तथा सम्भावनं न विरुद्धमिति नात्र काचि दनुपपत्तिः॥

प्रजारञ्जनमस्मिन् प्रस्तौति –

**प्रस्तावितो मङ्गलतूर्यघोषैः**
**प्रसारितश्चारणचाटुवादैः।**
**प्रहृष्यतां तत्र पुरे जनानां**
**कोलाहलः कोऽपि समुज्जजृम्भे॥ ॥21॥**

**प्रस्तावित इति॥** तत्र तस्मिन्। सप्तम्यास्त्रल्। पुरे नगरे विजयापत्तने इत्यर्थः। प्रहृष्यताम् सन्तुष्यताम् सर्वोपद्रवनिवारको महान्पुरुषो जात इति धियेत्यर्थः। हृष तुष्टौ दैवादिकाच्छतरि रूपम्। जनानाम् पौराणाम्। कोलाहलः कलकलः हाससंभाषणा दिना जातो ध्वनिरित्यर्थः। 'कोलाहलः कलकलः' इत्यमरः। मङ्गलानां तूर्याणि कांस्यपटहमुरजादीनि वाद्यानि तथोक्तानि। अश्व घासादिवत्तादर्थ्ये षष्ठचा समासः। तेषां घोषाः शब्दाः ध्वनयः 'घोषो ध्वनिर्मेघनादः' इति नानार्थरत्नमाला। तैः प्रस्ताविताः प्रस्ताववन्तः कृताः परिचयं प्रापिताः 'प्रस्तावस्स्यात् परिचयः' इत्यमरः। प्रस्तावशब्दात्तत्करोतीति ण्यन्तात् मतुपि 'णाविष्ठव' दिति मतुपो लुकि कर्मणि क्तः। तैस्साकम् सम्मिलिता इति यावत्। चारणानां देवयोनिविशेषाणाम् अथवा वन्दिविशेषाणाम् 'चारणास्तु कुशीलवाः' इत्यमरः। चाटुवादाः जयजयेत्यादयः प्रियोक्तयः। तैः प्रसारिताः प्रसारवन्तः कृताः व्याप्तिं नीताः परस्परं सम्भूय दशसु दिशसु व्याप्ता इति यावत्। चो हेतौ। यत एवं जातस्तत इत्यर्थः। 'चः पादपूरणे पक्षान्तरे हेतौ विनिश्चये' इति त्रिकाण्ड शेषः। कोऽपि अपूर्वः पूर्वमननुभूतः वाचा मनसापीदृश इत्यनिर्वच नीय इति यावत्। समुज्जजृम्भे अधिकं ववृधे। दिशस्सर्वा अपि समाक्रमदिति भावः। कोऽपि समुज्जजृम्भे इत्यसम्भवद्वस्तुवर्णनादति शयोक्तिभेदः। मङ्गलतूर्यघोषाः चारणचाटुवादाः पौरजनारवाश्चैक दैव समभवन्निति वर्णनात् सहोक्तिरलङ्कारो व्यज्यते।



पुत्रजननसमुद्भूतं हर्षं महाराज्ञि प्रब्रूते –

**सुखायमानां सुतजन्मवार्तां**
**सहर्षमावेदयते जनाय।**
**अवाञ्छदात्मानमपि प्रदातुं**
**कुतूहली कुन्तलभूमिपालः॥ ॥22॥**

**सुखायमानामिति॥** कुतूहलमस्यास्त्यतिशयेनेति भूमार्थे इनिः। कुतूहली अतिशयितहर्षवान्। 'कौतूहलं कौतुकं च कुतुकं च कुतू

हल' मित्यमरः। 'कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि' इति त्रिकाण्डशेषः। कुन्तलभूमिः कुन्तलनामा देशः। कुन्तल इति कर्णाट देशस्यैव नामान्तरम्। विन्ध्यस्य दक्षिणस्थो देशविशेषोऽयमिति मध्यदेशकथनावसरे नैघण्टुकाः। विक्रमाङ्कचरित्रे विक्रमादित्यं कर्णाटेन्द्र इति कुन्तलेन्द्र इति चाभेदेन बिल्हणोऽकथयत्। कर्णाटदेशस्यावधय एवं निर्णीताः "नर्मदाया दक्षिणेन देशो दक्षिणापथः। तत्र कर्णाट विषयात्पूर्वेणान्ध्रविषयः। नर्मदाकर्णाटविषययोर्मध्ये महाराष्ट्रविषयः। कर्णाटविषयात् दक्षिणेन द्रविडविषयः" इति वात्स्यायनकामसूत्र व्याख्याने जयमङ्गलः। 'कुन्तलौ देशचिकुरा' विति नानार्थरत्नमाला। ताम् पालयतीति तथोक्तः। कुन्तलभूपो बुक्कराज इत्यर्थः। 'पाल रक्षण' इति चुरादिण्यन्तात्कर्मण्यण्। सुखयतीति सुखा सुखकारण भूता। असुखा सुखा भवति सुखायमाना। ताम्। श्रवणमात्रेणैव श्रोत्रयोस्सुखसम्पादिनीमित्यर्थः। सुखशब्दस्य लोहितादिपाठात् 'लोहित डाज्भ्यः क्यष्वचनं भृशादिष्वितराणि' इति क्यङ्। क्यङन्ता ल्लटश्शानच्। मुगागमश्च। सुखादिगणव्याख्यावसरे गणव्याख्या 'सुखादीन्येके लोहितादिष्विच्छन्ति' इति वदन्ती सुखशब्दस्य लोहि तादिषु पाठमङ्गीचकार। सुतस्य पुत्त्रस्य। जन्म जननम्। तस्य वार्ताम् वृत्तान्तम् तद्विषयकप्रवृत्तिमित्यर्थः। 'वार्ता प्रवृत्तिर्वृत्तान्त' इत्यमरः। हर्षः प्रीतिः। तेन सहितम् यथा तथा सहर्षम्। 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः। 'तेन सहेति सहार्थे बहुव्रीहिः। 'वोपसर्जन' स्येति सहस्य सभावः। आवेदयते निवेदयित्रे सविनयं कथयते। जनाय परिचारकसमूहाय। आत्मानम् स्वदेहमपि। किमु तान्यदिति भावः। 'आत्मा यत्नधृतिस्वान्तस्वभावपरमात्मसु। जीवबुद्धिशरीरेषु' इति नानार्थरत्नमाला। प्रदातुम् अर्पयितुम् तद धीनं कर्तुम्। अवाञ्छत् ऐच्छत् अमन्यतेत्यर्थः। वाछि इच्छायाम् लङ्। तदानीमदेयमेव तस्य नासीदिति तत्प्रमोदातिशय एवं कथ्यते।



महाराजस्यैतादृशहर्षपारवश्ये पितृणविमुक्त्या स्वस्य कृतकृत्यता जातेत्येष प्रधानो हेतुः। मानवस्य ऋणविमुक्तिं प्रति महाभारते वेदव्यास एवमाह – "यज्ञैस्तु देवान् प्रीणाति स्वाध्यायतपसा मुनीन्। पुत्त्रैश्श्राद्धैः पितॄंश्चापि आनृशंस्येन मानवान्॥" इति। पितृणस्य साधनान्तरासाध्यत्वं श्रुतिरेवमाह - "सोऽयं लोकः पुत्त्रे णैव जय्यः नान्येन कर्मणा" इति। 'आत्मानमपि प्रदातुमैच्छ' दित्यनेन, किमुतान्यत्, सर्वमपि देयमेव तस्यासीदित्यर्थान्तरं दण्डापूपि कान्यायेनापततीत्यर्थापत्तिरलङ्कारः। "दण्डापूपिकयार्थान्तरापतनमर्था पत्ति" रित्यलङ्कारसर्वस्वसूत्रम्। इमामेव 'काव्यार्थापत्ति' रित्याच क्षते। अतएव कुवलयानन्दे "कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यत" इत्येतस्य लक्षणं प्रणीतम्। तान्त्रिकाभीष्टार्थापत्तिवारणाय काव्यपद मिति च व्याचख्युः। एतादृशि प्रस्तावे रघुवंशकर्ता "जनाय शुद्धान्त चराय शंसते कुमारजन्मामृतसम्मिताक्षरम्। अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्त्रमुभे च चामरे॥" इति समाचख्यौ॥

राज्ञां पट्टाभिषेकपुत्त्रजननादिसंतोषसमयेषु कारागृहस्थानां विमो चनमित्येष सांप्रदायिकस्समुदाचार इति तमत्र कथयति –

**विशृङ्खलास्तस्य गिरा निरीयुः**
**कारागृहेभ्यो विमतावरोधाः।**
**तुलुष्कबन्दीनिवहाय तूर्ण**
**मागामिने दातुमिवावकाशम्॥** ॥ 23 ॥

**विशृङ्खला इति॥** तस्य महाराजस्य। गिरा वाचा नियोगेनेत्यर्थः। विमताः विपक्षाः शत्रवः। तेषाम् अवरोधाः अन्तःपुरस्त्रियः। कर्तृभूताः। 'अवरोधस्तिरोधाने राजदारेषु तद्गृहे' इत्यमरसुधा। आगामिने अचिरकाल एव संभविष्यते। तुलुष्काणाम्

यवनानाम् । बन्द्यः प्रग्रहाः बन्धनशालाः तत्स्थाः स्त्रिय इत्यर्थः । ‘प्रग्रहोपग्रहौ बन्द्या’ मित्यमरः । तासाम् निवहः समूहः ‘समूह निवहव्यूहसंदोहविसरव्रजाः’ इत्यमरः । तस्मै । दातुमिति क्रियामपेक्ष्य संप्रदाने चतुर्थी । अवकाशम् स्वीयं स्थानम् । दातुम् अर्पयितुम् तदधीनं कर्तुम् तेषां स्थानं तत्र कल्पयितुमिति यावत् । इवेति संभावनायाम् । काराः बन्धनालयाः । त एव गृहाः निवासभूमयः ‘कारा स्याद्बन्धनालयः’ इत्यमरः । तेभ्यः । अपादाने पञ्चमी । विगतानि शृङ्खलानि लोहरज्जवः याभ्यः तथोक्ताः । ‘शृङ्खलं पुंस्कटीकाञ्च्यां लोहरज्जौ च बन्धने’ इत्यमरः । तादृश्यस्सन्त्यः । तूर्णम् सत्वरम् । क्रियाविशेषणमेतत् । ‘सत्वरं चपलं तूर्ण’ मित्यमरः । निरीयुः निरगच्छन् बहिरागच्छन् । निरित्युपसर्गपूर्वकादिणो लिट् । अनेन शिशोरस्य भविष्यत्यचिरादेव तुरुष्कैस्संग्रामस्तत्र विजयश्चेति ज्ञायते । शत्रुस्त्रीणां कारागारनिर्गमनं तुरुष्कस्त्रीणामवकाशप्रदानाय वस्तुतो न भवतीति कविप्रौढोक्तिसिद्धेयं फलोत्प्रेक्षा ॥

जातस्य शिशोर्गुणगणादि स्तोतुकामा राज्ञः पुत्रदर्शनं तस्य द्वारीकरोति –

स्नातस्ततो धौतदुकूलधारी
वितीर्य भूरिद्रविणं द्विजेभ्यः ।
महीपतिः पुत्रमुखं दिदृक्षुः
प्राविक्षदन्तःपुरमात्तहर्षः ॥ ॥ 24 ॥

स्नात इति ॥ ततः पुत्रजननश्रवणादनन्तरम् । महीपतिः भूमिपः महाराजः । स्नातः आप्लुतः अद्भिः संशुद्धः । तादृशस्सन् । ष्णा शौचे कर्तरि क्तः । धौते निर्णिक्ते प्रक्षालिते दुकूले पत्रोर्णे पट्टवसने धरतीति तथोक्तः । “आचारहीनं न पुनन्ति वेदा इति” स्मर



णात् । ‘पत्रोर्णं धौतकौशेय’ मित्यमरः । धृञ् धारणे - इत्यस्माण्णिनिः । तादृक् सन् । द्विजेभ्यः ब्राह्मणेभ्यः बहुश्रुतेभ्य इत्यर्थः । पात्रदानस्यैव फलप्रदत्वात्तेषामेव प्रतिग्रहेऽधिकृतत्वाच्च । ‘दन्तविप्राण्डजा द्विजा’ इत्यमरः । भूरि प्रचुरम् बहुलम् ‘भूरि स्यात्प्रचुरे स्वर्णे’ इति हैमः । द्रविणम् धनम् स्वर्णादि । वितीर्य दत्त्वा । विपूर्वकात्तॄप्लवनतरणयोरित्यस्मात् क्त्वो ल्यप् । इत्त्वम् । हलि चेति दीर्घः । पुत्रजनने च पितुः स्नानदाने विहिते । यदाह संवर्तः - “जाते पुत्रे पितुस्स्नानं सचेलं तु विधीयते” इति । दानमपि विहितमादित्यपुराणे – “देवाश्च पितरश्चैव जाते पुत्रे द्विजन्मनाम् । आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा । अत्र दद्यात्सुवर्णं तु भूमिं गां तुरगं धनम्” इति । तदानीं पितुरशुचित्वेन दाने तस्य नैवाधिकार इति नाशङ्कनीयम् । नाभिच्छेदात्पूर्वमेवैतयोर्विहितत्वात् । अत्र जैमिनिः – “यावन्न च्छिद्यते नालं तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते” इति । आत्तः प्राप्तः हर्षः येन स तथोक्तः । गृहमेधित्वस्य प्रजैकफलकत्वात् कुतूहलासक्तचित्तस्सन्नित्यर्थः । पुत् - तन्नामा नरकः तस्मात् त्रायत इति पुत्रः । ‘सुपि स्थ’ इत्यत्र सुपीति योगविभागात् त्रायतेः कः । अत्र मनुः - “पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा” इति । तस्य मुखम् वदनम् दिदृक्षुः द्रष्टुमिच्छुस्सन् । दृशेस्सन्नन्तादुः । अन्तःपुरम् शुद्धान्तम् राजस्त्रीणां निवासगृहम् । ‘स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् शुद्धान्तश्चावरोधश्च’ इत्यमरः । प्राविक्षत् प्राविशत् प्रविष्टोऽभूत् । प्रपूर्वकाद्विश प्रवेशने इत्यस्माल्लुङ् । ‘शल इगुपधादनिट’ इति च्लेः क्सः । षत्वकत्वादयश्च ॥

अवैक्षत क्षामशरीरयष्टेः
कुमारमुत्सङ्गगतं स देव्याः ।

**शरत्कृशाया इव शैवलिन्या**
**स्तरङ्गलग्नं कलहंसशाबम् ॥ ॥ 25 ॥**

**अवैक्षतेति ॥** सः राजा । क्षामा कृशा शरीरयष्टिः तनुलता यस्याः तस्याः । 'यष्टिर्लता सरस्सरिः' इत्यनेकार्थमाला । क्षैधातो रुत्तरस्य निष्ठातस्य मः । देव्याः राज्ञ्याः । गर्भधारणेन प्रवृद्धाः अवयवाः प्रसूत्युत्तरकालेऽपचीयन्त इत्येवमुक्तम् । उत्सङ्गम् क्रोडम् अङ्कम् गतम् प्राप्तम् अङ्कस्थितम् अङ्कदुर्ललितमिति यावत् । श्रितादिषु 'गमिगम्यादीनामुपसंख्यान' मिति द्वितीयया समासः । गम्यादयश्च प्रयोगतो ज्ञेया इति तत्त्वबोधिनी । उत्सङ्गशब्दश्च क्रोडवाची । 'उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणा' मिति कालिदासः । अत्र 'उत्सङ्गे क्रोडे' इति मल्लिनाथव्याख्या । कुमारम् शिशुम् । कर्म । 'कुमारोऽश्वानुचरके युवराजे शिशौ स्कन्दे' इति हैमः । शरदि तदाख्यऋतौ कृशायाः क्षीणायाः वर्षर्तौ समधिगतायाः प्रवाहोल्बणताया अपगमात्तदपेक्षया अल्पप्रवाहाया इत्यर्थः । शैवलम् जलनीली – तदस्यास्त्यस्यामित्यर्थे. 'अत इनिठना' वितीनिः । ऋन्नेभ्य इति ङीप् । शैवलिनी नदी जाह्नवीति यावत् । 'अथ नदी सरित् । 'तरङ्गिणी शैवलिनी' इत्यमरः । तस्याः तरङ्गेषु वीचिषु लग्नम् सक्तम् इतस्ततश्चलन्तम् । 'लग्नं राश्युदये क्लीबं सक्तलज्जितयोस्त्रिषु' इति सुधा । कलहंसः राजहंसः 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे' इति मेदिनी । स चासौ शाबः शिशुः 'पोतः पाकोऽर्भको डिम्भः पृथुकश्शाबकश्शिशुः' इत्यमरः । चूतवृक्षादिवत्समासः । व्याप्यव्यापकयोर्व्याप्यस्यैव विशेष्यतेति व्यवस्थायाः प्रामाणिकैरङ्गीकृतत्वान्नातिप्रसक्तिरेतादृशसमासेषु । तमिव । अवैक्षत अपश्यत् दृष्टवान् । अवपूवकादीक्ष दर्शन इत्यस्माल्लङ् । देव्याः नद्या साम्यम् तरङ्गाणामुत्सङ्गेन सादृश्यं च कविप्रौढोक्तिसिद्धं कुमार



कलहंसपोतयोर्वर्णितायास्सादृश्यलक्ष्म्यास्समुल्लासकोऽभवदिति सावयवोपमेयम् ॥

इत आरभ्य पञ्चभिः श्लोकैः कुमारं वर्णयति । तस्मिन्नसाधारणदीप्तिमत्तां तावदत्र कथयति —

**प्रकीर्णकाश्मीरपरागगौरै**
**स्तिरस्कृताभ्यन्तरदीपशोभैः ।**
**निवार्यमाणं मुहुरुज्जिहानै**
**ररिष्टगेहं महसां प्ररोहैः ॥ ॥ 26 ॥**

**प्रकीर्णेति ॥** प्रकीर्णाः दिक्षु विक्षिप्ताः 'प्रपूर्वात् कॄ विक्षेपे' इत्यस्मात् कर्मणि क्तः । काश्मीरस्य कुङ्कुमस्य 'काश्मीरं कुङ्कुमेऽपि स्याट्टङ्कपुष्करमूलयोः' इति मेदिनी । परागाः धूलयः रेणवः कणा इति यावत् । 'परागः कौसुमे रेणौ धूलिस्नानीययोरपि' इति मेदिनी । तद्वत् गौरैः अरुणैः 'गौरोऽरुणे सिते पीते' इत्यमरः । तिरस्कृताः अन्तर्हिताः अन्तर्धानं प्राप्ताः बहिरप्रकाशा इति यावत् । अन्तर्धिरेव तिरस्कारशब्दस्य मुख्योऽर्थः । प्रयुक्ता एवैतस्मिन्नर्थे 'लावण्यप्रसरतिरस्कृताङ्गलेख' मित्यादयः कविभिः । अतएव 'तिरोऽन्तर्धौ' विति गतिसंज्ञा तन्निमित्तकं 'तिरसोऽन्यतरस्या' मिति सत्वं च स्वरसतस्सङ्गच्छते । अभ्यन्तरदीपानाम् गृहमध्यगतप्रदीपानाम् 'अभ्यन्तरं त्वन्तराल' मित्यमरः । 'दीपः प्रदीपः' इति च । दीपपर्यायाश्चान्यत्रैवमुक्ताः । 'दीपस्तु – स्नेहाशः कज्जलध्वजः' । दशेन्धनो गृहमणिर्दोषातिलक इत्यपि' इति । शोभाः कान्तयः । 'शोभा कान्तिर्द्युतिश्छविः' इत्यमरः । ताः येषु तथोक्तैः । अरिष्टगेहम् सूतिकागृहम् सन्निहितमित्यर्थः । 'अरिष्टमशुभे तक्रे सूतिकागार आसवे' इति मेदिनी । अरिष्टशब्देनैव तदगारस्याप्युक्तौ सन्निधेः प्रतिपत्त्यर्थं

गेहशब्दप्रयोगः । यथाह वामनः — 'कर्णावतंसश्रवणकुण्डलशिरश्शेखरेषु कर्णादिनिर्देशस्सन्निधेः' इति । मुहुः पुनःपुनः क्षणक्षणमित्यर्थः । उज्जिहानैः परित्यज्य बहिर्गच्छद्भिः । उत्पूर्वात् 'ओहाक् त्यागे' इत्यस्माच्छानश् । महसाम् तेजसाम् 'मह उत्सवतेजसोः' इति सुधा । प्ररोहैः अङ्कुरैः तत्सदृशैः तदानीमेव जातैः नूतनैस्तेजोभिरित्यर्थः । निवार्यमाणम् आच्छाद्यमानम् बहिर्यथा न प्रकाशते तथा समन्तात्परिवेष्ट्यमानम् 'वृञ् आवरणे' इति चुरादिण्यन्तात्कर्मणि लटश्शानच् । कुमारस्य तेजोऽङ्कुरा मुहुर्मुहुरुत्पद्यमाना अरिष्टगेहे न ममुः । तमन्तर्धाय बहिरपि जग्मुरिति वर्णनात्कविप्रौढोक्तिसिद्धातिशयोक्तिरियम् । सात्वासंबन्धे संबन्धरूपा ॥

कुमारस्य मुष्टिधारणं प्रस्तौति —

**मुहुर्मुहुः पल्लवपाटलेन**
**मुष्टीकृतेन द्वितयेन पाण्योः ।**
**अरातिलक्ष्मीकचसंचयाना**
**माकर्षशिक्षामिव शीलयन्तम् ॥** ॥ 27 ॥

**मुहुर्मुहुरिति** ॥ पल्लवौ किसलयौ तद्वत् पाटलेन लोहितेन 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । मुहुर्मुहुः पुनःपुनः अनेकवारमित्यर्थः । 'नित्यवीप्सयोः' इति नित्यार्थे द्विर्वचनम् । यां क्रियाम् कर्ता प्राधान्येनानुपरमन् करोति तन्नित्यमिति वृत्तिः । अमुष्टी मुष्टी कृतम् मुष्टीकृतम् । तेन गृहीतमुष्टिनेत्यर्थः । अभूततद्भावे च्विः । च्वौ चेति दीर्घः । 'ऊर्यादिच्विडाच' श्चेति गतिसंज्ञा । कुगतिप्रादय इति समासः । पाण्योः हस्तयोः 'पाणिश्शमश्शयो हस्त' इत्यमरमाला । द्वौ अवयवौ अस्य द्वितयम् द्वयम् । 'संख्याया अवयवे तयप्' इति तयप् । तेन द्वाभ्यां पणिभ्यामित्यर्थः । न



रान्ति सुखमित्यरातयः शात्रवाः 'अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः' इति शत्रुपर्यायेष्वमरः । तेषाम् लक्ष्मीः राज्यलक्ष्मीः । तस्याः कचसंचयानाम् केशपाशानाम् आकर्षः आकर्षणम् प्रसह्य ग्रहणम् । आङ्पूर्वात् कृषेर्घञ् । तस्य तत्सम्बन्धिनीम् तद्विषयिकामित्यर्थः । शिक्ष्यत इति शिक्षा । गुरूपदिष्टा विद्या । शिक्ष विद्योपादाने - 'कर्मणि गुरोश्च हल' इत्यङ् । ताम् शीलयन्तम् अभ्यस्यन्तम् पुनपुनरावर्तयन्तमिव स्थितम् । आम्नायानामयोगेन विद्यायाः प्रशैथिल्यं स्यादिति हेतोरिति भावः । शील उपधारणे - उपधारणमभ्यासः इत्यर्थकाच्चुरादिण्यन्तात् शतृप्रत्ययः । कुमारकृतमुष्टिसंकोचविकासयोस्स्वतस्सिद्धयोः कविप्रौढोक्त्या शत्रुराज्यलक्ष्मीकचाकर्षणविद्याभ्याससंपादकत्वेन वर्णनमत्रेति क्रियोत्प्रेक्षेयम् ॥

कुमारे सामुद्रिकशास्त्रसंगदितानि महापुरुषलक्षणानि प्रस्तुवती पादावादौ प्रब्रूते —

**आलक्ष्यरेखामयशङ्खचक्र**
**च्छत्रारविन्दध्वजमीनचिह्नौ ।**
**प्रवालताम्राङ्गुलिदर्शनीयौ**
**सुजातपार्ष्णी चरणौ वहन्तम् ॥** ॥ 28 ॥

**आलक्ष्येति** ॥ आलक्ष्याणि च रेखामयानि च तथोक्तानि। तदानीं रेखाणां विकासाभावादस्पष्टानि अतएव ईषद्दर्शनीयानि रेखारूपाणीत्यर्थः । आङीषदर्थे । आङ्पूर्वाल्लक्ष दर्शनाङ्कयोरित्यस्मात्कर्मणि ण्यत् । रेखामयानीति ताद्रूप्ये मयट् । 'कृत्यतुल्याख्या अजात्या' इति समासः । शङ्खानि चक्राणि छत्राणि अरविन्दानि ध्वजाः मीनाश्च तथोक्ताः । तत्तदाख्यया प्रसिद्धाः । तएव चिह्नानि लक्षणानि ययोस्तौ । तादृशौ । ताम्राः अरुणाः 'ताम्रं शुल्बेऽरुणे

त्रिषु' इति नानार्थरत्नमाला। ताश्च ता अङ्गुलयश्च तथोक्ताः। अगेरौणादिकः उलिः। अतएव 'कृदिकारादक्तिनः' इति ङीषो विकल्पः। 'अङ्गुलिः करशाखायां कर्णिकायां गजस्य च' इति हैमः। ताभिः दर्शनीयौ द्रष्टुमर्हौ मनोहरावित्यर्थः। 'अर्हे कृत्य तृच' श्चेति दृशेरनीयर्। शोभनम् जातम् जनिः ययोः सुजातौ शुभावहौ पार्ष्णी गुल्फाधःप्रदेशौ पादयोः पश्चाद्भागौ। वहन्तम् धरन्तम्। "वहतीत्येतत्स्यन्दने प्रापणे धृतौ" इति भट्टमल्लः। शास्त्रे सामुद्रे र्वेषामेषां सफलमेवमुक्तम् -"जलजन्त्वादिके भाग्य" मित्यादिना। पद्ममत्स्यादिरेखाभिः भाग्यवान् भवति। चक्रादिभिः प्राभवं भवति। ध्वजच्छत्राभ्यां राजा भवति इति। शङ्खचक्रध्वजरेखाणां तु विशिष्य सर्वविद्यावेत्तृत्वमेधावित्वे फले निर्दिष्टे हरगौरीसामुद्रिके। मत्स्यरेखायाश्च तस्मिन्नेव ग्रन्थे विशिष्य कर्मसिद्धिबहुपुत्रत्वादयः फलत्वेन निर्दिष्टाः - "यस्य मीनसमा रेखा कर्मसिद्धिश्च जायते। धनाढ्यस्तु स विज्ञेयो बहुपुत्रो न संशयः" इत्यादिना। सुपार्ष्णित्वादेरपि वराहमिहिरः फलमेवमाह — "श्लिष्टाङ्गुली रुचिरताम्रनखौ सुपार्ष्णी ... चरणौ मनुजेश्वरस्य" इति। इत्थमेव रघुवंशे रघुं कालिदासोऽपि – "ते रेखाध्वजकुलिशातपत्रचिह्नं सम्राजश्चरणयुगं प्रसादलभ्यम्" इत्याह॥

कारणान्तरजन्मा विष्णुरेवायं शिशुरिति महाभाग्यवत्त्वं तस्मिन् वर्णयन्ती वक्षस्थलश्रियं प्रस्तौति —

**काले कलावप्यसुरान्तकस्य**
**प्रकाशयन्तीमवतारमन्यम्।**
**अचञ्चलश्रीतटिदभ्रलेखां**
**श्रीवत्समुद्रामुरसा दधानम्॥** ॥ 29 ॥



**काल इति॥** कलौ तदाख्ये काले समये कलियुगे इत्यर्थः। अन्तयतीत्यन्तकः। अन्तशब्दात्तत्करोतीति ण्यन्ताण्ण्वुल्। असुराणाम् राक्षसानाम् अन्तकः नाशकः दैत्यारिः विष्णुः। तस्य अन्यम् कल्केरितरत् एकादशावतारम् विसदृशं च। 'अन्योऽसदृशेतरयोः' इति हैमः। अपिशब्दो विरोधे। यवनसंहाराद्याचरणेन तत्सदृशमप्याकारेण तदसदृशमित्यर्थः। अवतारः अवतरति अवरोहति भूलोकाय अस्मिन् इति अवतारः। अवतरणाश्रया मूर्तिरित्यर्थः। तम्। 'अवे तॄस्त्रो' रिति घञ्। प्रकाशयन्तीम् प्रकटयन्तीम् लोके प्रथयन्तीम्। कथमित्यत आह - अचञ्चला स्थिरा न तु क्षणिका नित्यं प्रकाशमानेत्यर्थः। श्रीः अङ्गलक्ष्मगता शोभा सैव। अचञ्चला नित्यानपायिनी श्रीः लक्ष्मीः विष्णुप्रिया। 'शोभासंपत्तिपद्मासु लक्ष्मीश्श्रीरपि कथ्यते' इति कोशः। तया तदुपलक्षिता। उपलक्षणे तृतीया। अत एव - तडित् विद्युत् 'तडित्सौदामिनी विद्युत्' इत्यमरः। तदुपलक्षिता तया विराजमाना। अभ्रलेखा मेघपङ्क्तिः तथोक्ता ताम्। तथाभूतां स्थितामित्यर्थः। श्रीवत्स इव मुद्रा श्रीवत्साकारमङ्कम् शिशुसंबन्धि अङ्गचिह्नम् तदेव श्रीवत्समुद्रा विष्णोः श्रीवत्साख्यं (वक्षसि स्थितं) लक्ष्म। ताम्। उरसा वक्षसा। 'उरो वत्सं च वक्षश्च' इत्यमरः। दधानम् वहन्तम्। कल्केरेतादृक्श्रीश्रीवत्सलक्ष्मणी वक्षसि न स्त इति तस्मादपि विष्णोर्विभूत्यतिशयोऽस्मिन् कविप्रौढोक्त्या सुष्ठु सम्पद्यते। स्ववक्षस्थलेऽङ्कं दधत्तदीयश्रिया नित्यं भासमानोऽयं कुमारस्साक्षाल्लक्ष्म्या साकं प्रद्योतमानं श्रीवत्सलक्ष्म वक्षसि समुद्वहन्तं विष्णुमनुकुर्वाणो कल्क्यवताराद्विसदृशमतिशयितं मूर्त्यन्तरं बिभ्राणस्सन्नचलां दीप्तिमुद्वहन्त्या विद्युता विराजमानमम्भोधरमनुकरोतीति परमार्थः। श्रीवत्सलक्ष्मवत् शिशोरङ्गलक्ष्म विनीलम्। तदीयश्रीश्च श्रिया 'लक्ष्मीशोभयोरैक्य' मित्यैक्यमाकलय्य तटित्वता जलमुचा साम्यमापेति भेदप्रधानसादृश्यमूलकस्य रूप

कस्य संगतिः । इदं च रूपकमचञ्चलश्रीत्याद्येकवाचकानुप्रवेशेन भेदेऽप्यभेदोक्तिरूपया कविप्रौढोक्तिसिद्धयातिशयोक्त्या समुज्जीवितेति तयोस्संकरः । अन्यमवतारं प्रकाशयन्तीमित्येतद्वाक्यार्थं प्रति तदुत्तरवाक्यार्थस्य विशेषणगत्या हेतुत्वात्काव्यलिङ्गमलंकृतिः । तच्च काव्यलिङ्गं पूर्वोक्तयातिशयोक्त्या श्रीवत्समुद्रेत्युपमया च सुष्ठु संकीर्यत इति दिक् । श्रीवत्सस्वरूपनिर्वचने च व्याख्यातारो बहवो बहुधाऽभिप्रायान् सप्रमाणमाविश्चक्रुः । वरदराजाभ्युदये तावदालङ्कारिकमूर्धन्याः दीक्षितपादास्तान् सर्वान् प्रदर्श्य "स च वक्षसि दक्षिणभागगतो बिल्वरूपो लाञ्छनविशेष इति सार्वभौमः प्रवादः" इति व्याचख्युः । विस्तरस्त्वान्ध्रचां सहृदयरञ्जन्याख्यायां मदीयायामेतदीयायां व्याख्यायां द्रष्टव्यः । कल्क्यवतारश्चैवं वर्णितो दशावतारचरिते – "म्लेच्छाच्छादितसर्वाशा कृपणाक्रन्दनादिनी । मेदःकर्दमिनी क्लेदं रक्तैर्यास्यति मेदिनी । तस्मिन् काले निरालोके लोके पापतमोमये । उत्पत्स्यतेऽर्कसङ्काशशिशुः कर्किकुले द्विजः । विष्णुर्भूभारशान्त्यर्थी सोऽथ विष्णुयशाः क्षितौ । चरिष्यत्यश्वमारुह्य म्लेच्छसंचयदीक्षितः" इति । अत्र च मातृकायां 'काले कलाम' पीति पाठएव समुपलभ्यते । परिशील्यमाने तदसङ्गतिः स्पष्टेति 'कलावपि' इति मकारो वकारतया मया विपरिणामितः । पूर्वमुद्रापकास्तु 'काये कलामपी' ति समस्कुर्वन् । 'भक्षितेऽपि लशुने न रोगशान्ति' रिति स्वरसतस्तदसङ्गतेस्तदुपेक्षणीयमेवेति सुधियो विभावयन्तु ॥

शुभलक्षणलक्षितं तस्य मुखं प्रब्रूते –

**ऊर्णासनाथायतफालपट्ट**<br>
**मुन्निद्रपद्मच्छददीर्घनेत्रम् ।**<br>
**ताम्राधरोष्ठं समतुङ्गनासं**<br>
**मुग्धस्मिताङ्कं मुखमुद्वहन्तम् ।** ॥ 30 ॥



**ऊर्णेति** ॥ ऊर्णा भ्रुवोरन्तरा स्थित आवर्तः । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः' इत्यमरः । तया सनाथः नाथवान् परतन्त्रः सहित इत्यर्थः । आयतः दीर्घः विस्तृतः 'दीर्घमायतम्' इत्यमरः । फालपट्टः ललाटपीठम् ललाटप्रदेश इत्यर्थः । 'पट्टः पेषणपाषाणे व्रणादीनां च बन्धने । चतुष्पथे च राजादिशासनान्तरपीठयोः' इति मेदिनी । स यस्य तथोक्तम् । तथाभूतम् । उन्निद्राः विकसिताः पद्मानां छदाः दलानि 'दलं पर्णं छदः पुमान्' इत्यमरः । ते तथोक्ताः । तद्वत् दीर्घाणि आयतानि लोचनानि 'लोचनं नयनं नेत्रम्' इत्यमरः । तानि यस्य तथाभूतम् । ताम्रः लोहितः अधरः अनूर्ध्वः अधस्थितः 'अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वे च वाच्यवत्' इति मेदिनी । ओष्ठः रदनच्छदः दन्तवासः "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः । स यस्य तथाभूतम् । समा सदृशा नतोन्नताभ्यां विहीना एकाकारेण स्थितेति यावत् । 'सर्वसाधुसमानेषु समं स्यादभिधेयवत्' इति विश्वः । तुङ्गा उन्नता च 'तुङ्गः पुंनागनगयोर्बुधे स्यादुन्नतेऽन्यवत्' इति हैमः । तादृक् नासा नासिका यस्य तथोक्तम् । तथाविधाम् । मुग्धम् सुन्दरम् मनोहरम् सर्वजनाह्लादकमित्यर्थः । 'मुग्धसुन्दरमूढयोः' इति विश्वः । स्मितम् मन्दहासः ईषद्धसनम् । तस्य लक्षणं त्वेवमुक्तम् – "ईषद्विकसितैर्दन्तैः कटाक्षैस्सौष्ठवान्वितैः । आलक्षितद्विजद्वारमुत्तमानां स्मितं भवेत्" इति । तदेव अङ्कम् चिह्नम् यस्य तथाभूतम् । सुन्दरमन्दस्मितैकविज्ञायमानमित्यर्थः । तादृशम् मुखम् आननम् । उद्वहन्तम् धरन्तम् । 'विवहत्युद्वहति चोद्वाहे' इति भट्टमल्ल आह तथापि 'दधाति वहतीत्यर्थे धरत्युद्वहतीत्यपि' इति क्रियानिघण्टौ वीरभूपालः । अतएत "रक्तोत्पलकलिकाकारमुद्वहतीव चास्याधररुचकम्" इति कादम्बरी । अत्र शिशौ वर्णितानि लक्षणानि चक्रवर्ती महापुरुषो विद्वान् महाशूरश्चायं भविष्यतीति कथ

यन्ति । तथा च सामुद्रिककाराः – “ विशालं च ललाटकं .... तुङ्गनासं शूरपण्डितलक्षणम् । तालुजिह्वाधरोष्ठानि सप्तरक्तं पदं श्रियः ” “ कराक्षिहनुनासिकं दीर्घं यस्य च लक्ष्मीवान् ” “ नेत्रे च पद्मनेत्राभे स पुमान् राजलक्षणः ” इत्यादि । कादम्बर्यां बाणोऽपि चक्रवर्तिलक्षणेषूर्णामेवमवर्णयत् – “ देव पश्य पश्यास्य कुमारस्य गर्भसंपीडनवशादपरिस्फुटावयवशोभस्यापि माहात्म्यमाविर्भावयन्ति चक्रवर्तिचिह्नानि । तथाहि - अस्य सन्ध्यांशुरक्तबालशशिकलाकारे ललाटपट्टे नलिननालभङ्गतन्तुतन्वीयमूर्णा परिस्फुरति ” इति । कुलकम् । लक्षणं तूक्तम् ॥

“ औज्ज्वल्यं नयनानन्दकारित्वं कथ्यते बुधैः ” इत्यभियुक्ता निरवोचन् । तदस्मिन् कुमारे वर्ण्यते —

**अव्याजसौन्दर्यगुणाभिरामं**
**कुमारमालोकयतश्चिराय ।**
**नृपस्य निष्पन्ददृशो मुहूर्त**
**मानन्दबाष्पोऽभवदन्तरायः ॥** ॥ 31 ॥

**अव्याजमिति ॥** अव्याजः अकृत्रिमः नैसर्गिकः न तु भूषणादिभिराहार्यः । सौन्दर्यम् मनोज्ञता स एव गुणः गुणविशेषः “ अङ्गप्रत्यङ्गकानां यस्सन्निवेशो यथोचितम् । सुश्लिष्टसन्धिबन्धस्स्यात्तत्सौन्दर्यमुदीर्यते ” इत्येतल्लक्षणलक्षितः । तेन अभिरामम् मनोज्ञम् लोकाह्लादकम् । कुमारम् बालकम् । चिराय चिरकालम् । ‘ चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः ’ इत्यमरः । आलोकयतः पश्यतः सादरमित्यर्थः । अतएव निर्गतः स्पन्दः किंचिच्चलनमपि याभ्यां ते निष्पन्दे निर्निमेषे दृशौ दृष्टी नेत्रे यस्य तथोक्तस्य । नृपस्य राज्ञः आनन्दपारवश्यमनुभवत इत्यर्थः । मुहूर्तम् अल्पकालम् । आनन्द



बाष्पः संतोषाश्रूणि । जातावेकवचनम् । अन्तरायः विघ्नः विघ्नकरः दर्शनप्रतिबन्धक इति यावत् । आयुर्वै घृतमितिवत्कार्यकारणयोरभेदोपचारः । अभवत् आसीत् । मनोगतं राज्ञः प्रीत्यतिशयं बहिःप्रकाशनायेवोत्पद्यमानानां बाष्पाणां परिपूर्णानां नेत्रयोर्निरवकाशेन भ्रश्यतां सतां तदा तदा कुमारदर्शनं जायत इत्येवमुक्तिः । कुमारस्य लोकातिशायि सौन्दर्यं पितुरतीव प्रीतिभाजनमभूदिति निर्गलितोऽर्थः । ‘ अनेन “ रूपमेवास्यैतन्महिमानमाचष्ट ” इति न्यायेन महामहिमवान् शिशुरयमिति ध्वन्यते ॥

आनन्दस्य स्थायी रतिरिति तत्परिपोषाय सात्त्विकेषु भावेष्वश्रु वर्णयित्वा रोमाञ्चप्रादुर्भावमपि तदालम्बने राज्ञि प्रस्तवीति —

**आश्लिष्यतस्तस्य दृशा तनूज**
**मन्तः प्रहर्षेण विजृम्भितेन ।**
**प्रायः प्रणुन्नैर्बहिरङ्गकेभ्यः**
**प्रादुर्बभूवे पुलकप्ररोहैः ॥** ॥ 32 ॥

**आश्लिष्यत इति ॥** दृशा दृग्भ्याम् नेत्राभ्याम् । जातावेकवचनम् । ‘ ईक्षणं चक्षुरक्षिणी दृग्दृष्टी च ’ इत्यमरः । तनूजम् आत्मजम् औरसम् धर्मपत्न्यां जातं पुत्रमित्यर्थः । आश्लिष्यतः आलिङ्गतः नेत्राभ्यां पिबतः गाढमालोकयत इत्यर्थः । तस्य राज्ञः । अन्तः अन्तरा अधिकरणशक्तिप्रधानमव्ययमिदम् । हृदयाभ्यन्तर इत्यर्थः । विजृम्भितेन अपर्याप्तावकाशत्वादतिरिच्यमानेन । प्रहर्षेण हर्षातिशयेन । प्रयोजककर्त्रा । प्रणुन्नैः प्रेरितैः चोदितैः बहिर्निष्कासितैरित्यर्थः । प्रपूर्वाण्णुदतेः क्तः । ‘ उपसर्गादसमासेऽपि णोपदेश ’ स्येति णः । प्ररोहा इव पुलकाः – पुलकप्ररोहाः अङ्कुराकारपुलकाः रोमविक्रियाः ‘ पुलकः पुनः रोमाञ्चकण्टकौ रोमवि

क्रया रोमहर्षणम् । रोमोद्गम उद्धर्षणमुल्लासकमित्यपि ' इति हैमः । तैः प्रयोज्यकर्तृभिः । अङ्गान्येव अङ्गकाः । स्वार्थे कः । ' अङ्गं प्रतीकोऽवयवः ' इत्यमरः । तेभ्यः । बहिः बाह्ये तेषां बहिःप्रदेश इत्यर्थः । ' अपपरिबहिरञ्चवः पञ्चम्या ' इति समासविधानसामर्थ्या द्बहिर्योगे पञ्चमी । प्रादुर्बभूवे आविरभावि प्राकाश्यतेत्यर्थः । ' प्राकाश्ये प्रादुराविस्स्या ' दित्यमरः । प्रादुरित्यव्ययपूर्वाद्भवतेः भावेलिट् । गृहान्तरान्निष्कासितो जनो यथावा तद्बहिरागत्य तिष्ठति तद्वदिति भावः । प्राय इति संभावनायाम् । नूनमित्यर्थः । पुत्रदर्शनसंजात हर्षपारवश्यसंभूतानां पुलकाङ्कुराणामन्तरतिरिच्यमानप्रीत्यतिशयान्निष्का सितानां सतां बहिःप्रकाशोऽभूदिति कविप्रौढोक्तिमूलेयं क्रियोत्प्रेक्षा ॥

जातस्य कुमारस्य श्लोकद्वयेन संस्कारद्वयं कथ्यते —

**ततः प्रतीतेऽह्नि पुरोहितेन**
**नरेन्द्रसूनुः कृतजातकर्मा ।**
**समिद्धतेजास्समतामयासी**
**न्मन्त्रप्रणीतेन मखानलेन ॥** ॥ 33 ॥

**तत इति** ॥ ततः तस्मात् । पञ्चम्यास्तसिः । कुमारदर्शनादन न्तरमित्यर्थः । प्रतीते शास्त्रेषु प्रसिद्धे शास्त्रविहिते इत्यर्थः । अह्नि दिने । पुरोहितेन पुरोधसा कुलगुरुणा । कृतम् जातकर्म तदाख्यः संस्कारः येन तथोक्तः । तथभूतः । नरेन्द्रसूनुः राजकुमारः । कर्ता । समिद्धम् प्रदीप्तम् जाज्वल्यमानम् तेजः दीप्तिः 'तेजः प्रभावे दीप्तौ च ' इत्यमरः । तत् यस्य तादृशस्सन् । मन्त्रैः वेदांशैः 'मन्त्रौ गूढोक्तवेदांशौ ' इति नानार्थरत्नमाला । प्रणीतेन संस्कृतेन गुणाधानं प्रापितेन 'प्रणीतस्संस्कृतोऽनलः ' इत्यमरः । अग्निशब्दप्रयोगोऽत्र गोबली वर्दन्यायेन । मखानलेन यज्ञाग्निना । तस्य स्वतः परमपवित्रत्वेन



तस्मिन् संस्कारस्यात्युच्चाधायकत्वादिति भावः । तेन कुमारस्याप्युप मेयभूतस्य स्वत एव महातेजस्कत्वम्, तेन च विष्णोः मूर्त्यन्तरत्वं च व्यज्यते । 'सप्ततन्तुर्मखः क्रतुः ' इत्यमरः । समताम् सादृश्यम् । 'वाच्यलिङ्गास्समस्तुल्यस्सदृक्षः ' इत्यमरः । अयासीत् अगच्छत् प्राप दित्यर्थः । या प्रापणे लुङ् । 'यमरमनमाता ' मिति सगागम इट्च । मन्त्रकृतसंस्कारो वह्नौ तेजोऽतिशयमिव बहुश्रुतेन पुरोधसा कृतं जात कर्म सवीर्यं सत् कुमारे महत्तेजो जनयामासेत्युपमालङ्कृतिः । संस्का राणामावश्यकतां मनुरेवमाह — "गार्भैर्होमैर्जातकर्म चौडमौञ्जीनिब न्धनैः । बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते" इति । जात कर्मणोऽस्य कालनियमश्च तेनैवाभिहितः - "प्राङ्नाभिवर्धनात्पूर्वं जात कर्म विधीयते । मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम् " इति । कृतस्य कर्मणो वीर्यवत्त्वाय पित्रा कुलगुरुभिः कार्यतेऽयं संस्कार इत्यनूचान आचार इति ज्ञायते । तथा च भागवते - "नन्दस्त्वा त्मज उत्पन्ने ... ... जातकर्मात्मजस्य वै । कारयामास विधिवत्पितृ देवार्चनं तथा" इति । अतएव रघुवंशे कालिदासोऽप्येवमाह — "स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते । दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ" इति ॥

जातकर्मानन्तरभाविनं नामकरणाख्यं संस्कारमाख्याति —

**आकम्पयिष्यत्ययमेकवीरः**
**संग्रामरङ्गे सकलानरातीन् ।**
**इत्येव निश्चित्य स दीर्घदर्शी**
**नाम्ना सुतं कम्पन इत्यकार्षीत् ॥** ॥ 34 ॥

**संग्रामेति** ॥ संग्राम एव रङ्गः संग्रामरङ्गः युद्धभूमिः । 'रङ्गं त्रपुणि रङ्गो ना रागे नृत्तस्थले रणे ' इत्यादिना नृत्तस्थल वाचकोऽपि रङ्गशब्दस्सामान्यवाचको भूत्वा प्रदेशमात्रमभिधत्ते । विशेष

वाचकानां सामान्यवाचकत्वं न विरुद्धम् । यथा वा वृक्षे चूतशब्दप्रयोगः । अतएव — “ अध्वर्यवः पूर्ववृता मयेति ” “ ग्रहं निमग्नग्रहणेषु कल्पय ” न्नित्यादयः कविप्रयोगाः ऋत्विक्सामान्यपणसामान्यादिषु प्रयुक्ता अध्वर्युग्रहादिरूपास्संगच्छन्ते । तस्मिन् । एकः अद्वितीयः असदृशः वीरः शूरः निरुपमानपराक्रम इत्यर्थः । ‘ एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु ’ इति मेदिनी । ‘ पूर्वकालै ’ केत्यादिना पूर्वनिपात एकशब्दस्य । ‘ पूर्वापरप्रथमचर ’ मेति सूत्रे बहुलग्रहणानुवृत्त्या न तस्य प्रवृत्तिरेतस्मिन् विषये । एकेषु मुख्येषु वीरयते पराक्रमत इति वा । अयम् कुमारः । सकलान् अशेषान् अरातीन् शत्रून् । आकम्पयिष्यति भृशं चलयिष्यति पराक्रमातिशयेन नितरामुद्वेजयिष्यति । इति इत्थम् । एवंप्रकारेण निश्चित्य असंदिग्धं मनसि मत्वैव । डित्थादिशब्दवत्केवलसंज्ञाशब्दोऽयं न भविष्यति, आवश्यमर्थवत्तामस्मिन्नयं संपादयिष्यतीति सम्यगालोच्य, न तु यथाकथमपि व्यवहाराय नामावश्यकमिति धियेत्येवकारार्थः । दीर्घम् दूरस्थम् अप्रत्यक्षमप्यर्थं पश्यतीति दीर्घदर्शी । भाविनोऽप्यर्थस्य पुरत एव ज्ञातेत्यर्थः । अतएव तादृङ्निर्णये समर्थोऽयमभूदिति ज्ञायते । ‘ दीर्घदर्शी दूरदर्शी ’ इत्यमरः । ‘ सुप्यजाता ’ विति ताच्छील्ये णिनिः । सः बुक्कराजः । सुतम् आत्मजम् पुत्रम् स्वसुतमित्यर्थः । कम्पनः इति कम्पन इत्येवम् । इति स्वरूपे । नाम्नेत्युपलक्षणे तृतीया । तन्नामोपलक्षितम् तादृशनामसहितमिति यावत् । अकरोत् व्यधत्त कृतवान् । कम्पनशब्दस्तु ‘ कपि — चलन ’ इत्यस्माद्धेतुमण्ण्यन्तात् ‘ कृत्यल्युटो बहुल ’ मिति कर्तरि ल्युप्रत्यये निष्पन्नः ॥

अमुमारभ्य पञ्चभिः श्लोकैश्शिशोश्शैशवं वर्णयति —

**धात्रीभिराप्ताभिरमुं कुमार**
**मवर्धयद्भूपतिरादरेण ।**



**यज्वा यथाज्याहुतिभिर्हुताशं**
**सस्यं यथा वृष्टिभिरम्बुवाहः ॥** ॥ 35 ॥

**धात्रीभिरिति** ॥ यज्वा विधिवद्धोता यजमानः । ‘ यज्वा तु विधिनेष्टवान् ’ इत्यमरः । ‘ सुयजोङ्वनिप् इति यजेङ्वनिप् । आज्याहुतिभिः घृतरूपैः हविर्भिः हुताशम् हविर्भुजम् ·यथा अग्निमिवेत्यर्थः । यथाशब्दस्सादृश्ये । ‘ वद्वा यथा तथेवैवं साम्ये ’ इत्यमरः । अम्बुवाहः मेघः । अम्बु जलं वहतीति कर्मण्यण् । वृष्टिभिः वर्षैः सस्यम् यथा वृक्षादीनां फलमिव ‘ वृक्षादीनां फलं सस्यम् ’ इत्यमरः । भूपतिः राजा । आदरेण श्रद्धया । ‘ श्रद्धादरे च काङ्क्षायाम् ’ इति मेदिनी । आप्ताभिः प्रत्ययिताभिः विश्वसनीयाभिः । अतिस्नेहः पापशङ्कीति न्यायादिति भावः । ‘ आप्तः प्रत्ययितस्त्रिषु ’ इत्यमरः । ·धात्रीभिः उपमातृभिः मातृकार्यनिर्वर्तिनीभिः । ‘ धात्री जनन्यामलकीवसुमत्युपमातृषु ’ इति मेदिनी । अमुम् कुमारम् इमम् बालकम् । अवर्धयत् । पोषयामास वृद्धिमगमयदित्यर्थः । श्रौती पूर्णेयमुपमा । आदरेणेत्युपमानोपमेययोर्निर्दिष्टस्साधारणो धर्मः । “ यथेववादिशब्दानां साक्षात्सादृश्यवाचिनाम् । उपादाने भवेच्छ्रौतीत्याहुश्शास्त्रविचक्षणाः ” इति लक्षणात् ॥

सुतदर्शनादिजन्यं वैषयिकमानन्दनं पितुर्वर्णयन्ती पुरतो मानसिकीं प्रीतिमाचष्टे —

**क्रमेण धात्रीजनशिक्षितानि**
**वचांसि यातानि च मन्थराणि ।**
**स्खलत्पदान्यस्य धराधिनाथो**
**निशम्य दृष्ट्वा च स निर्वृतोऽभवत् ॥** ॥ 36 ॥

**क्रमेणेति** ॥ सः प्रख्यातः धराधिनाथः बुक्कभूपतिः ।

क्रमेण अनुक्रमेण क्रमानुसरणेन पुंखानुपुंखन्यायेनेत्यर्थः । 'क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च' इति मेदिनी । धात्रीजनेन उपमातृभिरनेकाभिः । कर्तृभूताभिः । अनेन महानादरस्तस्मिन् तासां सूच्यते । शिक्षितानि शिक्षावन्ति कृतानि ताभिः परिग्राहितानीत्यर्थः । शिक्षाशब्दात्तत्करोतीति णिजन्तान्मतुपि मतुपो लुक् । तदन्तात्कर्मणि क्तः । वचांसि वचनानि अस्फुटप्रवृत्त्या मधुराणिभ ाषितानीत्यर्थः । निशम्य श्रुत्वा । स्खलन्ति संचलन्ति इतस्ततः प्रभ्रश्यन्ति पदानि पादविन्यासाः येषु तथोक्तानि । अतएव मन्थराणि पतनभिया शनैश्शनैः प्रवृत्तानि । 'मन्दगामी तु मन्थरः' इत्यमरः । यातानि गमनानि । यातेर्नपुंसके भावे क्तः । दृष्ट्वा वीक्ष्य च । च समुच्चये । निर्वृतः सुखवान् "सुखनाशौ तु निर्वृती" इति नानार्थरत्नमाला । अभवत् अभूत् आनन्दमनुबभूवेत्यर्थः । यथासंख्यमलङ्कारः ॥

"मनष्षष्ठानीन्द्रिया" णीत्यन्तरिन्द्रियसुखं प्रस्तुत्य कर्मेन्द्रियेषु घ्राणेन्द्रियसुखानुभूतिमस्मिन् श्लोके समाख्याति –

**तदाननं तस्य सुगन्धि जिघ्र**
**न्नालक्ष्यदन्ताङ्कुरदर्शनीयम् ।**
**न तृप्तिमासादयति स्म राजा**
**नवोदयं हंस इवारविन्दम् ॥** ॥ 37 ॥

**तदेति** ॥ तदा तस्मिन् काले कुमारस्य शैशवदशायामित्यर्थः । हंसः मानसौकाः पक्षिविशेषः । 'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः' इत्यमरः । हन्ति गच्छतीत्यच् । "भवेद्वर्णागमाद्धंस" इति सक् । नवः उदयः विकासः यस्य तम् । तदानीमेव विकसितमित्यर्थः । अनेन परिमलातिशयस्तस्मिन्नुच्यते । अरविन्दम् पद्ममिव । अराणि दलानि विन्दते लभते इति 'गवादिषु विन्देस्संज्ञाया' मिति शः । आलक्ष्याः ईषद्विलोकनीयाः अस्फुटत्वाद्बालानां हासस्येत्यर्थः । अङ्कुरा इव दन्ताः दन्ताङ्कुराः अङ्कुरवद् बहिः किञ्चित्प्रकाशमाना दन्ता इत्यर्थः । तैः करणभूतैः । दर्शनीयम् सर्वजनप्रेक्षणीयम् सुन्दरमिति यावत् । शोभनः गन्धः यस्य सुगन्धि । 'गन्धस्येत्त्वे तदेकान्तग्रहण' मिति गन्धस्येत्त्वम् । पद्मिनीजातिस्त्रीणामिव पुरुषाणामपि केषांचिन्महतामास्यसौगन्ध्यस्य निरपायित्वादित्त्वं न विरुध्यते । नित्यसौरभातिशायीत्यर्थः । तस्य शिशोः आननम् मुखम् जिघ्रन् आघ्रायन् तत्परीमलातिशयजन्यं सौख्यमनुभवन्नित्यर्थः । 'घ्रा - गन्धोपादाने' लटश्शतरि शपि 'पाघ्रा' ध्मेत्यादिना जिघ्रादेशः । तृप्तिम् सौहित्यम् एतावतालमिति संप्रीणनम् 'सौहित्यं तर्पणं तृप्तिः' इत्यमरः । न आससाद नालभत नैव प्राप । पुनः पुनरपि तदाननमाघ्रातुमेव प्रायततेत्यर्थः । तादृशसौख्यानुभूतेरन्यत्रालाभादिति भावः । पद्मसौरभसदृशं तन्मुखसौरभं हंसमिव तदास्वादरसिकं राजानं घ्राणेन्द्रियप्रीतिजननद्वारा समधिकप्रीतिभाजनं चकारेति निष्कृष्टोऽर्थः । "हंसः पद्मवनं समिच्छति य" थेत्याचार्यसूक्त्या पद्मसौरभेऽतिप्रीतिर्मरालानां ज्ञायते । स्तबकोपमा चेयम् । यथाह दण्डी – 'अनेकस्यार्थयुग्मस्य सादृश्यं स्तबकोपमा । 'श्रितोऽस्मि चरणे विष्णोः भृङ्गस्तामरसे यथा' इति । दन्ताङ्कुरदर्शनीयत्वमुखसुगन्धित्वे विशेषणगत्या राज्ञस्तृप्त्यभावे हेतुभूते जाते इति वाक्यार्थं प्रति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । उपमया च पुष्टिमाप्नोत्ययमित्येतयोरङ्गाङ्गिभावः ॥

"पुत्रस्पर्शात्सुखतरस्पर्शो लोके न विद्यत" इत्याम्नायवाक्यं विवृण्वती स्पर्शेन्द्रियसुखानुभूतिं राज्ञः कीर्तयति –

**तथा न कर्पूरभरैर्न हारैः**
**न चन्दनैर्नाप्यमृतांशुपादैः ।**

यथाऽभवन्निर्वृतमस्य गात्रं
सुताङ्गसंस्पर्शभुवा सुखेन ॥ ॥ 38 ॥

**तथेति ॥** अस्य बुक्कराजस्य। अवयवावयविभावे षष्ठी। गात्रम् शरीरम्। कर्तृ। 'गात्रं वपुस्संहननं शरीरम्' इत्यमरः। सुतस्य अङ्गानि अवयवाः। तेषाम् संस्पर्शः सम्यक् स्पर्शनम् गाढालिङ्गनमिति यावत्। तस्माद्भवतीति 'क्विप्' चेति क्विप्। 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पुंवद्भावः। तथोक्तेन। सुखयतीति सुखम् सौख्यहेतुः आनन्दजनको व्यापारः संतोषानुभूत्येति भावः। 'सुखहेतौ सुखे सुखम्' इति विश्वः। तेन। यथा येन प्रकारेण। यच्छब्दात् प्रकारवचने थाल्। निर्वृतम् सुखितम् सुखवत् संजातानन्दम्। तथा तेन प्रकारेण तद्वदित्यर्थः। कर्पूरभरैः घनसारातिशयैः अतिशयितकर्पूरैः कर्पूरराशिभिरिति यावत्। मनोज्ञः सुगन्धवद्भिस्तैरित्यर्थः। 'कर्पूरमस्त्रियां घनसारश्चन्दसंज्ञः' इत्यमरः। 'अतिशयो भर' इति च। अपिरुत्कर्षं द्योतयति। लोके सुखहेतुषूत्कृष्टैरप्येतैरित्यपिशब्दार्थः। एवमेवोपमानैरुत्तरत्राप्यस्य संबन्धो वेदितव्यः। न नैव निर्वृतमित्यर्थः। एतत्सुतसंस्पर्शस्त्वनन्यादृश इति भावः। हारैः मुक्तावलिभिः अतिशीतलैरित्यर्थः। 'हारो मुक्तावली'त्यमरः। न निर्वृतमित्यादेस्सर्वत्र पूर्ववदेव संबन्धः। चन्दनैः मलयजैः गन्धसारैः सुगन्धिभिश्शीतलैश्चापीति भावः। 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः। अमृतांशुपादैः चन्द्रकिरणैः स्पर्शमात्रेण सर्वधातूनां परिपुष्टिजननद्वारा सर्वेन्द्रियाह्लादकैरपीति भावः। 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः। लोके सुखहेतव इति सुप्रसिद्धा एते सर्वेऽपि तादृगानन्दं नैव जनयामासुरेतस्य सुतस्पर्शसंभूतानन्दस्य कलामप्येते न प्राप्नुवन्तीत्यप्रकृतेभ्यः प्रकृतस्याधिक्यं वर्णितमिति व्यतिरेकोऽलङ्कारः। अयं च व्यतिरेकस्तस्य स्पर्शस्य स एव सदृशो नान्य इति ध्वनयति। कर्पूरादीनां तादृशसुखोत्पादननिषेधोऽयमपिशब्दसमभिव्याहारेण 'महागजाः पलायन्ते मशकानां तु का गति'रिति न्यायादर्थापत्तिं द्योतयतीत्यलङ्कारेणालङ्कारध्वनिः। इत्थं द्योत्यमानेयमुपमानान्तरस्य नितरामसत्त्वं प्रतिपादयन्ती तस्य स एव सदृश इत्यनन्वयमपि व्यञ्जयति ॥



केवलं पितुरेव न मातुरपि सोऽर्भकोऽतीव मुदमजनयदिति शंसति –

कलक्वणत्काञ्चनकिङ्किणीकं
गृहाङ्गणे जानुचरं कुमारम्।
आलोकयन्तावमृताम्बुराशे
र्मग्नाविवान्तः पितरावभूताम् ॥ ॥ 39 ॥

**कलक्वणदिति ॥** माता च पिता च पितरौ मातरपितरौ पिता माता चेत्युभावित्यर्थः। 'पिता मात्रे'त्येकशेषः। गृहाणाम् अङ्गनम् प्राङ्गणम् राजगृहपुरोवर्ती चतुरस्राकारो भागः। 'अङ्गनं चत्वराजिरे' इत्यमरः। अङ्गणमिति पाठान्तरम् – पृषोदरादित्वाण्णत्वमिति सुधा। मालतीमाधवव्याख्यायां जगद्धरस्तु – अङ्गणशब्दे विधायकाभावाण्णत्वश्रुतिरयुक्ता। पृषोदरादित्वादित्यपि वचोऽमूलकमेवेत्यवोचत्। मुरारिव्याख्यायां रुचिपतिरपि - "अङ्गनशब्दो णकारान्त इति केचित्पठन्ति। तदप्रामाणिकम्। पृषोदरादिपाठे प्रमाणाभावात्। तथाविधानुप्रासयमकादेरदर्शनाच्च" इति समाचख्यौ। तथापि "अध्यास्य सौरमेयं मौक्तिकरुचिरङ्गणेषु विहितमतिः" इत्यादिभिः श्रृङ्गारवैराग्यार्थद्वयप्रतिपादकरसिकरञ्जनादिकाव्येषु श्लेषाद्युपपत्त्यर्थं णान्तत्वस्यावश्यंभावित्वेन पृषोदरादेराकृतिगणतया तद

साधुत्वे मानाभावात् । अतएव लिङ्गाभट्टीयव्याख्याकर्ता - 'अङ्गणं चत्वराजिरे' इति णान्तमेव पाठं मौलिकमुदाजहार । तस्मिन् । चरतीति चरः । पचादित्वादच् । जानुभ्याम् ऊरुपर्वभ्यां चरः तथोक्तः । तम् । भूमौ हस्तौ निधाय जानुभ्यां गच्छन्तमित्यर्थः । 'जानूरुपर्वाष्ठीवदस्त्रियाम्' इत्यमरः । कलम् अव्यक्तमधुरं यथा भवति तथा 'ध्वनौ तु मधुरास्फुटे कलः' इत्यमरः । क्वणन्त्यः ध्वनन्त्यः शब्दं कुर्वत्यः । काञ्चनस्य सुवर्णस्य । विकारार्थे षष्ठी । किङ्किण्यः क्षुद्रघण्टाविशेषाः यस्य तम् । 'क्िङ्किणी क्षुद्रघण्टिका' इत्यमरः । नद्यृतश्चेति कप् । 'न क्' पीति निषेधा 'त्केऽण' इति ह्रस्वो न । आलोकयन्तौ तच्चेष्टाविलासादिषु तदेकतानहृदयौ पश्यन्तौ । अमृतम् पीयूषम् सुधा 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते' इत्यमरः । तस्य अम्बुराशिः समुद्रः कविप्रौढोक्तिसिद्धः । अमृतमयः सागर इत्यर्थः । तस्य अन्तः अन्तरा मध्ये । मग्नौ निमग्नौ अवगाढाविवेत्युत्प्रेक्षा । अभूताम् आस्ताम् । सुधासमुद्रो यदि स्यात्तदानीं तत्राप्लवितस्य यादृशं सुखं संजायते तादृशं शर्म तावन्वभूतां तद्दर्शनेनेति परमार्थः । गृहमेधिनौ यदर्थमभूतां तमर्थं तौ करगतं कर्तुमारभेतां पुत्रजननोत्सवेनेति तात्पर्यार्थः ॥

नायकस्य बाल्यमुपसंहृत्य कौमारदशां वर्णयितुकामा तदनुजातजननमवतारयति —

**अथ क्रमात्पार्थिवधर्मपत्नी**
**सुतावुभौ कम्पनसङ्गमाख्यौ ।**
**असूत चिन्तामणिपरिजातौ**
**पयःपयोधेरिव वीचिरेखा ॥** ॥ 40 ॥

**अर्थात** ॥ अथ अनन्तरम् पूर्वोक्तवर्णनानुसारेण संवत्सरत्रय



परिमिते काले गते इत्यर्थः । पार्थिवः पृथिव्या ईश्वरः 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यनुवर्तमाने 'तस्येश्वर' इत्यण् । तस्य धर्मपत्नी देवी । धर्मस्य पत्नीति तादर्थ्ये षष्ठी । कर्त्री । पयांसि धीयन्ते अत्रेत्यधिकरणे किः । पयसां पयोधिः पयःपयोधिः क्षीरसमुद्रः । रूढिर्योगमपहरतीति न्यायात् पयोधिशब्दस्समुद्रमात्राभिधायी । तस्य वीचिरेखा तरङ्गमाला । चिन्तारत्नम् सर्वार्थप्रदः दैवतमणिः । पारिजातः सर्वाभीष्टप्रदो देववृक्षविशेषः । देवतरुषु पञ्चस्वपि तेजसात्यधिकः पारिजातः । (अत एवाह – कालिदासः 'कल्पद्रुमाणामिव पारिजातः' इति) ताविव । कम्पनः सङ्गमश्च कम्पनसङ्गमौ । शब्दपरावेतौ । अर्थोपसर्जनशब्दाभिधायकत्वमपि दृष्टं क्वचित् 'देवपूर्वं गिरिं ते' 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इत्यादौ । तौ शब्दौ आख्ये अभिधायके नामनी ययोस्तौ । तादृशनाम्नी धरिष्यमाणावित्यर्थः । 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः । सुतौ पुत्रौ । कर्म । क्रमात् क्रममनुसृत्य । ल्यब्लोपे पञ्चमी । कम्पनम् तदनन्तरं सङ्गममिति यावत् । असूत अजनयत् । त्यागशीलत्वतेजोवत्त्वे समाने अपि पृथगुपमानयोर्द्वयोर्ग्रहणमुपमेयगतक्रमपोषणार्थमिवाभाति । दुर्वाससश्शापेन समुद्रगतां स्वर्लक्ष्मीमुद्धर्तुकामा देवासुराः क्षीराम्भोधिं ममन्थुः । तदानीं चिन्तामणिरग्रे, पारिजातश्च पश्चात्समभूताम् । लक्ष्मीसुधादयोऽपि ततस्समजायन्तेति पौराणिकी कथाऽत्रानुसंधेया ॥

सोदरैस्सह शिशोरभिवृद्धिं प्रजारञ्जकत्वं च प्रस्तौति —

**स राजसूनुस्सह सोदराभ्यां**
**दिने दिने वृद्धिमुपाससाद ।**
**शशीव सानन्दमुदीक्ष्यमाणः**
**प्रजाभिरालोकसमुत्सुकाभिः ॥** ॥ 41 ॥

**स इति ॥** सः सोदर्यजननवर्णनेन किञ्चिद्व्यवहितः। राज कुमारः राज्ञः कुमारः। कुमारकम्पन इत्यर्थः। समानः अभिन्नः उदरः मातृगर्भः ययोः तथोक्तौ। 'विभाषोदरे' इति समानस्य स भावः। ताभ्यां सह तत्सहित इत्यर्थः। 'सहयुक्तेऽप्रधाने' इति सहार्थे तृतीया। आलोकः दर्शनम् तस्मिन् समुत्सुकाभिः उत्कण्ठावद्भिः कालविलम्बमसहमानाभिः कदा वा द्रक्ष्यामः कदा वा द्रक्ष्याम इति त्वरावद्भिरिति यावत्। सानन्दम् आनन्देन सहितं यथा तथा। 'सहार्थे बहुव्रीहिः। चिरन्तनस्स्वमनोरथः एतावता कालेन परिपक्व इति ससंतोषमित्यर्थः। प्रजाभिः जनैः। 'प्रजा स्यात्सन्ततौ जने' इत्य मरः। उदीक्ष्यमाणः मुखैरुन्नमितैरालोक्यमानः। प्रजाभिरित्यादीनि शशीवेत्यनेनाऽपि संबध्यन्ते। दिने दिने प्रतिदिनम्। 'नित्यवीप्सयो' रिति द्विर्वचनम्। वृद्धिम् दिनदिनाभिवृद्धिमित्यर्थः। उपाससाद प्रापत्। दिनदिनाभिवृद्धिः प्रजादरश्च चन्द्रमस इव तस्य समभूताम्। सोदरयो श्चैवमेवेत्युपमासहोक्तिभ्यामवगता चन्द्रसोदरयोरपि सादृश्यलक्ष्मीः कांचिदुपमामभिव्यनक्ति॥

बुक्कराजवर्णनयोपक्रान्तमिमं सर्गं तमधिकृत्यैव वर्णयन्त्युप संहरति —

**पशुपतिरिव नेत्रैस्सोमसूर्याग्निरूपै**
**र्नय इव निरपायैः प्राभवोत्साहमन्त्रैः।**
**भव इव पुरुषार्थैर्धर्मकामार्थसंज्ञै**
**स्त्रिभिरपि नरपालैस्तैस्तनूजैरभासीत्॥** ॥42॥

**पशुपतिरिति ॥** सोमः चन्द्रः सूर्यः आदित्यः अग्निः वह्निः त एव रूपाणि आकृतयः येषां तैः। नेत्रैः नयनैः त्रिभिरित्यर्थः। पशुपतिः शिवः। पशुरिव पशुरिति व्युत्पत्त्या मायाव्यामोहितत्वा



त्पशुशब्देन जीवो लक्ष्यते। तेषाम् पतिः प्रभुः स्वामी। अन्तर्यामी सन् जीवानां नियन्ता भवति परमेश्वर इत्येवमुच्यते। यद्वा — पशूनाम् प्रमथानाम् पतिः प्रमथाधिप इति वा। 'पशुर्मृगादौ छगले प्रमथे च पुमानयम्' इति रभसः। 'पिनाकी प्रमथाधिपः' इति शिवपर्यायेष्वमरः। सूर्यचन्द्राग्निनेत्रवत्त्वं च शिवस्य प्रसिद्ध मागमेषु। स इव। निरपायैः अपायरहितैः अपृथग्भूतैः अवि श्लिष्टैः परस्परं सम्मिलितैः सापेक्षैरिति यावत्। प्राभवोत्साहमन्त्रैः- प्राभवः प्रभुशक्तिः। प्रभुरेव प्राभव इति प्रज्ञादित्वादण्। उत्साहः उत्साहशक्तिः मन्त्रः मन्त्रशक्तिः प्रभुमन्त्रोत्साहशक्तयस्तिस्र इत्यर्थः। कोशदण्डजं तेजः प्रभुः, कर्तव्यार्थेषु स्थेयान् प्रयत्नः उत्साहः, षड् गुणचिन्तनं मन्त्रः इति तेषां संग्रहेण लक्षणम्। षड्गुणानमर इत्थ माह – 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्' इति। तैः। नयः नीतिः। सचा त्मोदयपरज्यानिरूपः। 'आत्मोदयः परज्यानिर्द्वयं नीतिरितीयती' इति माघः। स इव। 'श्रिणीभुवोऽनुपसर्गे' इति घञा 'नाय' इति भाव्यम्। तथापि 'कृत्यल्युटो बहुलम्' इति बाहुलकादच्। 'त्रिभिरपि' इत्येतस्य देहलीदत्तदीपन्यायेन 'पुरुषार्थैः' इत्यने नापि संबन्धः। अपि समुच्चये। धर्मसहितोऽर्थः धर्मार्थसहितः कामः इत्येवंविधैस्त्रिभिरित्यर्थः। तथाविधानामेव तेषां श्रेयस्साधनत्वेन पुरुषार्थ त्वस्मरणात्। धर्मकामार्थसंज्ञैः - धर्मः वेदविहितो यज्ञादिः - 'धर्मस्तु तद्विधिः' इत्यमरः। कामः स्त्र्यादिसुखम्। अर्थः द्रविणम् 'हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि' इत्यमरः। ते संज्ञाः वाचकाश्शब्दाः येषां तैः तत्तदाख्यैरिति यावत्। पुरुषैः अर्थ्यन्ते अभिलष्यन्ते श्रेयस्साधनत्वे नेति पुरुषार्थाः पुरुषैरवश्यं साधनीयाः प्रयोजनविशेषा इत्यर्थः। अर्थ उपयाच्ञायाम् इत्यस्मात् 'अकर्तरि च कारके संज्ञायाम्' इति घञ्। तैः। भवः संसारः 'भवः क्षेमे च संसारे सत्तायां प्राप्ति

जन्मनोः ' इति सुधा। स इव। तैः पूर्वोक्तैः त्रिभिः त्रिसंख्याकैः अपि समुच्चये । अविनाभूतैः सर्वैस्तैरित्यर्थः। तनूजैः औरसैः पुत्रैः अभासीत् अशोभत । लोके सर्वत्र प्रसिद्धिमगादित्यर्थः। भा दीप्तौ - लुङ् । 'यमरमनमाता' मिति सगिटौ । यथावा प्रमादमभजद्भि स्वनेत्रैरेव प्रपञ्चरक्षणादिसर्वकार्यार्थसिद्धिर्भगवतः, यथावा तिसृभिश्श क्तिभिरेव परस्परसहकारिणीभिरात्मोदयादिरूपाया नीतेस्संसिद्धिः, यथा वा पार्थक्यमनाश्रयद्भिः पुरुषार्थैस्संसारस्य सारवत्तासिद्धिः तथैवैक मत्यमयद्भिर्वीरवरैः प्रज्ञावद्भिः कुमारैस्तस्य सुलभा कीर्तिसमृद्धिसंसिद्धि रासीदिति तात्पर्यार्थः। धर्मैक्यवती मालोपमेयम्। यथावा पुष्पेणैकेन सममपरस्य पुष्पस्य ग्रथनं तद्वदुपमानानां परस्परमत्र संबन्ध इति मालोपमाव्यवहारः । नेत्रैरित्यङ्गोपमायां यद्यपि लिङ्गभे दोऽस्ति तथाप्येतादृश्यामुपमायां स न दोषः। यथाह दण्डी – " न लिङ्गवचने भिन्ने न हीनाधिकते अपि । उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ " इति । उदाजहार चापि स एवेत्थम् 'स्त्रीव गच्छति षण्डोऽयं वक्त्येषा स्त्री पुमानयम्' इत्यादि। सर्गान्ते वृत्तभेदः आदृतः । वृत्तं तु मालिनी। ननमयययु तेयं मालिनी भोगिलोकैः' इति लक्षणात्। कालिदासोऽप्येवमेवोप संजहार रघुवंशे दशमं सर्गम् " सुरगज इव दन्तैर्भग्नदैत्यासिधारै र्नय इव पणबन्धव्यक्तयोगैरुपायैः। हरिरिव युगदीर्घैर्दोर्भिरङ्गैस्तदीयैः। पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥ " इति ॥

इति
श्रीगङ्गादेव्या विरचिते
मधुराविजयनाम्नि वीरकम्परायचरिते
कुमारजननं नाम द्वितीयसर्गः

* * * *



**इतीति ॥** सर्वं पूर्ववत्। द्वितीयसर्गः - द्वितीयः द्वयोः पूरणः। स चासौ सर्गः द्वितीयसर्गः। द्वितीयः काव्यभाग इत्यर्थः। 'द्वेस्तीयः' इति डटोऽपवादस्तीयः। कुमाराणाम् जननम् कुमारजननम्। नामेति प्रसिद्धौ। कुमारोदयवृत्तान्तेन प्रसिद्धम्। प्रधानतया समुपवर्णित राजसुतोत्पत्तिविषय इत्यर्थः। इति समाप्तः – इति तु विशेषः ॥

इति
श्रीपरमेश्वरीकृपासमुपलब्धशास्त्रसाहितीवैदुष्य
'साहित्यालङ्कार' 'विद्वत्कवीशान'
**पोतुकुच्चि सुब्रह्मण्यशास्त्रिणा**
'काव्यकलानिधि' 'महीशूरमहाराजास्थानमहाविद्वत्कवि'
श्रीचिदम्बरशास्त्रिणां भागिनेयेन विरचितया
**भावप्रकाशिका**ख्यव्याख्यया समलङ्कृतायाम्
श्रीगङ्गादेव्याः कृतौ मधुराविजये महाकाव्ये
कुमारोत्पत्तिवर्णनम् नाम
**द्वितीयसर्गः**

* * * *

श्रीः

# मधुराविजयम्

### भावप्रकाशिकाख्यव्याख्यासमेतम्

## तृतीयसर्गः

नायकस्य बाल्यदशां पूर्वं वर्णयित्वा इदानीं कलाकौशलादि तस्य प्रस्तौति –

**ततो यथावत्कृतचौलसंस्क्रियो**
**नरेन्द्रसूनुस्स्वत एव लब्धवान् ।**
**कलासु शश्वत्सकलासु कौशलं**
**गुरूपदेशस्त्वपदेशतामगात् ॥** ॥ 1 ॥

**तत इति** ॥ ततः अनन्तरम् स्वसोदरैस्साकं दिनदिनाभिवृद्धेरुत्तरकाल इत्यर्थः । नरेन्द्रसूनुः राजकुमारः कम्पराजः । यथावत् योग्यतानुरूपं यथाविधीत्यर्थः । तदर्हमिति यथाशब्दात् वतिः । वतिरयं यद्यपि कर्मवाचिनो द्वितीयान्ताद्विहितः । तथापि वृत्तिविषये यथाशब्दस्य सत्त्ववाचित्वमिति योग्यतामर्हति करणमिति क्रियायोगेन तत्सङ्गतिः । अन्यथा तथात्वमित्यादिप्रयोगाणामप्यसङ्गतिस्स्यात् । त्वतलोः षष्ठ्यन्तादेव विहितत्वात् । कृतम् निर्वर्तितम् चौलम् चूडाकर्म उपनयनात्प्राक्कर्तव्यः केशसंस्कारः । तदेव संस्क्रिया संस्कारः गुणाधायकं कर्म यस्य तथोक्तः । तादृशस्सन् । 'कृतचौलसत्क्रिय' इति मातृकापाठः । चौलमिति सत्क्रिया सत्कृत्यम् पुण्यकार्यम् गुणाधायकत्वात् पावकं कार्यमित्यर्थः । कृता चौलसत्क्रिया



यस्य स तथोक्त इत्यस्मिन् पाठे समन्वयः । चूला चूडा तस्या इदम् चौलम् । 'तस्येद' मित्यण् । चौलसंस्कारं प्रत्याश्वलायन एव माह 'तृतीये वर्षे चौलं यथाकुलधर्मं वा' इति । सकलासु समस्तासु कलासु कलाविशेषेषु पदवाक्यप्रमाणधर्मशास्त्रराजनीत्यादिष्वागमविशेषेषु । कुशलस्य भावः कौशलम् नैपुणम् तासु परिनिष्ठितत्वम् पारंगतत्वमिति यावत् । शश्वत् पुनः पुनः क्रमेणेत्यर्थः । स्वत एव स्वयमेव ननु लोकसाधारणो जन इव केवलं गुर्वधीनतयेति भावः । स्वशब्दादात्मार्थकात्प्रथमान्तात्सार्वविभक्तिकस्तसिल् । लब्धवान् प्राप्तवान् । तस्येत्यर्थाल्लभ्यते । गुरोः देशिकस्य उपदेशः शिक्षा विद्यादानप्रयत्न इत्यर्थः । स तथोक्तः । तु पुनरर्थकः । गुरूपदेशः पुन इत्यर्थः । अपदेशताम् व्याजताम् केवललोकविडम्बनार्थतामेवेत्यर्थः । यद्वा – निमित्तभूतताम् कस्मिंश्चित्कार्ये यत्किञ्चित्कारणेनावश्यंभाव्यमिति तन्मात्रप्रयोजनसाधकतामिति यावत् । "आचार्यवान् पुरुषो वेद" इति श्रुतेः गुरुमुखादधिगताया एव विद्यायाः ज्ञानप्रदत्वादिति भावः । 'अपदेशः पुमान् लक्ष्ये निमित्तव्याजयोरपि' इति विश्वः । अगात् अवाप । प्राक्तनसंस्कारबलेन प्रयत्नमन्तरैव सर्वाः कलास्सोऽध्यगच्छदिति निर्गलितोऽर्थः । इणो लुङ् । 'इणो गा लुङि' इति प्रकृतेः गाङादेशः । अस्मिन् सर्गे वंशस्थं वृत्तम् - "जतौ तु वंशस्थमुदीरितं जरा" विति लक्षणात् । सर्गोऽयं कम्पराजविद्याभ्यासेन समुपक्रान्तः, काञ्चीमाक्रम्य मधुराविजयं साधयेति कम्पराजमनुशशास बुक्कराजः कुमारोऽपि सोत्साहं पित्राज्ञां प्रतिजग्राहेत्यभिदधत् परिसमाप्तः ॥

नायकस्य कलाविशेषेषु प्रावीण्यमभिधाय धनुर्वेदेऽपि पारङ्गततां कथयति —

**स तीर्थलब्धायुधशस्त्रसंविदा**
**गुणाभिरामो गुरुणैव शिक्षितः ।**

**शरासनासिप्रमुखेषु शातधी**
**रगच्छदस्त्रेष्वखिलेषु पाटवम् ॥ ॥ 2 ॥**

**स तीर्थेति ॥** गुणैः शौर्यौदार्यादिभिः गुणविशेषैः अभिरामः मनोज्ञः आह्लादकः । शाता कुशाग्रवन्निशिता सूक्ष्मेति यावत् । तादृक् धीः बुद्धिः यस्य तथोक्तः सूक्ष्मबुद्धिः । इदं च विशेषणं पूर्ववद् गुरूपदेशस्य निमित्तमात्रतामत्र सूचयति । सः कम्पराजः । तीर्थात् गुरोः उपाध्यायात् 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ' इत्यमरः । आयुधानि शस्त्राणि खड्गादीनि, शस्त्राणि बाणाः आयुधशस्त्राणि । शस्त्रशब्दश्शस्त्रविशेषं बाणमभिधत्ते । शस्त्राणि चैवमभिहितानि महाभारतव्याख्याने नीलकण्ठीये - "चतुष्पादमिति" - "मन्त्रमुक्तं पाणिमुक्तं मुक्तामुक्तं तथैव च । आमुक्तं च धनुर्वेदे चतुष्पाच्छस्त्रमीरितम्" इति । अस्य विवरणं च तत्रैवैवमुक्तम् "यस्य प्रयोग एवास्ति न तूपसंहारस्तदाद्यम् । बाणादि द्वितीयम् । प्रयोगोपसंहाराभ्यां युक्तं तृतीयम् । चतुर्थं मन्त्रसाधितं ध्वजादि – यद्दर्शनादेव शत्रवः पलायन्ते" इति । बाणादितरे त्रिविधाश्शस्त्रविशेषाः आयुधशब्देनोच्यन्ते, गोबलीवर्दन्यायात् । तेषां संवित् ज्ञानम् - तद्विषयकज्ञानमित्यर्थः । 'संवित्संभाषणे ज्ञाने संग्रामे नाम्नि तोषणे' इति सुधा । लब्धा प्राप्ता समधिगता शस्त्रास्त्रसंवित् येन तथोक्तः । तेन गुरुणा पित्रैव 'गुरुर्गीष्पति पित्रादा' वित्यमरः । अन्येन देशिकेन न केनापीत्येवकारार्थः । शिक्षितः शिक्षावान् विद्योपादानवान् कृतस्सन् । अखिलेषु समस्तेषु निरवशेषेषु । शराः अस्यन्ते क्षिप्यन्ते अनेनेति शरासनम् धनुः । अस्यतेः करणे ल्युट् । असिः खड्गः । ते प्रमुखे आदिभूते येषां तेषु । 'प्रमुखं प्रथमे मुख्ये' इति हैमः । तादृक्षु अस्त्रेषु आयुधेषु । 'आयुधं तु प्रहरणं शस्त्रमस्त्रम्' इत्यमरः । पटोर्भावः पाटवम् सामर्थ्यम् अगच्छत् अवापत् । गत्यर्थास्सर्वे प्राप्त्यर्थाः । पितुरेवायमधिगतधनुर्वेदो बभूवेति सारांशः ॥



पाण्डवास्सर्वे सम्भूय भूमौ कम्पराजरूपेण समवतीर्णा इति तेषां गुणोत्कर्षस्सर्वोऽप्यस्मिन् प्रकथ्यते ॥

**स सत्यवाग्भूरिबलो धनुर्धर**
**स्तुरङ्गमारोहणकर्ममर्मवित् ।**
**कृपाणविद्यानिपुणः पृथाभुवा**
**मर्दाशि सङ्गत इवैकतां गतः ॥ ॥ 3 ॥**

**स सत्येति॥** सत्या तथ्या अनृतरहिता वाक् वचनं यस्मिन् तथोक्तः । सत्यसंध इत्यर्थः । तादृशः । युधिष्ठर इति च गम्यते । आपदि महत्यां संजातायामपि "अश्वत्थामा हतः कुञ्जरः" इति सत्यं परिपालयितुमेव प्रायतत धर्मज्ञ इति कथयति महाभारतम् । भूरि बहुलम् अत्यधिकम् बलम् महाप्राणता यस्य तथोक्तः । तादृशः । भीम इति ज्ञायते । नागलोके नागैर्दत्तममृतं निपीय नागायुतबलो बभूव भीम इति भारती गाथा । धरतीति धरः पचाद्यच् । धनुषः धरः धनुर्धरः इति विग्रहः । धानुष्कः धनुर्विद्यायामत्यन्तं पटुरिति यावत् । तादृशः । 'धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः' इत्यमरः । अर्जुन इति गम्यते । धनुर्विद्यायामेकवीरोऽयं त्रिलोक्यामपीति तच्चरित्रपरिशीलनेन ज्ञायते । लोकैकवीरत्वमस्मै प्रतिज्ञाय तथाकृतं च गुरुणा । तुरेण त्वरया जवेन गच्छन्तीति तुरंगमाः अश्वाः । गमश्चेति खच् । मुमागमः । तेषाम् आरोहणम् अधिरोहणम् तदेव कर्म व्यापारः । तस्य मर्माणि रहस्यानि वेत्तीति क्विप् । स तथोक्तः । अश्वचोदनव्यापारपारीण इति यावत् । तादृशः । नकुल इति गम्यते । महावृष्टावप्यस्पृष्टजलकणः तदन्तरा वाजिनमारुह्य गन्तुं प्रभवति नकुल इति प्रसिद्धिः । कृपाणविद्यायाम् खड्गप्रयोगविज्ञाने निपुणः कुशलः प्रवीणः असियुद्धपारंगत

इति यावत्। 'सप्तमी शौण्डै' रिति समासः। तादृशः। सहदेव इति गम्यते। खड्गक्रीडाकौशलं सहदेवस्य निरुपमानमिति भारत युद्धपरामर्शाद्विज्ञायते। सः कम्पराजः। पृथेति कुन्त्या नाम। तस्याः भवन्ति जायन्त इति क्विप्। पृथाभुवः पाण्डवाः। तेषाम् संघातः समूहः पञ्चापि पाण्डवा इत्यर्थः। 'कुन्तीसुतमध्यम' इति पार्थं व्याजहार तिक्कयज्वा। तदनुयायिनीयं पाण्डवान् सर्वान् पृथाभुव इति व्यवाहरत्। एकताम् एकत्वम् एकाकारवत्त्वम् एक शरीरधरत्वमिति यावत्। गतः प्राप्तवान्। गत्यर्थेति गमेः कर्तरि क्तः। इवेति संभावनायाम्। तथाभूतिकमिति अदर्शि अज्ञायि अमानि जनैरिति शेषः। दृशेः कर्मणि लुङ्। गुणपरिशीलनेन पञ्चापि पाण्डवास्समवेता इवैकस्मिन् राजनि स्थिता इति वर्णनात् स्वरू पोत्प्रेक्षा। तया चाप्युपमानभूतेभ्यः पाण्डवेभ्यः एकैकशोऽतिरिच्य तेऽयमिति व्यतिरेकध्वनिश्च॥

अमुमारभ्य 'सह प्रतापेनेति' श्लोकपर्यन्तं नवयौवनविकासो नायके वर्ण्यते —

**स पञ्चबाणद्विपकेलिदीर्घिकां**
**धरानुरागद्रुमपुष्पमञ्जरीम्।**
**नितम्बिनीनेत्रचकोरचन्द्रिका**
**मवापदास्कन्दितशैशवां दशाम्॥ ॥ 4 ॥**

**स इति॥** सः कम्पराजः पञ्च बाणाः ('अरविन्दमशोकं च चूतं च नवमल्लिका। नीलोत्पलं च' इत्याख्याताः।) यस्य सः तथोक्तः मन्मथः। स एव द्विपः करी यौवने तस्य निर्निरोधप्रस रत्वादेवमुक्तिः। तस्य केलिदीर्घिका क्रीडावापी तथाभूताम् यथेच्छ विहरणयोग्याम् अप्रतिहतं प्रसरतां कामविकाराणामाश्रयभूतामिति



यावत्। किञ्च। धराशब्देन तत्स्थाः प्रजा लक्ष्यन्ते। तस्याः अनु रागः प्रेम स एव द्रुमः वृक्षः। तस्य पुष्पमञ्जरी कुसुमगुच्छः। पुष्पमञ्जरीशब्दे पुष्पशब्दः कर्णावतंसादिषु कर्णशब्द इव सन्निधि बोधकः। तथाभूताम्। प्रजानुरागस्य प्रख्यापिकामिति यावत्। किञ्च। नितम्बिनीनाम् स्त्रीणाम् 'ललना च नितम्बिनी' इत्यमरः। नेत्राणि नयनानि। तान्येव चकोराः चन्द्रिकापायिनः पक्षिविशेषाः। तेषाम् चन्द्रिकाम् चन्द्रकान्तिम् ज्योत्स्नाम् स्त्रीणामत्यन्तम् नेत्रप्रीतिकरी मिति यावत्। आस्कन्दः शोषणम् दाहः स्वरूपादर्शनमित्यर्थः। तद्वत्कृतम् आस्कन्दितम्। आस्कन्दशब्दान्मतुबन्तात्तत्करोतीति ण्यन्ता त्कर्मणि क्तः। 'विन्मतो' रिति मतुपो लुक्। तिरोधापितमित्यर्थः। तादृशम् शैशवम् बाल्यम् यया तथोक्ताम् दशाम् अवस्थाविशे षम् नवयौवनमित्यर्थः। अवापत् प्रापत्। अधिगतवानित्यर्थः। अत्र यौवनदशायाः दीर्घिकात्वादिरूपणम् पञ्चबाणादीनां द्विपत्वादिरूपणे कारणं जातमिति परंपरितरूपकम्। एकस्या एव यौवनदशायाः अनेकथा रूपणमिति मालारूपत्वं तस्येति मालापरंपरितरूपकमलङ्कारः॥

**स नव्यतारुण्यनिरस्तशैशवो**
**विभुर्विभक्तावयवो व्यराजत।**
**वसन्तनिर्धूततुषारमण्डलः**
**पतिर्दिनानामिव तीव्रदीधितिः॥ ॥ 5 ॥**

**स नव्येति॥** नव्यम् नवीनम् नूतनम् सद्यःकालसमुत्पन्नम् तारुण्यम् यौवनम्, तेन निरस्तम् दूरतो निक्षिप्तम् अपसारित मिति यावत्। तादृक् शैशवम् बाल्यम् येन स तथोक्तः। बाल्यदशामप हाय नवयौवनं प्राप्त इत्यर्थः। अतएव विभक्ताः अन्यैरसङ्कुलिताः पृथक् स्थिताः स्वेन रूपेण अत्यन्तं विवृद्धा इति यावत्। तादृशाः अवयवा यस्य स तथोक्तः। तथाविधः सः प्रकृतः प्रभुः विभुः

कम्पराजः व्यराजत अधिकं प्राकाशत । तत्र दृष्टान्तमाह – वसन्तेन तन्नाम्ना ऋतुना निर्धूतम् नितरां कम्पितम् निरस्तमिति यावत् । तुषारस्य हिमस्य 'तुषारस्तुहिनं हिम' मित्यमरः । मण्डलम् समूहः यस्य तथोक्तः । वसन्तापगमितहिमप्रावरण इत्यर्थः । तादृशः । अत एव तीव्राः तीक्ष्णाः अत्यन्तं तेजस्विन्य इत्यर्थः । दीधितयः किरणाः यस्य तथोक्तः । 'किरणोऽस्रमयूखांशुगभस्ति घृणिघृष्टयः । भानुः करो मरीचि स्त्रीपुंसयोर्दीधितिस्स्त्रियाम्' इत्यमरः । दिनानाम् दिवसानाम् पतिः स्वामी ईशः अहर्पतिस्सूर्यः तदधीनत्वाद्दिवसस्य । स इव व्यराजतेति सम्बन्धः । हेमन्तापगमे सूर्यकिरणानां कान्तिमत्त्वं वसन्ते यथा कालतस्सिद्धम् तथा बाल्यापगमे वयस्सिद्धोऽवयवविकासः कम्पराजस्य नितरां जनरञ्जकोऽभूदिति निर्गलितोऽर्थः । पूर्णेयमुपमा ॥

सविलासगमनं नायके प्रस्तूयतेः –

**स सर्वतः पर्वतकन्दराश्रयैः**
**परिग्रहानुग्रहकाङ्क्षिभिर्गजैः ।**
**वितीर्णमुत्कोचतयेव धीरधी**
**रधारयद्विभ्रममन्थरं गतम् ॥** ॥ 6 ॥

**स सर्वत इति ॥** सः राजा ( कर्ता ) सर्वतः सर्वत्र सर्वासु दिक्षु । सार्वविभक्तिकस्तसिः । पर्वतानाम् कन्दराः गुहाः 'दरी तु कन्दरो वा स्त्री' इत्यमरः । त एव आश्रयः निवासस्थानम् येषां तैः । यत्र कुत्रापि कोणे स्थित्वा जनैरविदितैरिति भावः । गजानां गिरिप्रभवत्वं गिरिचरत्वं च प्रसिद्धम् - "हिमवद्विन्ध्यमलयाः गजानां प्रभवा नगाः" इति गजायुर्वेदः । "गिरिचर इव नागः प्राणसारं बिभर्ति" इति कालिदासः । अतएव परिग्रहः स्वसेवार्थमात्मीयत्वेन स्वीकारः । स एव अनुग्रहः अभ्युपपत्तिः



हितसम्पादनाहितनिवारणप्रवृत्तिः तं काङ्क्षन्ति पुनः पुनः अभिलषन्ति तत्परा भवन्तीति तथोक्ताः तैः । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । गजैः करिभिः । उत्कोचः आमिषः प्रभ्वादीनामनुग्रहसम्पादनाय स्वकार्यसिद्धये रहसि दीयमानं द्रविणादि । 'लञ्च उत्कोच आमिषः' इति विश्वप्रकाशः । तस्य भावः तत्ता । तया उत्कोचतया वितीर्णम् दत्तमिव । धीरधीः निर्विकारचेताः जितेन्द्रियः कम्पराजः इत्यर्थः । एतेन महापुरुषत्वमस्य गम्यते । तेन तत्सेवनाभिलाषः, तेन स्वीयवस्तुनोऽनर्घस्य प्रदानेनापि तदनुग्रहसम्पादनम्, तद्द्वारा यशस्सम्पादनप्रयत्नश्च करिणां युज्यते । विभ्रमेण विलासेन मन्थरम् मन्दम् शनैश्शनैः प्रवृत्तम् 'मन्थरं कोशफलयोः भारमन्थानयोः पुमान् । कुसुम्भ्यां न द्वयोर्मन्दे पृथौ वक्रेऽभिधेयवत्' इति मेदिनी । गतम् गमनम् । भावे क्तः । अधारयत् दधार । यथा कश्चन कीर्त्यर्थी स्वनाम लोके प्रख्यापयितुं महान्तमाश्रयति, यथा वा तदनुग्रहसम्पादनाय स्वीयं महार्घं वस्तु तस्मै ददाति तद्वदेवैत इति भावः । गजो यथा सलीलं मन्दमन्दं गच्छति तथायमपि सविलासगामी समभवदिति निष्कृष्टोऽर्थः । महापुरुषसेवायाः कीर्त्यादिसाधनत्वमुक्तमभियुक्तैः – "चेतः प्रसादयति दिक्षु तनोति कीर्तिं सत्सङ्गतिः कथय किं न करोति पुंसाम्" इत्यादिना । अत्र च क्रियास्वरूपोत्प्रेक्षालङ्कारः ।'

पादादिशिरोऽन्तमङ्गसौष्ठवं कम्पराजस्य प्रस्तूयतेऽमुमारभ्य दशभिश्श्लोकैः –

**स रूपगर्वेण निरास्थदङ्घ्रिणा**
**स्मरस्य नूनं जयवैजयन्तिकाम् ।**
**न चेत्कथं तस्य तलेऽतिकोमले**
**सुलेखमालक्ष्यत मीनलाञ्छनम् ॥** ॥ 7 ॥

**स रूपेति** ।। सः कम्पराज़ः । रूपस्य सौन्दर्यस्य ‘रूपं स्वभावे
शुक्लादौ सौन्दर्ये नाटकेऽपि च’ इति नानार्थरत्नमाला । गर्वः
अभिमानः । रूपविद्याधनादिप्रयुक्तात्मोत्कर्षाधीनपरावहेलनं गर्व इति
रसमञ्जरी । तेन । हेतौ तृतीया । हेतुभूतेन गर्वेणेत्यर्थः । “अल्प
विद्यो महाग” र्वीति निष्कारणगर्वस्यैव दूषितत्वादिति भावः ।
स्मरस्य मन्मथस्य जयः सर्वोत्कर्षः तस्य वैजयन्तिकाम् पताकाम्
असाधारणचिह्नभूताम् । सौन्दर्यस्यावधिरयमेवेति प्रख्यापिकामित्यर्थः ।
‘प्रद्युम्नो मीनकेतन’ इति मदनस्य मीनध्वजत्वेन प्रसिद्धेर्मत्स्य
रूपामिति गम्यते । अङ्घ्रिणा चरणेन वामेनेति ज्ञायते । अन्यतिर
स्क्रियावसरे लोके तस्यैवोपयुज्यमानत्वात् । ‘पदङ्घ्रिश्चरणोऽस्त्रियाम्’
इत्यमरः । निरास्थत् व्यक्षिपत् प्राहरत् । सौन्दर्यविजितमन्मथे
स्वस्मिन् स्थितवति तादृग्विजयपताकायास्स्वयशोहानिकरत्वादिति
भावः । निर्पूर्वकादस्यतेः ‘अस्यतेः स्थु’ गिति थुक् । अनेन लोकैक
सुन्दराद्रतिपतेरप्यतिशायि सौन्दर्यमस्येति ज्ञायते । नूनम् । अन्यथा
कथमिदं संघटत इति भावः । तत्र च हेतुं व्यतिरेकमुखेन ब्रूते ।
न चेत् न यदि एवं न भवति यदीत्यर्थः । तस्य कम्पराजस्य
अतिकोमले अत्यन्तं मृदुनि स्पर्शनमात्रेणापि म्लायतीति यावत् । तले
अधःप्रदेशे ‘अधस्स्वरूपयोरस्त्री तल’ मित्यमरः । अर्थात् पादयो
रित्यवगम्यते । सु सुष्ठु विशदाः लेखाः रेखाः यस्मिन्
तथोक्तम् । शोभनाः लेखाः यस्येति व्युत्पत्त्या शोभनाकारवदिति
च गम्यते । ‘सु पूजायां भृशार्थेऽनुमतिकृच्छ्रसमृद्धिषु’ इति मेदिनी ।
‘रेखा लेखा भवेत्’ इति च द्विरूपकोशः । मीनः मत्स्यः स एव
लाञ्छनम् तदाकारं चिह्नम् । कथम् केन प्रकारेण आलक्ष्यत
आङ्कचत सुदृढमासज्यत । तत्पादतलयोः सुविशदमीनरेखावत्त्वम्,
मन्मथविजयध्वजीयकम्पराजगाढपादताडनानुमापकमिति भावः । सुलेख
मित्यनेन स्वाश्रयसौन्दर्यादतिशेते मीनरेखेयं मन्मथवैजयन्तिकामिति च



व्यज्यते । आलक्ष्यत इति आङ्पूर्वाल्लक्ष दर्शनाङ्कयोरित्यस्माल्लङ् ।
अत्र पूर्वार्धेन कम्पराजः स्मरविजयपताकापादताडनवान् इति ज्ञाप्यं
निर्दिश्य तदुत्तरार्धेन पादतलयोः सुदृढमीनलाञ्छनलाञ्छितत्वात् इति
ज्ञापकनिर्देशः कृत इत्यनुमानोऽयमलङ्कारः । लक्षणं तु “साध्यसाधन
मात्रोक्तावनुमानमुदीरयेत् । तर्कानुमानरूपाभ्यां तत्प्रवृत्तिर्द्वयी भवेत् ।।”
इति । लक्षणेऽस्मिन् साधनमात्रेति मात्रचा व्याप्तिपक्षधर्मतयोः प्रद
र्शनं निरस्यते । तयोरपि प्रदर्शने तार्किकानुमानत्वापातात् । केचित्तु
तयोरपि निर्देशोऽवश्यंभावीति मन्यन्ते । तार्किकानुमानाद्वैलक्षण्यं तु
श्लेषरूपकापह्नवातिशयोक्त्याद्यालम्बनेनेति ते वदन्ति । तन्मते काव्य
लिङ्गभेदोऽयमिति सुवचः । अनुमानोऽयमिति पक्षे नूनमित्ययमयोग
व्यवच्छेद्यतां साध्यस्य कथयन्ननुमानस्य वाचकतां साधयतीति दिक् ।
मत्स्यरेखायाः फलं सामुद्रिका एवमामनन्ति – “यस्य मीनसमा
रेखा कर्मसिद्धिश्च जायते । धनाढ्यस्तु स विज्ञेयो बहुपुत्रो न
संशयः ।।” इति । पादसौकुमार्यस्यापि त एव फलमाहुः - “मृदुत्वे
पादतलयोर्भवेद्वाहनसौख्यभाक्” इति । “मानवा मौलितो वर्ण्याः
देवाश्चरणतः पुनः” इति जाग्रत्यपि कविसमये साक्षाद्विष्णुत्वेन स्व
भावनाभावितस्य कम्पराजस्य देवताया इव वर्णनं पतिदेवतायाः अस्याः
कवयित्र्याः नोचितमिति न । काव्येऽस्मिन् बहुवारमनया विष्णुरय
मिति वर्णितत्वाद्वर्णयिष्यमाणत्वाच्च ।।

**शुभाकृतेस्तस्य सुवर्णमेखलं**
**कटिस्थलं स्थूलशिलाविशङ्कटम् ।**
**व्यडम्बयन्नूतनधातुपट्टिका**
**परिष्कृतामञ्जनभूभृतस्तटीम् ।।** ।। 8 ।।

**शुभाकृतेरिति** ।। शुभा शोभना आकृतिः अवयवसंस्थानम्
यस्य तस्य शुभलक्षणलक्षितस्येत्यर्थः । तस्य राज्ञः । सुवर्णस्य

विकारभूता मेखला सुवर्णमेखला । 'सङ्घातविकारषष्ठ्याश्चोत्तरपद लोपश्च' इति विकारशब्दस्य लोपः। अथवा सुवर्णशब्दस्य सुवर्ण विकारे लक्षणेति वा। स्वर्णमयं कटीभूषणं यस्य तथोक्तः। 'स्त्री कट्यां मेखला काञ्ची सप्तकी रशना तथा' इत्युक्त्वा 'स्त्रीकटी भूषणमेव मेखले' त्यमरसिंह आह – तथापि 'स्त्री' इत्यविवक्षितम् पुंस्कटिभूषणेऽपि इति व्याख्यातारः। स्थूलशिला बृहत्पाषाणम् सेव विशङ्कटम् विशालम् 'विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्' इत्यमरः। कटिस्थलम् श्रोणिप्रदेशः। कर्ता। 'कटो ना श्रोणिफलकम्' इत्यमरः। नूतनाः नूतनाः धातुपट्टिकाः फलकवद्विशालाः गैरिकादि धातवः अश्मविकाराः 'इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः' इत्यमरः। तैः परिष्कृताम् अलङ्कृताम् 'संपरिभ्यां करोतौ भूषणे' इति सुट्। 'परिनिविभ्य' इति षत्वम्। अञ्जन इति भूभृत् अञ्जनभूभृत् अञ्जननामा अचलः वेङ्कटाद्रिरिति यावत्। तथाचोक्तं ब्रह्माण्डपुराणे – "श्रीवेङ्कटगिरिर्नाम क्षेत्रं पुण्यं महीतले" इत्युपक्रम्य ... ... अञ्जनाद्रिर्वृषाद्रिश्च वेदाद्रिर्गरुडाचलः। तीर्थाद्रिश्श्रीनिवासाद्रिश्चिन्तामणिगिरिस्तथा ॥ वृषभाद्रिर्वराहाद्रिर्ज्ञानाद्रिः काञ्चनाचलः। आनन्दाद्रिश्च नीलाद्रिः क्रीडाद्रिः पुष्कराचलः ॥ सिंहाचलश्च श्रीशैल इति नामानि विंशतिः।" इति। तस्य तटीम् भूमिम् प्रदेशम् व्यडम्बयत् अन्वकरोत्। तया तौल्यमभजदित्यर्थः। उत्तमसुवर्णस्य लौहित्यमिति कविसमयः। गैरिकादिधातवो रक्तवर्णाः। महोन्नतस्य तस्य कनकमेखलालङ्कृतो महान् कटिप्रदेशः गैरिकादिधातुमण्डितस्य गिरेस्तट इवाभातीति सावयवोपमा धर्मलुप्तेयम्। उपमावाचकेषु च दण्डी "विडम्बयति संधत्ते हसतीर्ष्यत्यसूयति" इत्येवं पपाठ ॥

सिंहमध्योऽयमिति प्रब्रूते –

**अधारयद्दर्शितदेहसौष्ठवां**
**स राजसूनुस्तनुवृत्तमध्यताम् ।**



**पराक्रमत्रासितचित्तवृत्तिभि**
**र्मृगाधिराजैरुपदीकृतामिव ॥** ॥ 9 ॥

**अधारयदिति** ॥ सः राजसूनुः नृपकुमारः कम्पराजः देहस्य शरीरस्य। सुष्ठु भावः सौष्ठवम् अतिशयितत्वम् आधिक्यम् सौभाग्यमिति यावत्। 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' इत्यमरः । "सुष्ठुशब्दात् 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' इत्युद्गात्रादित्वेनाञ्" इति मल्लिनाथः। दर्शितम् विलोकितम् द्रष्टृभ्यः अप्रतिहततया दर्शनविषयीकृतम् देहसौष्ठवम् यया ताम्। स्वस्य (अवलग्नस्य) सूक्ष्मत्वेन स्वप्रतिरोधाभावात् तद्देहसौभाग्यं सर्वेषां सुस्पष्टं दर्शनीयमभूदिति भावः। तनुः सूक्ष्मः वृत्तः वर्तुलः मध्यः अवलग्नः यस्य तथोक्तः। तत्ताम्। 'मध्योऽवलग्नं विलग्नं मध्यमः' इति नाममाला । 'तनुवृत्तमध्यमा' मिति तु मातृकापाठः। अस्मिन् पाठे मध्यमशब्दस्य अवलग्नवाचकत्वेऽपि स्त्रीलिङ्गता तस्य चिन्त्या। 'मध्यमो मध्यजेऽन्यवत् । पुमान् स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम्। स्त्रियां दृष्टरजोनार्यां कर्णिकाङ्गुलिभेदयोः' इत्यादिभिः पुंलिङ्गवाचकताया एव दर्शनात्। पराक्रमेण स्वविक्रमेण स्वशौर्यप्रदर्शनेनेति यावत्। त्रासिताः त्रासवत्यः कृताः चित्तवृत्तयः मनोव्यापाराः येषाम् तैः तत्पराक्रमदर्शनाद्विभीतचित्तैरित्यर्थः। मृगाणाम् सत्त्वानाम् पशूनाम् अधिराजानः मृगाधिराजाः मृगेन्द्राः सिंहाः। 'मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः' इति विश्वः मेदिनी च। 'राजाह' इति टच्। तैः उपदीकृताम् उपहारीकृताम् 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः। अभूततद्भावे च्विः। स्वानुरक्तं तं कर्तुं समर्पितोपायनभूतामिवेत्यर्थः। इवेति सम्भावनायाम्। अधारयत् अधत्त पर्यग्रहीदित्यर्थः। सिंहमध्योऽयं केवल सौन्दर्यभूमैव न, पराक्रमेणाप्यतिशेते सिंहानिति प्रतीयते । स्वरूपो

त्प्रेक्षेयम् । धृङ् अवस्थाने इत्यस्मात् हेतुमण्ण्यन्ताल्लङ् । चुरादेराकृतिगणत्वात् धृ इत्यस्य स्वार्थणिजन्तोऽयमिति वक्तुं न युज्यते । ‘ षिद्भिदादिभ्योऽ ’ ङिति सूत्रे ‘ धारा प्रपतन ’ इति वक्तव्यम् — इत्यत्र ‘ धृतिरन्या ’ इत्येवाह महाभाष्यकृत् । न चाह ‘ धारणान्या ’ इति । अतएव चुरादिगणपठितोऽयमित्युक्तिर्न महाभाष्यकृदभिप्रेता । स्पष्टीकृतं चेदं सर्वं पुरुषकाराख्ये दैवव्याख्याने लीलाशुकेन - “ धृञ् — धारणे धृ — धारणे ’ इत्यपि चुरादौ क्षीरस्वामी । तत्र ‘ धारयति — धारयते । चुरादेराकृतिगणत्वाद्धारयतीति हेमचन्द्रः । न्यासे तु ‘ धारेरुत्तमर्णः ’ ( १ अ. ४ पा. ३६ सू. ) इत्यादिषु ध्रियतेर्हेतुमण्णिच्येव धारिर्व्युत्पाद्यते । ‘ षिद्भिदादिभ्योऽङ् ’ इत्यत्र ‘ धारा प्रपातन ’ इति वक्तव्यम् - धृतिरन्या ’ इति भाष्यम् । तत्र च ‘ धृतिरन्ये ’ ति ब्रुवता ‘ ऋदृशोऽङि गुणः ’ ( ६ अ. ४ पा. १६ सू. ) इति गुणे कृते दीर्घत्वनिपातने धरतेरेव धारेत्यभिप्रेयते । न पुनस्समानार्थत्वेऽपि धारयतेः । यदि सोऽपि चुरादिष्व पठिष्यत् धारणाऽन्येत्येवावक्ष्यत्, कृतं निपातनक्लेशेन, इति । कवयस्त्वेनं बहुलं प्रायुञ्जत । ‘ अधारयन् स्रजः कान्ता ’ इति भट्टिः । ‘ अन्यूनं गुणममृतस्य धारयन्ती ’ इति माघः । ‘ मुक्तावलीमविनयपताकमिव धारयन्त ’ मिति भट्टबाणः । ‘ मासादूर्ध्वं न शक्नुयां प्राणान् धारयितुम् इति भोजः । विशदीकृतं चेदं सर्वं मदीयान्ध्रव्याख्यापीठिकायाम् ॥

विशालवक्षा अयमिति वर्ण्यते —

**व्यराजतोरस्थलमस्य तावता**
**विशालभावेन कवाटबन्धुरम् ।**
**करीन्द्रकुम्भप्रतिमं मृगीदृशां**
**कुचद्वयं याति न यावता बहिः ॥** ॥ 10 ॥



**व्यराजतेति** ॥ अस्य राज्ञः कवाटवत् बन्धुरम् रम्यम् आह्लादकम् सन्तोषजनकम् वैशाल्यवदित्यर्थः । ‘ बन्धूरबन्धुरौ रम्ये नम्रे हंसे तु बन्धुरः ’ इति रभसः । वक्षस्थलम् उरःप्रदेशः । कर्तृ । ‘ उरो वत्सं च वक्षश्च ’ इत्यमरः । स्थली अकृत्रिमा भूमिः । जानपदेति ङीष् । स्थली त्वकृत्रिमा स्थलं तूभयसाधारणमित्यभियुक्ताः । मृगीदृशः इव दृशः यासां ताः तथोक्ताः हरिणीनयनाः सुन्दर्यः स्त्रियः । कुम्भस्तनवत्त्वस्य तास्वेवौचित्यसम्पादकत्वादेवमुक्तिः । उष्ट्रमुखादिवत्समासः । तासाम् । करीन्द्राः गजश्रेष्ठाः तेषाम् कुम्भाः शिरःपिण्डाः । ‘ कुम्भौ घटेभमूर्धांशौ ’ इत्यमरः । त एव प्रतिमाः उपमानानि यस्य तथोक्तम् । गजकुम्भवदत्युन्नतमित्यर्थः । एतस्मादेव वक्षस्सम्मर्देनातिवैशाल्यं प्राप्तुं योग्यतास्येति भावः । कुचयोः स्तनयोः द्वन्द्वम् द्वौ स्तनावित्यर्थः । यत् परिमाणमस्य यावान् तेन । ‘ यत्तदेतेभ्यः परिमाणे वतुप् ’ इति मतुबर्थे वतुप् । ‘ आ सर्वनाम्न ’ इत्याकारः । यादृक्परिमाणवता विशालभावेनेति यावत् । बहिः बाह्यम् वक्षस्थलाद्बहिस्थं प्रदेशम् । ‘ बहिर्बाह्ये ’ इत्यमरः । न याति न गच्छति न प्राप्नोति । तावता तत्परिमाणमस्य । पूर्ववन्मतुप् । तादृशेन विशालभावेन वैपुल्येन । करणभूतेन । व्यराजत अशोभत । अत्युन्नतं तत्सतीकुचयुगं गाढालिङ्गसम्मर्दादतिविपुलं सत् तद्वक्षोदेशमतिक्रम्य बहिरायातुं कथमपि न शशाक । तदन्तरेव स्थित्वा तस्मिन् लीनमासीदित्यत्युक्तिरलङ्कारः । करीन्द्रकुम्भप्रतिममिति पदार्थस्सोऽयं विशेषणगत्या तस्याः जीवातुरभूदिति काव्यलिङ्गभेदानुप्राणिता चेयमलङ्कृतिः । अनया प्रेम्णा तं गाढमालिङ्गयन्त्यः स्त्रियस्सर्वाः अन्यत्र दुरधिगमं सौख्यातिशयं तत्रानुभवत्यो नान्यं जनं मनसाऽपि न स्मरन्त्यः पतिव्रता भवन्तीति च व्यज्यते इति अलङ्कारेण वस्तुध्वनिः ॥

तस्य बाहू वर्णयति —

**घनांसपीठौ कठिनारुणाङ्गुली**
**पटुप्रकोष्ठौ परिघानुकारिणौ ।**
**महौजसस्तस्य मनोहरौ भुजा**
**वपश्यदाजानुविलम्बिनौ जनः ॥** ॥ 11 ॥

**घनांसेति** ॥ जनः जनसमूहः प्रजा इत्यर्थः । महत् विपुलम्
ओजः तेजः बलं वा यस्य महौजाः । तथाविधस्य तेजस्विनो बल
वतो वा इत्यर्थः । तस्य राज्ञः घनौ अत्युन्नतौ अंसपीठौ भुजशिरसी
ययोस्तौ वृषस्कन्धाविवात्युन्नतभुजाग्रभागावित्यर्थः । किञ्च । कठिने
ज्याघर्षणात् क़र्कशे ज्याकिरणैरङ्किते इति यावत् । अरुणे ताम्रे
रक्तवर्णे अङ्गुली करशाखे ययोस्तौ । 'अङ्गुलिः करशाखायां कर्णि
कायां गजस्य च' इति हैमविश्वप्रकाशौ' । किञ्च । पटू दृढौ ज्याघा
तादिना व्यथितौ 'प्रकोष्ठौ मणिबन्धस्य कूर्परस्याप्यन्तराप्रदेशौ ययो
स्तौ । 'प्रकोष्ठमन्तरा विद्यादरत्निमणिबन्धयो' रिति कात्यः । 'प्रकोष्ठो
मणिबन्धस्य कूर्परस्यान्तरेऽपि च' इति मेदिनी । किञ्च । परिघम्
अर्गलम् अनुकुरुत इति परिघानुकारिणौ कवाटरोधनकाष्ठसदृशौ
तद्वत्पीनौ दीर्घौ चेति भावः । 'परिघोऽस्त्रे योगभेदे परिघातेऽर्ग
लेऽपि च' इति हैमः । किञ्च । जानू अभिव्याप्य आजानु
अभिविधावव्ययीभावः । आजानु यथा भवति तथा विलम्बिनौ
अधिकं लम्बमानौ जानुपर्यन्तं व्याप्तावित्यर्थः । अतएव मनोहरौ
सुन्दरौ भुजौ बाहू अपश्यत् आलोकयामास ऐक्षत । अतितृष्णयेति
शेषः । सकलजनानन्दकारिणौ तस्य बाहू इति भावः । अनेन
राज्ञि वीरत्वभाग्यवत्त्वादयो गुणा वर्णिताः भवन्ति । बाहुदैर्घ्यस्य
हस्तकाठिन्यस्य समुन्नतभुजशिरस्कत्वस्य च सामुद्रशास्त्रे फलमेव
मुक्तम् । "दोर्दीर्घत्वे भाग्यवान् भवेत्" " यस्य हस्ततलं सम्यक्कठिनं



स हि कर्मकृत् " । " कक्षः कुक्षिश्च वक्षश्च घ्राणस्कन्धललाटकम् "
( तद्वर्धिष्णु षडुन्नतम् ) " यशस्विनो महावीर्या धनिनश्च भवन्ति
ते " इति ॥

तस्य मुखं प्रस्तौति —

**विहाय मध्यं यदि लक्ष्मरेखया**
**बहिः प्रसार्येत सुधांशुमण्डलम् ।**
**दरोदितश्मश्रुधृतश्रियस्तदा**
**तदाननेन्दोरुपमानतां व्रजेत् ॥** ॥ 12 ॥

**विहायेति** ॥ लक्ष्म कलङ्कः । 'कलङ्काङ्कौ लाञ्छनं च
चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । तस्य रेखा आकारः
कलङ्कः इत्यर्थः । तया । मध्यम् चन्द्रबिम्बस्य मध्यप्रदेशम् विहाय
त्यक्त्वा परित्यज्य बहिः बाह्ये ( चन्द्रमण्डलस्य ) बहिःप्रदेशे प्रसा
र्येत यदि व्याप्येत चेत् । सम्भावनायां लिङ् । चन्द्रबिम्बान्तःपरि
दृश्यमानः कलङ्कः तद्बहिर्गतत्वेन संभवति यदीत्यर्थः । तदा तदानीम्
तस्मिन् समये तथा संभवतीत्यर्थः । सुधांशुः चन्द्रः तस्य
मण्डलम् बिम्बः । कर्तृ । 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः ।
दरम् मनाक् ईषत् अल्पं यथा तथा उदितम् उत्पन्नम् 'दरं
त्वव्ययमल्पार्थे' इति नानार्थरत्नमाला । यौवनस्य तदानीमेव प्रादुर्भा
वादिति भावः । श्मश्रु मुखस्थं रोमजातम् तथोक्तम् । 'तद्वृद्धौ
श्मश्रु पुम्मुखम्' इत्यमरः । तेन धृता पुष्टा वृद्धिं प्राप्ता ।
धृञ् धारणपोषणयोरिति पोषणार्थकाद्धरतेः क्तः । तादृक् श्रीः शोभा
यस्य तादृशस्य । तदाननेन्दोः – तदाननम् इन्दुरिव तदाननेन्दुः
तदीयमुखचन्द्रः तस्य । उपमानताम् सादृश्यम् व्रजेत् प्राप्नुयात् । तेन
सदृशो भवेदित्यर्थः । संभावनायां लिङ् । अन्त(रा) स्थितकलङ्कं

चन्द्रबिम्बमन्तःकलङ्कविरहितमुखचन्द्रेण साम्यमादधत् पूर्वं दूरे स्थितम्, इदानीं नवयौवनोदये कलङ्कवत् किञ्चिदुत्पद्यमानश्मश्रुसंवलितं तन्मुखचन्द्रं शोभमानं दृष्ट्वा तमनुकर्तुमभिलषति यदि स्वकलङ्कं मध्यगतं बहिः प्रकाशय्य सफलमनोरथं भवेदिति तर्कयामीति निष्कृष्टोऽर्थः । निरुपमाना तदाननश्रीरिति भावः । यद्यर्थोपमेयमिति नवीनाः । प्राचीनास्तु बहिः कलङ्कवतश्चन्द्रस्य स्वतोऽसम्बन्धेऽपि सम्भावनायां तत्सम्बन्धकथनादतिशयोक्तिरियमित्याचक्षते । अभूतोपमेयमुपमानाप्रसिद्धेरिति प्राचीनतमाः । आननेन्दाविन्दौ च स्थितयोश्श्मश्रुकलङ्कयोरेकस्य धृतश्रीकत्वं वर्णितमित्युपमेयोत्कर्षस्य गम्यमानत्वाद्व्यतिरेकध्वनिरपि । गुरुदारागमनादिना संप्राप्तपापपङ्क एव कलङ्कत्वेन विद्यते निगूढतया चन्द्रे पापपङ्ककलङ्कयोरभेदेनाभिधानात् । स यदि बहिः प्रकटितो भवति तदानीं निष्कलङ्कस्य नवयौवनसञ्जातश्मश्रुशोभाभिरामस्य तदाननस्य नितरां साम्याभाव एव तेनेति 'धृतश्रियः' 'कलङ्करेखया' 'व्रजेत्' इत्यादिभिः काचन स्फूर्तिरपि । चन्द्रस्य स्त्रीग्रहत्वेन यथाकथमप्यसम्भावितरोमवृद्धेस्तादृशशोभासम्पादनं नैव संभवतीति च गम्यते । 'धृतश्रिय' इत्यत्र 'कृतश्रिय' इति परिष्कर्तॄणां संस्कारश्चिन्त्यप्रयोजनः । मातृकापाठेनैव व्याख्यातदिशा यथास्थितस्यैवोपपत्तेः ॥

रक्तायतलोचनत्वमस्मिन् कथ्यते —

**विनिद्रपङ्केरुहदामदीर्घयो**
**र्दृशोरुपान्ते जनितोऽस्य शोणिमा ।**
**अनर्गलस्वप्रसरप्ररोधकृ**
**श्रुतिद्वयीदर्शितरोषयोरिव ॥** ॥ 13 ॥

**विनिद्रेति** ॥ अस्य राज्ञः विनिद्राणि विकसितानि पङ्केरुहाणि



पद्मानि तथोक्तानि । तेषाम् दाम माला 'माला तु पङ्क्तौ पुष्पादिदामनि' इति हैमः । तद्वत् दीर्घयोः आयतयोः विस्तृतयोः दृशोः नेत्रयोः उपान्ते (अन्तयोस्समीपे) । सामीप्येऽव्ययीभावः । नेत्रान्तयोस्समीपे इति यावत् । शोणिमा आरुण्यम् । 'वर्णदृढादिभ्यः ष्यञ्' चेति चादिमनच् । जनितः जातः । रक्तनेत्रान्तोऽभवदित्यर्थः । 'जनी प्रादुर्भावे' इत्यस्मात् 'गत्यर्थाकर्म' केति कर्तरि क्तः । तत्र हेतुं सम्भवयते --अनर्गलम् अप्रतिरोधम् निर्निरोधं यथा तथा स्वप्रसरः स्वीयव्याप्तिः यथेच्छं दृशोर्गमनमिति यावत् । तस्य प्ररोधिका निरोधिका तथोक्ता । आकर्णमायतलोचनत्वादस्येति भावः । 'कर्तरि' चेति समासनिषेधस्तु न । कर्तरि षष्ठ्या एव स निषेध इति वृत्तिकारादिभिर्व्याख्यातत्वात् । शेषषष्ठ्या साकं समासो वा । तादृशी श्रुतिद्वयी तथाविधौ कर्णौ । कर्मधारयस्समासः । 'पुंवत्कर्मधार' येति पुंवद्भावः । तस्यां दर्शितः प्रदर्शितः प्रकटीकृतः निजस्वैरगमनस्य ताभ्यां निरुद्धत्वात् तद्विषये प्रवर्तितः रोषः कोपः ययोस्तौ तथोक्तौ । 'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियाम्' इत्यमरः । इवेति सम्भावनायाम् । तथाविधौ भवतां किमित्युत्प्रेक्षा । रक्तनेत्रान्तः कर्णान्तविश्रान्तदृष्टिश्चायमिति निर्गलितोऽर्थः । यथाहुस्सामुद्रविदः - "पाणिपादतले रक्ते नेत्रान्ते च नखास्तथा । तालुजिह्वाधरोष्ठानि सप्तरक्तं श्रियः पदम्" "स्तनयोरन्तरं चैव कराक्षिहनुनासिकम् । दीर्घं यस्य स लक्ष्मीवान् पञ्चदीर्घ इति स्मृतः" इति ॥

नासामस्य प्रस्तौति —

**अनुल्बणामायततुङ्गबन्धुरा**
**ममंस्त लोकः स्फुटमस्य नासिकाम् ।**
**विशृङ्खलव्याप्नुवदीक्षणद्वयी**
**परस्पराक्रान्तिनिवारणार्गलाम् ॥** ॥ 14 ॥

**अनुल्बणामिति ॥** लोकः जनः । उल्बणा निम्नोन्नता, सा न भवतीति अनुल्बणा समनासापुटेत्यर्थः । ताम् । " भ्रुवौ नासा पुटौ यस्य समौ ज्ञेयस्स भूपतिः " इति सामुद्रिकोक्तेः । आयता दीर्घा तुङ्गा उन्नता ( अतएव ) बन्धुरा सुन्दरा । तथाविधाम् । नासिकाया औन्नत्यस्य दैर्घ्यस्य च फलमेवं दर्शितं सामुद्रे - " दीर्घकर्णं तुङ्गनासं शूरपण्डितलक्षणम् " " दीर्घत्वे ... भाग्यवान् भवेत् " इति च । अस्य नृपस्य नासिकाम् नासाम् । विशृङ्खलम् निरर्गलम् यथेच्छमित्यर्थः । व्याप्नुवत्याः प्रसरन्त्याः ईक्षणद्वय्याः नेत्रद्वन्द्वस्य । कर्मणि षष्ठी । परस्परम् अन्योन्यम् । आक्रान्तम् आक्रमणम् अन्योन्य संघर्षणम् इतरेतरसम्मर्दनमिति यावत् । आक्रान्तमिति आङ्पूर्वा त्क्रमेर्भावे क्तः । तस्य निवारणम् निरोधः । तत्र तस्मिन् विषये । अर्गलाम् परिघाम् तत्सदृशीम् तन्निवारणसाधनभूतामित्यर्थः । ' तद्विष्कम्भेऽर्गलं न ना ' इत्यमरः । अमंस्त अमन्यत । मन ज्ञाने इत्यस्माल्लुङ् । अनुदात्तत्वादिडभावः । स्फुटम् नूनमित्युत्प्रेक्षा । तस्य नासिका नेत्रव्याप्तिं प्रतिरोद्धुं मध्ये स्थापिताऽर्गलेव प्रतिभातीति वस्तूत्प्रेक्षेयम् ॥

तस्य केशपाशं प्रकथयति —

**अधारयद् गर्भितरक्तसन्ध्यकं**
**नृपात्मजः केशकलापमायतम् ।**
**दृढानुरागच्छुरितैर्मृगीदृशा**
**मनुप्रविष्टं हृदयैरिवान्तरा ॥** ॥ 15 ॥

**अधारयदिति ॥** नृपस्य आत्मजः नृपात्मजः राजकुमारः । दृढः गाढः अनुरागः अनुरक्तिः प्रेमा स तथोक्तः । तेन छुरितैः रूषितैः आच्छादितैः अनुरागमयैः इति यावत् । मृगीदृशाम् सुन्दरी



णाम् हृदयैः मनोभिः । अन्तरा अन्तरे मध्यभागे 'अथान्तरेऽन्तरा । अन्तरेण च मध्ये स्युः' इत्यमरः । अनुप्रविष्टम् तदन्तर्निविष्ट मिवेति सम्भावना । गर्भितानि गर्भवन्ति मध्यभागस्थितवन्ति कृतानि रक्तसन्ध्यकानि रक्तकल्हाराणि हल्लकानि यस्मिन् तत् । 'हल्लकं रक्तसन्ध्यक' मित्यमरः । रक्तसन्ध्यकैरलङ्कृतस्वमध्यभागमित्यर्थः । आयतम् दीर्घम् केशकलापम् केशपाशम् केशसमूहः । कर्म । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । अधारयत् अधत्त । रक्तसन्ध्यकैरलङ्कृतस्तस्य केशपाशस्सुन्दरीणां गाढानुरागजनकस्सन् तासां हृदयान्यपाहरदिति भावः । अनुरागस्य रक्तवर्णता कविसमयसिद्धेत्यु त्प्रेक्षायास्सङ्गतिः ॥

यशःप्रतापसौभाग्याख्याः नायकगुणाः अस्मिन् वर्ण्यन्ते —

**सह प्रतापेन समुन्नतिं वपु**
**र्वलक्षभावं यशसा विलोचने ।**
**गुणैः परीणाहममुष्य कन्धरा**
**स्वरेण गाम्भीर्यमगच्छदाशयः ॥** ॥ 16 ॥

**सहेति ॥** अमुष्य राज्ञः वपुः शरीरम् । प्रतापः पौरुषम् तेज इत्यर्थः । 'प्रतापौ पौरुषातपौ' इति नानार्थरत्नमाला । तेजसो लक्षणं तु " अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणा त्ययेऽप्यसहनं तत्तेजस्समुदाहृतम् " इति । अमरस्तु – 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्याह । तेन सह समुन्नतिम् औत्कृष्टयम् औन्नत्यम्, विलोचने नेत्रे यशसा कीर्त्या सह वलक्ष भावम् धवलताम्, 'वलक्षो धवलोऽर्जुनः' इत्यमरः । कन्धरा शिरोधिः ग्रीवा 'कन्धरो वारिवाहे स्याद् ग्रीवायां कन्धरा मता' इति विश्वः । गुणैः सुगुणैस्सह परीणाहम् वैशाल्यम् बाहुल्यं च । आशयः हृदय

गतोऽभिप्रायः लक्षणया तत्स्थानं हृदयमुच्यते । 'आशयौ स्थान तात्पर्ये' इति नानार्थरत्नमाला । स्वरेण कण्ठध्वनिना सह गाम्भीर्यम् अगाधताम् आकारगोपनम् मेघध्वनिवत् मधुरतां च । अगच्छत् अवाप । शरीरावयवा: यथा दिनदिनमभिवृद्धिमगमन् तथा प्रतापादयः इति कल्पितोपमा नायकसमुत्कर्षस्य व्यञ्जिकेति सहोक्तिरलङ्कारः । अत्र प्रतापवान् यशस्वी गुणाढ्यो गम्भीराशय इति नायकस्वभावः, महोन्नतो निरवद्यकीर्तिविशालकन्धरो गम्भीरस्वर इति तत्स्वरूपं च समुपवर्णितम् । बाणोऽप्येवमेव कादम्बर्यां चन्द्रापीडं सहोक्त्याऽवर्णयत् — "प्रतापेन सहारुरोह रोमराजिः, चरितेन सह धवलतामभजत लोचनयुगलम्, स्वरेण सह गम्भीरतामाजगाम हृदयम्" इति ॥

विवाहस्य समुचितं वयोगुणरूपाद्यभिवर्ण्य परिणयमद्य वर्णयति —

**अथैनमासादितयौवनोदयं**
**नरेन्द्रकन्याभिरयोजयन्नृपः ।**
**घनागमस्संभृतरत्नसम्पदं**
**वरापगाभिर्निधिमम्भसामिव ॥** ॥ 17 ॥

**अथेति** ॥ अथ विवाहयोग्यताप्राप्तिसमनन्तरभाविनि काले नृपः महाराजो बुक्कः । आसादितः संप्राप्तः यौवनोदयः नवयौवनम् येन तम् । एनम् पूर्वकथितभाग्यसौभाग्यवत्त्वादिगुणगणोपेतं राजकुमारम् । 'द्वितीयाटौस्स्वेन' इत्येतदोऽन्वादेशे एनादेशः । नरेन्द्रकन्याभिः राजकुमारीभिः । नरेन्द्रकन्याभिरित्यनेन तासामाभिजात्यसमृद्धिरपि सूचिता । 'कन्या कुमारिकानार्योः' इति मेदिनी । अयोजयत् संयोजयामास । यथाविधि तासां पाणिग्रहणमकारयदित्यर्थः । तत्र दृष्टान्तमाह — घनस्य मेघस्य आगमः आगमनम् वृष्टचर्थमित्यर्थः । आद्यो मेघोदय इति यावत् । सोऽस्मिन्नस्तीति अर्श — आदित्वादच् । घनागमः वर्षर्तुः । पुंलिङ्गनिर्देशोऽयं वरवधूसंयोजकतामस्य गमयति । ग्रीष्मे कृशानां नदीनां वर्षासु प्रवाहाधिक्येन सागरगमनस्य लोकदृष्टत्वात् वरवध्वोस्संयोजकोऽयमिति युज्यते । संभृता सम्पूर्णा रत्नानां संपत् आधिक्यम् यस्मिन् तम् । यतो रत्नाकरोऽयमिति भावः । अनेन वरस्य भाग्यसमृद्धिस्सूचिता । अम्भसाम् निधिम् अपांनिधिम् अक्षय्योदकं समुद्रमित्यर्थः । वराः श्रेष्ठाः नतु क्षुद्राः । वर्षाकाले प्रवाहोल्बणतासम्भवेऽपि अल्पसरितां साक्षात्समुद्रसङ्गमासंभवादेवमुक्तिः । अनेन नायिकासु सुगुणसम्पत्त्याभिजात्यादयस्सूच्यन्ते । आपगाः गङ्गाद्या नद्यः । अपां समूहः आपम् तेन गच्छन्तीति ड प्रकरणे 'अन्येष्वपि दृश्यते' इति गमेर्डः । ताभिरिव । समुद्रस्य सरित्पतित्वेन दृष्टान्तस्य दार्ष्टान्तिके सुसङ्गतिरवगम्यते । यथा वा महानद्यो वर्षामुखात् समुद्रेण संयुज्यन्ते तथा गुणवत्यो राजकुमार्यस्तास्ताः बुक्कराजसमुपनीतास्तदनुमत्या कम्पराजेन समगच्छन्तेति वर्णनया कम्पराजस्य ताभिरपृथग्भावः कथ्यते । तेन तयोः परस्परप्रेमरसानुबन्धस्सूच्यते । पूर्णदृष्टान्तोऽयम् ॥



**शचीव शक्रस्य रमेव शार्ङ्गिण**
**स्सतीव शम्भो [ स्सुगिरेव वेधसः ।**
**अतिप्रिया तासु बभूव काचि**
**न्महीभृतस्तस्य कृताभिषेका ]॥** ॥ 18 ॥

**शचीवेति** ॥ तासु पूर्वं विवाहितासु राजकुमारीषु मध्ये इत्यर्थः । 'यतश्च निर्धारण'मिति निर्धारणे सप्तमी । काचित् अनिर्वचनीया रूपगुणसौन्दर्यादिभिः एतादृशीति वक्तुमशक्या वधूरित्यर्थः । शक्रस्य इन्द्रस्य शची पुलोमजेव । देवकन्यासु इतरासु सतीष्वपीत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । शार्ङ्गं धनुरस्य शार्ङ्गी विष्णुः

तस्य रमा लक्ष्मीरिव । शं भवत्यस्मादिति शम्भुः शिवः । मितद्र्वादित्वाडुः । तस्य सती तदाख्या दाक्षायणीव । वेधसः ब्रह्मणः सुगिरा सूनृता वाक् । तदधिष्ठानभूता सरस्वतीव। तस्य महीभृतः राज्ञः कम्पनस्य । अतिप्रिया प्रियासु अत्यन्तमिष्टा प्रियतमेत्यर्थः । कृताभिषेका देवी 'देवी कृताभिषेकायाम्' इत्यमरः। बभूव आसीत् । अन्यदारेष्वनुरागवत्त्वेऽपि तस्यां प्रीतिरेतस्यानन्यादृशीति भावः। उदाहृतमिदमुपमाचतुष्टयं देव्यामस्यां विशिष्य यथाक्रमं सौशील्यसौन्दर्यसौभाग्यपावित्र्याणि द्योतयति ॥

कृताभिषेकया देव्या साकं सुखानुभूतिरिदानीं कम्पराजस्य प्रस्तूयते –

**नरेन्द्रसूनुर्नयनाभिरामया**
**तया समं निर्विशति स्म सुभ्रुवा ।**
**परस्परप्रेमरसोत्तरं सुखं**
**दिवौकसामप्यतिमात्रदुर्लभम् ॥** ॥ 19 ॥

**नरेन्द्रेति ॥** नरेन्द्रसूनुः राजकुमारः युवराजः कम्पन इत्यर्थः । पुरस्तादुपदेक्ष्यमाणं राजनीत्यादि, पूर्वं प्रस्तुतो विवाहविधिश्च कम्पराजं युवराजं कथयतः । नयनाभ्याम् नेत्राभ्याम् मीनवच्चञ्चलाभ्याम् आयताभ्यां चेत्यर्थः। अभिरामया मनोज्ञया आह्लादिकया । यद्वा - नयनयोः पश्यतां नेत्रयोः अभिरामया इति वा । तया पूर्वं वर्णितया सुभ्रुवा सुन्दरभ्रूयुतया रमण्या समम् तत्सहित इत्यर्थः । दिवम् स्वर्गः ओकः आश्रयः येषां तथोक्ताः देवाः। 'स्याद्दिवौका दिवोकाश्च देवे चापीह पक्षिणि' इति रन्तिदेवः । दिवशब्दोऽदन्तोऽपि 'मन्दारस्सैरिभश्शक्रभव (सद) नं स्वं दिवं नभः' इति त्रिकाण्डशेषः। तेषाम् । अपिशब्दस्समुत्कर्षं गमयति । सङ्कल्प



मात्रसिद्धसर्वार्थानां देवानामपीत्यर्थः । अतिमात्रम् अत्यन्तम् दुर्लभम् दुष्प्रापम् एकस्मिन्ननुरक्तेऽपरस्मिन् जनेऽनुरागभावस्य तेष्वपि दृष्टत्वादिति भावः। परस्परम् इतरेतरम् प्रेमरसः प्रणयास्वादः तेन उत्तरम् श्रेष्ठम् प्रशस्तम् 'उपर्युदीच्यश्रेष्ठेष्वप्युत्तरस्स्यात्' इत्यमरः। सुखम् सौख्यम् । अनुरागस्याभासत्वे तज्जन्यस्य सौख्यस्यापि तथात्वान्न तथेति बोधयितुमेवमुक्तिः । निर्विशति स्म अनुबभूव । 'लट् स्मे' इति लिटोऽपवादो लट् । 'उपभुङ्क्ते तूपभोगे संभुङ्क्ते निर्विशत्यपि' इति भट्टमल्लः । राजदम्पतिभ्यामनुभूयमानं सुखं देवतानामप्यतिमात्रमलभ्यमिति वर्णनादत्युक्तिः । न चायमतिशयोक्तिविशेषः। अतथ्याभिधानमेव न केवलमत्र वर्णितम् । दैवांशसंभूतस्य मानुषस्य तस्य दैवतदुर्लभसौख्यानुभूतिस्संभूतेत्याश्चर्यजनकत्वेन चमत्कारजनकताऽपीत्येतादृशे स्थले तदनुत्थानात् । अत्युक्तेर्लक्षणं तु – "अत्युक्तिरद्भुतातथ्यशौर्योदार्यादिवर्णनम्" इति ॥

विनयवत एव कुमारस्य यौवराज्येऽधिकारः । यथाऽऽह कामन्दकः - "विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत्" दिति । विनयश्च द्विविधः स्वाभाविकः कृत्रिमश्चेति । कौटिल्योऽप्याह – विनयो द्विविधः स्वाभाविकः कृत्रिमश्चेति । अतएव स्वाभाविकविनयवन्तं कुमारं स्वोपदेशेन कर्तुमत्यन्तविनीतं प्रयतते बुक्कराजश्श्लोकमिममारभ्याष्टादशभिश्श्लोकैः —

**अरातिवर्गोन्मथनेन विश्रुतं**
**विधातुमत्यन्तविनीतमप्यमुम् ।**
**कदाचिदर्थोल्लसितेन भूपति**
**स्स वाङ्मयेनैवमुपादिशत्सुतम् ॥** ॥ 20 ॥

**अरातीति ॥** सः भूपतिः बुक्कराजः । कदाचित् एकदा कस्मिंश्चित् काले । शिक्षायास्समुचिते समय इत्यर्थः । काले उप्तस्यैव

बीजस्य फलदायकत्वस्य लोके प्रत्यक्षदृष्टत्वादिति भावः। अरातयः शत्रवः 'अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः' इति शत्रुपर्यायेष्वमरः। तेषाम् वर्गः समूहः समैरुपलक्षितः। 'समैर्वर्गः' इत्यमरः। तस्य उन्मथनम् हननम् "तृणात्युन्मथतीति च ... ... षण्णवतिर्हिंसायामुक्ताः" इति भट्टमल्लः। तेन विश्रुतम् प्रख्यातम्। 'प्रतीते प्रथितख्यातवित्त विज्ञातविश्रुताः' इत्यमरः। शत्रूणां सर्वेषां भयजनकमिति यावत्। अपिशब्दोऽत्र कृत्रिमविनयाभावमस्य कथयति। विजितेन्द्रियस्यैव सकल शात्रवविजयलाभादिति भावः। अमुं वर्ण्यमानम् कम्पनम्। अत्यन्त विनीतम् अत्यधिकविनयवन्तम् सर्वविधविनयसंभृतमिति यावत्। विधातुम् कर्तुम्। अर्थेन अभिधेयेन गम्भीरार्थेनेत्यर्थः। 'अर्थोभिधेय रैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः। उल्लसितम् प्रकाशमानम्। उत्पूर्व काल्लसतेः कर्तरि क्तः। तेन। वाङ्मयेन प्रचुरैः वाग्भिः बहुलोक्ति भिरित्यर्थः। प्राचुर्यार्थे मयट्। एवम् इत्थम् वक्ष्यमाणप्रकारेण। उपा दिशत् उपदिदेश। उपपूर्वकाङ्पूर्वकाद्दिशतेर्लङ्। अविनीतस्य सम्पदो विपदन्ता इति कुमरं विनीततरं कर्तुमैच्छद्राजा बुक्क इति पर मार्थः। भट्टबाणोऽप्येवमाह शुकनासोपदेशोपक्रमणे - "आरूढविनयमपि विनीततरमिच्छन् शुकनासस्सविस्तरमुवाच" इति ॥

"यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता, एकैकमप्यनर्था" येत्युक्तचतु ष्टये यौवनमदोऽप्येकम्। तदनर्थादात्मानं रक्षितुमुपदेशमन्तरा नान्या गतिरिति स्वोपदिश्यमानार्थं प्रति कम्पराजमुन्मुखीकुर्वंस्तदावश्य कतां प्रथमतो निरूपयति —

**धियः प्रकाशादुपदेशसंभृता**
**त्तमो हि तारुण्यविजृम्भितं जनाः।**
**समुज्झितुं तात भवन्ति पारिता**
**स्तदेतदाकर्णयितुं त्वमर्हसि ॥** ॥ 21 ॥



**धिय इति** ॥ तात वत्स। तातेति वात्सल्येनामन्त्रणे। 'तातोऽनुकम्प्ये पितरि' इति हेमचन्द्रः। हि हेतौ। यत इत्यर्थः। जनाः प्रजाः (कर्तारः) सर्वसाधारणोऽयं क्रमः इति भावः। उपदेशः गुरुशिक्षा तैलमिति गम्यते। तेन संभृतात् परिपूर्णात् वर्धिष्य माणादित्यर्थः। धियः बुद्धेः। कर्तरि षष्ठी। दीपकलिकाया इति गम्यते। प्रकाशः प्रकाशनम् द्योतनम्। भावे घञ्। स एव प्रकाशः दीपकान्तिः। तस्मात् तेनेत्यर्थः। तरुणस्य यूनः भावः तारुण्यम्। भावे ष्यञ्। तदेव दुर्दिनमिति गम्यते। तेन विजृम्भितम् अतिशयितम् अप्रतिहततया प्रसृतम्। तमः तमो गुणः तज्जन्यत्वादज्ञानम्, तच्च कर्तव्याकर्तव्यप्रवृत्तिज्ञानाभावः विप रीतज्ञानं च। 'राहौ ध्वान्ते गुणे तमः' इत्यमरः। तदेव अन्ध तमसमिति गम्यते। तत् समुज्झितुम् परित्यक्तुम् दूरतः कर्तुम्। पारिताः पर्याप्ताः प्रभवितारः। तादृक्कार्यकरणेऽशक्ताः। "पारयति कल्पते राघते लाघते शक्तौ" इति भट्टमल्लः। भवन्ति सम्पद्यन्ते। तत् तस्मात् तेन कारणेनेत्यर्थः। एतत् इममर्थम् स्वोपदेशमित्यर्थः। सामान्ये नपुंसकम्। त्वम् भवान्। कम्पराजं प्रत्युक्तिः। आकर्ण यितुम् श्रोतुम्। अर्हसि युज्यसे योग्योऽसि। अपेक्षितेऽर्थे बुद्धिमतो जनस्य नह्युपेक्षा समुचितेति भावः। "धन्यः कोऽपि न विक्रियां कलयते प्राप्ते नवे यौवने" इति रीत्या यौवने नवे वयसि महान्तोऽपि विकुर्वन्ति। अतश्शास्त्रसंस्कारेण गुरूपलब्धेन तदानी मात्माऽवश्यं निग्राह्य इति निर्गलितोऽर्थः ॥

उपदेशस्य प्राशस्त्यमेव भङ्ग्यन्तरेण प्रस्तौति —

**गुरूपदेशः किल कथ्यते बुधै**
**रकर्कशं किञ्चन रत्नकुण्डलम्।**
**अमेचकं नूतनमञ्जनं सता**
**मजातगात्रक्षयमद्भुतं तपः ॥** ॥ 22 ॥

**गुरूपदेश इति ।।** बुध्यन्ते जानन्तीति बुधाः विद्वांसः तैः । 'इगुप' धेति कः । गुरूणाम् पित्रादीनाम् उपदेशः अज्ञातहितविषयबोधः । स एव अकर्कशम् अकठिनम् कोमलम् । मृदु कर्णवेधनादिजन्यबाधारहितं च । अतएव — किञ्चन किमपि अपूर्वमित्यर्थः । मणिकुण्डलयोः मार्दवस्य बाधारहितत्वस्य च लोके क्वाप्यदृष्टचरत्वादिति भावः । रत्नकुण्डलम् रत्नमयकर्णवेष्टनम् । 'कुण्डलम् कर्णवेष्टनम्' इत्यमरः । तदिति । इतीत्यस्य गम्यमानार्थत्वादप्रयोगः । प्रयोगे पौनरुक्त्यमित्यालङ्कारिकाः । एवमेव सर्वत्राप्युत्तरेषूपमानेष्वस्य सम्बन्धः । रत्नकुण्डल इव स्वधारिणं जनमयमपि प्रकाशयतीति तथोक्तिः । किञ्च । मेचकः कृष्णवर्णः सोऽस्मिन्नस्तीति मेचकम् । 'गुणवचनेभ्यो मतुपो लुगिष्ट' इति मतुपो लुक् । तत् न भवतीति अमेचकम् अवदातमित्यर्थः । अतएव नूतनम् नवीनम् अपूर्वम् । कृष्णवर्णस्यैव कज्जलस्य लोके समुपलम्भादिति भावः । 'कृष्णे नीलासितश्यामकालश्यामलमेचकाः' इत्यमरः । शब्दार्णवस्तु — 'मेचकः कृष्णनीलस्स्यादतसीपुष्पसन्निभः' इत्याह । अञ्जनम् अञ्जनविशेषः रसाञ्जनमित्यर्थः । 'अञ्जनं कज्जले चाक्तौ सौवीरे च रसाञ्जने' इति सुधा । तत्कार्यकारित्वात्तया व्यपदेशः । रसाञ्जनमिवानुपलब्धसर्ववस्तुप्रकाशकमिति भावः । तदिति । किञ्च । जातः उत्पन्नः स न भवतीति अजातः अनुत्पन्नः । गात्रस्य शरीरस्य क्षयः क्षीणता कार्श्यम् यस्मात्तथोक्तम् । अतएव अद्भुतम् आश्चर्यजनकम् तपः लोके चान्द्रायणादि तत्सदृशमित्यर्थः । लोके कृत्स्नचान्द्रायणादिरूपतपसः शरीरकार्श्यजनकत्वं दृष्टम् । अयं तु न तथा, शरीरकार्श्यमजनयदेव तपःकार्यं महाशक्तिसम्पन्नत्वादि पुरुषे घटयति । अतएवायं विस्मयावहं तप इत्युच्यते । तदिति । कथ्यते अभिधीयते प्रस्तूयत इत्यर्थः । किलेति प्रसिद्धौ । सर्वजनविदितोऽयं विषय इति भावः । अत्र गुरूपदेशस्यैकस्यैव रत्नकुण्डलादिरूपेणा



नेकथा सङ्कीर्तनमित्युल्लेखोऽलंकारः । अकर्कशमित्यादिभिः रत्नकुण्डलादीनां बाधादिजनकत्वमेतेषां च न तथेत्युत्कर्ष उपमेयस्योपमानादिभ्यो वर्णित इति व्यतिरेकोऽपि । एतेषां च परस्परनैरपेक्ष्यात् संसृष्टिरेव न संकरः । बाणस्त्वेवंविधे प्रस्तावे ... "गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नान .... मसुवर्णविरचनमग्राम्यं कर्णाभरणम्" इत्येवं प्रकारेण समुपावर्णयत् ।।

गुरूपदेशं सन्तो जना न गृह्णन्तीति नेति व्यतिरेकमुखेन सदृष्टान्तं ब्रूते —

**मुहुःप्रसर्पन्मदमीलितेक्षणाः**
**क्षणाधिरोहद्रजसो मलीमसाः ।**
**गजा इव स्तम्भनिरुद्धचेतसः**
**खला न गृह्णन्ति नियन्तृचोदितम् ।।** ।। 23 ।।

**मुहुरिति ।।** मुहुः पुनः पुनः शश्वदित्यर्थः । प्रसर्पन् उद्गच्छन् अन्यत्र व्याप्नुवन् । मदः गर्वः अन्यत्र दानम् (करिमदः) । तेन निमीलितानि मुकुलितानि एकत्र गर्वपारवश्यात् अन्यत्र मदपरवशत्वाच्च । तादृशानि ईक्षणानि नेत्राणि येषां ते तथोक्ताः । क्षणम् प्रतिक्षणम् । अत्यन्तसंयोगे द्वितीया । अधिरोहत् अत्यारोहत् अधिकं बिभ्रत्, रजः एकत्र तदाख्यो गुणः तज्जन्यो विकारः, अन्यत्र परागश्च येषां तथोक्ताः । क्षणक्षणं मदोन्मत्ताः राजसभावं वहन्ति दुर्जनाः । स्नात्वाऽपि पङ्कदूषिताः भवन्ति गजाः क्षणक्षणमित्येवमुक्तिः । मलीमसाः मलिनाः मलदूषिताः । 'मलीमसं तु मलिनं कच्चरं मलदूषित' मित्यमरः । एकत्र मनःकालुष्यभाजः, अन्यत्र मलिनदेहाः । खलाः दुर्जनाः । गजाः करिण इव । एकत्र सुखदुःखाद्यैरिन्द्रियमोहनम् स्तम्भः जडीभावः, अन्यत्र पारवश्यम् । तेन निरु

द्धम् एकत्र हर्षातिशयेन अन्यत्र मदवशंगतत्वेन । अवरुद्धम् एकत्र विषयग्रहणाद्विनिवृत्तम् अन्यत्र आत्मज्ञानेऽप्यसमर्थम् । चेतः चित्तम् वृत्त्याकारपरिणतं मनः मनोवृत्तिरित्यर्थः । तत् येषां तथाभूता स्सन्तः । खलाः विवेकभ्रष्टास्सन्तः । गजाः अत्यन्तं मदमत्तास्सन्त इत्यर्थः । नियन्तुः एकत्र शासितुः पित्रादेः अन्यत्र हस्तिपकस्य । चोदितम् प्रेरितम् एकत्र 'एवं कुरु' इति नियुक्तमर्थम्, अन्यत्र आज्ञाम् उपदेशादिरूपाम् । न गृह्णन्ति न स्वीकुर्वन्ति, मदाविर्भाव दशायां गजा इव यौवनप्रादुर्भावसमये खला रजोगुणप्रवृत्तयः कम प्यगणयन्तो नितरां कामवृत्ताः उन्मार्गगामिनो भवन्ति । सन्तो न तथेति भावः । श्लिष्टोपमेयमिति केचित् । श्लेष इति प्रामाणिकाः । कादम्बर्याम् – "श्रुण्वन्तोऽपि च गजनिमीलितेनावधारयन्तः खेदयन्ति गुरून्" इत्याह भट्टबाणः ॥

उपदेशायोपक्रमते –

**मदान्धकारो हि महानिशीथिनी**
**प्रबोधचन्द्रप्रतिरोधकालिका ।**
**मनोजमत्तद्विपवैजयन्तिका**
**शरीरिणां शश्वदलङ्घिनी दशा ॥ ॥ 24 ॥**

**मदान्धेति** ॥ हिर्हेतौ । यत इत्यर्थः । अन्ध – दृष्टयुपघाते अन्धनम् अन्धः । भावे घञ् । अन्धं करोतीत्यन्धकारः तिमिरम् । कर्मण्यण् । 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' इत्य मरः । स इव मदः यौवनमदः वस्तुदर्शनविवेकशून्यतापादको नव यौवनजन्योऽहङ्कार इत्यर्थः । सः आरोपविषयः प्रबोधः ज्ञानम् उचितानुचितपर्यालोचनम् । स एव चन्द्रः अर्थप्रकाशकत्वसाम्यादुभयो रेवमुक्तिः । तस्य प्रतिरोधः निरोधः तिरोधानम् आच्छादनमिति



यावत् । तस्मिन् कालिका मेघसमूहः । 'मेघजाले च कालिका' इत्यमरः । चन्द्रं मेघमालेवाच्छादयति विवेकसर्वस्वं स्वाहंभाव इति तथोक्तिः । तथाभूता । महती चासौ निशीथिनी महानिशीथिनी । सूचिभेद्या दुर्गमा अन्धकारबहुला कृष्णपक्षरात्रिरिति यावत् । तस्यां चन्द्रदर्शनस्येव तारुण्यमदाक्रान्ते जने ज्ञानस्य मृग्यत्वमित्येवं रूप्यते । किंच । मनसि जायत इति मनोजः मन्मथः 'सप्तम्यां जनेर्डः' इति डः । स एव मत्तद्विपः गन्धहस्ती मदगजः । स इव दुर्निरोध प्रसरत्वात्तदानीं तस्येत्येवमभिधानम् । तस्य वैजयन्तिका पताका । पताका यथावा गजस्य सौभाग्यवर्धिका तथा यौवनमदोऽप्ययमप्रति हतमन्मथप्रवृत्तीनामभिवर्धकः क्षणक्षणमित्येवमभिधीयते । तत इत्यर्था दाक्षिप्यते । यत एवं तत इत्यर्थः । शरीरिणाम् देहवताम् प्राणि नाम् । 'प्राणीतु चेतनो जन्मी जन्तुजन्यशरीरिणः' इत्यमरः । शश्वत् पुनः पुनः क्षणक्षणमित्यर्थः । बहुवारं तत्र प्रमादसम्भव इति सर्वदा जागरूकैर्भाव्यमिति सूच्यते । न लङ्घितुं शीलमस्या अलङ्घिनी दुरतिक्रमा । "बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति" इति न्यायेन विदुषोऽपि सम्मोहजनकत्वेन दुर्निरोधस्वभावेति यावत् । दशा अवस्था अवस्थाविशेषः दुरवस्था दुरवस्थासम्पादिकेत्यर्थः । कार्यकारणयोरभेदोप चारात् । क्षणक्षणजागरूकतायाः तदानीम् दुःखशीलत्वादित्थमुक्तिः । एवं नवयौवनस्य दुःखसंपादकत्वेन तत्र गुरूपदेशाद्याकलय्य प्रयततेतरां विवेक सम्पादनेन तद्दुःखं निराकर्तुं बुद्धिमान् भवादृग्जन इति परमार्थः । यौवन मदे महानिशीथिनीत्वादिरूपणान्मालारूपकमलङ्कारः ॥

यौवनादनर्थो महानित्यमुमर्थमेव विशदयति –

**भवत्यहङ्कारमहीरुहाङ्कुरे**
**दयापयश्शोषणदारुणोष्मणि ।**

**तमःप्रदोषे तरुणिम्नि कस्य वा**
**समञ्जसं पश्यति दृष्टिरञ्जसा ॥ ॥ 25 ॥**

**भवतीति ॥** अहङ्कारः गर्वः 'गर्वोऽभिमानोऽहङ्कार' इत्यमरः। स एव महीरुहः वृक्षः तस्य अङ्कुरः बीजम् नूतनाङ्कुरः। 'अङ्कुरोऽभिनवोद्भिदि' इत्यमरः। यौवनदर्पाद् दुरहङ्कृतिरुत्पद्यतेऽभिवर्धते च बीजाद्वृक्ष इव क्रमेण शाखोपशाखाभिरित्यत एवमुच्यते। तस्मिन्। किञ्च। दया करुणा सैव पयः जलम् तस्य शोषणम् ग्लापनम् (तापनम्) तस्य दारुणः भयङ्करः ऊष्मा निदाघः ग्रीष्मर्तुः। 'ऊष्मा तपनिदाघयोः' इति – नान्तेषु वोपालितः। भूतमैत्र्यास्सर्वस्या अप्यपहारक इत्यर्थः। तस्मिन्। किञ्च। तम एव तमः अज्ञानान्धकारः तस्य प्रदोषः रजनीमुखम् रात्र्यारम्भकः कालः। तत्प्रभृत्येव तमः प्रवृत्तेर्दृष्टत्वादेवमुक्तिः। तथाभूते तरुणिम्नि यौवने तरुणस्य भाव इति मुग्धिमादिवदिमनिच्। भवति सम्पद्यमाने सम्भवति सतीत्यर्थः। 'यस्य च भावेन भावलक्षण' मिति सप्तमी। कस्य वा कीदृशो वा जनस्य। दृश्यते ज्ञायते अनयेति करणे क्तिन् - दृष्टिः बुद्धिः। दृश्यर्थास्सर्वे ज्ञानार्था इति नियमाद् दृशिर्ज्ञाने। अञ्जसा झटिति 'स्रग्झडित्यञ्जसाऽह्नाय द्राङ्मङ्क्षु सपदि द्रुतौ' इत्यमरः। उपदेशश्रवणादिप्रयासमन्तरेति भावः। समञ्जसं न्याय्यम्। 'अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम्' इत्यमरः। पश्यति आलोचयति परामृशतीति काकुः। न कस्यापीति भावः। यौवनोदयस्सर्वेषामपि दोषाणां प्रभवस्सर्वस्यापि जनस्येति तत्र जागरूकेण भाव्यं श्रेयस्कामेनेति परमार्थः। एकत्र श्लिष्टपरंपरितमन्यत्र केवलपरंपरितं रूपकमलङ्कारः॥

विषयेष्वतिप्रसक्तिर्व्यसनम्, तद्वर्जनमत्यावश्यकं नृपस्येति बोधयितुमारभते —



**युवानमज्ञातनयागमक्रमं**
**स्वतन्त्रमैश्वर्यमदोद्धतं नृपम्।**
**विपत्क्षणेन व्यसनानुबन्धजा**
**क्षिणोति चन्द्रं क्षणदेव तामसी ॥ ॥ 26 ॥**

**युवानमिति ॥** व्यसनं पानस्त्रीमृगयादिषु सक्तिः। 'व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु' इति विश्वः। तस्य अनुबन्धः अनुसरणम् तस्माज्जायते उत्पद्यते संभवतीति तथोक्ता। विपत् आपत् व्यसनसंभूतं दुःखम्। कर्तृ। अज्ञातः अविदितः नयागमः नीतिशास्त्रम् तस्य क्रमः पद्धतिः अनूचानसिद्धस्संप्रदायः सः येन तथाभूतम्। किञ्च। ईश्वरस्य भावः ऐश्वर्यम् प्रभुता धनोत्कर्षः। तस्मान्मदः तत्संजाताहङ्कृतिः तेन उद्धतम् मत्तम् गर्वितम्। अतएव स्वतन्त्रम् स्वैरिणम् विषयेष्वतिप्रसक्तत्वात् गुरुशास्त्रादीनविगणय्य स्वबुद्ध्यनुसारेण उच्छृङ्खलप्रवर्तिनम्। युवानम् तरुणम् नवयौवनोपेतम्। नृपम् राजानम् युवराजमित्यर्थः। कर्म। क्षणेन मुहूर्तेन अल्पेनैव कालेन। 'क्षणो व्यापारशून्यत्वमुहूर्तोत्सवपर्वसु' इति रुद्रः। तामसी अन्धकारबहुला क्षणदा रात्रिः कृष्णपक्षरात्रिः। तमिस्रातामसीशब्दौ पर्यायौ। तथाचामरः - 'तमिस्रा तामसी रात्रिः' इति। तमिस्राशब्दः कृष्णपक्षरात्रौ प्रसिद्धः। 'तमिस्रं तिमिरं कोपे तमिस्रा तु तमस्ततौ। कृष्णपक्षनिशायां च' इति विश्वमेदिन्यौ। सा चन्द्रम् निशापतिमिव क्षिणोति हिनस्ति क्षयं नयतीत्यर्थः। क्षणु – हिंसायाम्। क्षिणु च इति पठितस्येदं लटि रूपम्। यद्यपि तृप प्रीणने इत्यस्मादनन्तरं छन्दसीति पठितम्। 'छन्दसीत्यागणपरिसमाप्तेरधिक्रियत' इति व्याख्यातं च क्षीरस्वाम्यादिभिः। तथापि क्षेरेव तु श्नौ सति भाषायामपि क्षिणोतीति केचित्। तथा च दैवम् - "एके क्षेरेव भाषायां क्षिणोतीति पदं विदुः।" इति। उप्रत्ययनिमित्तगुणाभाव

स्तु संज्ञापूर्वको विधिरनित्य इति परिभाषया। अतएव प्रायुञ्जत महान्तः कवय एनं भाषायाम्। "न तद्यशश्शस्त्रभृतां क्षिणोति" "पञ्चबाणः क्षिणोति" "दक्षशाप इव चन्द्रमक्षिणोत्" इत्यादि। यद्वा — "छान्दसा अपि क्वचिद्भाषायां प्रयुज्यन्ते" इति 'मासश्छन्द' सीति वार्तिके छन्दोग्रहणसामर्थ्यात् ज्ञाप्यत इति तेन वा समाधेयम्। रोहिण्यामतिप्रसक्तं तारानाथं स्वजामातरमपि चन्द्रं दक्षस्स्वतनूजाभिर्निवेदितापराधश्शशाप कृष्णपक्षे क्षयिणमित्येषा पौराणिकी गाथाऽत्रानुसन्धेया। यौवनवतः पुंसो व्यसनजा विपन्मदौद्धत्यादिभिस्समेधिता दुरन्ता समूलं नाशयितुं प्रभवतीति निष्कृष्टोऽर्थः। अलङ्कृतिरुपमा। उपमानं च पुराणप्रसिद्धम्॥

कामजाः क्रोधजाश्चेति द्विविधा दोषाः। त एव व्यसनानीति व्यवह्रियन्ते। तत्र तावत् कामजगण इच्युच्यते — स्त्रीद्यूतमृगयापानानि प्रधानतः। तत्र स्त्रीप्रभवो दोषः सर्वदोषाणां मूलमिति तमेव तावत्प्रथमत आचष्टे —

**अशेषदोषाङ्कुरकुञ्जभूमयो**
**मदान्धचेतोमृगबन्धवागुराः।**
**कथं नु विश्वासपदं मनीषिणां**
**मनोजमायाभटशस्त्रिकाः स्त्रियः॥** ॥ 27 ॥

**अशेषेति ॥** अशेषदोषाः अखिलानि दूषणानि सर्वविधानि दुष्कृत्यानि। सर्पदंशनादिमहोपद्रवाश्चेति गम्यते। तेषाम् अङ्कुरः प्ररोहः उत्पत्तिः तस्य कुञ्जभूमयः लतागृहप्रदेशः। यथावा क्रूरमृगदुष्टसर्पादयः निगूढं तेषु स्थित्वा सन्निहितस्वजनस्य प्राणोपद्रवादिरूपं दोषमापादयितुं प्रभवन्ति, तद्वत् स्त्रियोऽपि स्वविलासकटाक्षान् विषदिग्धबाणान् स्वाश्रयिणि जने प्रयुज्य प्रमादं जनयन्तीति



भावः। अतएव स्मर्यते — "न स्त्रीभ्यः किञ्चिदन्यद्वै पापीयस्तरमस्ति वै। स्त्रियो — मूलं हि दोषाणां तथा त्वमपि वेत्थ ह" इति। यद्वा। अशेषदोषा एव अङ्कुराः प्ररोहाः तेषाम् कुञ्जभूमयः त इव यथेच्छमभिवर्धकाः तत्र लतावेष्टनादिना पशुभक्षणादेरनवकाशात् यथेच्छमङ्कुरा वर्धन्त इति सर्वलोकविदितम्। भूमिशब्देन तदुत्पत्तिरपि ध्वन्यते। भूमावेवाङ्कुरोत्पत्तेः। तथा च अङ्कुरा यथा तत्रोत्पद्यन्ते निकाममभिवर्धन्ते च तथा स्त्रीष्वपि दोषास्स्वयमेवोत्पत्य प्रकाममेधन्त इति तासां तथोक्तिः। स्त्रिय एव मूलं सर्वदोषाणां तदभिवृद्धेश्चेति भावः। किञ्च। मदेन दर्पेण - नहि मत्तः परोऽस्तीति नवयौवनकृतेनाहङ्कारेणेत्यर्थः। हर्षपारवश्येनेति च गम्यते। अन्धानि चक्षूरहितानि यतश्च दर्शनीयं न पश्यन्ति, यतश्च स्वपरभेदं न जानन्ति, विवेकशून्यानीति यावत्। प्रमत्तानीति च गम्यते। तथाविधानि चेतांसि मनांसि तान्येव मृगाः पशवः क्रूरसत्त्वानीति यावत्। उभयोरपि हिंसकत्वादेवमुक्तिः। तेषाम् बन्धः बन्धनम् स्वेच्छासञ्चारावरोधश्चेति गम्यते। बन्धेर्भावे घञ्। तत्र वागुराः जालविशेषाः तथाभूताः। वागुरेव स्त्रियोऽपि पाशभूताः पुरुषचित्तं बद्ध्वा स्वाकारादिष्वेव स्थापयन्तीत्येवमुक्तिः। किञ्च। मनसि जायत इति मनोजः सङ्कल्पप्रभवः मन्मथः। 'सप्तम्यां जनेर्ड' इति डः। स एव मायाभटः मिथ्याभूतो वीरः। त्रिलोकविजयस्य प्रत्यक्षदृष्टत्वात्स्वयमनङ्गत्वाच्चेति भावः। यद्वा। मायया वीरः मायासहितः प्रतिभट इत्यर्थः। इन्द्रजिदादिरिवात्मानमदर्शयन् स्वशरानेव परत्र प्रदर्शयन् निरायासेन विजयं साधयतीति भावः। यद्वा। मायावीरत्ववानिति वा प्रकृत्यादित्वात्तृतीया। वस्तुतः स्त्रियएव त्रैलोक्यं मोहयित्वा विजयमार्जयन्ति, अयं तु तैस्साधितं विजयं स्वीयमिव दर्शयति लोकस्येति भावः। यद्वा अणुपरिमाणं मन इति मन एव दृग्गोचरं भवति तज्जन्मनस्स्वस्य तु नितरामदर्शनमिति स्वमपश्यद्भ्यश्च

श्शत्रुभ्यो विजयं सुखेन साधयतीति वा तथोक्तिः । यद्वा । मायाविन श्शम्बरस्य हन्ताऽयमित्ययमपि मायाविद्यापारगो भट इति वा । यद्वा । स्वमनस्स्वस्य विरोधि न भवतीति लोके सर्वोऽपि विश्वसिति, तत्र जातोऽयं सर्वेषां प्रत्ययपात्रं तदेव सपत्नं विधाय स्वमायया सर्वं लोकं जयतीति वा । प्रवञ्चना, अविद्यमानवस्तुप्रकाशनमित्यादि मायापदार्थं इति स्पष्टं सर्वतन्त्रसिद्धान्तपदार्थलक्षणसंग्रहे । तस्य (शस्त्र्य इव) शस्त्रिकाः । (स्वार्थे कः । केऽण इति ह्रस्वः ।) छुरिकाः असिपुत्रिकाः 'शस्त्रमायुधे लोहे शस्त्री छुरिकाया' मिति हैमः । विज़यसाधनभूता इति यावत् । स्त्रियः वनिताः । उद्देशभूताः । मनीषा बुद्धिः एषामस्तीति मनीषिणः बुद्धिमन्तः प्राज्ञाः विवेकिन इत्यर्थः । व्रीह्यादित्वादिनिः । 'धीरो मनीषी ज्ञः प्राज्ञः' इति चामरः । तेषाम् । विश्वासपदम् विस्रम्भस्थानम् स्वहितचिन्तायाः भाज़नानि । तैर्विश्वसनीया इत्यर्थः । कथम् केन वा प्रकारेण भवन्ति । नु पृच्छायाम् । 'नु पृच्छायां विकल्पे च' इति विश्वः । एवंविधा स्त्रियः श्रेयस्कामेन विवेकिना ज़नेन यथाकथमपि न विश्वसनीया एवेति भावः । स्त्रियो न ·विश्वसनीया इति वाक्यार्थे विशेषणगत्या अशेषदोषाङ्कुरकुञ्जभूमय इत्यादि पदार्थानां हेतुत्वमिति काव्यलिङ्गभेदोऽलङ्कारः । परंपरितरूपकं च तदङ्गमिति तयोस्सङ्करः ॥

देवनं च महतेऽनर्थायेति तन्निषेधति — देवनं द्विविधम् – अचेतनैश्शारिकादिभिस्संक्रीडनमेकम्, अविकादीन् प्राणिनः पणीकृत्य देवनरूपमेकम् । एतस्य द्वितीयस्यैव समाह्वयमिति व्यवहारः । अत्र द्यूतमात्रस्यानर्थकारित्वमभिदधदयं श्लोकस्तद्द्वयमप्यनर्थायेति ताभ्यां पुरुषं निवर्तयति —

**फलोत्तरा भूमिरनत्ययं बलं**
**महार्हरत्नाभरणं च सम्पदः ।**



**किमन्यदात्मा च कलत्रपुत्रकैः**
**परार्थमेव ध्रुवमक्षदेविनः ॥** ॥ 28 ॥

**फलेति ॥** अक्षैर्दीव्यतीत्यक्षदेवी द्यूतकृत् । 'धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः' इत्यमरः । अत्ययः ध्वंसः नाशः 'अत्ययोऽतिक्रमे कृच्छ्रेऽत्युत्पाते नाशदण्डयोः' इति धरणिः । अविद्यमानः अत्ययः यस्येति विग्रहः । अविनाशि चिरस्थायि इति यावत् । 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोप' श्चेति विद्यमानशब्दस्य लोपः । नलोपः नुडागमश्च । बलम् सैन्यम् । तत् । फलेन सस्येन 'सस्यहेतुकृते फलम्' इत्यमरः । उत्तरा श्रेष्ठा 'उपर्युदीच्यश्रेष्ठेष्वप्युत्तरस्स्यात्' इत्यमरः । तथाविधा भूमिः क्षेत्रम् प्रतिमासत्रयं फलन्ति क्षेत्राणीत्यर्थः । जातावेकवचनम् । अकृष्टान्येव फलन्ति फलममितं ददन्ति चेति वा तेषां श्रेष्ठत्वम् । तानि च । रत्नानि आभरणानि चेति द्वन्द्वः । जतिरप्राणिनामित्येकवद्भावः । महतामर्हम् महार्हम् महापुरुषैरनुभोग्यम् श्रेष्ठम् अनर्घमित्यर्थः । महार्हं रत्नाभरणं चेति कर्मधारयः । महार्हाणि रत्नानि- महार्हाणि आभरणानीत्यर्थः । वृक्षप्रचलनन्यायेन रत्नैरपि सम्बन्धो महार्हशब्दस्य । इतीत्यस्य गम्यमानार्थत्वादप्रयोगः । इति एवंरूपाः । संपदः ऐश्वर्याणि । च समुच्चये । बलम् क्षेत्राणि सम्पदश्चेत्यर्थः । अन्यत् उक्तादितरत् धनादि । वक्तव्यम् किमु परार्थमिति कथनीयं किम्विति काकुः । न वक्तव्यमेवेत्यर्थः । "आत्मनस्तु कामाय सर्वं प्रियं भवती" त्यतिप्रियस्य आत्मनः, आत्मैकभोग्यस्य स्वकलत्रादेरपि परार्थत्वेन वक्ष्यमाणत्वादनुक्तमपि सर्वं तेनोक्तप्रायमेवेति भावः । कलत्रम् भार्या । पुत्रकाः अनुकम्पनीयाः पुत्राः स्वयं जीवनेऽशक्ता अर्भका इत्यर्थः । अनुकम्पायामिति कन् । ते च तथोक्ताः । तैः सहार्थे तृतीया । तैस्सहित इत्यर्थः । आत्मा स्वश्च । "आमा कलेबरे यत्ने स्वभावे परमात्मनि, चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि

च" इति धरणिः। परार्थम् परार्थाः परानुभवफलका इत्यर्थः। नैव कदाचिदपि स्वानुभवायेत्येवकारार्थः। 'नपुंसकमनपुंसके' नेत्येकशेषः। एकवद्भावश्च। ध्रुवम् नूनम्। पुराणादिषु श्रुतत्वाल्लोके दृष्टत्वाच्च, न तत्र संशयलेशोऽपीति भावः। विवेकवानप्यक्षदेवनपरस्स्वं स्वीयं सर्वं परेभ्योऽर्पयित्वा दुःखी सम्पद्यत इति न तत्र प्रवर्तनीयं जनेनेति परमार्थः॥

मृगया नितरां न प्रतिषिध्यते तत्र व्यसनिना न भवितव्यमिति व्यसनमेव तु निषिध्यत इत्याह –

**विना फलं जीवितसंशयप्रदां**
**विनोदबुद्ध्या मृगयां भजेत कः।**
**प्रमाद्यतां पार्थिवगन्धहस्तिना**
**मियं हि वारी कथिता विचक्षणैः॥** ॥ 29 ॥

**विनेति**॥ जीवितम् जीवनम्। जीव प्राणन इत्यकर्मकाद्भावे क्तः। तस्मिन् संशयः जीवति वा न वेति सन्देहः। तस्य प्रदाम् तद्दात्रीम् तज्जननहेतुभूताम् प्राणोपद्रवकारिणीमिति यावत्। ताम् मृगयाम् आखेटम्। 'परिचर्या परिसर्या मृग' येति निपातनात्साधुः। फलं विना प्रयोजनेन विना प्रयोजनमनुद्दिश्य निष्फलमिति यावत्। सति प्रयोजने तत्र प्रवृत्तिर्न दोषायेति भावः। 'पृथग्विनानानाभिस्तृतीयान्यतरस्या' मित्यत्रान्यतरस्यामित्येतत्समुच्चयार्थकमिति द्वितीयाया अपि तत्सूत्रविहितत्वाद् द्वितीया 'योगविभागेन तद्विधानम् – "विना वातं विना वर्षं विद्युत्प्रपतनं विना। विना हस्तिकृतान् दोषान् केनेमौ पतितौ द्रुमौ" इत्यादिषु द्वितीयाया अपि दर्शनादिति काशिका। विनोदयतीति विनोदम् सन्तोषजनकं कृत्यम्। सामान्ये नपुंसकम्। तदिति बुद्धिः समालोचनम्। तया। कः को



पा जनः भजेत सेवेत तामाश्रयेत् तदाचरणं कुर्यात्। न कोऽपि तथा भवेदिति भावः। आप्तवाक्यं तत्र प्रमाणयति। हि हेतौ। यत एवं तत इति पूर्वेण सम्बन्धः। विचक्षणैः। दूरदर्शिभिः धीमद्भिः 'धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः दूरदर्शी दीर्घदर्शी' इत्यमरः। इयं पूर्वोक्ता मृगया। प्रमाद्यताम् प्रकृष्टं मदावस्थामाप्नुवताम्। लोकोपद्रवकारिणामिति भावः। अन्यत्र हर्षपारवश्यमयताम्। स्वकृत्यानि विस्मृत्य लोकमजानतां भोगैकसक्तचित्तानामिति भावः। पार्थिवाः राजानः त एव गन्धहस्तिनः मदगजाः। तेषाम्। वारी गजबन्धनार्था भूमिः मदापहारिणीत्यर्थः। गजानां मदपारवश्यमिव राज्ञां भोगैकप्रवणचित्ततामपहरन्ती स्वरूपस्मारिकेति भावः। क्रूरमृगोपद्रववारणादिलोकहितायैव मृगयामाचरेद्राजा, नतु कदापि कालयापनायेति परमार्थः। "अबलस्वकुलाशिनो झषान् निजनीडद्रुमपीडिनः खगान्। अनवद्यतृणार्थिनो मृगान् मृगयाघाय न भूभृतां घ्नताम्" "मृगया न विगीयते परैरपि धर्मागममर्मकोविदैः" इत्यादीनामत्रैव तात्पर्यम्। अत्र मृगयायां वारित्वसमारोपणाद्रूपकम्। तच्च पार्थिवे गन्धहस्तित्वरूपणस्य हेतुभूतमिति परंपरितम्। तच्च प्रमाद्यतामित्यत्र श्लेषेण समुत्थापितमिति श्लेषरूपकयोस्सङ्करः॥

व्यसनान्तःपाति मद्यपानं महापातकेष्वप्येकम्। तन्निषेधति —

**समग्रतारुण्यमदस्य सम्पदा**
**स्खलद्गतेर्यन्मदिरानिषेवणम्।**
**स एष दोषत्रयजे महाज्वरे**
**ग्रहाभिभूतस्य भुजङ्गनिग्रहः॥** ॥ 30 ॥

**समग्रेति**॥ तरुणस्य भावः तारुण्यम् यौवनम् 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ्। दृढादित्वात् ष्यञिति गणरत्नव्याख्या।

तस्य मदः - जन्यजनकभावे षष्ठी । तज्जनितो दर्प इत्यर्थः । समग्रः सम्पूर्णः अतिशयितः तारुण्यमदः यस्य तथोक्तस्य । यौवनदर्पेण अविवेकिन इत्यर्थः । किञ्च । सम्पदा ऐश्वर्येण धनसमृद्धया स्स्वलन्ती सञ्चलन्ती गतिः गमनम् न्याय्यमार्गप्रवृत्तिः यस्य तस्य । उत्पथगामिन इत्यर्थः। मदिरा मद्यम् पैष्टी सुरा (गौडी पैष्टी च माध्वी च विज्ञेया सा सुरा त्रिधा – इति सुरायाः त्रिविधत्वमुक्तम् । तत्र क्षत्रियवैश्ययोः पैष्टयामेव निषेधः ।) तस्याः निषेवणम् समाश्रयणम् निरन्तरपानमिति यत् सः एषः तदेतदित्यर्थः । विधेयप्राधान्यात् पुंलिङ्गता । त्रयः अवयवाः यस्य त्रयम् दोषाणां त्रयमिति विग्रहः । दोषाश्च वातपित्तकफाख्याः । अत्र तद्विकाराः दोषशब्देन लक्ष्यन्ते । समतां परित्यज्य तेषां हानिवृद्धिस्वीकार एव विकार इत्युच्यते । दोषत्रय प्रकोप इति यावत् । तस्माज्जायत इति तज्जः तन्निमित्त इत्यर्थः । 'पञ्चम्यामजातौ' इति जनेर्डः । महान् ज्वरः महाज्वरः अप्रतिकार्यो व्याधिविशेषः सन्निपात इति यावत् । तस्मिन् ग्रहेण पूतनादिभूतविशेषेण 'ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे । सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः' इति विश्वः । अभिभूतस्य प्राप्ताभिभवस्य विजितस्य वशीकृतस्य ग्रहाविष्टस्य सत इत्यर्थः । भुजङ्गेन कालसर्पेण निग्रहः नितरां ग्रहणम् । सुष्ठु दंशनमिति यावत् । तादृश इत्यर्थः । अवश्यमप्रतिचिकित्स्यत्वात्तस्य भाव्यनर्थप्रतीकार एव समुचित इति भावः । 'ग्रहवृदृनिश्चिगम' श्चेति ग्रहेरप् भावे । "यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥" इत्येवंविधया रीत्या सम्भवतोऽनर्थस्य महत्त्वमुक्त्वा, तद्द्वारा विवेकिना क्षणक्षणं सावधानमनसा तन्निरासे यतितव्यमिति कथ्यते । अत्र पूर्वोत्तरयोर्वाक्यार्थयोर्यत्तच्छब्दाभ्यामैक्यारोपान्निदर्शना । "वाक्यार्थयोस्सदृशयोरैक्यारोपो निदर्शना" इति तल्लक्षणात् । इदं मद्यपानं महापातकेषु पर्यगणयन्मनुः – "ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गना



गमः । महान्ति पातकान्याहुस्संसर्गश्चापि तैस्सह ॥" इति ॥

व्यसनेषु कामजगणं विशदय्य, क्रोधजगणं विशदयति - तत्र च प्रथमतो वाक्पारुष्यं प्रतिषेधति –

**हितानि कुर्वन्नपि नानुरक्तये**
**जनस्य जल्पन् परुषं रुषा नृपः ।**
**पयांसि वर्षन्नपि किं न भीषणः**
**कठोरविस्फूर्जथुगर्जितो घनः ॥** ॥ 31 ॥

**हितानीति** ॥ नृपः राजा हितानि हितकराणि श्रेयस्सम्पादकानि कार्याणि । जनस्य जनसमूहस्य लोकस्य । कुर्वन् आचरन्नपि । रुषा रोषेण क्रोधेन । (भागुरिमतेन टापि रुषा इत्याकारान्तोऽपि साधुः । अतएव 'क्रोधो भामः क्रुधा रुषा' इति शब्दार्णवः ।) हेतौ तृतीया । परुषम् तीक्ष्णम् परमनःपीडाजनकम् वचनमित्यर्थः । तत् जल्पन् व्याहरन् वदन् । अनुरक्तये अनुरागाय प्रीतये अनुरक्तिं सम्पादितुम् । न नभवति प्रजाप्रीतिभाजनं भवितुं नार्हतीत्यर्थः । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । यद्वा । 'क्लृपि स्सम्पद्यमाने चतुर्थी वक्तव्या' इति क्लृपेरर्थनिर्देशाच्चतुर्थी । तथा च माघः – "शोभायै विपदि सदाश्रिता भवन्ति" इति । परुषभाषणं यतो लोकविद्वेषकरमतः प्रजापालकस्य राज्ञस्तद्वर्जनमवश्यकर्तव्यमिति भावः । तत्र दृष्टान्तं प्रदर्शयति – घनः मेघः 'घनं सान्द्रं घनं वाद्यं । घनो मुस्तो घनोऽम्बुदः' इति विश्वः । पयांसि प्राणधारणहेतूनि जलानि जलमित्यर्थः । 'पयः कीलालममृतं जीवनं भुवनं वन' मित्यमरः । उद्भूतावयवविवक्षया बहुता । वर्षन् मुञ्चन् ददन्नपि जनस्येत्येव । शेषे षष्ठी । कठोरः कठिनः क्रूरः भयंकरः । 'कक्खटं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्' इत्यमरः ।

विशिष्टः स्फूर्जथुः विस्फूर्जथुः अतिशयितो वज्रनिर्घोषः । 'स्फूर्जथुर्वज्र निर्घोष' इत्यमरः । 'टुओ स्फूर्जा वज्रनिर्घोषे' इत्यस्मात् ट्वितोऽथुच् । तद्युतानि गर्जितानि मेघध्वनयः यस्मिन् तथोक्तः । तथाभूतस्सन् । यद्वा । 'स्फूर्जथुर्वज्रनिष्पेष' इति पाठान्तरम् । निष्पेषशब्दस्संघट्टमात्र पर इति व्याख्यान्तरम् । विस्फूर्जथुः विशेषेण अशनिसंघट्टः तस्मात् प्रभवन्ति गर्जितानि यस्मिन्निति वा । तादृक् सन् । भीषणः भय जनकः भयंकरः । न किम् न भवति किम् । भवत्येवेति भावः । अत्र भगवान् व्यासः – "अभ्यावहति कल्याणं विविधं वाक्सुभाषिता । सैव दुर्भाषिता राजन्ननर्थायोपकल्पते" इति ॥ यथा प्राणाधारणहेतु जलं प्रदाय नितरामुपकुर्वन्नपि जलदस्स्वभीषणघोषणेन भीतिं जनयति लोकस्य न प्रीतिं, तथा राजा प्रजानामत्यन्तं हितकरोऽपि यदि परुषभाषी स्याद्भीतिभाजनं लोकस्य न प्रीतिभाजनमित्येकमेव (सजातीयं) सामान्यं वाक्ययोरसकृन्निर्दिष्टमित्यलङ्कृतिरत्र प्रतिवस्तूपमा । तल्लक्षणं तु "वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता" इति ॥

दण्डपारुष्यमधिकृत्य ब्रूते –

**दुनोति दण्डेन दुरुत्सहेन यः**
**प्रसह्य राष्ट्रं पदमात्मसम्पदाम् ।**
**स वृक्षमारुह्य कुठारपातनं**
**करोति मूलोद्दलनाय दुर्मतिः ॥ ॥ 32 ॥**

**दुनोतीति** ॥ यः राजा । आत्मसम्पदाम् स्वधनोत्कर्षाणाम् पदम् स्थानम् स्थितिसाधनम् अवलम्बनहेतुम् प्रधानकारणमिति यावत् । करग्रहणादिना राजसम्पदः प्रजाभ्य एव समुपलब्धेरिति भावः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु इत्यमरः । राष्ट्रम् स्वदेशम् । कर्म । स्व ( देश ) प्रजा इत्यर्थः । 'अथ राष्ट्रोऽस्त्री



विषये स्यादुपद्रवे' इति मेदिनी । दुःखेन उत्सहते इति दुरुत्सहः सोढुमशक्यः । 'ईषद् दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु' इति खल् । तादृशेन दण्डेन शिक्षया प्रसह्य बलात्कृत्य दुनोति पीडयति । सः ( दुःखकरा मतिः यस्य ) दुर्मतिः । स्वाश्रयनाशे स्वनाश इत्यजानानोऽविवेकीत्यर्थः । वृक्षम् आरुह्य अधिष्ठाय वृक्षे स्थित्वेत्यर्थः । मूलस्य स्वाश्रयवृक्षस्कन्धस्य उद्दलनाय छेदनाय वृक्षमूलं छेत्तुमित्यर्थः । कुठारस्य परशोः उत्क्षिप्तस्येत्यर्थः । पातनम् निक्षेपणम् परशुना छेदनमिति यावत् । पतनमेव पातनम् । प्रज्ञादित्वादण् । करोति आचरति । स्वाश्रयवृक्षनाशे स्वनाशमसम्भावयन् जन इव स्वराष्ट्रनाशे तन्मूलकनिजसम्पन्नाशेन स्वस्य नाश इत्यविदन् राजा समूलनाशं नश्यति । अतस्तीक्ष्णदण्डेन स्वामिना न भवितव्यमित्युपदिश्यते । अत्र मनुः - "स्वराष्ट्रे न्याय्यवृत्तस्स्यात् भृशदण्डश्च शत्रुषु" इति । अत्र वाक्यार्थयोरैक्यारोपमूला निदर्शनालंकृतिः ॥

अर्थदूषणं निन्दति –

**मदादपात्रेषु ददाति मन्दधी**
**र्धनानि धर्माधिकसाधनानि यः ।**
**निपात्यते तेन मखक्रियोचितं**
**हविश्श्रितासद्मनि कृष्णवर्त्मनि ॥ ॥ 33 ॥**

**मदादिति** ॥ यः राजा । धर्मस्य सुकृतस्य 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्यमरः । अधिकसाधनानि प्रकृष्टोपकारकाणि । तदर्थमेव सृष्टानीति भावः । धनानि सम्पदः ( कर्म ) मन्दधीः अपटुबुद्धिः । यतो विपरीतं गृह्णाति यतो वा विरुद्धं प्रवर्तते अतो विषयग्रहणेऽपटुरस्य बुद्धिरित्येवमुच्यते । 'मूढाल्पापटुनिर्भाग्या मन्दास्स्युः' इत्यमरः । तादृशस्सन् । मदात् हर्षात् । न

तु भाविनमनर्थमालक्ष्य दुःख्यन्निति भावः। 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' इति विश्वः। अपात्रेषु अयोग्येषु। 'योग्यभाजनयोः पात्रम्' इत्यमरः। ददाति यच्छति तेभ्यः प्रयच्छतीत्यर्थः। सर्वत्र सर्वकारकशक्तेस्सम्भव इति संप्रदानस्याप्यधिकरणत्वविवक्षायां सप्तमी। यदाहुरभिज्ञाः - "अनेकशक्तियुक्तस्य विश्वस्यानेककर्मणः। सर्वदा सर्वथा भानात्क्वचित्किञ्चिद्विवक्ष्यते" इति। तेन। कर्त्रा। मखक्रिया यज्ञकर्म तस्याः उचितम् योग्यम् अत्यन्तं पवित्रमित्यर्थः। हविः देवतोद्देशेन त्यज्यमानं द्रव्यं घृतादि। चिता चित्या मृतकचितिः। 'चित्यां मृतकचैत्ये स्यात् चित्या मृतचितौ स्त्रियाम्' इत्यमरः। सा सद्म गृहम् निवासः यस्य तस्मिन् अत्यन्तमशुचावित्यर्थः। कृष्णम् स्वसञ्चारेण दग्धत्वान्नीलम् वर्त्म यस्य तस्मिन् कृष्णवर्त्मनि अग्नौ। 'बर्हिश्शुष्मा कृष्णवर्त्मा' इत्यग्निपर्यायेष्वमरः। निपात्यते निक्षिप्यते निपूर्वात् पत्ल - गतावित्यस्मात्स्वार्थणिजन्तात् कर्मणि लट्। 'पत्ल - गतौ वा' इति गणसूत्रेण विकल्पितणिच्कोऽयम्। मन्त्रपूतस्य हविषश्रिताग्नावशुचौ प्रक्षेप इव पात्रदानेन सुकृतस्य कृते भवितव्यस्य धनस्य अपात्रेषु निक्षेपो महते प्रत्यवायायेति तद्वर्जनमवश्यकर्तव्यमिति भावः। धनावश्यकता च राज्ञः कौटिल्येन प्रत्यपादि - "धर्महेतोस्तथार्थाय भृत्यानां रक्षणाय च। आपदर्थं च संरक्ष्यः कोशो धर्मवता सदा" इति। धनाभावे प्रजाद्वेषश्च राज्ञि विशदीकृतः कौटिल्येन - "क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति पराभवम्। विरक्ता यान्त्यमित्रत्वं भर्तारं घ्नन्ति वा स्वयम्" इति॥

व्यसनान्युक्त्वा व्यसनी राजा सर्वथा विपद्यते, सम्पदो भ्रश्यति चेति श्लोकद्वयेन समाचष्टे —

**अथैभिरैश्वर्यशरीरयक्ष्मभि**
**र्हताखिलाङ्गैर्व्यसनैरुपद्रुताः।**



**तमःपराभूतनिजौजसो नृपाः**
**प्रयान्ति कालाद् द्विषतामुपेक्ष्यताम्॥ ॥ 34 ॥**

**अथैभिरिति॥** नृपाः राजानः। कर्तारः। ऐश्वर्याणि सम्पदः तान्येव शरीराणि तथोक्तानि। तेषाम् यक्ष्मभिः क्षयव्याधिभूतैः। राजयक्ष्मेवैश्वर्यस्य क्षैण्यसम्पादकत्वादेवमुक्तिः। 'क्षयश्शोषश्च यक्ष्मा च' इत्यमरः। अतएव हतानि हिंसितानि पीडितानि अखिलानि सर्वाणि अङ्गानि शरीरावयवाः यैः तथाभूतैः रोगपक्षे इदम्। अन्यत्र हतानि नष्टानि अखिलानि अङ्गानि पञ्चाङ्गानि ("सहायास्साधनोपाया विभागो देशकालयोः। विनिपातप्रतीकारस्सिद्धिः पञ्चाङ्ग इष्यत" इत्येवंप्रकारेण भणितानि) येभ्यः तथोक्तानि। राजसम्पदां पञ्चाङ्गशुद्धिमूलकत्वाद्व्यसनी राजा पञ्चाङ्गान्युपेक्ष्य स्वसर्वस्वं नाशयतीति भावः। एभिः अथ एतैः सर्वैः पूर्वमुक्तैरित्यर्थः। अथ शब्दः कात्स्न्यार्थिकः। 'अथाथो संशये स्यातामधिकारे च मङ्गले। विकल्पानन्तरप्रश्नकात्स्न्यारम्भसमुच्चये' इति मेदिनी। व्यसनैः कामजकोपजदोषैः कामजगणे स्त्रीमृगयाक्षपानानि, क्रोधजगणे वाक्पारुष्यार्थदूषणानीत्येवंविधैराहत्य सप्तभिः प्रधानतया परिगणितैरित्यर्थः। तैः हेतुभिः। उपद्रुताः विपन्नाः। अतएव तमः शोकः। 'तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुन्तुदे' इति मेदिनी। तेन पराभूतम् अधःकृतम् आक्रान्तम् विनष्टमिति यावत्। तादृशम् निजम् स्वीयम् ओजः तेजः बलं वा येषां तथाभूतास्सन्तः। कालात् - आसनात्प्रेक्षत इतिवत् ल्यब्लोपेऽधिकरणे पञ्चमी। वृद्धेस्समुचिते काले स्वयं विनश्येत्यर्थः। द्विषताम् अप्रीतिमताम् शत्रूणाम्। 'द्विषद्द्वेषणदुर्हृदः' इति शत्रुपर्यायेष्वमरः। द्विष - अप्रीतावित्यस्माल्लटश्शता। उपेक्ष्यताम् उपेक्षणीयताम् अप्रतिकार्यताम्। 'कृत्यानां कर्तरि वा' इति पक्षे षष्ठी। द्विषद्भिरप्रतिविधातव्यताम्। प्रयान्ति

प्राप्नुवन्ति । स्वयत्नमन्तरैव स्वसंकल्पितार्थसिद्धौ मन्दोऽपि न तदर्थं श्राम्येदिति भावः । यत एवं स्वस्य स्वसम्पदश्च नाशमूलानि व्यसनानि, ततश्श्रेयस्कामेन प्रभुणा दूरतः परिहर्तव्यान्येतानीति परमार्थः । अत्र मनुः – " दश कामसमुत्थानि तथाष्टौ क्रोधजानि च । व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ।। मृगयाऽक्षो दिवास्वापः परिवाद स्त्रियो मदः । तौर्यत्रिकं वृथाटचा च कामजो दशको गणः ।। पैशुन्यं साहसो द्रोहः ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ।। द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः । तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ।। पानमक्षा स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ।। दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं सदा ।। सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः । पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ।। व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते । व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः ।। कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ।।" इति । श्लेषानुप्राणितं परम्परितरूपकमलङ्कारः ।।

**उपेयुषीं पुण्यवशेन सम्पदं**
**गुणानुरोधादुपभोक्तुमक्षमाः ।**
**स्वचापलेन श्लथयन्ति दुर्धियो**
**वलीमुखाः पुष्पमयीमिव स्रजम् ।।** ।। 35 ।।

**उपेयुषीमिति ।।** दुष्टा धीः येषां ते दुर्धियः दुष्टबुद्धयः उत्पथगामिन इत्यर्थः । पुण्यवशेन जन्मान्तरकृतसुकृताधीनतया । ननु स्वपौरुषेणेति भावः । 'त्रिष्वधीने वशो वाञ्छाप्रभुत्वाधीनतासु ना' इति नानार्थरत्नमाला । उपेयुषीम् प्राप्ताम् । उपपूर्वादिणो लिटः क्वसि 'उगित' श्चेति ङीप् । 'उपेयिवाननाश्वाननूचानश्च' इति निपा



तनात्साधुः । सम्पदम् ऐश्वर्यम् राज्यलक्ष्मीमिति यावत् । गुणानाम् अनुरोधात् अनुसरणेन । हेतौ पञ्चमी । तेन हेतुना सुगुणजान्भूत्वेत्यर्थः । " वृणते हि विमृश्यकारिणं गुणलुब्धास्स्वयमेव सम्पदः " इति सम्पदां गुणलौभ्यादिति भावः । उपभोक्तुम् अनुभवितुम् स्वानुभवयोग्यतया चिरं स्थापयितुमित्यर्थः । अक्षमाः असमर्थाः । गुणराहित्यादिति भावः । चपलस्य कर्म चापलम् । इन्द्रियलौल्यम् अविजितेन्द्रियतेति यावत् । अन्यत्र स्वभावसिद्धबहुविधचेष्टाभिरिति च गम्यते । कपिचेष्टा इति प्रसिद्धेः । 'कुशलचपलनिपुणपिशुनकुतूहलक्षेत्रज्ञा युवादिषु ब्राह्मणादिषु च पठ्यन्ते' इति युवादित्वादण् । तेन करणभूतेन । वल्यः मुखेषु येषां ते वलीमुखाः कपयः । 'कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः' इत्यमरः । पुष्पमयीम् पुष्पाधाराम् पुष्पगुम्फितामित्यर्थः । प्रथमासमर्थादधिकरणे प्रत्यय इत्यर्थान्तरव्याख्यायां 'तत्प्रकृतिवचने' इति मयट् । तादृशीम् स्रजम् मालामिव । गोबलीवर्दन्यायेन शक्तिसंकोचात् स्रक्छब्दः केवलमालापरः । श्लथयन्ति हिंसयन्ति । हस्तादिना संपेष्य संपेष्य नाशयन्तीत्यर्थः । श्रथ श्लथ - हिंसागत्योरित्यस्माण्णिच् । घटादित्वात् 'णौ मिता' मिति ह्रस्वः । कपिहस्तगता स्रगिव दुर्विवेकिसंगता सम्पत्तदनुभूतिदूरा नश्यत्यचिरादेवेति तां वशीकर्तुं राज्ञा गुणवता भाव्यं ननु व्यसनिनेति सारोंऽशः । कस्मिंश्चन संदर्भे " त्वयाऽत्महस्तेन मही मदच्युता मतङ्गजेन स्रगिवापवर्जिता " इत्याह भारविः । अलङ्कृतिरुपमा ।।

गुरूपदेशोऽयं नैसर्गिकविनयसम्पदो दूरीकृतबुद्धिदोषस्य महापुरुषस्यापि प्रयोजनसम्पाद्येवेति प्रतिपादयति —

**भवादृशास्तु स्वत एव शुद्धया**
**गुरूपदेशैर्गुणितप्रकाशया ।**

**धिया निरस्तव्यसनानुबन्धया**
**विलोक्य कार्याणि विधातुमीशते ॥** ॥36॥

**भवादृशा इति ॥** भवादृशाः भवद्विधाः भवन्तमिव पश्यन्ति इमं जनाः, भवानिव पश्यति इति कर्मकर्तरि 'त्यदादिषु दृशोऽनालोचने' इति कञ् । तु विशेषार्थकः । नैसर्गिकविनयवन्तो महाभागा इत्यर्थः । स्वतः स्वयमेव आत्मनैव । 'आद्यादित्वा' त्स्वरत इत्यादाविव तसिः । शुद्धया निर्मलया रागद्वेषादिदोषरहितया । गुरोः पित्रादेः । कर्तरि षष्ठी । 'गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि । पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि ॥' इति मेदिनी । उपदेशैः उपदेशविषयैः उपदिश्यमानैरंशैरित्यर्थः । गुणितः गुणवान् आवृत्तिमान् कृतः । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति शब्दार्णवः । गुणशब्दान्मतुबन्तात्तत्करोतीति णिचि क्तः । णाविष्ठवद्भावात् "विन्मतो" रिति मतुपो लुक् । द्विगुणीकृत इत्यर्थः । प्रकाशः दीप्तिः विषयग्रहणपाटवमिति यावत् । स यस्याः तया । अतएव निरस्तः संत्यक्तः परिहृतः दूरीकृतः । 'निरस्तः प्रेषितशरे संत्यक्ते त्वरितोदिते' इति हैमः । व्यसनानाम् पूर्वोक्तानाम् । कर्तरि षष्ठी । व्यसनैः कृत इत्यर्थः । अनुबन्धः दोषोत्पादः यया तया । 'दोषोत्पादेऽनुबन्धस्स्यात्' इत्यमरः । यद्वा । व्यसनानामिति शेषे षष्ठी । तेषाम् अनुबन्धः परम्परा ययेति वा । तादृश्या धिया बुद्ध्या । करणेन । 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः । विलोक्य दृष्ट्वा आलोच्य गुणदोषौ सम्यक्परामृश्येत्यर्थः । दर्शनार्थास्सर्वे ज्ञानार्थाः । कार्याणि कर्तव्यानि 'ऋहलोरिति' ऋञो ण्यत् । विधातुम् आचरितुम् ईशते प्रभवन्ति प्रगल्भन्ते । पुराकृतसुकृतविशेषालब्धस्वाभाविकविनयस्यापि गुरूपदेशादिना संजातकृत्रिम (क्रियानिष्पन्न) विनयस्य सत एव सम्यक्कार्यदर्शित्वं कार्यकारित्वं चेति



कारणजन्मनि भवत्यपि मदुपदेशोऽयं समुपलब्धप्रयोजन एव, न त्वजागलस्तन इव निरर्थकः, रामादिष्वपि तथैव दर्शनादिति निर्गलितोऽर्थः । 'शक्नोति पारयति पर्याप्नोति प्रभवत्यपि । ईष्टे प्रगल्भते' इति क्रियानिघण्टुः । राजधर्मकथनावसरे यदाह मनुः - "वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदश्शुचीन् । वृद्धसेवी हि सततं रक्षोभिरपि पूज्यते ॥ तेभ्योऽधिगच्छेद्विनयं विनीतात्मापि नित्यशः । विनीतात्मा हि नृपतिः न विनश्यति कर्हिचित् ॥" इति । 'कार्याणि विधातुमीशत' इति वाक्यार्थे 'शुद्धया, निरस्तव्यसनानुबन्धया' इत्यादिपदैरवगतानामर्थानां विशेषणतया हेतुत्वमत्रेति काव्यलिङ्गालङ्कारः ॥

मधुराविजयाय कम्पराजं नियोजयिष्यमाणो बुक्कभूपतिस्तदङ्गतया समुपक्रान्तं स्वोपदेशमुपसंहरति —

**तदेवमात्मन्यवधार्य धैर्यत**
**स्तथा विधेयं भवतापि धीमता ।**
**यथेयमेकान्तचला भवद् गुणै**
**र्लभेत लक्ष्मी स्थिरतामनारतम् ॥** ॥ 37 ॥

**तदेवमिति ॥** तत् तस्मात्कारणात् यतो भवादृशामपि पूर्वोक्तदिशा गुरूपदेश आवश्यक इत्यर्थः । 'यत्तदिति हेत्वर्थे' इति चादिगणे गणरत्नव्याख्या । धीरस्य भावः धैर्यम् विवेकः तस्मात् । पञ्चम्यास्तसिः । 'धीरो मनीषी ज्ञः प्राज्ञः' इत्यमरः । आत्मनि मनसि 'आत्मा कलेबरे यत्ने स्वभावे परमात्मनि, चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च' इति धरणिः । एवम् इत्थम् पूर्वोक्तप्रकारेणेत्यर्थः । अवधार्य निश्चित्य इदं मदिष्टसाधनं नान्यदिति निर्णीयेत्यर्थः । धीमता बुद्धिमता । स्वतो गुणवतापीति

भावः। त्वया भवता। कर्त्रा। नितान्तम् अत्यन्तम्। 'तीव्रैकान्त नितान्तानि गाढबाढदृढानि च' इत्यमरः। चला चञ्चला तटिदिव क्षणक्षणं चलनशीला। इयम् सन्निहिता इदानीं त्वामाश्रित्य स्थिते त्यर्थः। लक्ष्मीः राज्यलक्ष्मीः सम्पदिति यावत्। 'लक्ष्मीस्सम्पत्ति शोभयोः' इत्यमरः। यथा येन प्रकारेण। प्रकारवचने थाल्। भवद्गुणैः त्वदीयैस्सुगुणैः बहुविधैरित्यर्थः। अतएव बहुता। गुणलुब्धत्वात्सम्पदा मिति भावः। अविरतम् अनारतम् अविच्छिन्नमित्यर्थः। क्रिया विशेषणमेतत्। 'सततानारताश्रान्तसन्तताविरतानिशम्' इत्यमरः। स्थिरताम् स्थैर्यम् अचाञ्चल्यम् एकत्वैव त्वयि सातत्येन स्थितिमिति यावत्। लभेत प्राप्नुयात्। सम्भावनायां लिङ्। तथा तेन प्रकारेण। विधेयम् आचरितव्यम् त्वया प्रवर्तनीयमिति यावत्। धैर्यौदार्यादि सुगुणवतापि भवता तत्तद्गुणयोगक्षेमविधानेन नित्यानपायिनी लक्ष्मी र्वशीकर्तव्येति सारोंऽशः। नीचाश्रया लक्ष्मीरिति प्रवादस्तु "अध र्मेणैधते ताव" दिति न्यायेन समागतानां समूलं नाशकानां दुर्योधनादिसम्पदां समवलोकेन सञ्जातः केवलं भ्रममूलक इति भावः। कार्यनियोगोऽत्र गम्यते। यथाऽऽह कौटिल्यः। "कार्याणां नियोग विकल्पसमुच्चया भवन्ति। अनेनैव नान्येनेति नियोगः। अनेन वा ऽन्येन वेति विकल्पः। अनेन चेति समुच्चयः" इति। 'उपेयुषी' मिति श्लोकेन लोकसाधारण्येन समुपदिष्टमर्थं कम्पराजं लक्ष्यीकृत्य भङ्ग्यन्तरेण विशेषविधयाऽत्र कथितमिति न पुनरुक्तिशङ्काव काशः। 'अवधार्य धैर्यतस्त' थेत्यादौ वर्णानां पुनः पुनरावृत्त्या वृत्त्यनु प्रासश्शाब्दोऽलङ्कारः॥

इदानीं यानमुपदेक्ष्यन् 'स्वशक्त्युपचये यान' मिति शक्त्युप चयप्रदर्शनार्थं सहायसम्पदं तावत्प्रस्तौति —



**क्रमागताः कर्मकृतो विमत्सरा**
**स्तरस्विनस्तापितवैरिमानसाः।**
**महीभुजस्त्यक्तमदा मदाज्ञया**
**तवान्तिके तात वसन्ति साम्प्रतम्॥** ॥ 38 ॥

**क्रमागता इति॥** तातेति सम्बुद्धिः। हे कुमारेत्यर्थः। 'पूज्ये पितरि पुत्त्रे च तातशब्दस्स्मृतो बुधैः' इति केशवः। मम आज्ञा नियोगः मदाज्ञा तया। महीभुजः महीं भुञ्जन्ति पालयन्तीति क्विप्। सामन्तराजा इत्यर्थः। तव भवतः अन्तिके समीपे साम्प्र तम् सम्प्रति अस्मिन् समये। वसन्ति निवसन्ति तिष्ठन्ति। कार्य करणे सन्नद्धा नित्यं भवन्नियोगं प्रतीक्षमाणास्त्वां सेवन्त इति भावः। "तिष्ठत्यास्ते वर्तते च वसत्यत्र गृहे रमा" इति क्रियानिघण्टुः। अनेन यानस्य समयौचित्यम् इतः पूर्वमचिरादेव कम्पराजस्य यौव राज्यपदवीस्वीकारश्च ध्वन्यते। न केवलमेते सर्वसाधारणा उप जीविनः, किन्तु स्वामिभक्ता उत्साहवन्तः कार्यकरणनिपुणाः पराक्रम वन्तश्चेति सहायसम्पत्समृद्धिमाचक्षाणस्तान्विशिनष्टि - क्रमागताः क्रमेण वंशपारम्पर्येण आगताः सम्प्राप्ताः। बहोः कालात् राजवंशमाश्रित्य स्थिता इत्यर्थः। अनेन सम्प्रदायशुद्धिः विश्वसनीयता च तेष्वभिहिता। कर्माणि महान्ति कृत्यानि पूर्वं कृतवन्तः कर्मकृतः। भूते क्विप्। विश्वसनीयपराक्रमा इति यावत्। एतेन कार्यसिद्धेरेतत्साहाय्येन सुक रत्वं द्योत्यते। विगतः मत्सरः अन्यशुभद्वेषः येभ्यस्ते तथोक्ताः। स्वाम्यभिवृद्धिसहिष्णव इति यावत्। तेन च स्वार्थतृष्णाराहित्यं तेषामुक्तं भवति। अतः ते प्राणानपि तृणाय मत्वा स्वामिकार्य सिद्धये यतन्त इति सूच्यते। 'मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु' इत्यमरः। तरः बलम् तदेषामस्तीत्यतिशायने द्योत्ये मतुबर्थे 'अस्मा यामेधास्रजो विनिः' इति विनिः। अतिशयितबलाः अप्रधृष्यपराक्रमा

इति यावत् । अनेन शात्रवाणां वधेऽवश्यंभाविता प्रतीयते । तापितानि स्वनामश्रवणेनैव तापवन्ति कृतानि वैरिमानसानि यैस्ते । शत्रुभयङ्करा इत्यर्थः । अनेन सर्वसमर्थत्वं तेषामवगम्यते । त्यक्तः मदः गर्वः अहङ्कारः यैस्ते । निगर्वचूडामणयः अत्यन्तं विनीता इति यावत् । एतेन विमृश्यकारित्वं विजितेन्द्रियता च व्यज्यते । 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' इति विश्वः । एवं पुरुषसम्पदुत्कर्षवतस्तव यातव्यश्शत्रुरवश्यमद्येति भावः । अत्र कामन्दकः— "प्रायेण सन्तो व्यसने रिपूणां यातव्यमित्येव समादिशन्ति । तथा विपक्षे व्यसनानपेक्षी क्षमो द्विषन्तं मुदितः प्रतीयात् ॥' इति । स्वशक्त्युपचयप्रदर्शनार्थमेव पुरुषसम्पद्रूपं पौरुषमुत्तरश्लोकेनानेन च बहुशो वर्णितमित्यवगन्तव्यम् ॥

"स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । परस्परोपकारीदं राज्यं सप्ताङ्गमुच्यते ।" इति कामन्दकः । सप्त प्रकृतिषु सुहृदामुपचयः पूर्वं वर्णितः । इदानीं बलोपचयः प्रस्तूयते —

**सहस्रशस्तुङ्गतुरङ्गवीचयो**
**मदद्विपद्वीपविशेषितान्तराः ।**
**भवन्तमुग्रायुधनक्रराजयो**
**भजन्ति नित्यं बहुला बलाब्धयः ॥** ॥ 39 ॥

**सहस्रशः इति** ॥ तुङ्गाः उन्नताः तुरङ्गाः अश्वाः त एव वीचयः तरङ्गाः ते येषु तथोक्ताः । महाश्वराजयस्तरङ्गपङ्क्तय इव असंख्याकास्तत्र चङ्क्रम्यन्त इति भावः । तरङ्गसाम्येन धवलाश्वास्ते उच्चैश्श्रवस इवेति व्यज्यते । मदद्विपैः मत्तगजैः द्वीपविशेषितानि द्वीपविशेषवन्ति कृतानि । द्वीपविशेषशब्दान्मतुबन्तात् तत्करोतीति ण्यन्तात्कर्मणि क्तः । 'विन्मतो' रिति मतुपो लुक् । अतिशयितान्त



रीपवन्ति कृतानि अन्तराणि मध्यप्रदेशाः येषु ते तथोक्ताः । औन्नत्यभाजो महान्तो मदगजा उन्नतानि द्वीपानीव तदन्तरा राजन्त इत्यर्थः । 'द्वीपविशेषः' इत्यनेन पर्वता इव स्थूला उन्नताश्च त इति तेषामुत्तमत्वं गम्यते । उग्राणि भयङ्कराणि दर्शनमात्रेणैव भीतिजनकानि आयुधानि खड्गादियुद्धसाधनानि तान्येव नक्रराजयः कुम्भीरश्रेणयः येषु ते । 'ग्राहोऽवहारो नक्रस्तु कुम्भीरः' इत्यमरः । सन्निहितानां सद्य एव प्राणोपद्रवकारित्वेन भयंकरत्वादायुधानि नक्राणीत्युच्यन्ते । तादृशाः बहुलाः बहवः विस्तृताः दुरधिगमपाराः । अनन्ताश्चेति गम्यते । 'बहुलोऽग्नौ कृष्णपक्षे पुमांस्त्रिष्वसिते बहौ' इति नानार्थरत्नमाला । बलानि सैन्यानि तान्येव अब्धयः समुद्राः । ते भवन्तम् त्वाम् । नित्यम् सदा क्षणमप्यविहायेत्यर्थः । सहस्रमेव सहस्रशः अनन्तास्सन्तः 'शतं सहस्रमयुतं सर्वमानन्त्यवाचकम्' इत्यभियुक्ताः । स्वार्थे शस् । "एकां कपिलामेकैकशस्सहस्रकृत्वो दत्त्वा" इति भाष्यव्याख्यावसरे शसन्तस्य प्रत्येकमित्यर्थकत्वेन कैयटे व्याख्यातत्वात् । भजन्ति सेवन्ते त्वद्वशे नित्यं तिष्ठन्तीति यावत् । एतादृशबलोपचयवतस्तव दुस्साधमेव नास्तीति भावः । श्लोकद्वयेन वर्णितौ सुहृदुपचयबलोपचयौ शिष्टानामङ्गानामुपलक्षणविधया संग्राहकावित्यवगन्तव्यम् । अत्र बलादावब्धित्वरूपणाद्रूपकम् । तच्च तुरङ्गादौ वीचित्वाद्यारोपणात्समस्तवस्तुविषयसावयवं रूपकमिति विवेकः ॥

शक्त्युपचयप्रदर्शनानन्तरं यानमुपदिशति —

**तदेवमुज्जृम्भितभूरिपौरुषः**
**पराक्रमं वैरिषु कर्तुमर्हसि ।**
**उपप्लुताशेषजगत्सु रोषणो**
**वृषेव शातां शतकोटिमद्रिषु** ॥ 40 ॥

**तदेवमिति** ।। तत् यत एवं बलादिसमृद्धिस्तव तत इत्यर्थः । एवम् इत्थम् उक्तप्रकारेण । उज्जृम्भितम् विजृम्भितम् विशेषेण प्रकाशमानम् भूरि अधिकम् पौरुषम् पुरुषप्रयत्नः सहायसम्पदादि यस्य तथोक्तः । तादृशस्सन् । उपप्लुतानि उपप्लवं प्राप्तानि समुपलब्धदुःखानीत्यर्थः । तादृंशि अशेषजगन्ति समस्तभुवनानि येभ्यः तेषु अद्रिषु पर्वतेषु । रोषणः क्रोधनः क्रोधवान् । रुष – रोषे — इत्यस्मात् 'क्रुध मण्डार्थेभ्यश्च' इति कर्तरि युच् । वृषा इन्द्रः 'वासवो वृत्रहा वृषा' इति इन्द्रपर्यायेष्वमरः । शाताम् तेजिताम् निशिताम् 'अथ निशितक्ष्णुतशातानि तेजिते' इत्यमरः । शो - तनूकरणे क्तः । 'शाच्छोरन्यतरस्या' मितीत्त्वविकल्पः । शतम् कोटयः धाराः अस्य शतकोटिम् वज्रायुधमिव । वैरिषु शत्रुषु जगदुपद्रवकारिष्वित्यर्थः । पराक्रमम् विक्रमम् स्वशौर्यम् स्वसामर्थ्यं वा । 'पराक्रमस्स्यात्सामर्थ्ये विक्रमोद्यमयोरपि' इति मेदिनी । कर्तुम् कार्यकारिणं कर्तुम् प्रयोक्तुमिति यावत् । त्वम् । अर्हसि युज्यसे प्रभवसीत्यर्थः । त्वत्पराक्रमप्रदर्शनस्य समुचितः कालः प्राप्त इति भावः । उपमा अलङ्कारः । उपमानं तु पुराणप्रसिद्धम् ।।

उपचितशक्तेः कृतमूलराष्ट्ररक्षकस्य शत्रोरवस्कन्दनाय यात्रा यानम् । तच्च पञ्चविधम् । "विगृह्य यानम् । सन्धाय यानम् । सम्भूय यानम् । प्रसङ्गयानम् । उपेक्ष्य यानं" चेति । तत्र – एकप्रकृतयानस्य अन्तरोपस्थितेऽपि यद्यानं तत्प्रसङ्गयानम् । तद्व्याचष्टे –

**उपेत्य तुण्डीरमखण्डितोद्यमः**
**प्रमथ्य चम्पप्रमुखान् रणोन्मुखान् ।**
**प्रशाधि काञ्चीमनुवर्तितप्रजः**
**पतिर्निधीनामलकापुरीमिव ।।** ।। 41 ।।



**उपेत्येति** ।। न खण्डितः अखण्डितः अविच्छिन्नः मध्येऽनुपरतः कार्यसाधक इति यावत् । तादृक् उद्यमः प्रयत्नः यस्य तथाविधस्सन् । तुण्डीरम् तदाख्यं देशम् । पूर्वं तुण्डीराख्यो राजा शिवनियोगात्सर्वाणि वेदशास्त्राणि स्वराष्ट्रे प्रत्यष्ठापयत् । तन्नाम्नाङ्कितोऽयं देशस्तुण्डीर इति प्रसिद्ध इति स्मर्यते । उपेत्य प्राप्य । रणाय युद्धाय उन्मुखान् प्रतीक्षमाणान् कृतप्रयत्नवत इत्यर्थः । चम्पः तदाख्यः आटविको राजा तुरुष्कराजसामन्तः । सः प्रमुखः प्रधानः येषाम् तान् तदधिष्ठानवतः वैरिराजानित्यर्थः । 'प्रमुखं प्रथमे मुख्ये' इति हैमः । प्रमथ्य विलोड्य संहृत्य । अनुवर्तिता अनुगमिता छायेवात्मानमनुसृता स्ववशे स्थापितेति यावत् । तादृशी प्रजा जनः जनसमूहः यस्य तथोक्तः । तादृक् सन् । गाढं स्वानुरक्तप्रजानीको भवन्निति भावः । काञ्चीम् तदाख्याम् मोक्षदायिकासु सप्तसु नगरीष्वेकाम् । निधीनाम् पद्मादीनाम् नवानामित्यर्थः । 'पद्मोऽस्त्रियां महापद्मश्शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव' इति शब्दार्णवः । तेषां पतिः रक्षकः स्वामी धनदः कुबेर इति यावत् । अलका तन्नाम्ना प्रसिद्धा पुरी कुबेरस्य नगरी । 'अस्योद्यानं चैत्ररथं पुत्त्रस्तु नलकूबरः । कैलासस्थानमलका पूर्विमानं तु पुष्पकम् ।।' इत्यमरः । तामिव । प्रशाधि पालय तस्याः जनरञ्जको राजा भवेत्यर्थः । 'अवति त्रायते पाति पालयत्यपि रक्षति । शास्ति गोपायति' इति क्रियानिघण्टुः । प्रेत्युपसर्गपूर्वकात् शासु – अनुशिष्टावित्यस्माल्लोण्मध्यमपुरुषैकवचनम् । 'शाहा' विति शादेशः । तस्याभीयत्वेनासिद्धत्वात् हेर्धिः । अत्र 'पतिर्निधीनामलकापुरीमिवे' त्युपमया काञ्चीपुर्यास्सर्वसमृद्धिमत्त्वं व्यज्यते । 'अनुवर्तितप्रज' इत्यनेन प्रजाप्रातिकूल्यमिदानीन्तनराजस्य तत्रास्ति । स एव राज्ञस्तस्य राज्यस्य च क्षयहेतुरिति त्वया तथा न भवितव्यमिति च द्योत्यते ।। एवं प्रजानुरागसम्पादने सत्यसमद्

दृष्टं प्रधानयानमतिसुकरमस्माकं भवेदिति च गम्यते ॥

काञ्चीपुरविजयः प्रसङ्ग्यानं तव नत प्रधानयानमिति प्रब्रूते —

**अथाभिभूताखिलवन्यभूभृत**
**स्तुरुष्कभङ्गस्तव नैव दुष्करः ।**
**निगीर्णशाखाशतसंवृतिः कथं**
**तरुप्रकाण्डं न दहेद्दवानलः ॥** ॥ 42 ॥

**अथेति ॥** अथ अनन्तरम् काञ्चीपुरमाक्रम्य तदीयप्रजानुरञ्जन सम्पादनसमनन्तरमित्यर्थः । अभिभूताः पराजिताः गर्विणो भूत्वा ये शत्रुभिस्त्याजितगर्वाः ते अभिभूता इत्युच्यन्ते । 'आत्तगन्धोऽभिभूत स्स्यात्' इत्यमरः । अखिलाः निरवशेषाः वन्याः वने भवाः आट विकाः । 'दिगादिभ्यो य' दिति यत् । 'दिग्वर्गपूगा गणपक्षमेघा वंशानुवंशौ वनमित्त्रमेघाः' इति दिगादिगणे वनशब्दस्यापि गणरत्न व्याख्यायां पाठात् । भूभृतः तादृशाः भूपाः येन तथाविधस्य । नाशित शात्रवसहायसम्पदस्तवेति यावत् । तुरुष्कभङ्गः यवनराजपराजयः 'भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये' इति हैमः । प्रधानयान मिति यावत् । दुःखेन क्रियते इति दुष्करः श्रमसाध्यः । 'ईष द्दुस्सुषु कृच्छ्राकृच्छ्रेषु' इति खल् । नैव न भवत्येव । तत्र सन्देहो नास्तीत्येवकारार्थः । अतएव प्रसङ्ग्यानं त्वया प्रथमतः कर्तव्यमिति भावः । उक्तमर्थं दृष्टान्तमुखेन विशदयति – शतं शाखाः शाखा शतम् । अनन्ताश्शाखा इत्यर्थः । पुरुषोत्तमादिवत् राजदन्तादित्वेन परनिपातः । शाखानां शतमिति वा । तदेव संवृतिः आच्छादनम् समन्तात्परिवेष्टनम् । रक्षकतया स्थितमिति भावः । तत् तथोक्तम् । निगीर्णा सम्यग्गिलिता निरवशेषं भक्षिता निश्शेषं दग्धेति यावत् । निपूर्वात् गॄ - निगरणे इत्यस्मात् क्तः । 'ॠत इद्धातो' रितीत्त्वम् ।



'हलि चे' ति दीर्घः । 'रदाभ्या' मिति निष्ठातस्य नः । णत्वम् । तादृशी शाखाशतसंवृतिः येन तथाभूतः । दुनोतीति दवः । तदाख्यः अनलः वह्निः भयङ्करो वनाग्निरित्यर्थः । 'दवदावौ वनारण्यवह्नी' इत्यमरः । टुदु - उपतापे । 'दुन्योरनुपसर्गे' इति णस्याभावेऽच् । तरोः वृक्षस्य प्रकाण्डम् स्कन्धम् 'अस्त्री प्रकाण्डः स्कन्धस्स्यान्मूलाच्छा खावधेस्तरोः' इत्यमरः । कथम् केन प्रकारेण । प्रकारवचने थाल् । न दहेत् न भस्मीकुर्यात् । सर्वथा दग्धुं प्रभवेदेवेत्यर्थः । 'शकि लिङ् चे' ति शक्यार्थे लिङ् । रक्षकनाशे रक्ष्यमाणनाशस्सञ्जातप्राय एवेति भावः । 'निगीर्णशाखाशतसंहति' रिति तु परिष्कर्तृभिः परिष्कृतं पाठान्तरम् । निगीर्णा शाखाशतस्य संहतिः समूहः येन तथाभूतम् इति स योज्यः । शेषं पूर्ववत् । व्याख्यातपूर्वो मातृकापाठ एव समु चितो भाति । अत्र तरुदहनसामर्थ्यं वह्नौ तुरुष्कनाशप्राभवं च कम्पराजे पृथक्पृथग्वाक्ययोर्वर्णयित्वा सजातीयसाजात्यं निरदिशत्तयो रिति प्रतिवस्तूपमाऽलङ्कृतिः ॥

अवश्यं वध्यस्तुरुष्कराजस्त्वयेति मधुराविजयं प्रस्तौति –

**अनेन देशानधिकृत्य दक्षिणान्**
**वितन्यते राक्षसराजदुर्नयः ।**
**त्वयापि लोकत्रयतापहारिणा**
**विधीयतां राघवकर्म निर्मलम् ॥** ॥ 43 ॥

**अनेनेति ॥** अनेन पूर्वमुदाहृतेन यवनसुरत्राणेन । दक्षिणान् दक्षिणदिक्स्थान् देशान् तद्देशीयानित्यर्थः । अधिकृत्य उद्दिश्य तान् लक्ष्यीकृत्येत्यर्थः । राक्षसानां राजा राक्षसराजः रावणः । 'राजा हस्सखिभ्य' इति टच् । तस्य दुर्नयः दुर्नीतिः दुर्वृत्तम् दुष्कृत्या चरणमिति यावत् । 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्य' इति

दुरः उपसर्गत्वाभावात् णत्वं न। वितन्यते क्रियते। रावणो निरपराधान् मुनीनिव, दक्षिणदेशीयानयं स्वदौष्ट्येन नित्यं बाधत इति भावः। किमत्र कर्तव्यमित्यत आह – त्रयः अवयवाः यस्य त्रयम्। त्र्यवयवकसमुदाय इत्यर्थः। लोकानां त्रयमिति विग्रहः। त्रयो लोका इति यावत्। 'द्वित्रिभ्यां तयस्यायज्वा' इति तयपोऽयच्। तस्य तापः सन्तापः दुःखम् स तथोक्तः। तं हर्तुं शीलमस्य 'सुप्यजाता' विति णिनिः। तेन शोकापनुदेनेति यावत्। णिनिरयं कारणजन्मतामस्य स्फोरयति। त्वया भवता। अपित्वर्थकः। भवता तु इत्यर्थः। निर्मलम् निष्कल्मषम् अनाकलितलोकोपद्रवम्। यद्वा। निर्मलम् ऋजुमार्गप्रवृत्तम् कूटनीतिविरहितमिति यावत्। रघोरपत्यम् राघवः रघुवंश्यः दाशरथिश्श्रीराम इत्यर्थः। 'तस्यापत्य' मित्यण्। तस्य कर्म कृत्यम् दुष्टवधेन लोकरक्षणमित्यर्थः। विधीयताम् क्रियताम्। विधौ लोट्। अनेन रावणवत्सर्वेषामवध्यः प्रबलोऽयं शत्रुः। राम इव रावणवधाय, वीरकम्पराज एक एव तुरुष्कराजवधाय लोके प्रभवतीति नायकसमुत्कर्षोऽत्र व्यज्यते॥

कम्पराजे गुरूपदेशग्रहणं वर्णयति –

**इतीरयित्वा विरते नरेश्वरे**
**प्रवृष्टपाथोधरसाम्यधारिणि।**
**कृतप्रणामश्शिरसा प्रतीष्टवान्**
**गुरूपदेशं गुणिनां पुरस्सरः॥** ॥ 44 ॥

**इतीति**॥ इति इत्थम् उक्तप्रकारेण। ईरयित्वा चोदयित्वा तुरुष्कवधं कुरु त्वमिति कुमारं नियुज्येत्यर्थः। ईर – क्षेपे इति चुरादिण्यन्तात् क्त्वाप्रत्ययः। नरेश्वरे मनुजेन्द्रे बुक्कप्रभावित्यर्थः। विरते विश्रान्ते। स्वोपदेशं समाप्य तूष्णींभूते। धरतीति धरः।



पाथसां धरः पाथोधरः जलधरः मेघः। प्रकृष्टं वृष्टः प्रवृष्टः निश्शेषं मुक्तजलः। स च पाथोधरः तथोक्तः। वृषु सेचने – कर्तरि क्तः। तस्य साम्यम् तौल्यम् तेन साकं सादृश्यमित्यर्थः। तत् अवश्यं धारयति धरतीति 'आवश्यकाधमर्ण्ययो' रिति णिनिः। अनेन कण्ठस्वरगाम्भीर्यलक्षितं महापुरुषत्वं बुक्कराजे ज्ञायते। तादृशे सति। गुणिनाम् सुगुणवताम् पुरस्सरः अग्रेसरः गुणवत्सु-प्रथमगण्यः कम्पराज इत्यर्थः। 'पुरोऽग्रतोऽग्रेषु सर्ते' रिति पुरश्शब्दोपपदात् सर्तेष्टः। प्रणामः नमस्कारः कृतः येन स तथोक्तः। 'निष्ठा' इति क्तान्तस्य पूर्वनिपातः। तादृशस्सन्। शिरसा स्वमूर्ध्ना। करणभूतेन। प्रतीष्टवान् गृहीतवान् सादरं पितुरुपदेशं जग्राहेत्यर्थः। तुरुष्कवधादि कर्तुं सोत्साहं सर्वथा सन्नद्धोऽभवदिति भावः। प्रतीष्टवानिति प्रतिपूर्वादिषेः क्तवतुः। उपसर्गबलाच्च ग्रहणार्थत्वमिषेः। 'वर्कते घिण्णते गृह्णात्येवं झषति चीवति। स्वीकरोतीति चत्वारि चात्मने स्युः प्रतीच्छति॥ घुण्णतेऽमी गृह्यते घृण्णते स्युश्चतुर्दश' इति भट्टमल्लः। अत्र गुणिनां पुरस्सर इत्ययं व्यङ्ग्यार्थगर्भत्वेन गुरूपदेशग्रहणे हेतुर्भूत्वा प्रकृतोपयोगी समभवदिति परिकरालङ्कारः। न च काव्यलिङ्गस्यात्रावकाशः। वाच्यार्थस्य हेतुत्व एव तदित्यालङ्कारिकमूर्धन्यैर्बहुभिरङ्गीकृतत्वात्। तत्रापि व्यङ्ग्यार्थो हेतुरितिचेदुभयोस्सङ्कर इति निरणायि कुवलयानन्दे॥

गृहीतस्वोपदेशं पुत्रं स्वप्रतिनिधिरिति प्रकटयन् सभायां तं सभाजयति बुक्कदेव इति कथयति –

**ततो महार्हैर्गुरुणा विभूषणैः**
**प्रसाधितस्स्वावयवावतारितैः।**
**परेऽह्नि निर्धारितजैत्रनिर्गमो**
**निजाधिवासं प्रमनास्समासदत्॥** ॥ 45 ॥

**तत इति** ॥ ततः तस्मिन्। सार्वविभक्तिकस्तसिः। स्वोपदेशोत्तरकाले इत्यर्थः। गुरुणा पित्रा। कर्त्रा। महान् अर्हः मूल्यम् येषां तैः। अनर्घैः महाराजोचितैरित्यर्थः। स्वस्य आत्मनः अवयवेभ्यः अङ्गेभ्यः अवतारितानि अवारोपितानि स्वस्थानेभ्यः अपसारितानि विभूषणानि रत्नाङ्गुलीयकाद्या अलङ्कृतयः। तैः (करणभूतैः) प्रसाधितः अलङ्कृतः। आत्मनोऽनन्तरं भविष्यति महाराजोऽयमेवेति सर्वानवगमय्य तं सोत्साहं कर्तुमिति भावः। प्रकृष्टं मनः यस्य प्रमनाः प्रहृष्टमानसः सोत्साह इति यावत्। सभायां वीरपुरुषकृता समुचितेयं वीरपूजा वीरमुत्साहयेदिति किमु वक्तव्यमिति भावः। 'हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः' इत्यमरः। रामायणेऽपि युद्धगमनोद्यतं कुम्भकर्णं रावण एवमेव संभावयामासेति महाराजभिः क्रियमाणा चिरन्तनी महती वीरपूजेयमिति ज्ञायते। परे उत्तरे भाविनीत्यर्थः। तादृशे अह्नि दिने श्व इति यावत्। जेतुः अयम् जैत्रः जयशीलः अवश्यं विजयसाधक इत्यर्थः। 'तस्येद' मित्यण्। तादृक् निर्गमः यात्रा जैत्रयात्रेति यावत्। निर्धारितः दैवज्ञैस्समुचित इति निर्णीतः जैत्रनिर्गमः यस्य स तथोक्तः। तादृक् सन्। निजाधिवासम् स्वगृहान्। समासदत् संप्राप। 'सम् आङ्' इत्युपसर्गद्वयपूर्वात् सदेः लुङ्। पित्रा सत्कृतः कम्पराट् ग्रहादिबलं सम्यक्परीक्ष्य समयविद्भिर्दैवज्ञैः श्वो जैत्रयात्रेति बोधितशुभसमयस्सन् स्वसदनं सर्वैरनुज्ञातः प्रविवेशेति पिण्डीकृतोऽर्थः ॥

सूर्यास्तमयोऽत्र वर्ण्यते –

अथोरगाणामधिपस्य भाविनं
भुवो भरस्यापगमं दिनेश्वरः।
निवेदयिष्यन्निव गाढरंहसा
रथेन पातालगुहामगाहत ॥ ॥ 46 ॥



**अथेति** ॥ अथ कम्पराजगृहप्रवेशानन्तरमित्यर्थः। दिनस्य दिवसस्य ईश्वरः अधिपः अहर्पतिस्सूर्यः इत्यर्थः। उरसा गच्छन्तीति उरगाः नागाः। 'उरसो लोपश्च' इति उरसि गमेर्डः। सलोपश्च। तेषामधिपस्य स्वामिनः आदिशेषायेत्यर्थः। संप्रदानस्य शेषत्वविवक्षायां षष्ठी। भवतीति भावी। तम् अचिरकालादेव तुरुष्कवधेन सम्भविष्यन्तम्। भुवः भूमेः भरः भारः तस्य। अपगमम् अपसरणम्। अपपूर्वाद् गमेः 'ग्रहवृदृनिश्चिगम' श्चेति भावेऽप्। लोकोपद्रवकारिभिर्दुष्टैर्भूमेर्भारः, तन्नाशेन तद्भारापगमश्च पुराणादिषु श्रूयत इत्येवमुक्तिः। निवेदयिष्यन् विज्ञापयिष्यन् निबोधयिष्यन्निति यावत्। इवेति सम्भावनायाम्। एवं सम्भाव्यमान इत्यर्थः। गाढम् अतिशयितम् रंहः वेगः यस्य तेन। अतिशीघ्रगामिनेत्यर्थः। 'रंहस्तरसी तु रयस्स्यदः' इत्यमरः। रथेन स्यन्दनेन। करणभूतेन। पातालम् नागलोकः तदेव गुहा दरी गुहेव। तस्य दुर्गमत्वात् तत्र प्रविष्टस्य दृगगोचरत्वाच्चैवमुच्यते। अगाहत प्राविशत्। पश्चिमसमुद्रं द्वारीकृत्येति शेषः। 'गाहू - विलोडने' इत्यस्माल्लङ्। महात्मानो लोकबान्धवास्स्वयं महादुःखमनुभूयापि परसुखसम्पादनाय प्रयतन्त इति लोकबान्धवोऽयमप्येवं प्रावर्ततेति गम्यते। सूर्योऽस्तमगच्छदिति परमार्थः। पाताले सहस्रफणामण्डलैर्भूमिं बिभ्रतश्शेषस्य भूभारापनोदवार्ता सुखं जनयिष्यतीति धिया तस्य तमभिधातुं सूर्यो रसातलं प्रविवेशेति सूर्यकृतपातालगमनस्य भूभारापनोदार्थत्वसंभावनात्रेति क्रियोत्प्रेक्षेयम् ॥

अथ नृपसुतस्सान्ध्यं निर्माय कर्म सभां गतः
क्षणमिव गुरोराज्ञां राज्ञां गणाय निवेद्य सः।
विमतविजयव्यग्रोत्साहान् विहाय गृहाय ता
नरमत सुखी शय्यागेहे सरोजमुखीसखः ॥ ॥ 47 ॥

**अथेति** ॥ अथ अनन्तरम् सूर्ये अस्तमिते इत्यर्थः। नृपसुतः

राजकुमारः युवराजः कम्पन इति यावत् । सम्यक् ध्यायन्ति अस्यामिति सन्ध्या । रात्रेराद्यन्तदण्डचतुष्टयात्मकः कालः । सन्ध्याकालश्च मुहूर्तमात्रमित्याह योगी याज्ञवल्क्यः – "ह्रासवृद्धी तु सततं दिवसानां यथाक्रमम् । सन्ध्या मुहूर्तमात्रं तु ह्रासे वृद्धौ च सा स्मृता ॥" इति । संपूर्वात् ध्यायतेः 'आतश्चोपसर्गे' इति क्तिनोऽपवादोऽङ् । तत्र भवं सान्ध्यम् सन्ध्याकालनिर्वर्तनीयमित्यर्थः । 'संन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति भवार्थेऽण् । कर्म कृत्यम् सन्ध्याभिवन्दनमिति यावत् । निर्माय विरचय्य यथाविधि कृत्वेत्यर्थः । तदकरणे प्रत्यवायश्रवणादिति भावः । अत्र मनुः - "न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् । स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः" इति । सभाम् सचिवादिदर्शनयोग्यम् गृहम् । गतः प्राप्तः तत्र स्थित इत्यर्थः । गुरोः आज्ञाम् स्वपितुः नियोगम् । राज्ञाम् क्षत्रियाणाम् सभासदामित्यर्थः । 'राजा मृगाङ्के क्षत्रिये नृपे' इत्यमरः । सभासदां च लक्षणमेवमुक्तम् – "धर्मशास्त्रार्थकुशलाः कुलीनास्सत्यवादिनः । समाश्शत्रौ च मित्रे च नृपतेश्च सभासदः" इति । तेषाम् गणाय संघाताय सभ्येभ्यस्सर्वेभ्य इत्यर्थः । क्षणम् उत्सवम् सन्तोषजनकं विवाहादिकार्यमिव । सोत्साहमिति यावत् । "क्षणो व्यापारशून्यत्वमुहूर्तोत्सवपर्वसु" इति रुद्रः । निवेद्य विज्ञाप्य । विमताः शत्रवः । तेषाम् विजयः जयलाभः । तस्मिन् व्यग्रः व्यासक्तः व्याकुलः अनेकधा चिन्त्यमान इत्यर्थः । 'व्यग्रो व्यासक्त आकुले' इत्यमरः । तादृशः उत्साहः अध्यवसायः कर्तव्येषु स्थेयान् प्रयत्नः येषु तथोक्तान् । शात्रवविजयसंसाधन एव समासक्तचित्तानित्यर्थः । तान् राज्ञः । गृहाय विहाय गृहान् गन्तुं समनुज्ञायेत्यर्थः । 'गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि' इति मेदिनी । 'क्रियार्थोपपदस्य च कर्मणि स्थानिन' इति चतुर्थी । सः कम्पनः । कर्ता । शय्यायाः शयनीयस्य गेहः गृहम् शय्यागेहः । तम् शयनगृहमित्यर्थः । अश्वघासादिवत् षष्ठीसमासः । तस्मिन् । भोजना



नन्तरमिति ज्ञायते । सरोजम् पद्ममिव मुखम् यासां ताः सरोजमुख्यः सौन्दर्यवत्यः स्त्रिय इत्यर्थः । ता एव सख्यः सहचर्यः सहायभूताः यस्य । तादृशस्सन् तत्सहितो भूत्वेति यावत् । 'गोस्त्रियोरुपसर्जन' स्येति ह्रस्वः । 'राजाहस्सखिभ्य' इति टच् । 'यस्येति' चेत्यकारलोपः । सुखी सौख्यवान् संप्राप्तसुखानुभूतिस्सन्नित्यर्थः । व्यरमत अक्रीडत् विजहार क्रीडासुखमन्वभूदित्यर्थः । विपूर्वाद्रमतेः कर्तरि लङ् । अत्र 'व्याङ्परिभ्यां रम' इति परस्मैपदं न्याय्यम् । आत्मनेपदप्रयोगस्तु प्रौढोक्तिमूलक एव । राजधर्मकथनावसरे मनुरेवमाह – "भुक्तवान् विहरेच्चैव स्त्रीभिरन्तःपुरे सह । विहृत्य तु यथाकालं पुनः कार्याणि चिन्तयेत्" इति । वृत्तं तु हरिणी । "भवति हरिणी न्सौ म्रौ स्लौ गो रसाम्बुधिविष्टपैः" इति लक्षणात् । विपरिणतं वृत्तं सर्गसमाप्तिं सूचयति ॥

इति
श्रीगङ्गादेव्या विरचिते
मधुराविजयनाम्नि वीरकम्परायचरिते
जैत्रयात्राऽऽदेशो नाम
तृतीयसर्गः

* * * *

**इतीति** ॥ शेषं पूर्ववत् । तृतीयः त्रयाणां पूरणः इति । 'त्रेस्सम्प्रसारणं च' इति तीयः सम्प्रसारणं च । सर्गः इति समाप्तः इति तु विशेषः ॥

इति
श्रीपरमेश्वरीकृपासमुपलब्धशास्त्रसाहितीवैदुष्य
'साहित्यालङ्कार' 'विद्वत्कवीशान'
**पोतुकुच्चि सुब्रह्मण्यशास्त्रिणा**
'काव्यकलानिधि' 'महीशूरमहाराजास्थानमहाविद्वत्कवि'
श्रीचिदम्बरशास्त्रिणां भागिनेयेन विरचितया
**भावप्रकाशिका**व्याख्यया समलङ्कृतायाम्
श्रीगङ्गादेव्याः कृतौ मधुराविजये महाकाव्ये
काञ्चीपुरमधुरापुरविजयसाधनाय
कम्पराजनिदेशो नाम
**तृतीयसर्गः**

* * * *

श्रीः

# मधुराविजयम्

**भावप्रकाशिकाख्यव्याख्यासमेतम्**

## चतुर्थसर्गः

अत्र कम्पनस्य प्रस्थानं वर्णयन् कविरादौ सूर्योदयं प्रस्तौति —

**अन्येद्युरथ राजीव वनजीवनदायिनि ।**
**लोकैकदीपे भगव त्युदिते भानुमालिनि ॥** ॥ 1 ॥

**अन्येद्युरिति** ॥ अथ अनन्तरम् सुखेन रात्रौ व्यतीतायामित्यर्थः। 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ' इत्यमरः। अन्येद्युः अन्यस्मिन् अहनि तदुत्तरे दिने इत्यर्थः। 'सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्यु' रित्यादिना निपातितः। राजीवानाम् पद्मानाम् वनम् समूहः पद्म षण्डमित्यर्थः। 'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च' इत्यमरः। तस्य जीवनम् प्राणः दीप्तिमत्त्वम् विकास इति यावत्। जीवति अनेनेति – जीव प्राणधारणे – इत्यस्मात् करणे ल्युट्। तत् दातुम् शीलमस्येति तथोक्तः। 'सुप्यजाता' विति णिनिः। 'आतो युक्चिण् कृतोः' इति युक्। राजीवानाम्, वनानाम् जलानाम् च जीव दायिनि - इत्यप्यर्थान्तरम्। तथा च स्मर्यते - "अग्नौ प्रास्ताहुति स्सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः" इत्यादि। तस्मिन्। किञ्च। लोकस्य लोकानाम्। जातावेकवचनम्। एकः अद्वितीयः निरुपमः दीपः प्रदीपः गृहमणिः 'दीपः प्रदीपः' इत्यमरः। 'दीपस्तु स्नेहाशः कज्जलध्वजः। दशेन्धनो गृहमणिर्दोषातिलकः' इति दीप पर्यायेषु सुत्रा। तथाभूते। दीः प्रज्वलन् गृहैकदेशमेव स्वभासा

भासयितुं प्रभवति अयं तु स्वतेजसा त्रीन् लोकानपीति निरुपमानो ऽयं दीप इति भावः। अतएव भगवति - भगम् माहात्म्यमस्यास्तीति भगवान् 'भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः। तस्मिन्। भानूनाम् किरणानाम् माला परम्परा अस्मिन्नस्तीति तथोक्तः। सर्वधनादित्वादिनिः। 'भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्' इत्यमरः। तस्मिन् अंशुमालिनि सहस्रांशौ सूर्ये इत्यर्थः। 'कर्मसाक्षी जगच्चक्षुरंशुमाली त्रयीतनुः' इति सूर्यपर्यायेष्वमरः। तस्मिन् उदिते उदयमाने सूर्योदये जाते इत्यर्थः। उत्पूर्वादिणः आदिकर्मणि क्तः। (सः पृतनाध्यक्षान् सेनासन्नहनाय आदिक्षदित्युत्तरश्लोकेन सम्बन्धः।) अत्र राजीववनजीवनदायिनीत्यनेन पद्मिनीप्राणनाथत्वमस्य स्फुरति। तेन तदानीं सर्वत्र पद्मसौगन्ध्यातिशयव्याप्तिः लोकामोदश्चावगम्यते। 'लोकैकदीप' इत्यनेन लोकबान्धवत्वमस्य प्रस्फुरति। तेन तमोपहारकत्वं तदानीमेव लोकानां प्रबोधश्च ज्ञायते। भानुमालिनीत्यनेन सहस्रांशुत्वं दिनकरत्वं चास्य ध्वनति। तेन तदानीं दिक्षु तत्किरणप्रसारेण तमोऽपसरणं क्रमेण कालमानविज्ञानं च बोध्यते। भगवतीत्यनेन 'आदित्यो वायं प्रत्यक्षो देव' तेति प्रत्यक्षदेवतात्वम्, सर्वदेवताभ्यो वैशिष्ट्यं चास्य व्यज्यते। तेन तदानीं तदाराधनपरत्वं लोकस्याव गम्यते। इत्थं प्रातःकालवर्णनात्र सुस्पष्टं प्रतीयते। अतएवात्र गाम्भीर्यं नाम काव्यगुणः। "ध्वनिमत्ता तु गाम्भीर्यम्" इति तल्ल क्षणात्। अस्मिन् सर्गे वृत्तमनुष्टुप्। तल्लक्षणं तु पूर्वमुक्तम्। सर्गोऽयं कम्पराजस्य जैत्रयात्रया समारब्धः परिसमाप्यते चम्पराजवधेन साकं कम्पराजराज्यप्रतिष्ठापनया॥

सेनासन्नाहाय राजाज्ञां ब्रूते –

**विहाय निद्रां विधिव न्निर्मिताहर्मुखक्रियः।**
**आदिक्षत् पृतनाध्यक्षान् सेनासन्नहनाय सः॥ ॥2॥**



**विहायेति**॥ सः राजकुमारः। निद्राम् शयनम्। 'स्यान्निद्रा शयनं स्वापस्स्वप्नसंवेश इत्यपि' इत्यमरः। देहलीदत्तदीपन्यायेन विधि वदित्यत्रापि संबध्यते। विधिवत् यथाशास्त्रम्। विधिशब्दात्तदर्हमिति वतिः। विहाय परित्यज्य तूर्यघोषादिभिर्मङ्गलवाद्यैः प्रबुध्येत्यर्थः। यथाह राजधर्मप्रकरणे याज्ञवल्क्यः - "संविशेत्तूर्यघोषेण प्रतिबुध्येत्तथैव च" इति। विधिवत् यथाविधि। अह्नः मुखमिव अहर्मुखम् प्रभातम् प्रातः कालः। 'प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि' इत्यमरः। तत्र क्रियाः कृत्यानि तत्कालविधेयानि कर्माणि संध्यावन्दनादीनि। निर्मिताः विर चिताः आचरिताः अहर्मुखक्रियाः येन तथोक्तः। स्वविहितकर्मा नुष्ठानवान् सन्नित्यर्थः। "संध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम्। गीतनृत्यैश्च भुञ्जीत पठेत्स्वाध्यायमेव च" इति। राज्ञां संध्याद्याचरणस्य विहितत्वादिति भावः। सेनायाः स्वसैन्यस्य सन्नहनाय व्यूहादिभिः सज्जीकरणाय। संपूर्वान्नहतेर्भावे ल्युट्। पृतनायाः सेनायाः अध्यक्षान् तथोक्तान् दण्डनायकानित्यर्थः। 'पृतना तु स्त्रियां सेनामात्रसेनाविशेषयोः' इति मेदिनी। आदिक्षत् नियोजयामास। आङ्पूर्वाद्दिशतेर्लुङ्। 'शल इगुपधा' दिति क्सः। षत्वादि। सैन्याध्यक्षान् विविधान् कृत्वा तत्र तत्र सेनाकार्याण्यवेक्षितुं तांस्तान् नियुज्य जैत्रयात्रायै सन्नद्धं कुरुत बलमित्यादिदेश कुमार इति तात्पर्यार्थः। अत्र मनुः - "अध्यक्षान् विविधान् कुर्यात्तत्र तत्र विपश्चितः। तेऽस्य सर्वाण्यवेक्षेरन् नृणां कार्याणि कुर्वताम्" इति॥

जैत्रयात्रार्थस्सेनासन्नाहो वर्ण्यते। तत्र च रणभेर्याः गम्भीर स्वनो भाविविजयसूचक इति स चतुर्भिश्श्लोकैरित आरभ्य प्रकथ्यते —

**अथ मन्दरसंघट्ट क्षोभिताम्भोधिमण्डलः।**
**रराण कोणाभिहतो रणनिर्याणदुन्दुभिः॥ ॥3॥**

**अथेति**॥ अथ राजाज्ञासमनन्तरमित्यर्थः। कोणेन सारिकया

पटहादिवादनसाधनेन । करणभूतेन । 'द्वयोस्तु कोणो वीणादेर्वादनं सारिका च सा' इति शब्दार्णवः । अभिहतः वादितः । 'कोणाभिहतः' इत्यनेन 'कोणाघातो' गम्यते । कोणाघातं प्रति भरत एव माह - "ढक्काशतसहस्राणि भेरीशतशतानि च । एकदा यत्र हन्यन्ते कोणाघातस्स उच्यते ॥" इति । रणस्य युद्धस्य । तादर्थ्ये षष्ठी । युद्धार्थमित्यर्थः । निर्याणम् अध्वनिर्गमः प्रस्थानम् दण्डयात्रेति यावत् । 'निर्याणं वारणापाङ्गदेशे मोक्षेऽध्वनिर्गमे' इति मेदिनी । तस्य दुन्दुभिः भेरी । पूर्ववत् षष्ठी । रणभेरीत्यर्थः । 'भेर्यामानकदुन्दुभी' इत्यमरः । मन्दरस्य मन्थाचलस्य । कर्तरि षष्ठी । संघट्टः संघर्षः संमर्दः मन्दरकृतमथनमिति यावत् । तेन क्षोभितम् सञ्चालितम् । क्षुभ सञ्चलने-इत्यस्माण्ण्यन्तात् क्तः । क्षोभवत्कृतमिति वा । ध्वनितमिति यावत् । (तादृशम्) अम्भोधिमण्डलम् समुद्रसमूहः सप्त समुद्रा इत्यर्थः । तदिव अम्भोधिमण्डलम् यस्य तादृशस्सन् । 'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च' इत्युत्तरपदलोपः । रराण दध्वान । रण शब्दे – लिट् । रणभेरीयम् मन्दरक्षुभितसागराननुकुर्वाणा पुरतोभाविनं शत्रुविजयं संसूचयन्ती मनागाहताप्यभ्यधिकं ररावेति भावः । अत्र रणभेरीध्वनिरयं मन्दरमथितसागरध्वनिमनुकरोतीत्युपमया पुनस्सागरमथनेन सागरमहाक्षोभो जात इव संभाव्यत इत्युत्प्रेक्षा ध्वन्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥

पूर्वं ध्वनेः भूमौ सर्वत्र व्याप्तिमुक्त्वा सांप्रतमाकाशव्याप्तिमपि तस्य कथयति ––

**कल्पान्तोद्भ्रान्तचण्डीश डमरुध्वानडामरः ।**
**उदजृम्भत गम्भीरो वियदध्वनि तद्ध्वनिः ॥ ॥4॥**

**कल्पान्तेति ॥** कल्पस्य ब्रह्मणो दिवसपरिमितस्य कालस्य



अन्तः अवधिः कल्पान्तः प्रलयः । 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि' इत्यमरः । तस्मिन् उद्भ्रान्तः परिभ्रमन् नृत्यन्नित्यर्थः । उत्पूर्वाद् भ्रमेः क्तः । 'अनुनासिकस्य क्विझलो' रिति दीर्घः । तथा विधः । चण्डचाः पार्वत्याः ईशः भर्ता चण्डीशः । 'चण्डेश्वर' इत्येव पाठ इति केचित् । 'महाकालनिकेतनेश्वरस्य देवस्याभिधानं चण्डेश्वर इति । रौद्राकारत्वाच्चण्डेश्वरपदं रुद्रमभिधत्त इतिवा । 'पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डेश्वरस्य' इत्येव कालिदासीयेऽपि साधुः पाठ इति ते वदन्ति । तस्य डमरुः वाद्यविशेषः । 'वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः' इत्यमरः । तस्य ध्वानः रवः । 'शब्दो निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः । स इव डामरः भयंकरः । तद्ध्वनिः स शब्दः । कर्ता । वियत् आकाशः स एव अध्वा मार्गः तस्मिन् आकाशवीथ्यामित्यर्थः । 'वियद्विष्णुपदं वापि पुंस्याकाशविहायसी' इत्यमरः । गम्भीरः मन्द्रः उच्चैस्तरस्सन् । उदजृम्भत व्यजृम्भत सर्वत्र व्यापदित्यर्थः । प्रलयसमये भैरवाकारेण रुद्रस्समुद्धतं नटन् डमरुं वादयंश्च लोकान् संहरतीति पुराणेषु प्रसिद्धम् । रणभेरीध्वनिरयं भयंकरतया प्रवृत्तस्सन्नाकाशमप्याचक्रामेति सारांशः । अत्र लुप्तोपमालङ्कृतिः ।

ध्वनेरस्य भूम्याकाशव्याप्तिमुक्त्वा गुहाप्रवेशेन सर्वतोव्याप्तिमस्य कथयति –

**प्रायो भयद्रुतामित्र पदविध्वंसनोत्सुकः ।**
**स जगाहे प्रतिध्वान निभादवनिभृद्गुहाः ॥ ॥5॥**

**प्राय इति ॥** सः पूर्वं वर्णितो भयंकरो रणभेरीध्वनिः । भयेन भीत्या । हेतौ तृतीया । प्राणभयस्समुपस्थित इति हेतोरित्यर्थः । द्रुतानि प्राणरक्षणाय यथेच्छं गतानि । "जीवन् भद्राणि पश्य"तीति न्यायादिति भावः । द्रु गतौ - कर्तरि क्तः । तादृशि अमित्राणि दुर्हृदः शात्रवाः तेषाम् पदानि स्थानानि निवासप्रदेशाः गुहा इत्यर्थः ।

शत्रुभीता जनाः पर्वतगुहासु स्वप्राणरक्षणं कुर्वन्तीति प्रसिद्धम्। तेषाम् विध्वंसनम् नाशः तस्मिन् उत्सुकः तत्परः तादृगिष्टार्थसाधनायोद्यत इत्यर्थः। शत्रुशेषं न शेषयेदिति न्यायादवश्यंभावितन्नाशस्य सुकरत्वे तदाश्रयनाशस्य हेतुत्वादिति भावः। प्राय इति संभावनायाम्। एवं संभाव्यमान इत्यर्थः। प्रतिध्वाननिभात् - प्रतिध्वानः प्रतिश्रुत् प्रतिध्वनिः स एव निभः व्याजः तस्मात् प्रतिध्वनिरूपेणेत्यर्थः। 'स्त्री प्रतिश्रुत् प्रतिध्वाने' इत्यमरः। 'निभस्तु कथितो व्याजे पुंलिङ्गस्सदृशे त्रिषु' इति मेदिनी। अवनिभृताम् भूधराणाम् पर्वतानाम् गुहाः गह्वराणि 'देवखातबिले गुहा गह्वरम्' इत्यमरः। जगाहे प्रविवेश। दूरस्थाः पर्वतगुहा अपि तन्नादेन प्रतिध्वनन्तीति ध्वन्युत्कर्षो वर्णितः। गाहू विलोडने - लिट्। 'विलोडयति मथ्नाति मथत्येवं खजत्यपि। गाहते मन्थने' इति भट्टमल्लः। तथापि प्रवेशार्थकत्वमप्यस्य सुदृष्टं कविलोके। धातूनामनेकार्थत्वात्। अतएव महाकवयः "गच्छता पथि विनैव विमानं व्योम तेन मुनिना विजगाहे" "जगाहे द्यां निशाचरः" इत्यादीनि प्रवेशार्थे प्रायुञ्जत। इयमपि कवयित्री 'रथेन पाताल गुहामगाहत' इत्यन्यत्र प्रयुयुजे। यदि मन्थनार्थकत्वमेवास्य समर्थनीयं यथाकथमपीत्यभिनिवेशस्तदानीं 'प्रतिध्वाननिभाः' इति किञ्चित्संस्कार आवश्यकः। अस्मिन् पाठे प्रतिध्वानेन नितरां भान्तीति 'आतोऽनुपसर्गे' इति कः। 'कर्तृकरणे कृता' इति समासः। तादृशाः गुहाः। जगाहे व्यलोडयत् ममन्थ अपीडयत्। स्वशत्रूणामाश्रयदायित्वेनेति भावः। भृशं गुहाः प्रतिदध्वनुस्तन्नादेनेति तात्पर्यार्थः इति वेदितव्यम्। अत्र शात्रवावासगुहाविनाशोत्सुकत्वं ध्वनेरुत्प्रेक्ष्यते। उत्प्रेक्षा च वस्तुतोऽसत्यत्व प्रतिपादकेन निभशब्देन प्रतिध्वानस्यापह्नव इति तदुत्थापितया कैतवापह्नुत्या समुपजीविता। अतएव तयोस्संकरः॥

भूम्याकाशसर्वतोव्यापित्वकथनानन्तरं पातालमप्याक्रान्तं तेनेति वर्णयति —



**तस्मिन्विसर्पति त्रास मीलिताशेषलोचनः।**
**शेषो युगपदज्ञासी दान्ध्यबाधिर्ययोर्दशाम्॥ ॥6॥**

**तस्मिन्निति॥** तस्मिन् ध्वनौ। विसर्पति व्याप्नुवति पातालं प्रविशति सतीत्यर्थः। शेषः अनन्तः नागस्वामी। कर्ता। 'शेषोऽनन्ते वधे सीरिण्युपयुक्तेतरेऽपि च' इति हैमः। त्रासः भयः तेन निमीलितानि मुकुलीभूतानि अशेषलोचनानि अखिलनयनानि द्विसहस्रं नयनानीत्यर्थः। तानि येन तथोक्तः। तादृक् सन्। अन्धयति अन्धः अदृक्। अन्ध दृष्टचुपघाते- अच्। तस्य भावः आन्ध्यम् 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ्। बधिरः एडः श्रवणेन्द्रियशक्तिशून्यः। 'स्यादेडे बधिरः' इत्यमरः। तस्य भावः बाधिर्यम् शब्दग्रहणराहित्यम्। तयोः दशाम् अवस्थाम्। युगपत् एकदा एककाल एव। अज्ञासीत् अवेदीत् अन्वभूदित्यर्थः। तस्य चक्षुश्श्रवस्त्वादिति भावः। उच्चैस्तरध्वनेश्श्रवणभेदः प्रत्यक्षदृष्ट इति स एवासीदिदानीं नागराजस्येत्युच्यते। तेन भूमिं वहतो धीरस्य भगवदंशसंजातस्य शेषस्याप्ययं भीतिजनकोऽभवदिति ध्वनेरुत्कर्षस्य पराकाष्ठा कथ्यते। 'मीलिताशेषलोचनः' इत्यनेन च शरीरकम्पादयो भीत्यनुभावास्सर्वेऽपि भयानकाङ्गतया शेषे वर्ण्यन्ते। अनेन च भूकम्पादयोऽत्र व्यज्यन्त इति वस्तुना वस्तुध्वनिः। अत्र भगवतश्शेषस्य त्रस्यत एवंविधदशानुभूतेरसंबन्धेऽपि तत्सम्बन्धो वर्णित इत्यतिशयोक्तिः॥

प्रस्थानाय कृतसमुद्योगां सेनां वर्णयति —

**आबद्धकुथमातङ्गं मात्तपर्याणसैन्धवम्।**
**संवर्मितभटं सद्य स्समनह्यात तद्बलम्॥ ॥7॥**

**आबद्धेति॥** तत् बलम् रणविजयित्वेन सुप्रसिद्धं कम्पराज सैन्यम्। सद्यः समानेऽहनि तत्काल इत्यर्थः। 'सद्यः परु' दिति निपातनात्साधुः। आबद्धः आनद्धः सम्यग्योजितः आच्छादितः आस्ती

र्यमाण इति यावत्। तादृक् कुथः आस्तरणम् चित्रकम्बलम् येषु ते तथोक्ताः। तादृशाः मातङ्गाः गजाः यस्मिन्निति बहुव्रीहिगर्भो बहुव्रीहिः। तथाविधं सत्। किञ्च। आत्तम् गृहीतम् स्वोपरिष्टात् न्यस्तम् पर्याणम् पल्याणम् यैः तथोक्ताः। तादृशः। सिन्धुषु भवाः सैन्धवाः सिन्धुदेशीया हयाः यस्मिन् तत्तथोक्तम्। 'तत्र भव' इत्यण्। 'सैन्धवस्तु सिन्धुदेशोद्भवे हये। मणिमन्थेऽपि' इति हैमः। तथा विधं सत्। किञ्च। संवर्मिताः – वर्म सञ्जातमेषामिति तारकादित्वादितच्। सम्यग्वर्मिताः संवर्मिताः धृतकवचा इति यावत्। 'संनद्धो वर्मितस्सज्जो दंशितो व्यूढकङ्कटः' इत्यमरः। तादृशो भटाः यस्मिन् तथाविधं सत्। समनह्यत समसज्जत सर्वतस्सन्नद्धमभवदित्यर्थः। अत्र भट्टमल्लः – "संवर्मयति सन्नह्यत्यात्मने सज्जतीत्यमी। संयतते दंशयते सन्नाहे पदपञ्चकम्" इति। अत्र 'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुर्विधम्" इति बलस्य चतुर्विधत्वेऽपि तदानीन्तनं चरित्रं यथातथं वक्तुकामासौ रथान् व्यसर्जयत्। एतदनुगुणतयैव भाविनि युद्धवर्णने रथयुद्धं नावर्णयत् ॥

'इयं हि श्रीर्ये करिणः' इत्यागमात्सेनाप्रस्थाने गजप्रस्थानमादौ वर्णयति —

**विशङ्कटकटाघाट विगलन्मदनिर्झराः।**
**परश्शतं जघटिरे विकटाः करिणां घटाः॥ ॥ 8 ॥**

**विशङ्कटेति** ॥ विशङ्कटाः विपुलाः। 'विशङ्कटं पृथु महद्विशालं पृथुलं महत्। वड्रोरुविपुलम्' इत्यमरः। 'वेश्शालच्शङ्कटचा' विति साधुः। तादृशः कटाः गण्डाः तेषाम् आघाटाः प्रदेशाः। पर्वतोपरि प्रदेशा इति गम्यते। तेभ्यः विगलन्तः स्रंसमानाः मदा एव निर्झराः वारिप्रवाहाः। 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः' इत्यमरः।



ते येषु तथोक्ताः। किञ्च। विकटाः विपुलाः आयताः बहुप्रदेशं व्याप्ता इति यावत्। 'संप्रोदश्च कटच्' इति वेः कटच्। तथा विधाः। करिणाम् गजानाम् घटाः संघाताः गजयूथानि। पर्वता इति च गम्यते। 'करिणां घटना घटा' इत्यमरः। घटाशब्दोऽत्र केवलसमूहवाचको गोबलीवर्दन्यायेन। परश्शतम् अनन्तं यथा तथा असंख्याकाः यथा भवन्ति तथेत्यर्थः। शतात्परे परश्शतम्। पञ्चमीति योगविभागात्समास इति केचित्। अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्य इति वृत्तिकारः। राजदन्तादित्वात्परनिपातः। 'पारस्करप्रभृतीनि च' इति 'पृषोदरादीनि' इति वा सुट्। जघटिरे व्यचेष्टन्त प्रतस्थिरे इति यावत्। घट चेष्टायाम् - लिट्।

पदातीनां यानं ब्रूते —

**कृपाणकर्पणप्रास कुन्तकोदण्डपाणयः।**
**समगच्छन्त सहसा नैकदेश्याः पदातयः॥ ॥ 9 ॥**

**कृपाणेति** ॥ कृपाणानि खड्गाः, कर्पणानि शस्त्रविशेषाः, प्रासाः शक्तिविशेषाः, कुन्ताः भल्लानि, कोदण्डानि धनूंषि च तथोक्तम्। 'जातिरप्राणिना' मित्येकवद्भावः। 'प्रासस्तु कुन्तः' 'कुन्तः प्रासे चण्डभावे क्षुद्रजातौ गवेधुके' इत्यादिभिः प्रासकुन्तयोरभेदमेव निघण्टवो वर्णयन्ति। तथापि रामायणादिपरिशीलनेन भेद एवावगम्यते। प्रासकुन्तयोस्स्वरूपमेवं वर्ण्यते– "प्रासास्त्वं तु चतुर्हस्तं दण्डबुध्नं क्षुराननम्" इति, प्रासस्तु सप्तहस्तस्स्यादौन्नत्येन तु वैणवः। लौहशीर्षस्तीक्ष्णपादः कैशेयस्तावकाञ्चितः" "आकर्षश्च विकर्षश्च धूननं वेधनं तथा। चतस्र एता गतय उक्ताः प्रासं समाश्रिताः इति" च। कुन्तं प्रति "कुन्तमुखाकृति केतकिदन्तुरिताशे" इति जयदेवः। रामायणे तु – प्रासं प्रति– "ततो हयं मारुततुल्यवेगमारुह्य शक्तिं निशितां प्रगृह्य – इत्युपक्रम्य – "स

वानरान् सप्तशतानि वीरः प्रासेन दीप्तेन विनिर्बिभेद " इत्याद्युक्तम् । शक्तिकुन्तौ भिन्नाविति चम्पूरामायणतोऽवगम्यते – " विशिखकृपाणकुन्त शक्तिप्रमुखविविधायुधसंस्कारपरवशयोधसंबाधम्" इति । पाणौ तत् येषां ते तथोक्ताः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्या' विति सप्तम्यन्तस्य परनिपातः । तथाविधाः । नैकदेश्याः - एकस्मिन् देशे भवाः एकदेश्याः । ते न भवन्तीति तथा । अनेकप्रदेशेषु स्थिता इत्यर्थः । तादृशः पदातयः भटाः । पादाभ्याम् अतन्ति सततं गच्छन्तीत्यतेः 'अज्य तिभ्यां पादे चे' त्यौणादिकः इण् । 'पादस्य पदाज्यातिगोपहतेषु' इति पादस्य पदादेशश्च । सहसा सत्वरम् । समगच्छन्त सममिलन् । तत्र तत्र स्थिता भटा एकत्र परस्परं समश्लिषन्निति यावत् । आरचितश्रेणयो व्यूहितास्समभवन्निति भावः । संपूर्वकाद् गमेर्लङ् । 'समो गम्यृच्छिभ्या' मित्यात्मनेपदम् ॥

अश्वसेनाप्रस्थानमिदानीं प्रब्रूते —

**समीरणरयोदग्रा वल्गन्तः फ़ेनिलैर्मुखैः ।**
**तुरङ्गास्सैन्यजलधे स्तरङ्गा इव रेजिरे ॥ ॥ 10 ॥**

**समीरणेति** ॥ समीरणः वायुः । तस्य रयः वेगः वायुवेग सदृशवेग इत्यर्थः । तेन उदग्राः भयङ्कराः । अन्यत्र – समीरणात् वायोः रयः वेगः तदुद्भूतवेग इत्यर्थः । तेन उदग्राः उन्नताः ऊर्ध्वं प्लवमाना इत्यर्थः । तुरङ्गाः अश्वाः । कर्तारः । फेनिलैः फेनवद्भिः । फेनशब्दः एकत्र लाक्षणिकस्सन् सान्द्रमुखजलोद्गारं ब्रूते । अन्यत्राब्धि कफम् । 'हिण्डीरोऽब्धिकफः फेनः' इत्यमरः । 'फेनादिल' च्चेति मत्वर्थे इलच् । तादृशैः मुखैः आननैः अन्यत्र अग्रभागैश्च । सहार्थे तृतीया । तैस्साकमित्यर्थः । वल्गन्तः गच्छन्तः उत्प्लुत्योत्प्लुत्य व्रजन्त स्सन्त इत्यर्थः । अन्यत्र संचरन्तः । वल्गरगिलगीत्यादयो गत्यर्था



इति धातुपाठे पठितम् । तस्माच्छता । अश्वगतयश्च पञ्चविधाः । ता एव धाराशब्देन व्यवह्रियन्ते । ता इत्थमुक्ताः – "आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्च धाराः" इति । अत्र 'वल्गन्त' इति गमनसामान्यवाचिनः प्रयोगात् पञ्च धारा विव क्षिता इति वक्तुं शक्यते तथापि तरङ्गसाम्यात् प्लुतगमनमेव विव क्षितमिति युज्यते । सेनैव सैन्यम् । चतुर्वर्णादित्वात् ष्यञ् । 'सैन्यं सैनिकसेनयोः' इत्यमरः । तदेव जलधिः समुद्रः तस्य तरङ्गाः वीचय इव । रेजिरे प्राकाशन्त । राजृ दीप्तावित्यस्माल्लिट् । 'फणां च सप्तानाम्' इत्येत्वाभ्यासलोपौ पक्षे । अत्र समुद्रवदपारे तत्रत्ये सैन्ये प्लुतगमनेन सत्वरं फेनिलमुखैः प्रयान्तीयमश्वसेना वायुवेगान्महता संरम्भेण वियद्वीथीं स्पृशन्तः फेनवन्तस्तरङ्गा इव संदृश्यन्त इति समस्तवस्तुविषया सावयवोपमेति वक्तुं शक्यते तथापि 'सैन्यजलधे स्तरङ्गौ' इत्यनेन 'सैन्ये जलधित्वरूपणात् वस्तुतस्तादृशजलधेरेवाप्र सिद्ध्या तदीयतरङ्गाणां नितरामप्रसिद्धिरिति तादृशजलधितरङ्गाणां तादात्म्यसंभावनैकगोचरत्वेन नेयमुपमा किंतूत्प्रेक्षैवेति सिद्धान्तः । अत्र 'वल्गन्तः, फ़ेनिलैः' इत्यादिभिः श्लेषमूलकशब्दमात्रसाधर्म्यसमुल्ला सस्तु कवेरुत्प्रेक्षापरिपोषण एव तात्पर्यमवगमयतीति नैवोपमायास्त त्साधकम् ॥

राजागमनं वर्णयितुं पुरस्ताद्दण्डनायकानां तदागमननिरीक्षां कथयति —

**प्रस्थानोचितमाकल्पं बिभ्राणा बाहुशालिनः ।**
**राजन्यास्तोरणाभ्यर्णे नृपालं प्रत्यपालयन् ॥ ॥11॥**

**प्रस्थानेति** ॥ बाहुभ्याम् शालन्ते प्रकाशन्तीति बाहुशालिनः । बाहुबलसंपन्ना इत्यर्थः । आजानुलम्बिभुजा इति वा । ( तादृशाः )

राज्ञः अपत्यानि पुमांसः राजन्याः क्षत्त्रियाः सामन्तराजा इत्यर्थः । 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्त्रियः पुमान्' इत्यमरः । 'राजश्वशुरा' दिति यत् । 'ये चाभावकर्मणो' रिति प्रकृतिभावः । प्रस्थानम् यात्रा जैत्रयात्रेत्यर्थः । 'यात्रा व्रज्याभिनिर्याणं प्रस्थानं गमनं गम' इत्य मरः । तस्य उचितम् अर्हम् जैत्रयात्रोचितमित्यर्थः । (तादृशम्) आकल्पम् नेपथ्यम् वस्त्रमाल्यादिभिः कृतमलङ्कारम् । 'आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधन' मित्यमरः । तत् बिभ्राणाः दधानास्सन्तः । **तोरणम्** गृहद्वारबाह्यभागः । 'तोरणं तु बहिर्द्वार' मित्यमरः । तस्य अभ्यर्णम् समीपदेशः । तस्मिन् । नृपालम् राजानम् कम्पभूपमित्यर्थः। प्रत्यपालयन् अन्वपालयन् निरैक्षन्त । सन्नद्धाः राजागमनमभिलषन्त स्सकुतूहलं तत्र स्थितास्ते इति भावः । 'प्रतीक्षते प्रतीक्षायां स्युरा गमयते तथा । अनुपालयतीत्येते प्रतिपालयतीति च' इति भट्टमल्लः ॥

राजद्वारि मण्डलेश्वरैरलंकृतं सैन्यं वर्णयति —

**सेनासरित्सिताम्भोजैर्जयश्रीकेलिदर्पणैः ।**
**अस्तावकाशमाकाश मातपत्रैरजायत ॥ ॥ 12 ॥**

**सेनेति ॥** सेना सैन्यम् । तदेव सरित् नदी । 'अथ नदी सरि' दित्यमरः । तस्याम् सिताम्भोजानि पुण्डरीकाणि धवलपद्मानि । 'पुण्डरीकं सिताम्भोज' मित्यमरः । तैः तद्रूपैः तथाभूतैः । श्वेत च्छत्रधारित्वाद्राज्ञामेवमुक्तिः । किञ्च । जय एव श्रीः विजयलक्ष्मीः । तस्याः केलयः सविलासक्रीडाः तासाम् दर्पणानि मुकुराणि प्रतिफल नाधिकरणानि । सैन्ये विहरन्त्याः विजयलक्ष्म्यास्सविलासविहरणानि सर्वाण्यप्यत्र प्रतिफलन्तीति तदाश्रयाण्येतानीत्युच्यन्ते । छत्रच्छाया लक्ष्मीरूपेति प्रसिद्धिः । अतएव – "उरस्यपर्याप्तनिवेशभागा प्रौढी भविष्यन्तमुदीक्षमाणा । संजातलज्जेव तमातपत्रच्छायाच्छलेनोपजुगूह लक्ष्मीः" इति श्लोकव्याख्यावसरे 'छत्रच्छाया लक्ष्मीरू' पेति मल्लि



नाथ आह । यद्वा - जयलक्ष्म्याः केलिदर्पणानि स्वमुखविलासादि द्रष्टुं सविलासं पाणौ धृतानि (अत्यादरपात्राणि) क्रीडामुकुराणीति वा । तैः तथाभूतैः आतपत्त्रैः राज्ञां श्वेतच्छत्त्रैः । कर्तृभिः । आकाशम् गगनम् । अस्तः नष्टः अवकाशः स्वाश्रयभूतः प्रदेशः यस्मिन् तत्तथोक्तम् । तादृशं सत् । स्वसत्ताया अप्यनुपलब्धावकाशं सदित्यर्थः । यद्वा— अस्तः नष्टः अवकाशः तेषां तेषां मध्ये निरवकाशता । स यस्य तादृक् सत् । अजायत अजनि अभूत् । श्वेतच्छत्रधारिभिर संख्याकैः राजभिर्नभस्तलमत्यन्तमाक्रान्तमभूत्तदानीमिति भावः । अत्र सेना दिषु सरित्त्वाद्यारोपणमातपत्रेष्वम्भोजत्वाद्यारोपणस्य हेतुभूतमिति पर म्परितरूपकमलङ्कारः ॥

श्वेतव्यजनधारित्वमपि राज्ञां प्रधनलाञ्छनमिति तदत्र राजसु प्रस्तौति —

**विजृम्भमाणे प्रस्थान शारदारम्भसंभ्रमे ।**
**नृपाणां चामरालीभि र्मरालीभिरजायत ॥ ॥13॥**

**विजृम्भमाणेति ॥** प्रस्थानम् जैत्रयात्रा । तदेव शारदारम्भः शरत्कालसंबन्धी प्रारम्भः शरत्समयसमागम इत्यर्थः । तस्मिन् संभ्रमः संवेगः हर्षोत्साहादिभिः कर्मसु त्वरा । 'समौ संवेगसंभ्रमौ' इत्यमरः । अन्यत्र प्रस्थानम् मानसाद्भूलोकागमनम् । तस्य तदर्थे । शारदारम्भ संभ्रमः शरत्समयप्रारम्भसञ्जातः आवेगः । वर्षाकालादन्यत्र मानससरसो घनीभूतहिमत्वेन हंसानामनुपभोग्यजलत्वात् वर्षासु तत्रत्या हंसाश्शरदि भूलोकमायान्तीति प्रसिद्धिः । अत्र नाथः – "हिमालयैकदेशस्थं मानसं हिमदूषितसलिलादिकत्वादनुपभोग्यं भवति । वर्षसमये तु वर्षजलविर लितहिमत्वात्तस्य हंसनिवासयोग्यत्वमस्ति । नित्यप्रसन्नत्वाद्देशान्तरतटा कादिवत्कालुष्यं न भवतीत्युदीच्या उपदिशन्तीत्यनुसंधेयम्" इति । शरद्वर्णने भवभूतिः - "क्रौञ्चस्य भेदात्कृतधरणितलापूर्वहंसावतारः"

इति भाषते। 'संभ्रमोऽत्यादरे भीतावावेगे' इति नानार्थरत्नमाला। तस्मिन् विजृम्भमाणे अतिवेलं प्रवृत्ते सति। नृपाणाम् राज्ञाम्। चामराणाम् वालव्यजनानाम् आलीभिः श्रेणीभिः। कर्त्रीभिः। श्रेणी भूतैः वालव्यजनैरित्यर्थः। 'चामरा चामरं वालव्यजनं रोमगुच्छकम्' इति रभसः। आङ्पूर्वादलतेरिन्। 'कृदिकारा' दिति ङीष्। मरालीभिः हंसैः तद्रूपैः। स्त्रीलिङ्गनिर्देशोऽत्र शब्दालङ्कारानुरोधेन। अजायत अभूयत। 'भवत्यर्थे भवत्यस्ति जायते विद्यते तथा' इति क्रियानिघण्टुः। जनी प्रादुर्भावे - भावे लुङ्। 'सार्वधातुके य' गिति यक्। 'ज्ञाजनो' रिति जादेशः। सेनायां युद्धसन्नद्धा राजानश्चाम राभ्यामुभयतो वीज्यमानास्सैन्ये विराजन्ते। वीज्यमानाश्चामराः क्रमतो बद्धश्रेणय स्थिता ऊर्ध्वतोऽधस्ताच्च प्रचाल्यमानाश्श्रेणीभूताश्शरदि भुव मवतरन्तो हंसा इव भ्राजन्त इति तात्पर्यार्थः। अत्र चामराः हंसत्वेन प्रस्थानं च शारदारम्भत्वेन रूप्यत इति रूपकमलङ्कारः॥

मणिकिरीटधारिणो राज्ञः कवयते –

**नृपमौलिमणिच्छाया मञ्जरीपुञ्जरञ्जिताः।**
**अत्याक्षुरौरसीं रक्तिं न जातु रविरश्मयः॥ ॥14॥**

**नृपमौलीति**॥ रवेः सूर्यस्य रश्मयः किरणाः (कर्तृभूताः) तथोक्ताः। ते। नृपाणाम् राज्ञाम् मौलयः किरीटानि। 'किरीटे मौलिरक्लीबे चूडासंयतकेशयोः' इति रभसः। तेषाम् मणयः रत्नानि तत्र खचिताः पद्मरागा इत्यर्थः। 'सामान्यवर्णने .... रक्तत्वं रत्नबन्धूकबिम्बाम्भोजविवस्वताम्' इति देवेशः। तेषाम् छायाः कान्तयः। 'छाया सूर्यप्रिया कान्ति' रित्यमरः। नृपमौलिमणिच्छाय' मिति ह्स्वान्त एव पाठ्यः। 'छाया बाहुल्ये' इति नपुंसकत्वस्य दुर्वारत्वात्। स्थितस्य गतिस्तु 'इक्षुच्छायानिषादिन्य' इति कालि



दासप्रयोग इव 'नृपमौलिमणेः छाये' ति पूर्वपदस्य जात्येकवचनान्ततया यथाकथमपि चिन्तनीया। ताः मञ्जरीपुञ्जा इवेत्युपमितसमासः। मञ्जरीशब्देन पुष्पगुच्छा अभिधीयन्ते। तत्साहित्यात् पल्लवा अपि लक्षणया। 'वल्लरी मञ्जरी स्त्रियौ' इत्यमरः। तेषाम् पुञ्जाः राशयः उच्छ्रितबृन्दाः ते तथोक्ताः। 'पुञ्जराशी तूत्करः कूटमस्त्रिया' मित्यमरः। त इवेत्यर्थः। पद्मरागाणामत्रत्यानामूर्ध्वरश्मित्वमनेन व्यज्यते। तेन चोत्तमपद्मरागत्वमेतेषां ज्ञायते। पद्मरागमणिभेदा एवमुक्ता रत्नशास्त्रे— "ऊर्ध्वरश्मिरधोरश्मिः पार्श्वरश्मिश्च यः क्रमात्। पद्मरागस्स विज्ञेय उत्तराधममध्यमः॥" इति। तैः। रञ्जिताः शोणिताः रक्तवर्णतां प्रापिताः पोषिताश्च सन्तः। रञ्ज रागे – ण्यन्तात्क्तः। जातु कदाचिदपि। उरसा निर्मिता औरसी। स्वस्मात् स्वपाणि गृहीत्यां जाता पुत्रीत्यर्थः। 'स्वजाते त्वौरसौरस्यौ' इत्यमरः। औपचारिकस्त्वत्र सूर्यकान्तौ 'औरसी' शब्दप्रयोगः। निसर्गसिद्धेत्यर्थः। 'उरसोऽण् च' इत्यण्। ताम्। रक्तिम् रागम् लोहितवर्णम्। रञ्जतेः करणे क्तिन्। न अत्याक्षुः नैव अत्यजन्। त्यजतेर्लुङ्। वर्णान्तरपरिग्रहस्तेषां कथमप्युपाध्यादिना नासीदिति भावः। पल्लवा इव नैसर्गिकरक्तवर्णा रविकिरणाः राजमकुटखचितपद्मरागमणिमरीचिभिरूर्ध्वप्रसारिभिरतीव रञ्जिता मध्यंदिनादिष्वपि रक्तवर्णा एव समभवन्निति निर्गलितोऽर्थः। एवंविधासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। उपमा च तत्परिपोषकतया तदङ्गमिति संकरः। ज्योतिश्शास्त्रे ग्रहवर्णाश्चैवमुक्ताः – "भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ। गुरुसोमात्मजौ पीतौ कृष्णवर्णश्शनिस्तथा। राहुकेतू धूम्रवर्णौ गह वर्णाः प्रकीर्तिताः" इति। पल्लवसादृश्यं च सूर्यकिरणानां कविलोके सुप्रसिद्धम् – "कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य" इत्यादिना॥

राज्ञामसाधारणचिह्नानि ध्वजानि प्रब्रूते –

**उत्तुङ्गैर्ध्वजसङ्घातै र्निरुद्धे गगनाध्वनि ।**
**निनाय कृच्छ्रात्पातङ्गं शताङ्गं गरुडाग्रजः ॥ ॥15॥**

**उत्तुङ्गैरिति ॥** गगनम् आकाशः तदेव अध्वा गन्तव्यो मार्गः तस्मिन् । उत्तुङ्गैः उन्नतैः प्रांशुभिः । ध्वजानाम् केतनानाम् सङ्घातैः समूहैः । 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इत्यमरः । निरुद्धे निगृहीते आक्रान्ते सर्वत्र तैर्व्याप्तत्वेन गन्तुं निरवकाशतया कृते सतीत्यर्थः । अग्रे जातः अग्रजः पूर्वजः भ्राता । 'पूर्वजस्त्वग्रियो ऽग्रजः' इत्यमरः । गरुडस्य गरुत्मतः अग्रजः तथोक्तः । विनतायां कश्यपाद् गरुत्मतः पूर्वं जातोऽनूरुनामा सूर्यसारथिरित्यर्थः । (सः) । पतङ्गः सूर्यः तस्येदम् पातङ्गम् सूर्यस्वामिकमित्यर्थः । 'तस्येद' मित्यण् । 'पतङ्गश्शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते' इति मेदिनी । शताङ्गम् रथम् सूर्यरथमित्यर्थः । यद्यपि 'याने चक्रिणि युद्धार्थे' शताङ्गस्स्यन्दनो रथः' इत्यमरसिंहः । तथापि विशेषवाचिना सामान्यवाचित्वं चूतवृक्षादाविव न विरुद्धम् । (तम्) कृच्छ्रात् दुःखात् महान्तं खेदमनुभूयेत्यर्थः । ल्यब्लोपे पञ्चमी । रथ मार्गस्य ध्वजसंकीर्णतया गन्तुमशक्यत्वात् स्थातुं दुश्शकत्वाच्चेति भावः । निनाय अगमयत् प्रस्थापयामासेत्यर्थः । "गत्यर्था ये णिज न्तास्ते धातवो नीञ्समार्थकाः" इति भट्टमल्लः । अत्र चौन्नत्येन ध्वजा नामाकाशाक्रमणम्, तेन च सूर्यरथस्य निरोधः, तेन यथाकथमप्य रुणेन रथचोदनं चैतत्सर्वमपि कविप्रौढोक्तिसिद्धमेव वस्तुतो न तथे त्यतिशयोक्तिभेदोऽलङ्कारः ॥

विजयसूचकं सेनासमुत्साहं कथयति —

**पोषितो हयहेषाभि र्बृंहितो गजबृंहितैः ।**
**वर्धितस्तूर्यनिध्वानैः कोऽपि कोलाहलोऽभवत् ॥ ॥16॥**



**पोषित इति ॥** हयाः अश्वाः तेषाम् हेषाभिः ह्रेषाभिः निस्वनैः अश्वध्वनिभिरित्यर्थः । 'हेषा ह्रेषा च निस्वन' इत्यमरः । पोषितः वर्धितः । पुष पुष्टौ – ण्यन्तात्कर्मणि क्तः । किञ्च । गजा नाम् करिणाम् बृंहितैः गर्जितैः घीङ्कारैः गजध्वनिभिरित्यर्थः । बृंहितः एधितः । बृह बृहि – वृद्धौ पूर्ववत् क्तः । किञ्च । तूर्याणि वाद्यानि पटहादीनि । तेषाम् निध्वानैः निस्स्वनैः वाद्यजनितैर्महा ध्वनिभिरित्यर्थः । वर्धितः वृद्धिं नयितः कोलाहलः कलकलध्वनिः । 'कोलाहलः कलकल' इत्यमरः । (इत्थं बहुधा संजातो महान् ध्वनिः) कोऽपि अपूर्वः यदा-कदापि यैः कैरपि न श्रुत इत्यर्थः । तादृशस्सन् । अभूत् अजायत । राज्ञां दण्डयात्रां प्रति मानसोल्लासः एवमाह — "व्रजेदब्धिरिवाक्षोभ्यो निगरन्नरिवाहिनीः । शूराणां सिंहनादैश्च हेषा रावैश्च वाजिनाम् । महारथमहाध्वानैर्मातङ्गघनगर्जितैः ॥" इति ॥

नायकप्रस्थानमितो वर्णयितुमुपक्रमते —

**ततो धृतसमायोग स्समयज्ञो महीपतिः ।**
**हितैः पुरोहितैर्यात्रा मुहूर्तं प्रत्यवैक्षत ॥ ॥ 17 ॥**

**तत इति ॥** ततः इत्थं सेनासन्नाहानन्तरम् । समयः कार्य सिद्धेस्समुचितः कालः । जानाति वेत्तीति समयज्ञः । 'इगुपधज्ञा प्रीकिरः' इति कः । अनेन शास्त्रार्थकुशलत्वं राज्ञस्सूच्यते । तादृशः । महीपतिः राजा । कर्ता । धृतः गृहीतः आदरेण स्वीकृतः समायोगः गन्धमाल्यादिरूपा स्वस्मै समर्पिता उपदा येन तथोक्तः । तथाभूतस्सन् । हितैः हितवादिभिः स्वहिताभिलाषिभिराप्तैरित्यर्थः । तादृशैः । पुरः अग्रे धीयन्ते सर्वकार्येषु प्रमाणत्वेन निक्षिप्यन्त इति पुरोहिताः पुरोधसः कुलगुरवः । 'पुरोधास्तु पुरोहित' इत्यमरः । तैः । सहार्थे तृतीया । तैस्साकमित्यर्थः । यात्रामुहूर्तम् – यात्रायाः तदर्थं मुहूर्तम्

निर्णीतपूर्वं शुभसमयम्। प्रत्यवैक्षत अन्त्रपालयत् तस्मै प्रतीक्षांचक्रे स इत्यर्थः। पौरुषादृष्टयोः परस्परसापेक्षत्वेन दैवबलं विना केवल पौरुषस्यार्थसिद्धावप्रयोजकत्वात्तथा कृतवानिति भावः ॥

शुभनिमित्तप्रदर्शनेन कार्यसिद्धिप्रदं दैवानुकूल्यमस्य कथयति —

**तमसूचयदाप्तेभ्यो दक्षिणं दक्षिणो भुजः ।**
**स्फुरितैर्भाविवीरश्री परिरम्भमहोत्सवम् ॥** ॥ 18 ॥

**तमिति ॥** दक्षिणः अपसव्यः। 'अपसव्यं तु दक्षिणम्' इत्यमरः। भुजः बाहुः। कर्ता। स्फुरितैः स्फुरणैः स्वसंचलनैः। करणभूतैः। पुनः पुनश्चलनं बोधयति बहुता। स्फुर स्फुरणे संचलने च - भावे क्तः। दक्षिणम् दक्षिणदेशभवम् तत्र भाविनमिति यावत्। तम् प्रसिद्धम् बहोः कालाज्जनैस्सोत्कण्ठं प्रतीक्ष्यमाणमित्यर्थः। भाविनः भविष्यतः। 'भविष्यति गम्यादय' इति भवतेर्णिनिः। वीरश्रियः वीरलक्ष्म्याः पराक्रमसंपदः तज्जन्यायाः विजयलक्ष्म्या इत्यर्थः। तद्रूपायाः स्त्रिय इति गम्यते। परिरम्भः संश्लेषः आलिङ्गनम्। 'परिरम्भः परिष्वङ्गस्संश्लेष उपगूहनम्' इत्यमरः। स एव महोत्सवः महानन्दजनको व्यापारः वीरलक्ष्मीरूपायाः स्त्रियस्समागमः तया साकं विवाह इत्यर्थः। क्षत्त्रियाणां गान्धर्वविवाहस्य विधिदृष्टत्वादेवमुक्तिः। अनेन दक्षिणभुजपरिस्पन्दस्य स्त्रीसमागमः फलमित्येतत्कथितं भवति। तम् आप्तेभ्यः हितेभ्यः सुहृदादिभ्यः। असूचयत् अबोधयत्। अस्य दक्षिणभुजपरिस्पन्दनेन विजयलक्ष्मीस्वयंग्राहोऽस्यावश्यं भविष्यतीति निमित्तज्ञा अस्य सुहृद एव विविदुः। अभिज्ञो राजा स्वयमबुध्यतेति किमु वक्तव्यमिति भावः। अत्र स्मर्यते - "दक्षिणाक्षिपरिस्पन्दाद्दक्षिणस्य भुजस्य च। मनसश्च प्रसादेन सानुकूलानिलेन च। एवं निमित्तैर्निश्चित्य विजयं भूपतिर्व्रजेत्" इति। अत्र दैवज्ञः कश्चन महापुरुषस्य शीघ्रमेव लोकक्षेमाय भाविनं कल्याणं पुरत



एव तदाप्तेभ्यः पित्रादिभ्यः कथयित्वा महान्तमानन्दं घटयति तद्वदिति समासोक्तिस्फूर्तिः। रूपकं तु स्पष्टमेव ॥

विजयसाधिकां तेजोऽभिवृद्धिं राज्ञि प्रस्तौति—

**अथर्ववेदिनो विप्रा स्तं विशेषैर्जयाशिषाम् ।**
**अवर्धयन्मन्त्रपूतै र्हविर्भिरिव पावकम् ॥** ॥ 19 ॥

**अथर्वेति ॥** अथर्ववेदिनः – अथर्वा तदाख्यो वेदः तं विदन्तीति णिनिः। तादृशः विप्राः ब्राह्मणाः पुरोहिता इत्यर्थः। 'अथर्ववेदिन' इत्यनेन स्वकृत्ये तेषां कौशलं बोध्यते। तेन तदाशिषां सफलतावगम्यते। यथाह कामन्दकः – "त्रय्यां च दण्डनीत्यां च कुशलस्स्यात्पुरोहितः। अथर्वविहितं कुर्यान्नित्यं शान्तिकपौष्टिकम्" इति। ते कर्तारः। जयाशिषः विजयार्थाः हिताशंसाः 'स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः' इत्यमरः। तासाम् विशेषैः मन्त्रभेदैः। शात्रवविजयाय समुद्दिष्टैराथर्वणमन्त्रसम्पुटीविशेषैरिति यावत्। तैः करणभूतैः। तम् राजानम्। मन्त्रैः वेदविशेषैः। पूतैः पवित्रैः संस्कृतैरित्यर्थः। 'वेदभेदे गुह्यवादे मन्त्रः' इति। 'पूतं पवित्रं मेध्यं च' इति चामरः। तथाविधैः हविर्भिः देवतोद्दिष्टवस्तुभिः घृतादिभिः। 'हविस्सर्पिषि होतव्ये' इति विश्वः। पावकम् अग्निमिव अवर्धयन् एधयामासुः। ब्राह्मणाशीःप्रभावेन वर्धिततेजाश्शात्रवाणामतीव भयंकरो बभूव स इति भावः। स्वयं तेजस्वी कुमारोऽयं विप्राशीःपरिग्रहेण भृशं तेजस्वी सन् हविर्वर्धितो जातवेदा इव नितरां जज्वालेति तात्पर्यार्थः। यात्रावसरे विप्राशीःपरिग्रहादि राज्ञा कर्तव्यमिति स्मर्यते– "ततः कृत्वा महापूजामुद्दिश्य कुलदेवताः। धेनुं भूमिं हिरण्यं च विप्रेभ्यो विधिनार्पयेत्। तदाशिषस्समादाय नीराजितहयद्विपः" इत्यादिना। अलङ्कारस्तूपमा ॥

राजागमनमाचष्टे —

**अथ निर्गत्य भवना दवैक्ष्यत महीक्षिता ।**
**धारितस्तोरणाभ्यर्णे तुङ्गस्तुरगपुङ्गवः ॥ ॥ 20 ॥**

**अथेति ॥** अथ अनन्तरम् मुहूर्तसमये संप्राप्ते इत्यर्थः । मह्याम् भूम्याम् क्षियति निवसतीति क्विप् । तुगागमः । तेन । कर्त्रा । भवनात् निर्गत्य । ल्यब्लोपे पञ्चमी । स्वभवनं विहाय बहिरागत्येत्यर्थः । तोरणस्य द्वारबाह्यभागस्य । ' तोरणोऽस्त्री बहिर्द्वारम् ' इत्यमरः । अभ्यर्णः समीपप्रदेशः । ' उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ' इत्यमरः । तस्मिन् । धारितः अवस्थापितः (राज्ञः) आरोहणार्थं सज्जीकृत इत्यर्थः । धृङ् अवस्थाने - णिजन्तत्कर्मणि क्तः । तुङ्गः उन्नतः (पुङ्गव इव तुरङ्गः) तुरङ्गपुङ्गवः अश्वराजः राजारोहणोचितः उत्तमाश्वः औपवाह्य इति यावत् । ' स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ' इत्यमरः । सः कर्म । अवैक्ष्यत अदर्शि । सादरमिति भावः । अवपूर्वादीक्षतेः कर्मणि लङ् । शुभसमये प्रस्थाय राजा समधिरोढुमश्वराजं प्रायततेति परमार्थः ॥

इत आरभ्य राजाश्वमष्टभिश्श्लोकैर्वर्णयति —

**सपक्ष इव ताक्ष्यस्य सजातिरिव चेतसः ।**
**सखेव गन्धवाहस्य संघात इव रंहसः ॥ ॥ 21 ॥**

**सपक्ष इति ॥** ताक्ष्यः गरुडः । ' गरुत्मान् गरुडस्ताक्ष्यः ' इत्यमरः । तस्य सपक्षः एकपक्षाश्रयः आप्त इत्यर्थः । समानः अभिन्नः पक्षः वर्गः यस्येति विग्रहः । स इव । चेतसः मनसः सजातिः एकवंश्यः दायादः बन्धुरित्यर्थः । समाना जातिः यस्येति



विग्रहः । स इव । समानस्येति योगविभागात्समानस्य सभावः । ' समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु ' इति सूत्रे ' समान ' स्येति योगविभागः इष्टप्रसिद्धचर्थः क्रियते । ' तेन सपक्षः साधर्म्यम् सजातीयः इत्येवमादयस्सिद्धा भवन्ति ' इति काशिका । गन्धं वहति प्रापयतीति गन्धवाहः वायुः । कर्मण्यण् । तस्य सखा मित्रम् । स इव । रंहः जवः वेगः । ' रंहस्तरसी तु रयस्स्यदो जवः ' इत्यमरः । तस्य संघातः समूहः राशिः राशीकृतो वेगः मूर्तिमान् वेग इति यावत् । स इव । स्थित इत्यर्थः । एकस्यैवोपमेयस्य सपक्ष इवेत्यादिना बहूपमानत्वमत्रेति मालोपमा । रंहसस्संघात इवेत्यत्र तु मूर्तिमतो वेगस्य तादात्म्यसंभावनैकगोचरत्वेन नेयमुपमा किंतु गुणोत्प्रेक्षा । संभावना विषये मूर्तिमति वेगे गरुडादिवेगानामेकदेशत्वेन विषयस्याधिक्यं विषयिणो गम्यत इति व्यतिरेकालंकारध्वनिरुत्प्रेक्षयेत्यलङ्कारेणालङ्कारध्वनिरपि ॥

स्वखुरैर्भूमिं मर्दयन्तमश्वमुत्प्रेक्षते —

**अपर्याप्तामतिक्रान्त चेतोवृत्तेस्स्वरंहसः ।**
**विस्तारयन्निव महीं चटुलैः खुरघट्टनैः ॥ ॥ 22 ॥**

**अपर्याप्तेति ॥** चेतसः वृत्तिः चेतोवृत्तिः मनोव्यापारः वृत्याकारपरिणामि चित्तमित्यर्थः । अतिक्रान्ता अतिचरिता उल्लङ्घिता अधःकृतेति यावत् । तादृशी चित्तवृत्तिः येन तथाविधस्य तृणीकृत मनोवेगस्येत्यर्थः । तस्य स्वरंहसः आत्मनो वेगस्य । अपर्याप्ताम् अनलंभूताम् यथेच्छं विहर्तुमपरिपूर्णाविकाशामित्यर्थः । तादृशीम् महीम् भूमिम् । कर्म । चटुलैः चञ्चलैः पुनः पुनः प्रवृत्तैः । खुरघट्टनैः शफचालनैः शफसंघर्षणैरिति वा । तैः करणभूतैः । विस्तारयन् विस्तारवतीं कुर्वन् भूमेर्वैशाल्यं संपादयन्निवेत्युत्प्रेक्षा । मतुबन्ताद्विस्तार

शब्दात् 'तत्करो' तीति णिचि णाविष्ठवद्भावे विन्मतोरिति लुक्। अत्र महीविस्तरणरूपवाक्यार्थे 'अतिक्रान्तचेतोवृत्ते' रिति पदार्थोऽयं विशेषणगत्या प्रयोजक इति काव्यलिङ्गमलङ्कारः। तच्च स्वतस्सिद्धस्य खुरघट्टनस्य महीविस्तरणार्थत्वसंभावनेत्येवंकविप्रौढोक्तिसिद्धाया उत्प्रेक्षायाः उपकारकमित्यङ्गाङ्गिभाव एतयोः॥ "प्रयातुमस्माकमियं कियत्पदं धरा तदम्भोधिरपि स्थलायताम्। इतीव वाहैर्निजवेगदर्पितैः पयोधिरोधक्षममुत्थितं रजः" इति नैषधीयचरिते श्रीहर्षकृतां नलाश्ववर्णनामेष स्मारयतीव॥

उच्चैश्श्रवसं देवताश्वमप्यतिशेते वेगतोऽयमिति शंसति—

**जवाधरितजम्भारि तुरङ्गभ्रमकारिणम्।**
**मणिकुट्टिमसंक्रान्त माक्रामन् बिम्बमात्मनः॥ ॥23॥**

**जवेति**॥ जवः वेगः तेन अधरितः—अधरः हीनः। अनूर्ध्वः अधःस्थः इति च गम्यते। तथाविधं करोतीति ण्यन्तात् क्तः। 'अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वेऽपि वाच्यवत्' इति मेदिनी। सचासौ जम्भारितुरङ्गः इन्द्राश्वः उच्चैश्श्रवाः। तस्मिन् भ्रमः स एवायमिति तद्विषयिका भ्रान्तिः तं करोतीति णिनिः। उच्चैश्श्रवा अयमिति धियमुत्पादयन्तमित्यर्थः। अनेन दिव्यलक्षणलक्षितस्सर्वश्वेतोऽयं महानश्व इति व्यज्यते। किञ्च। मणीनां कुट्टिमाः मणिकुट्टिमाः। विकारार्थे षष्ठी। रत्ननिबद्धा भूमय इत्यर्थः। 'कुट्टिमोऽस्त्री निबद्धा भूः' इति सुधा। तेषु संक्रान्तम् प्रविष्टम् प्रतिबिम्बितमिति यावत्। संपूर्वात्क्रमेः क्तः। 'अनुनासिकस्य क्वि' इति दीर्घः। तादृशम्। आत्मनः स्वस्य बिम्बम् आकारम्। आक्रामन् स्थगयन् आवृण्वन् तं परिवृत्य तिष्ठन्निवेति गम्योत्प्रेक्षा। पराजितं शत्रुं जेता यथा तदपसरणशङ्कया निरुध्य स्ववशे निगूढं स्थापयति तद्वदयमपीति



भावः। बिम्बः प्रतिबिम्बसमाश्रयस्तत्स्वरूपेणैव लब्धसत्ताक इति तं सर्वदा समाच्छाद्यैव बिम्बस्तिष्ठतीत्यत एवं संभाव्यते। प्रतिबिम्बे जम्भारितुरङ्गभ्रान्तिश्च तदाक्रमणसंभावनासमुज्जीवक इति भ्रान्तिमदङ्गभूतात्र गम्योत्प्रेक्षा। अधरित इति शब्दगतश्लेषभित्त्या न्यूनीकरणत्वाधःपतितत्वरूपयोरर्थयोरभेदाध्यवसायेनैकवाचकानुप्रवेश इत्युत्थापितातिशयोक्तिरपि भ्रान्तिमत्समुज्जीविकेति परस्परमेतेषामलङ्काराणां सङ्करः॥

उत्साहमश्वराजे कीर्तयति भाविविजयसंसूचकतया—

**लवणोदन्वदेकान्त लङ्घनामात्रगर्वितम्।**
**हसन्निव हनूमन्तं हेषितैः फेनपाण्डरैः॥ ॥24॥**

**लवणेति**॥ फेनः अब्धिकफः तत्सदृशत्वान्मुखफेनोऽपि फेनः। 'हिण्डीरोऽब्धिकफः फेनः' इत्यमरः। तेन पाण्डरैः धवलैः शुक्लवर्णैः। 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इत्यमरः। हेषितैः निस्स्वनैः स्वध्वनिभिः। हेषृ शब्दे - नपुंसके भावे क्तः। तैः करणभूतैः। लवण इति उदन्वान् लवणोदन्वान् लवणसमुद्रः। 'उदन्वानुदधौ च' इति साधुः। तस्य एकान्तः एकदेशः तस्य लङ्घनामात्रम् प्लुतमात्रम् उपर्युपरिगमनम् नत्वास्कन्दितादिभिः गमनविशेषैः। 'प्लुतं तु लङ्घनं पक्षिमृगगत्यनुहारकम्' इति हैमः। तेन गर्वितम् संजाताहङ्कारम्। 'गर्वोऽभिमानोऽहङ्कारः' इत्यमरः। तारकादित्वादितच्। प्रशस्ताः वज्रसंहननेनापि न व्यथिताः हनवः कपोलाधोभागाः अस्येति हनूमान् आञ्जनेयः। 'शरादीनां' चेति मतौ दीर्घः। तम्। हसन्तम् प्रहसन्तम् परिहसन्तमिव स्थितमित्युत्प्रेक्षा। अस्थाने गर्वोऽयं मनस्विनामसह्य इति हेतोरिति भावः। पञ्चधाऽपि गमनैः सप्तसमुद्रान् परिभ्रमतामस्माकं सतां लवणाब्धावेकदेशमपि केवलं लङ्घयतोऽस्य कोऽयं गर्व इति तत्परिहासे हेतुः। परिहासकृच्च

'इहिही' इति सशब्दं स्मयत इति 'फेनपाण्डरैः, हेषितैः' इत्युक्तम्। फेनपाण्डरेषु हेषितेषु हसनत्वसंभावनात्वेति क्रियोत्प्रेक्षेयम्। एषा च विशेषणगत्या परिहसने हेतुं प्रतिपादयता 'लवणोदन्व' दित्यादि पदार्थेन समुत्थापितेन काव्यलिङ्गेन संकीर्यते॥

गरुडमयं न केवलं वेगेनैव जिगाय किंत्वाकृत्यापीति व्याचष्टे—

**मुखलीनखलीनाहि रच्छपल्ययनच्छदः।**
**वपुषापि गरुत्मन्त मनुगन्तुमिवोत्सुकः॥ ॥ 25 ॥**

**मुखेति**॥ मुखे आस्ये लीनः संश्लिष्टः तत्र दृढं लग्न इत्यर्थः। ली – श्लेषणे क्तः। 'ल्वादिभ्यः' इति निष्ठातो नः। तादृक् खलीनः कविका। 'कविका तु खलीनोऽस्त्री' इत्यमरः। स एव अहिः सर्पः यस्य तथोक्तः। पन्नगाशनत्वाद् गरुडस्येति भावः। तादृशस्सन्। किञ्च। अच्छम् स्वच्छम् निर्मलिनम् पल्ययनम् पर्याणम् अश्वानां पर्यस्तिका। तदेव छदौ पक्षौ यस्य तथोक्तस्सन्। 'गरुत्पक्षच्छदाः पत्र' मित्यमरः। गरुत्मन्तम् तादृशमित्यर्थः। वपुषा शरीरेण। अपिशब्दो वेगानुसरणं गमयति। केवलं वेगेन न शरीरेणापीत्यर्थः। शत्रोस्सर्वस्वापहरणमेव समुचितमिति धियेति भावः। अनुगन्तुम् अनुसर्तुम् तदाकारेण स्थातुम्। उत्सुकः उद्युक्त इव स्थित इति संभावना। खलीनं धृत्वा पृष्ठे पर्यस्तिकया स्वाधिरोहिण्या समलंकृतोऽयमश्वराजः मुखनिक्षिप्तसर्पः पक्षवान् खगाधिप इव स्थित इति परमार्थः। अत्र रूपकानुप्राणितोत्प्रेक्षा अलङ्कारः। नलाश्ववर्णने श्रीहर्षस्तु "अपि द्विजिह्वाभ्यवहारपौरुषे मुखानुषक्तायतवल्गुवलगया। उपेयिवांसं प्रतिमल्लतां रयस्मये जितस्य प्रसभं गरुत्मतः" इत्याचख्यौ॥

लोलपुच्छमश्वं संभावयति –



**लोलवालाग्रलग्नेन सेव्यमानो नभस्वता।**
**रंहोरहस्यशिक्षार्थं शिष्यतामिव जग्मुषा॥ ॥26॥**

**लोलेति**॥ रंहः वेगः तस्मिन् रहस्यानि तद्विषयकमर्माणि तेषाम् शिक्षा गुरुमुखतो ग्रहणम् तस्यै तथोक्तम्। गुरोरेतस्मात् वेगविद्यामर्माणि ग्रहीतुकाम इत्यर्थः। शिष्यताम् एतस्य अन्तेवासित्वम्। जग्मुषा उपेयुषा गतवतेवेति संभावना। अन्यथा कथंवा निर्हेतुकं चाञ्चल्यं पुच्छस्येति भावः। गमेर्लिटः क्वसुः। द्वित्वम्। संप्रसारणम्। छान्दसा अपि क्वचिद्भाषायां भवन्तीति 'मासश्छन्दसी' ति वार्तिके छन्दोग्रहणसामर्थ्यादिवगम्यते। अतएवैतादृशानां साधुत्वमित्यवधेयम्। लोलम् चञ्चलम् बालस्य अग्रम् उपरिभागः। पुरस्तात् अभिमुखमिति च गम्यते। विद्योपादाने गुरोरभिमुखस्थितेश्शिष्यस्य लोकदृष्टत्वादयमपि तथेति भावः। 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च। आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्। अधिके च प्रधाने च प्रथमे चाभिधेयवत्' इति मेदिनी। तस्मिन् लग्नेन सक्तेन सावधानं स्थितेनेत्यर्थः। 'लग्नं राश्युदये क्लीबं सक्तलज्जितयोस्त्रिषु' इति सुधा। तादृशेन। नभः आकाशः अस्यास्तीति नभस्वान् वायुः। नभस्स्वामित्वं चास्य वायुपुराणे गदितम्। "शब्दाकाशबलानां च वायुरीशस्तथा कृतः" इति। तेन सेव्यमानः परिचर्यमाणः। "गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा। अथवा विद्यया विद्या" इति विद्यार्जनाय समुपदिष्टेषु साधनेषु गुरुशुश्रूषाया अप्येकत्वात्। प्रथमोपात्तत्वेन तस्यास्तत्साधनेषु प्रधानत्वाच्चेति भावः। अत्र तुरङ्गमवालाग्रचाञ्चल्यं स्वतस्सिद्धम्। तत्र च वायव्यरहोविद्याग्रहणार्थत्वं संभाव्यत इति क्रियोत्प्रेक्षालङ्कारः। श्रीहर्षस्तु "अचीकरच्चारुहयेन या भ्रमीः निजातपत्रस्य तलस्थले नभः। मरुत्किमद्यापि न तासु शिक्षते वितत्य वात्यामयचक्रचङ्क्रमान्" इति नलाश्वं प्रशशंस॥

चलत्कन्धरं वाजिनमूहते —

**मुहुस्स्वजवसंरोध नमितोन्नमिताननः ।**
**नमस्कुर्वन्निव पुरो वर्तिनीं विजयश्रियम् ॥ ॥27॥**

**मुहुरिति ॥** मुहुः पुनःपुनः । स्वस्य आत्मनः जवः वेगः स्वीयवेग इत्यर्थः । तस्य संरोधः उपरोधः प्रतिबन्धः मुखखलीन (रज्जु) कृत इत्यर्थः । तेन । नमितम् अधोनमितम् आनमितमित्यर्थः । उन्नमितम् उद्गमितम् उद्गतमिति यावत् । तादृशम् आननम् मुखम् यस्य तथोक्तः । तथाविधस्सन् । पुरः अग्रे वर्तत इति पुरो वर्तिनी स्वाभिमुखं स्थितेत्यर्थः । ताम् विजयश्रियम् जयलक्ष्मीम् । स्वाभिलषितदेवतामिति गम्यते । ताम् । अभिवादयन्निवेत्युत्प्रेक्षा । 'साक्षात्प्रभृतीनि' चेति विभाषा गतिसंज्ञा । 'नमस्पुरसोर्गत्यो' रिति विसर्गस्य सः । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' ति द्वितीया। अत्र नयनयोस्समीपेऽश्वस्य विजयलक्ष्मीस्साक्षात्कुरुते । तां प्रणमन्निवाय मश्वः क्षणक्षणं मुखमुन्नमत्यवनमतीति तुरङ्गस्य नैसर्गिकयोर्मुखोन्नमना वनमनयोर्विजयलक्ष्मीनमस्करणार्थत्वसंभावनेति क्रियोत्प्रेक्षेयम् । अनया 'या लतान्विष्यत' इति न्यायेन हठादभिलषितार्थसिद्धिरूपं वस्तु, तेन च (भावि) विजयस्य शीघ्रमेवावश्यंभावित्वं ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिरपि । इन्द्रायुधवर्णनावसरे भट्टबाणः — "अतिदूरमवनमता प्रति क्षणमतिदूरमुन्नमता च जवनिरोधस्फीतरोषघुरघुरायमाणघोरघोणेन शिरोभागेन निजजवदर्पवशादुल्लङ्घनार्थमाकलयन्तमिव त्रिभुवनम्" इति व्याचष्टे ॥

स्वखुरैर्भूमिं खनन्तमश्वं प्रकथयति —

**खुरधूतधराधूलि स्थलीकृतनभस्थलः ।**
**वारयन्निव रथ्यानां रवेः खेचरतामदम्॥ ॥ 28 ॥**



**खुरेति ॥** खुरैः शफैः स्वपादैरित्यर्थः । धूता कम्पिता घट्टनैरुत कम्पनैर्वा । (तथाविधा) धरा भूमिः । तस्याः धूलिः तस्या उद्गतं रज इत्यर्थः । तेन स्थलीकृतम् भूमीकृतम् । निरालम्बनस्य तस्यापि सालम्बनत्वं कल्पितमनेनेति भावः । अकृत्रिमा स्थली । कृत्रिमा स्थला । स्थलं तूभयसाधारणमिति विवेकः । अभूततद्भावे च्विः । 'च्वौ चे' ति दीर्घः । तादृशम् नभस्थलम् आकाशप्रदेशः येन तथोक्तः । तादृशस्सन् । स्वखुरोत्थितरजोभरेण गगनमाच्छाद्य भूप्रदेशवदाकाशवीथी सर्वापि मृण्मयी कृतेति रजोऽतिशयो वर्ण्यते । रवेः सूर्यस्य । रथं वहन्ति रथ्याः अश्वाः सूर्याश्वास्सप्तेत्यर्थः । 'तद्वहति रथयुगप्रसङ्गा' दिति यत् । तेषाम् । खे आकाशे निरालम्बे चरन्ति गच्छन्तीति खेचराः । चरेष्टः । 'हलदन्ता' दिति सप्तम्या अलुक् । तेषां भावः खेचरता आकाशगमनमित्यर्थः । दिव्यत्वमिति च गम्यते । तस्याः मदः तज्जनितोऽहङ्कार इत्यर्थः । दिव्याश्वा वयमित्यहंभाव इति च गम्यते । तम् निवारयन् निराकुर्वन् मोचयन्निवेति क्रियो त्प्रेक्षा । रजस्थगनेन नभसि भूमौ कृतायां तेऽपि भूमावेवेदानीं संचरन्तीति तेषामद्य निरालम्बनखचरताप्रयुक्तदर्पो नाशित इति भावः । खेचरपदार्थभूतयोर्दिव्यत्वाकाशमार्गचरत्वयोश्श्लेषभित्त्याऽभेदाध्यवसायेनैक वाचकानुप्रवेशात्तेषां दिव्याश्वत्वप्रयुक्तमदोऽपि त्याजित इत्युक्त्या तावन्मात्रभेदवन्तस्ते सर्वथा स्वसाम्यं प्रापिताः इति सूर्याश्वाः एवैते समभवन्निदानीमित्यतिशयोक्तिभेदोऽप्युत्प्रेक्षया ध्वन्यत इत्यलङ्कारेणाल ङ्कारध्वनिरपि । कुलकम् ॥

अश्वारोहणं राज्ञो वर्णयति —

**देहबन्धमिवोत्साहं तमारुह्य महीपतिः ।**
**अमंस्त पृथिवीं सर्वा मात्मनो हस्तवर्तिनीम् ॥ ॥29॥**

**देहेति ॥** महीपतिः राजा कुमारः । देहबन्धः देहेन संबन्धः

देहधरत्वमिति यावत्। तथा च रघुः – "मृगैरजर्यं जरसोपदिष्ट मदेहबन्धाय पुनर्बबन्ध" इति। अत्र– "अदेहबन्धाय (पुनः) देहसंबन्ध निवृत्तये" इति मल्लिनाथः। सोऽस्यास्तीत्यर्शआद्यच्। देहबन्धम् देहधारिणम् मूर्तिमन्तमित्यर्थः। अत्र–मातृकापाठोऽयमनर्थक इति धिया "देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः" इत्यादि दृष्ट्वात्रापि 'देहबद्ध' मिति पूर्वमुद्रापकास्समस्कुर्वन्। एतत्पाठेऽपि - देहबद्धम् बद्धदेहम् देहधारिणमित्यर्थस्समानः। 'जातिकालसुखादिभ्यः' इति क्तान्तस्य पर निपातः। सुसंगते मातृकापाठे परिष्कारक्लेशस्तेषां शोचनीयः। 'मदस्य रोषस्य च देहबन्धं संभेदमाशङ्क्त वीरवर्गः' इति नवमसर्गे पुनः प्रायुङ्क्त कवयित्री। अतोऽस्माभिर्गृहीत एव पाठः कवयित्र्या हृदय स्पृगिति निश्चप्रचः। तादृशम् उत्साहम् उत्साहशक्तिमिव स्थितम्। उत्साहशक्तिश्च कार्यसिद्धेः प्रधानं साधनम्। यथाह कामन्दकः - "श्रियं हि सततोत्साहि दुर्बलोऽपि समश्नुते" इति। (तादृशम्) तम् पूर्ववर्णितम् हयम्। आरुह्य अधिष्ठाय तस्योपरि स्थित्वेत्यर्थः। सर्वाम् पृथिवीम् चतुस्समुद्रमुद्रिताम् अशेषां भूमिमित्यर्थः। आत्मनः स्वस्य। हस्ते वर्तत इति हस्तवर्तिनीम् स्ववशं गताम् स्वविजिता मिति यावत्। णिनिः। 'ऋन्नेभ्य' इति ङीप्। अमंस्त अमन्यत ज्ञातवानित्यर्थः। असाधारणं वाहनोत्साहं स्वविजयसंसूचकं दृष्ट्वा स्वयमपि शत्रुविजये महोत्साहवानभूदिति भावः। उत्साह समृद्धिरत्र वर्णितेति समृद्धिमद्वस्तुवर्णनादुदात्तोऽलङ्कारः। देहबन्धमिवे त्युत्प्रेक्षा च तदङ्गमभूदित्येतयोस्संकरः॥

राज्ञः प्रस्थानमभिधत्ते —

**स तत्र तत्र संभूतै स्सैन्यैस्संख्यातिलङ्घिभिः।**
**अन्तर्हिततदाभोग मत्यगाद्गृहगोपुरम्॥** ॥ 30 ॥

**स इति॥** सः कुमारः। तत्र तत्र तेषु तेषु प्रदेशेषु। संभूतैः एकीभूय स्थितैः व्यूहरचनासंनिवेशविशेषैर्निवेशितैरिति यावत्। "साहित्ये संभवत्यसौ" इति भट्टमल्लः। तादृशैः। संख्याम् गणनाम् अतिलङ्घयन्ति अतिक्रम्य गच्छन्तीति तथाविधैः असंख्याकैरित्यर्थः। सैन्यैः सेनाभिः षड्विधैर्बलैरपीत्यर्थः। षड्विधबलान्येवं कथितान्यन्यत्र - "मौलं भृतं सुहृच्छ्रेणीद्विषदाटविकं बलम्" इति। तल्लक्षणं तु संक्षेपत एवमुक्तम् – "गर्भदासादि स्थायि मौलं बलम्। वेतना र्जितः भृतम्। सुहृत्प्रेषितं सुहृद्बलम्। जनपदेभ्य आनीतं श्रेणी बलम्। केनचिद्द्विषता सह युद्धे द्विषदन्तरेण प्रेषितं द्विषद्बलम्। आटविकं किरातादिबलम्।" इति। अतएव रघुदण्डयात्रावसरे 'षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया' इत्याह कालिदासः। तथाविधैः। अन्तर्हितः तिरोधानं गतः अदृश्यतां प्राप्तः आच्छादित इति यावत्। वृक्षप्रचलनन्यायेन देवदत्तस्य गुरुकुलमित्यादाविव समुदाय संबन्धेऽपि साकाङ्क्षत्वेन तदवयवसंबन्धो न दुष्टः। यथाह भर्तृहरिः- "समुदायेन संबन्धो येषां गुरुकुलादिना। संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह" इति। तादृक्। सः तावान् अपरिमित इत्यर्थः। सर्वनाम्नां बुद्धिस्थपरामर्शकत्वात्तच्छब्दोऽयं वक्तृविवक्षितं परिमाण मभिधत्त इत्यपरिमितार्थकतास्य। (तथाविधः) आभोगः गृहबहिर्द्वारप्रन्त प्रदेशः तद्वैपुल्यं वा यस्य तम्। "यथायमाभोगस्तपस्विनाम्" इत्यादौ प्रान्तप्रदेशार्थकताप्याभोगस्य दृष्टा। (तादृशम्) गृहस्य राज सदनस्य गोपुरम् पुरद्वारम् तदवधिकं राजगृहबहिर्द्वारमित्यर्थः। तत् अत्यगात् अतिचक्राम। सैन्यैस्साकं तद्बहिर्जगामेति तात्पर्यार्थः। शुभ मुहूर्ते सोऽश्वमारुह्य निवेदितविजयैश्शुभनिमित्तैस्सोत्साहं प्रतस्थे जैत्र यात्रायै ससैन्य इति सारोंऽशः॥

राज्ञि प्रस्थिते निर्वर्त्यमाना राजमर्यादाः अद्य श्लोकत्रयेण प्रकथ्यन्ते —

**तमञ्जलिभिरानम्र किरीटतलकीलितैः ।**
**प्रणेमुर्धरणीपाला स्तुरङ्गस्कन्धवर्तिनः ॥ ॥31॥**

**तमञ्जलीति ॥** तुरङ्गाः स्वाधिष्ठिताः अश्वाः तेषाम् स्कन्धाः कायाः पृष्ठप्रदेशाः । कायशब्देन कायैकदेशः पृष्ठभागो लक्ष्यते । "स्कन्धस्स्यान्नृपतावंसे संपरायसमूहयोः । काये तरुप्रकाण्डे च भद्रादौ छन्दसो भिदि' इति मेदिनी । तेषु वर्तन्त इति णिनिः । (तथाविधाः) धरणीपालाः सुहृदो राजानः । कर्तारः । आनम्राः प्रणताः किरीटाः मकुटानि तेषाम् तलानि स्वरूपाणि मकुटानीत्यर्थः । 'अथ स्स्वरूपयोरस्त्री तलम्' इत्यमरः । तेषु कीलितैः बद्धैः संघटितैः दृढं स्थापितैरित्यर्थः । 'बद्धे कीलितसंयतौ' इत्यमरः । (तादृशैः) अञ्जलिभिः हस्तसंपुटैः । करणभूतैः । 'अञ्जलिस्तु पुमान् हस्त संपुटे कुडवेऽपि च' इति मेदिनी । तम् कम्पभूपम् प्रणेमुः अभ्यवादयन् । प्रपूर्वाण्णमतेर्लिट् । एत्वाभ्यासलोपौ । सैन्यधिपतयस्सामन्तराजाश्च भक्त्यतिशयेन तुरङ्गानारूढा अपि यथोचितं तं सभाजयामासुरिति तद्वैभवमत्र प्रस्तूयते ॥

**आलोकशब्दमुखरै रस्याग्रे पादचारिभिः ।**
**चोलकेरलपाण्ड्याद्यै र्वेत्रित्वं प्रत्यपद्य त ॥32॥**

**आलोकेति॥** अस्य राज्ञः । अग्रे पुरस्तात् । पादचारिभिः पदिकैः । पादाभ्यां चरतीति णिनिः । आलोकस्य शब्दः आलोकशब्दः आलोकार्थश्शब्दः यश्शब्दं वाचयति तस्य आलोकार्थम् दर्शनार्थम् राजानं प्रति प्रयुज्यमानश्शब्दः जयशब्द इत्यर्थः । 'आलोको जयशब्दस्स्यात्' इति विश्वः । तादर्थ्ये षष्ठी । तेन मुखराः वाचालाः अधिकं भाषिणः अविरतं वाचयन्त इत्यर्थः । 'रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्' इति मुखशब्दात् 'मुखमस्ति सर्वस्मिन् वक्तव्ये' इति रः । अत्र मुखरः



वाचाल इति हरदत्तः । तत्सादृश्याल्लक्षणया नित्यप्रभाष्यपि । तैः । चोलानां राज्ञा चोलः । 'जनपदशब्दात्क्षत्त्रिया' दित्यञः 'कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम्' इति लुक् । केरलानां राजा केरलः पाण्डूनां राजा पाण्ड्यः । 'पाण्डोर्ड्यण् वक्तव्य' इति ड्यण् । द्वन्द्वः चोरकेरलपाण्ड्याः । ते आद्याः आदौ भवाः येषां तैः तत्प्रभृतिभूपालैरित्यर्थः । कर्तृभिः । वेत्रित्वम् वेत्रधरत्वम् प्रतीहारित्वम् दौवारिककृत्यम् साहोनिनादित्वमित्यर्थः । वेत्रम् अस्यास्तीति वेत्री इन् । तस्य भावः तत्त्वम् । 'द्वार्स्थितो वेत्रधारकः' इति त्रिकाण्डशेषः । तत् प्रत्यपद्यत अलम्भि अधारि । यवनराजेन राज्यान्निष्क्रासिताः कम्पराजं शरणं गताश्चोरलकेरलपाण्ड्यादयो राजानः एतदनुग्रहमाकाङ्क्षन्त इदानीं वेत्रधरा भूत्वा मार्गमादिशन्तस्साहोनिनादैस्सेवन्त इति वैभवातिशयोऽस्य प्रस्तूयते । दौवारिककृत्यं प्रति मातृगुप्ताचार्याः - "सन्धिविग्रहसंबद्धं नानाकार्यसमुत्थितम् । निवेदयन्ति याः कार्यं प्रतीहार्यस्तु ताः स्मृताः ॥" इति । वैजयन्तीकारास्तु – "प्रतीहारी तु राजानं संभावयति या सदा" इत्यहुः ॥"

**आचारलाजैः पौराणां पुरन्ध्रचस्तमवाकिरन् ।**
**अम्भसां बिन्दुभिश्शुभ्रै रभ्रमाला इवाचलम्॥ ॥33॥**

**आचारेति ॥** पुरे भवाः पौराः नगरस्थाः अम्भसामित्युपमा पवित्रशीलतामेष्ववगमयति । 'तत्र भव' इत्यण् । तेषाम् । पुरन्ध्र्यः कुटुम्बिन्यः 'स्यात्तु कुटुम्बिनी पुरन्ध्री' इत्यमरः । कर्त्र्यः । आचारार्थाः लाजाः अक्षताः मङ्गलाचरणप्रयोजनकानि अखण्डानि तण्डुलानीत्यर्थः । 'लाजस्स्यादार्द्रतण्डुले नपुंसकमुशीरेऽथ स्त्रियां पुंभूम्नि चाक्षते' इति मेदिनी । तैः । करणभूतैः । अभ्रमालाः मेघपङ्क्तयः । शुभ्रैः धवलैः शुक्लवर्णैः । अम्भसाम् उदकानाम् बिन्दुभिः कणैः वर्षोदकबिन्दुभिरित्यर्थः । कणग्रहणमक्षतैस्साम्यं प्रतिपादयितुमित्यवगन्तव्यम् ।

अचलम् पर्वतमिव अवाकिरन् आस्यन् । तस्योपरि न्यक्षिपन्नित्यर्थः । " (तथाहि) लौकिकाचारं मनसापि न लङ्घये ' दिति न्यायेन तास्तथाकुर्वन्निति भावः । अलङ्कारस्तु सावयवोपमा ॥

दक्षिणदेश्यमार्गप्रवेशं नायकस्य वर्णयति –

**अथ कम्पमहीपालः कम्पयन् द्विषतां मनः।**
**प्रातिष्ठत दिशं भेजे मलयाचलमुद्रिताम् ॥ ॥34॥**

**अथेति ॥** अथ अनन्तरम् लौकिकाचारनिर्वर्तनोत्तरकाल इत्यर्थः । कम्पमहीपालः कम्पनभूपतिः । द्विषताम् शत्रूणाम् । ' द्विषद्द्वेषणदुर्हृदः ' इत्यमरः । मनः हृदयानि । जातावेकवचनम् । कम्पयन् चलयन् क्षोभयन्निति यावत् । शत्रुव्यथाकरं यथा भवति स्वप्रस्थानं तथा । भयङ्करतया व्यूहादीन्यारचय्येति भावः । अस्य कम्पनत्वेन तथाकरण मस्मिन्नसंभाव्यं न भवतीत्याकूतम् । प्रातिष्ठत प्रययौ । ( इत्थं प्रस्थाय ) मलयाचलः मलयाख्यः पर्वतः तेन मुद्रिताम् चिह्निताम् तत्प्रख्यातामित्यर्थः । तथाविधाम् दिशम् दक्षिणदिशम् तद्दिशे गन्तव्य मध्वानमिति यावत् । भेजे असेवत । सादरं प्रापेत्यर्थः । काञ्चीपुर यानाय दक्षिणां दिशं गन्तुं सोत्साहं स प्रायतेति भावः ॥

दक्षिणदिशं प्रति प्रस्थितं नायकं वर्णयति —

**स नयन् महतीं सेनां व्यरुचद्वीरकुञ्जरः ।**
**पयोदमालामाकर्षन् पौरस्त्य इव मारुतः ॥ ॥35॥**

**स नयन्निति ॥** वीरकुञ्जरः वीरश्रेष्ठः महावीर इत्यर्थः । सः राजा । महतीम् विपुलाम् सर्वतो व्याप्ताम् । ' विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् ' इत्यमरः । सेनाम् सैन्यम् । नयन् प्रापयन् पुरतो गमयन् । स्वमग्रतः स्थित्वेत्यर्थः । पुरस्ताद्भवः पौरस्त्यः पुरतो भवन्नित्यर्थः । ' पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः ' इत्यमरः । ' दक्षिणा पश्चा ' दिति पुरसस्त्यक् । तथाविधस्सन् । पयोदानाम् माला पयोद माला मेघपङ्क्तिः । ताम् । आकर्षन् अनुगमयन् । मारुतः वायुरिव । व्यरुचत् भृशमशोभत । वायुवेगमनुसृत्य यथाऽवशा ततः पश्चाद्गच्छन्ती मेघमाला दर्शनीया भवति तथेयमपि सेना महता वेगेन कम्पराज मग्रतः कृत्वा तद्वशे गच्छन्ती सर्वेषां नयनोत्सवमकरोदित्युपमार्थः । विपूर्वाद्रुच दीप्तावित्यस्माल्लुङ् । द्युतादित्वात्परस्मैपदम् । अङ् च । सोत्साहं गच्छतस्सेना कम्पराजश्चेति सारांशः । सावयवा वाक्यार्थोपमेयम् । रघुवंशे कालिदासः – " स सेनां महतीं कर्षन् पूर्वसागरगामिनीम् । बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः " इति रघोर्दण्डयात्रा **मवर्णयत् ॥**

प्रस्थाने रजोभरोऽवश्यं वर्ण्य इति लक्षणविदः । तदद्य वर्ण्यते सप्तभिश्श्लोकैः –

**रजोभिर्मुहुरुद्धूतै र्लघूभवति भूभरे ।**
**कथंचित्पृतनाभारं चक्षमे फणिनाम्पतिः ॥ ॥36॥**

**रजोभिरिति ॥** फणिनाम् पतिः नागराजः आदिशेषः । ' तत्पुरुषे कृति बहुल ' मिति बाहुलकात् षष्ठ्याः अलुक् – अपां पतिरित्यादाविव । मुहुः पुनः पुनः बहुवारमित्यर्थः । उद्धूतैः उत्क्षिप्तैः ऊर्ध्वं गमितैः । सेनायाश्शीघ्रगमनेनेत्यर्थादाक्षिप्यते । एतावन्मात्रमपि क्लेशमसहमानैः पूर्वमुद्रापकैः 'उद्धूतैः' इति पाठः कल्पितः । ' उद्धूतैः – संजातैः ' सेनागमनादित्यार्थिकस्सम्बन्धस्तत्रापि सम इति न क्लेशापनयनं तत्रोत्पश्यामः । (तादृशैः) रजोभिः परागैः । हेतौ तृतीया । तैः कारणभूतैः । भूभरे भुवो भारे आत्मना धृते इत्यर्थः ।

अलघुः लघुः संपद्यमानो भवन् लघूभवन् अगुरुतया भवन्। अभूत तद्भावे च्विः। 'च्वौ' चेति दीर्घः। च्व्यन्ताद्भवतेर्लटश्शता। तस्मिन् रजोऽपगमनेन भूगौरवे न्यूनीकृते सतीत्यर्थः। पृतनायाः सेनायाः भारः भरः अतिशयः परिपूर्णता गुरुत्वकृतमाधिक्यमित्यर्थः। 'ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः' इत्यमरः। 'भारो भरे विवर्धे च पलानां द्विसहस्रके' इति नानार्थरत्नमाला। तम्। कथंचित् यथाकथमपि अतिश्रमेणेत्यर्थः। अनेन भूभारेऽपगतेऽपि सेनाभरोऽयं भगवतोऽनन्तस्यापि प्रयासमेव जनयामासेति सेनोत्कर्षः प्रस्तूयते। यथाकथमपीत्यनेन – शिरःकम्पशरीरवेपथुनिश्वासबहुलत्वादीन् करुणरसानुभावान् सहस्रशिरसि शेषेऽवगमय्य करुणरसः परिपोष्यते। चक्षमे असहत। भूभारवहनादपि दुर्भरमभवदिदं सेनाभारवहनमिति भावः। अत्र भूभारस्य रजोऽपगमनेन लाघवं वा तेन हेतुना सेनावहनं वा सहस्रशिरसः केवलं कविप्रौढोक्तिसिद्धमित्यतिशयोक्तिरलङ्कारः॥

परागमेव वर्णयति —

**प्रतापादित्यकीर्तीन्दु युगपद्ग्रासलालसः।**
**परागः परभूपाना मुपरागोऽभवन्नवः॥ ॥37॥**

**प्रतापेति॥** परागः सेनोत्थिता धूलिः। परभूपानाम् शत्रुराजानाम्। प्रतापः पराक्रमः परावज्ञासहनक्षमं तेज इत्यर्थः। स एव आदित्यः सूर्यः। भूमिं सौरं तेज इव शत्रून् प्रतपत्ययमित्येव मुक्तिः। स च। कीर्तिरेव इन्दुः चन्द्रः। प्रसन्नत्वाज्जनाह्लादकत्वाच्चेति भावः। तयोः कर्मणि षष्ठी। तौ इत्यर्थः। युगपत् एकदा समकाल एवेत्यर्थः। ग्रासः ग्रसनम् भक्षणम्। 'ग्रसु (ग्लसु) अदने - भावे घञ्। तस्मिन् लालसः आसक्तः तदेकायत्तचित्त इत्यर्थः। तादृश



स्सन्। नवः नूतनः अपूर्वः कदापि न दृष्टश्रुतचरः उपरागः ग्रहणम् सूर्यचन्द्रयोः राहुग्रासः। 'उपरागस्तु पुंसि स्याद्राहुग्रासेऽर्कचन्द्रयोः' इति सुधा। पूर्णिमावास्ययोरुभयोरेकदा न जातु संभव इति तत्प्रयुक्तयोश्चन्द्रसूर्यग्रहणयोरपि नैकदा कुत्रापि लोके संभवः। अत्र तु तत्संभव इति नवोयमुपराग इत्युच्यते। अत्र केवलमतथ्यवर्णनमेव न कृतम्। आश्चर्यजनकत्वेन चमत्कारितया नवोपरागत्वं परागस्य कल्पितमित्यत्युक्तिरलङ्कारः। स च रूपकानुप्राणित इति तयोस्संकरः॥

**तस्य दिक्षु प्ररोहन्त्या शतधा कीर्तिवीरुधः।**
**विततान रजस्तोमः करीषनिकरभ्रमम्॥ ॥38॥**

**तस्येति॥** रजस्तोमः परागसमूहः धूलिराशिः। दिक्षु आशासु दशस्वपीत्यर्थः। शतधा अनेकधा नैकविधैरित्यर्थः। 'संख्याया विधार्थे धा' इति धाप्रत्ययः। प्ररोहन्त्याः प्रतिरोहन्त्याः अङ्कुरन्त्याः प्रादुर्भवन्त्याः। तस्य कीर्तिः यश एव वीरुध् शाखादिभिर्विस्तृता लता। 'लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि' इत्यमरः। तस्याः करीषः शुष्कगोमयम् दोहदभूतम्। 'गोविड् गोमयमस्त्रियाम्। तत्तु शुष्कं करीषोऽस्त्री' इत्यमरः। तस्य निकरः समूहः गोमयराशिः। स इति भ्रमः भ्रान्तिः। तम् विततान वितेने जनयामासेत्यर्थः। करीषरजस्तोमयोः नीलवर्णादिभिरत्यन्तं सादृश्यादिति भावः। इतः पूर्वं शत्रुविजयादिना समुपार्जितायाः लोके प्रवर्धमानायाश्च कम्पराज कीर्तेर्दण्डयात्रेयं (परागमयी) शाखोपशाखाभिर्दिनदिनमेधमानाया लतायाः दोहद इवात्यन्तमभिवर्धकोऽभवदिति तात्पर्यार्थः। अत्र रजस्तोमे करीषभ्रान्तिरिति भ्रान्तिमानलङ्कारः। स च कीर्तिवीरुधिति रूपकेण संकीर्यते॥

**पांसुस्थगनलक्षेण पलायत रविः क्वचित्।**
**भावियुद्धामरीभूत वीरोद्दलनशङ्कितः॥ ॥39॥**

**पांस्विति ॥** रविः सूर्यः । कर्ता । भावी भविष्यत् अचिर कालादेव संभविष्यत् युद्धम् संग्रामः तत्र अमरीभूताः देवीभूताः देवभावं प्राप्ताः । शत्रूणामपराङ्मुखा भूत्वा युद्धेषु विक्रम्य मृता इत्यर्थः । तथाविधानां स्वर्गस्थितेश्शास्त्रदृष्टत्वादिति भावः । तादृशाः वीराः शूराः तेषाम् उद्दलनम् भेदनम् । कर्तरि षष्ठी । तत्कृतात्म विदलनमित्यर्थः । तेन । कारणभूतेन । हेतौ तृतीया । शङ्कितः संजातभयः स इवेति गम्योत्प्रेक्षा । अत्र स्मर्यते – " द्वाविमौ पुरुषौ लोके सूर्यमण्डल भेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः " इति । पांसोः परागस्य । कर्तरि षष्ठी । स्थगनम् आच्छादनम् परागकृत संछादनमिति यावत् । तदेव लक्ष्म् व्याजः । वस्तुतो न तथेति भावः । ' लक्षं व्याजशरव्ययोस्संख्यायामपि ' इति हैमः । तेन । क्वचित् यत्र कुत्रचित् । केनाऽपि कथमपि ज्ञातुमशक्यस्य प्रदेशान्त रस्येत्यर्थः । पलायत परायत अधावत् । लोकस्य पश्यत एवान्तर्हि तत्वादेवमुच्यते । अनेन महता जवेन राशीभूय मुहूर्तकाल एव सूर्य मदृश्यतां नीतः पराग इति गम्यते । तेन च सेनावेगो निरुपम इति तत्सेना च गणयितुमशक्या संख्ययेति व्यज्यते । ' परा ' इत्युपसर्ग पूर्वादयतेर्लङ् । ' उपसर्गस्यायता ' विति रेफस्य लः । अत्र च पांसु स्थगनं न पांसुस्थगनम् पलायनमेवेति लक्षशब्देन निह्नुतेः कैतवापह्नुतिः । पलायने च वीरकृतस्वमण्डलभेदनभीतिर्हेतुतया संभाव्यत इति द्वयो रेतयोस्सापेक्षतया संकरः ॥

**प्रायस्स्वनाशमुत्प्रेक्ष्य भाविनं रेणुसंचयः ।**
**रुरोध सिन्धुरेन्द्राणां मदधारासिरामुखम् ॥ ॥40॥**

**प्राय इति ॥** रेणुसंचयः परागसमुदयः । कर्ता । भाविनम् आगामिनम् स्वनाशम् स्वस्य स्वरूपतोऽदर्शनम् । मदप्रवाहे प्रवहति परागोत्पत्तेर्निरवकाशत्वेन तद्दर्शनासंभवादेवमुच्यते । अत्र ' आगामी ' त्यनेन परागपातो गजानां मदजनक इति सूचितम् । अत एव शिशु पालवधे – " महीयसां महति दिगन्तदन्तिनामनीकजे रजसि मुखानु षङ्गिणि । विसारितामजहत कोकिलावलीमलीमसा जलदमदाम्बु राजयः ॥ " इति वर्ण्यते । महाभारते च – ' स्त्रियो जारेण तुष्यन्ति गावस्स्वच्छन्दचारतः । कुञ्जराः पांसुवर्षेण ब्राह्मणाः परनिन्दया " इति स्मर्यते । ( तम् ) उत्प्रेक्ष्य संभाव्य पुरत एव समालोच्य । भाविनोऽनर्थस्य पुरस्तादेव प्रतिक्रियाचरणं प्रेक्षावतां लक्षणमिति धियेति भावः । प्राय इति संभावनायाम् । तथाकृत्वेवेत्यर्थः । सिन्धुरेन्द्राणाम् गजश्रेष्ठाणाम् मदगजानामित्यर्थः । (तेषाम्) मदधाराः दानप्रवाहाः तेषाम् सिराः धमन्यः । जन्यजनकभावे षष्ठी । तदुत्पादका नाड्य इत्यर्थः । तेषाम् मुखम् अग्रभगम् द्वारम् । जातावेकवचनम् । तद्वाराणीत्यर्थः । मदोत्पत्तिस्थानानि च करिणामेवमुक्तानि गजशास्त्रे – " करात्कटाभ्यां नेत्राभ्यां मेढ्रच्चापि मदस्रुतिः " (पालकाप्यसंहिता) । करात् - नासारन्ध्राभ्यामित्यर्थः । " इति । (तानि) रुरोध अवा रुन्धत् तान्याच्छादयामसेत्यर्थः । अत्र परागस्य करिमदस्थानावरोधे भाविस्वनाशोत्प्रेक्षणं हेतुत्वेन संभाव्यत इति क्रियोत्प्रेक्षा । अनया च परागेण भाविस्वनाशनिवारणार्थे कृतं दन्तिमदस्थानाच्छादनं तन्मदो त्पादकत्वेन स्वविनाशसम्पादि संजातमित्यसंगत्यलङ्कारो ध्वन्यत इत्यलङ्कारेणालङ्कारध्वनिरपि । ' आगामिना ' इत्यनेन स्वप्रयत्नविरुद्ध कृतिश्च गम्यत एव । असंगतेर्लक्षणं तु – " अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्ध कृतिस्तथा " इति ॥



**घर्मांशुकिरणग्रासा त्परितप्त इवाधिकम् ।**
**अगाहत महाम्भोधी नवनीक्षोदसंचयः ॥ ॥ 41 ॥**

**घर्मेति ॥** अवन्याः भूम्याः क्षोदः चूर्णः रज इत्यर्थः । तस्य संचयः रजोराशिः । घर्मांशुः तीक्ष्णांशुः – तस्य किरणाः तीक्ष्णा इति

गम्यते। तस्य किरणाः रश्मयः। तेषां ग्रासः भक्षणम् कबलनम् अतितृष्णया तत्पानमित्यर्थः। ग्रसु अदने – भावे घञ्। तस्मात् तद्धेतोरित्यर्थः। परितप्तः संतप्त इवेत्युत्प्रेक्षा। अनेन सूर्यमण्डल पर्यन्तं गत्वा तदभिव्याप्त्या तत्किरणाच्छादनं परागस्य व्यज्यते। इदं च व्यङ्ग्यमेतेन विना वाच्यार्थानुपपत्तेर्वाच्यसिद्ध्यङ्गमिति गुणीभूत व्यङ्ग्यमेव। महान्तः संख्यया बहुलाः अम्भोधयः समुद्राः सप्त समुद्रा इत्यर्थः। तान्। अगाहत प्राविशत्। तेषु अन्तर्निममज्जेत्यर्थः। यथा कश्चिदातपदाहप्रज्वलच्छरीरः पुमान् तत्तापशान्तये अन्तर्निमज्जति तत्रैव चिरं तिष्ठति तद्वदिति भावः। गाहू विलोडने लङ्। परागस्य महाम्भोधिनिमज्जने सूर्यकिरणग्रासत्वं हेतुतया कल्पितमिति क्रियोत्प्रेक्षा। अनया समासोक्तिस्पूर्तिरपि॥

दन्तिनां मदोदयमाचष्टे –

**वितेनिरे करेणूनां करशीकररेणवः।**
**घनस्य सेनारजसः करकाकारचातुरीम्॥ ॥ 42 ॥**

**वितेनिर इति॥** करेणूनम् करिणाम् 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः। कराः शुण्डाः 'करो वर्षोपले रश्मौ पाणौ प्रत्याय शुण्डयोः' इत्यमरः। तेषाम् शीकराः जलबिन्दवः। करीन्द्रैः करेण पीत्वा विनोदाय तेन समुत्क्षिप्ताः जलकणा इत्यर्थः। तेषाम् रेणवः रेणुवत्सूक्ष्मतमाः अत्यल्पकणाः। कर्तारः। करिहस्ताग्रसंजातशीकराणा मतिसूक्ष्मत्वं प्रसिद्धम्। वर्णितं च माघेन– "करेणुः प्रस्थितोऽनेको रेणुर्घण्टास्सहस्रशः। करेऽणुश्शीकरो जज्ञे रेणुस्तेन शमं ययौ" इति। घनस्य मेघस्य। सान्द्रस्येति च गम्यते। करकाः वर्षोपलाः। 'वर्षोपलस्तु करका करकोऽपि च दृश्यते' इति सुधा। तेषाम् कारः यत्नः व्यापारविशेषः वर्षणमिति यावत्। तत्र चातुरीम् तद्विषयकं



(मेघसंबन्धि) नैपुणमित्यर्थः। (ताम्) सेनारजसः सैन्योत्थितस्य परागस्य वितेनिरे विदधिरे अकुर्वन् असृजन् परागे मेघस्य करका कारचातुर्यं जनयामासुरित्यर्थः। तत्र रजःखण्डाः करिकरशीकरसंपर्केण द्रुताः पिण्डीभूय नभसो मेघवृष्टकरकोपलवत्पतन्तीत्येवमुच्यते। यद्वा। सेनारजसः घनस्य इति व्यस्तरूपकम्। सेनारजोभूतस्य मेघस्ये त्यर्थः। तस्य करकाणाम् आकारः तद्वद्रूपधारणम् तस्मिन् चातुरीम् कौशलम् तद्विषयकनैपुणमित्यर्थः। परागस्य स्वाश्रयेण स्ववर्णमुत्पाद्य वर्णान्तिरसमुत्पादका भूत्वा तस्य करकाकारधारणे करिकरशीकरा स्स्वचातुर्यं प्रादर्शयन्निति भावः। परागस्याश्रयवर्णेन वर्णवत्त्वं च प्रसिद्धम् – यथाह माघः – "चमूरजः प्राप दिगन्तदन्तिनां महासुरस्याभिसुरं प्रसर्पिणः। दन्तप्रकाण्डेषु सितेषु शुभ्रतां कुम्भेषु दानाम्बु घनेषु पङ्कताम्" इति। अत्र परागस्य करकाकारचातुरीसंजननं प्रौढोक्तिसिद्धमेव केवलमित्यतिशयोक्तिः। सेनारजसः घनस्येति रूपक मिति पक्षे रूपकोज्जीवितातिशयोक्तिरिति तयोस्सङ्करः॥

करिणां मदोदयो वर्ण्यते –

**ततस्सेनागजेन्द्राणां कर्णतालानिलोद्धता।**
**अवार्यत रजोराजिः करशीकरदुर्दिनैः॥ ॥ 43 ॥**

**तत इति॥** ततः अनन्तरम् परागव्याप्तेरुत्तरकाल इत्यर्थः। सेनागजेन्द्राणाम् – सेनायाः सैन्यस्य। अवयवावयविभावे षष्ठी। तदेक देशानामित्यर्थः। (तादृशानाम्) गजेन्द्राणाम् गजश्रेष्ठाणाम्। कर्णावेव तालौ तालपत्रे। 'तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च सम्मिते। गीत कालक्रियामाने करस्फाले द्रुमान्तरे' इति विश्वः। तास्थ्याल्लक्षणया तालदले। अन्यथा 'तालमय' मिति स्यात्। 'तालाद्धनुषी' ति गणसूत्रात्। तयोः अनिलः ताभ्यां जातोऽनिलः। तेन उद्धता उत्क्षिप्ता

ऊर्ध्वं प्रापिता। रजसः राजिः परागपङ्क्तिः धूलिराशिरिति यावत्। सा कर्म। करशीकराः शुण्डाजलकणाः त एव दुर्दिनानि मेघावृतदिवसानि। 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यमरः। तैः (मेघ) वृष्टिभिः। 'अयुर्वै घृतमितिव' दौपचारिकः प्रयोगोऽस्य वृष्टौ। अन्येप्येवमेनं प्रयुञ्जते – "सीमन्तविद्युदवतंसशिरीषचापं कैश्यं घनोऽयमिति कैस्सुदृशां न जज्ञे। तस्याधएव निटले सततं यदासीत्तत्तादृशी सलिलशीकरदुर्दिनश्रीः" इत्यादि। तैः। अवार्यंत आव्रियत अन्तर्धानमनायि। वृञ् आवरणे इति चुरादिण्यन्तात्कर्मणि क्तः। गजानां कर्णचालनं स्वभावः। तच्चालनसमुत्थितो रेणुः तच्छीकरैरेव प्रशान्तेति निर्गलितोऽर्थः। करशीकरेषु दुर्दिनत्वरूपणाद्रूपकमलङ्कारः॥

सेनाप्रस्थानं वर्ण्यते —

**अथ कल्पान्तसंभिन्न सप्ताम्भोनिधिसंनिभम्।**
**क्रमात्प्रयातुमारेभे स्फारकोलाहलं बलम्॥ ॥ 44॥**

**अथेति॥** अथ अनन्तरम् एवं मदेभमदवृष्टिभिः रजसि प्रशान्ते इत्यर्थः। कल्पान्तः प्रलयकालः तस्मिन् संभिन्नम् संभेदं प्राप्तम् परस्परम् संमिलितमित्यर्थः। 'संभेदः स्फुटने सङ्गे' इति सुधा। सप्तानाम् अम्भोनिधीनां समाहारः सप्ताम्भोनिधि सप्तसमुद्रा इत्यर्थः। 'तद्धितार्थे' ति समाहारः। 'स नपुंसक' मिति नपुंसकता च। तेन तुल्यम् तथोक्तम्। अतएव स्फारः विस्तृतः प्रवृद्धः कोलाहलः कलकलः (बहुभिः कृतो) महाध्वनिः यस्मिन्। तथाविधं सत् सोत्साहं सदित्यर्थः। बलम् सैन्यम्। क्रमात् क्रममनुसृत्य गजसेना तदनन्तरं पदातयस्तदनन्तरमश्वसेना – इत्यादि स्वोद्दिष्टक्रममवलम्ब्येत्यर्थः। यद्वा। व्यूहरचनायां तदुद्दिष्टं क्रममालम्ब्येति-



वार्थः। ल्यब्लोपे पञ्चमी। (तथा) प्रस्थातुम् प्रयातुम् दक्षिणादिशामार्गेण गन्तुम्। आरेभे उपाक्रमत। अङ्पूर्वाद्रिभेर्लिट्। एत्वाभ्यासलोपौ। सैन्यैस्सोत्साहैश्शत्रुवधाय कम्पराजः प्रययाविति सारांशः॥

करिणां मदातिशयः कथ्यते —

**तुरङ्गखुरकुद्दाल दलितादपि भूतलात्।**
**न पुनः पांसुरुत्तस्थौ महेभमदवृष्टिभिः॥ ॥ 45॥**

**तुरङ्गे ति॥** तुरङ्गाणाम् अश्वानाम् खुराः शफानि। 'शफं क्लीबे खुरः पुमान्' इत्यमरः। त एव कुद्दालाः भूमिदारणानि '.कुद्दालस्स्यात्पुमान् भूमिदारणे युगपत्त्रके' इति सुधा। तैः। करणैः। दलितात् विदारितात्। अपि विरोधे। एवं विधप्रबलकारणे सत्यपीत्यर्थः। भूतलात् भूमेः। पांसुः पुनः रजस्तु। कर्तृ। महान्तः इभाः महेभाः भद्रादिजात्युत्तममदगजाः इत्यर्थः। 'इभः स्तम्बेरमः पद्म' इति गजपर्यायेष्वमरः। 'सन्महत्परमे' ति समासः। तेषाम् मदाः दानाम्बूनि मदस्रावा इत्यर्थः। त एव वृष्टयः वर्षाः। अविच्छिन्नप्रस्रावित्वादेवमुक्तिः। ताभिः हेतुभूताभिः करणभूताभिर्वा। न उत्तस्थौ न उच्चचाल ऊर्ध्वगा न बभूवेत्यर्थः। परागस्नानं दन्तिनां मदहेतुरिति तत्संजातमदप्रवाहा दन्तिनः महान्तमपि रजोराशिमविच्छिन्नस्वदानाम्बुप्रवाहैः पङ्कतामनयन्निति भावः। उत्पूर्वात्तिष्ठतेः लिट्। अत्र भूतलविदारणरूपकारणसत्त्वेपि कार्यस्य रजसो भूमेरनुत्पत्तिरिति विभावनालङ्कारः। स च 'मदवृष्टिभि' रित्यादिरूपकानुप्राणित इति सङ्करः। विभावनायाः लक्षणं तु "विभावना विनापि स्यात्कारणं कार्यजन्म चेत्" इति॥

लोकरक्षणे समुद्यतस्यास्य देवा अप्युपकुर्वन्तीवेति प्रस्तौति —

**तं तुङ्गभद्राकल्लोल शीकरासङ्गशीतलः ।**
**आनुकूल्येन यात्रार्थं माचकर्षेव मारुतः ॥ ॥ 46 ॥**

**तं तुङ्गे**ति ॥ तुङ्गा च भद्रा चेयं नदीति तुङ्गभद्रा । विशेषण विशेष्यभावस्य विवक्षाधीनत्वात्कर्मधारयः । तुङ्गासहिता भद्रेति मध्यम पदलोपाद्वा । 'पुंवत्कर्मधारये' ति पुंवद्भावः । तस्याः कल्लोलाः महान्तस्तरङ्गाः । 'अथोर्मिषु महत्सूल्लोलकल्लोलौ' इत्यमरः । तेषाम् शीकराः जलबिन्दवः । 'शीकरोऽम्बुकणः स्मृतः' इत्यमरः । तेषाम् आसङ्गः सम्मेलनम् तैस्सह सङ्गतिरित्यर्थः । तेन शीतलः शिशिरः । 'शीतमस्यास्ती' ति सिध्मादित्वाल्लच् । मारुतः मरुत् । कर्ता । प्रज्ञादित्वादण् । मारुतशब्दोऽकारान्तोऽप्यस्तीति विक्रमादित्यः । 'मरुत स्पर्शनः प्राणस्समीरो मारुतो मरुत्' इति । अनुकूलस्य भावः आनुकूल्यम् आनुगुण्यम् प्रतिबन्धनिरासः तेन । यात्रार्थम् यात्रानिमित्तम् जैत्रयात्रासिद्ध्यर्थमित्यर्थः । 'अर्थो विषयार्थनयोर्धन कारणवस्तुषु । अभिधेये च शब्दानां निवृत्तौ च प्रयोजने' इति मेदिनी । तम् परागम् स्वयात्राप्रतिरोधिनमित्यर्थः । आचकर्ष बलादाहरत् अपजहार अदृश्यतामनयदित्यर्थः । इवेति संभावनायाम् । नूनमित्यर्थः । परागं विनाशय्य शीतलो वायुस्तं सिषेवेति राज्ञश्शुभाशंसनं प्रस्तूयते । यथा लोककल्याणाय महता संरम्भेण गच्छन्तं महापुरुषं दुर्जनः कश्चिदसूयया प्रतिबन्धसमुत्पादनेन तद्यानं प्रतिरोद्धुं प्रयतते, निष्कारण मेवं प्रवृत्तं तं सज्जनो बलीयान् कश्चिल्लोकहितकामनया महापुरुष समाराधनेन तदनुग्रहं संपादयितुं च तं बलाद् गृह्णाति निरुपद्रवं च तां यात्रां प्रवर्तयति तद्वदित्यर्थः । अत्र 'यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायता' मिति न्यायेन यात्राप्रतिबन्धिनं रेणुं नष्ट प्रायमकरोद्वायुरिति संभावनया क्रियोत्प्रेक्षा । निमित्तज्ञाः यात्रायां धूलिसम्मिलितवायोर्दुर्निमित्तत्वं मृदुहितवायोस्सुनिमित्तत्वं चाभिदधति ।



अतएव रामायणे— "महान्ति च निमित्तानि दिवि भूमौ च राघव । शुभानि तव पश्यामि सर्वाण्येवार्थसिद्धये । अनुवाति शुभो वायुस्सेना मृदुहितश्शुभः" इत्यादि वर्णितम् ॥

नायकस्य दक्षिणदेशप्रवेशं वर्णयति —

**अथ लङ्घितकर्णाटः पञ्चषैरेव वासरैः ।**
**प्रापत्कम्पमहीपालः कण्टकाननपट्टनम् ॥ ॥47॥**

**अथेति** ॥ अथ अनन्तरम् स्वविजयसूचकशुभशकुनदर्शनोत्तर काल इत्यर्थः । कम्पमहीपालः कम्पनप्रभुः । पञ्चषैः पञ्च वा षड्वा पञ्चषाः । तैः । 'संख्ययाव्ययासन्ने' त्यादिना समासः । वासरैः दिनैः पञ्चभिर्वा षड्भिर्वा दिनैः अतित्वरितमिति यावत् । 'घस्रो दिना हनी वा तु क्लीबे दिवसवासरौ' इत्यमरः । लङ्घिताः अतिक्रान्ताः कर्णाटाः तदाख्या जनपदाः येन तथोक्तः । कर्णाटदेशमतिक्रान्तस्सन्नि त्यर्थः । कण्टकाननम् तदाख्यम् 'मुल्बादाबाग्' इति देशभाषायां प्रसिद्धमिदमिति वदन्ति । (तादृक्) पट्टनम् पत्तनम् नगरम् । प्राकृते पट्टणम् । संस्कृते पत्तनं च नगराभिधायके वर्तेते । तथापि पट्टनशब्दस्संस्कृतभाषायां न विरुद्धः । यथाह वाचस्पतिः — "पट्टनं पुटभेदनम्' बाहुलकात्पटेरतनन् ।" इति । अत्रत्योऽनुप्रासः विस्पष्टमेवंविध एवायमिति निश्चित्य प्रवक्ति ॥

काञ्चीपुरसमाक्रमणं पुरतो वर्णयितुकामा तदर्थं सन्नाहं वर्णयति—

**स तत्र दिवसान्कांश्चि दतिवाह्य महाबलः ।**
**अभिषेणयितुं चम्प मुपाक्रमत कालवित् ॥ ॥48॥**

**स तत्रेति** ॥ कालं वेत्तीति कालवित् समयज्ञः । चारादिभिः परच्छिद्राणि सुष्ठु विज्ञाय स्वविजयानुकूलं समयम् सम्यक् ज्ञाते

त्यर्थः। महत् बलम् यस्य महाबलः सत्त्वसंपन्नः। युद्धेषु वायुरिव महावेगवान् शात्रवप्रभञ्जनश्चेति गम्यते। सः कम्पराजः। तत्र तस्मिन् नगरे। कांश्चित् दिवसान् कतिचन दिनानि अतिवाह्य अतिक्रमय्य यापयित्वा शत्रुच्छिद्रान्वेषणादिना गतेषु केषुचिद्दिवसेष्वि त्यर्थः। अतिपूर्वाद्वहेर्ण्यन्तात् क्त्वो ल्यप्। चम्पम् तन्नामानम् आटविकं द्रविडराजम्। अभिषेणयितुम् सेनया साकमभियातुम्। 'सेनया त्वभियाने स्यादभिषेणयतीति च' इति भट्टमल्लः। उपाक्रमत प्रारभत। कम्पराजश्चम्पराजमभियोद्धुं कृतसन्नाहः काञ्चीमभिप्रतस्थे इति पिण्डी कृतोऽर्थः॥

सेनायाः काञ्चीपुरसमीपगमनं प्रब्रूते —

**प्रसृतैस्तच्चमूधूलि स्तोमैः क्षीरतरङ्गिणी।**
**कीर्त्या चम्पक्षितीन्द्रस्य साकं कलुषतामगात्॥ ॥49॥**

**प्रसृतैरिति॥** क्षीरतरङ्गिणी क्षीरनदी 'पालेरु' इति भाषायां प्रसिद्धा काञ्चीपुर्याः क्रोशपरिमिते देशे तदुत्तरपार्श्वस्था काचिन्नदी। तथाचोक्तं मार्कण्डीयपुराणे — "तस्मात्क्षीराह्वया श्रेष्ठा नदीनां ज्ञानदायिनी। तन्नद्याश्चोत्तरे पार्श्वे पादयोजनमात्रतः। काञ्चीक्षेत्रं तप स्थानं प्रागुक्तं तत्र वर्तते" इति। (सा कर्त्री) प्रसृतैः नितरां व्याप्तैः। तस्य कम्पराजस्य चमूनाम् सैन्यानाम् धूलिस्तोमैः रजो राशिभिः सेनोत्थितैः रजोऽतिशयैरित्यर्थः। 'चमूस्सेनाविशेषे च सेना मात्रे च योषिति' इति मेदिनी। चम्पक्षितीन्द्रस्य चम्पराजस्य कीर्त्या साकम् यशसा समम्। 'सार्धं तु साकं सत्रा समं सह' इत्यमरः। कलुषताम् पङ्किलताम् कलङ्कवत्तां च अगात् अवाप। यदा कदापि यैः कैश्चिदप्यसंभावितपरकृतदण्डयात्रावतो लोकभीकरस्य महावीरस्य चम्पप्रभोरुपरि दण्डयात्रा नाम नवः परीभावावतार



इति तदीयकीर्तेर्महान् कलङ्कोऽद्य संजात इति भावः। इणो लुङि 'इणो गा लुङी' ति गाङादेशः। अत्र सैन्यरजसा क्षीरनदीव चम्पराजकीर्ति रपीति कम्पराजोत्कर्षकथनात्सहोक्तिरलङ्कारः। तल्लक्षणं तु — "गुण प्रधानतो भाजोरर्थयोरुभयोर्यदा। वर्ण्यस्सहार्थसंबन्धस्सहोक्तिं तां तदा विदुः" इति॥

उचितप्रदेशे सेनानिवेशं कथयति —

**स दुग्धवाहिनीवीचि मारुताधूतशाखिनि।**
**विरिञ्चिनगराभ्यर्णे न्यवेशयदनीकिनीम्॥ ॥50॥**

**स इति।** सः राजा। दुग्धवाहिनी क्षीरनदी। तस्याः वीचयः तरङ्गाः तेभ्यः मारुतः वायुः तदुत्पन्नो वायुरित्यर्थः। तेन आधूताः ईषच्चलिताः शाखिनः तीरस्थाः वृक्षाः यस्मिन् तस्मिन्। अनेन प्रदेशोऽयमत्यन्तसुखावह इति सेनानिवासस्य समुचितत्वं सूच्यते। 'विरिञ्चि' इति नगरम् विरिञ्चिनगरम्। रम्भार्थं ब्रह्मणा विशिष्य निर्मितत्वात्तदाख्यया जगद्विदितं पत्तनम्। तथा चागमः - "विरिञ्चि नाम नगरी रम्भार्थं ब्रह्मणा कृता। पुरा रम्भा हरं पूज्य शक्र स्यातिप्रियाऽभवत्" इति। तस्य अभ्यर्णे समीपे अदूरत इत्यर्थः। 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अभितोऽव्ययम्' इत्यमरः। अनीकि नीम् स्वसेनाम्। 'अनीकिनी सेनामात्रसेनाविशेषयोः' इति मेदिनी। न्यवेशयत् अस्थापयत् कृतशिबिरावासामकरोदित्यर्थः। जलफलतृणादि समृद्धिमतीं तां भूमिं युद्धाय समुचितां निश्चित्य तत्र ससैन्योऽवसदिति तात्पर्यार्थः॥

अभियानं वर्णयति —

**अथ सन्नद्धसैन्यस्तं न्यरुन्ध द्रमिडाधिपम्।**
**घनीकृतहिमानीको हेमन्त इव भास्करम्॥ ॥51॥**

**अथेति ॥** अथ अनन्तरम् तत्र सेनानिवेशनसमनन्तरकाल इत्यर्थः । सेनां समवयन्ति सैन्याः सैनिकाः । 'सेनाया वा' इति ण्यः । सन्नद्धाः वर्मिताः धृतकवचाः सैन्याः यस्य तथोक्तः । तादृक् कम्पराज इत्यर्थः । कृतसेनाव्यूहादिसन्नाह इति भावः । 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इति । संनद्धो वर्मितस्सज्जो दंशितो व्यूढकङ्कटः' इति चामरः । अघनम घनम् कृतम् घनीकृतम् निबिडीकृतम् । अभूततद्भावे च्विः । 'अस्य च्वौ च' इतीत्वम् । तादृशम् हिमानीकम् तुषारसंहतिः हिमानी महद्धिममित्यर्थः । तत् येन तथोक्तः । तादृक् । हिमशिलासंचयसंछादितस्वमूर्तित्वेन दुर्भेदस्सन्निति भावः । सम्यग्विनिहितहिमसैन्य इति गम्यते । हेमन्तः तन्नामा ऋतुः राजेति गम्यते । भास्करम् सूर्यमिव । कस्कादित्वात्सः । प्रतिराजमिति गम्यते । द्रमिडानाम् तदाख्यानां जनपदानाम् अधिपम् राजानम् चम्पराजमित्यर्थः । 'द्रामिडो द्रमिडश्चापि द्रविडो द्राविडस्तथा ।' इति श्रीहर्षः । न्यरुन्ध अरुणत् तमभिययौ ससैन्य इत्यर्थः । रुधिर् आवरणे – लङ् । हेमन्ततौ हिमसमाच्छादितो भास्करस्स्वदीप्तिमाविष्कर्तुं यथा वा न प्रभवति तथायमपि चम्पराजः कम्पराजेन ससैन्येन समावृतो न रराजेत्युपमार्थः ॥

उभयोरपि सेनयोस्संप्रवृत्तं संकुलयुद्धं वर्णयितुं प्रक्रमते —

**संवर्तमारुताक्षिप्त समुद्रद्वयसंनिभौ ।**
**व्यूहौ द्रमिडकर्णाट नाथयोस्संनिपेततुः ॥** ॥52॥

**संवर्तेति ॥** संवर्तः प्रलयः तस्मिन् मारुतः तत्कालप्रवृत्तः प्रचण्डतरो वायुः तेन आक्षिप्तम् तरङ्गघट्टनादिभिस्समधिगतमहाध्वानमित्यर्थः । तादृशम् समुद्रद्वयम् द्वौ समुद्रौ । 'द्वित्रिभ्यां तयस्यायज्वा' इति द्विशब्दात्तयपोऽयच् । तेन तुल्यौ तथोक्तौ । वीरगर्जितकरिबृंहिततुरङ्गहेषादिभिर्घोघुष्यमाणं सैन्यद्वयं लोकभयंकरं सत् प्रलयोत्थवाता



हतिक्षुभितसमुद्रद्वयसाम्यमभजदित्युपमार्थः । द्रमिडाः कर्णाटाश्च द्रमिडकर्णाटाः तदाख्या देशाः तेषाम् नाथौ प्रभू तयोः द्रविडाधिपस्य चम्पस्य कर्णाटाधिपस्य कम्पनस्य चेत्यर्थः । व्यूहौ बलविन्यासौ । 'व्यूहस्स्याद्बलविन्यासे निर्माणे बृन्दतर्कयोः' इति विश्वः । संनिपेततुः समगच्छताम् । संनिपूर्वात् पत्लृ गतौ इत्यस्माल्लिट् । एत्वाभ्यासलोपौ । विरचितव्यूहे ते बले योद्धुकामनया लोकोपद्रवकारिणौ भयंकरौ समुद्राविव सोत्साहमन्योन्यं संगते अभूतामिति तात्पर्यार्थः ॥

सजातीयप्रतिद्वन्द्वि युद्धं वर्ण्यते —

**पादातप्राप्तपादातं हास्तिकाक्रान्तहास्तिकम् ।**
**आश्वीयमिलिताश्वीय मासीदायोधनं तयोः ॥** ॥53॥

**पादातेति ॥** तयोः उभयसेनयोः आयोधनम् युद्धम् । कर्तृ । 'युद्धमायोधनं जन्यम्' इत्यमरः । पादाभ्याम् अतन्ति गच्छन्तीति पदातयः भटाः योद्धारः तेषाम् समूहः पादातम् । 'अज्यतिभ्यां पादे च' इत्यौणादिक इण् । 'पादस्य पदाज्यातिगोपहतेषु' इति पादस्य पत् । तेन प्राप्तम् अभिमुखं यथा तथा युद्धाय समुपस्थितम् पादातम् यस्मिन् तत्तथोक्तम् । 'अथ पादातं पत्तिसंहतिः' इत्यमरः । 'भिक्षादिभ्योऽण्' इति सामूहिकोऽण् । तथाभूतम् । किञ्च । हस्तिनां समूहः हास्तिकम् । 'हास्तिकं गजतावृन्दे' इत्यमरः । 'अचित्तहस्तिधेनो' रिति ठक् । तेन आक्रान्तम् संनिरुद्धम् अभियातम् हास्तिकम् यस्मिन् तथोक्तम् । तथाभूतम् । किञ्च । अश्वानां समूहः अश्वीयम् । तदेव आश्वीयम् । प्रज्ञादित्वादण् । तेन मिलितम् युद्धाय संगतम् अश्वीयम् यस्मिन् तथोक्तम् । 'बृन्दे चाश्वीयमश्ववत्' इत्यमरः । 'केशाश्वाभ्याम् यञ्छावन्यतरस्याम्' इति छः । तथाविधम् । आसीत् अभवत् प्रावर्ततेत्यर्थः । तत्र सजातीयानां

सजातीयैस्साकं तुमुलयुद्धम् महता संरम्भेण संग्रामितमिति भावः । तदानीन्तनचरित्रमर्यादापरिपालने दत्तचित्तया कवयित्र्या बलस्य चातुरङ्गत्वेऽपि रथा अत्र न गृहीता इत्यवगन्तव्यम् ॥

उभयोस्सेनयोस्संहत्य प्रवृत्तं महायुद्धं प्रस्तौत्यष्टभिश्श्लोकैः —

**असह्यैस्तत्र वीराणां सिंहनादविजृम्भितैः ।**
**दिगन्तदन्तिनो मुक्त फीट्कारं मुमुहुर्मुहुः ॥ ॥54॥**

**असह्यैरिति ॥** तत्र तस्मिन् युद्धे । सोढुमर्हैः सह्यैः । 'शकिसहोश्चे' ति यत् । न सह्यैः असह्यैः दुस्सहैः भयंकरैरित्यर्थः । वीराणाम् सुभटानाम् । कर्तरि षष्ठी । तत्कृता इत्यर्थः । 'वीरो रसविशेषे स्यादुत्तरे सुभटे त्रिषु' इत्यमरः । सिंहनादाः क्ष्वेडाः वीरगर्जितानि । सिंहगर्जितानीति च गम्यते । 'क्ष्वेडा तु सिंहनादस्स्यात्' इत्यमरः । तेषाम् विजृम्भणैः विशेषप्रकाशनैः प्रस्फुटैस्सिंहनादैरित्यर्थः । हेतौ तृतीया । तैः कारणभूतैः । दिगन्तदन्तिनः दिग्गजाः अष्टावपीत्यर्थः । मुहुः पुनः पुनः असकृत् नत्वेकवारमिति भयोत्कर्षस्सूच्यते । 'मुहुः पुनः पुनश्शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः । मुक्ताः त्यक्ताः विसृष्टाः पीट्काराः आर्तनादाः यस्मिन् कर्मणि यथा भवति तथेति क्रियाविशेषणम् । दुःखेन कृतफीट्फीडित्येवं ध्वनयस्सन्त इत्यर्थः । गजानां भयजनितो ध्वनिः 'फीट्कार' इत्युच्यते । तथा च चम्पूरामायणम् – "रवः कठिनकर्षणत्रुटितचापजन्मा क्षणात् दिशां द्विरदफीट्कृतैः कृतहरित्पतिस्वागतः" इति । मुमुहुः अमुह्यन् । भयातिशयेन चित्तवैकल्यमापुरित्यर्थः । मुह वैचित्त्ये - लिट् । सिंहनादश्रवणेन दिग्गजमोहनमिदं केवलकविप्रौढोक्तिसिद्धमित्यतिशयोक्तिः । अत्र सिंहनादेषु सिंहगर्जितभ्रान्तिस्तेषामासीदिति सिंहनादशब्दशक्तिमूलो भ्रान्तिमान् व्यज्यते । दिग्गजा अपि मुमुहुरित्यनेन सिंह



नादानामत्यन्तभीतिजनकत्वेन वीराणामुत्साहातिशयश्च ध्वन्यते । युद्धेषु वर्ण्यमानानि निर्दिशन् देवेशः – "युद्धे तु वर्मबलचाररजांसि तूर्यनिस्वाननादशरमण्डपरक्तनद्यः । छिन्नातपत्ररथचामरकेतुकुम्भीमुक्तास्सुरीवृतभटास्सुरपुष्पवृष्टिः" इति व्याचष्ट । एतानि प्रायशस्तत्र तत्र वर्णयामास कवयित्रीयम् ॥

**रजस्तमसि वीरास्त्र सङ्घसङ्घट्टनोत्थितैः ।**
**बभ्रे स्फुलिङ्गसङ्घातैः खद्योतनिवहद्युतिः ॥ ॥55॥**

**रज इति ॥** रजसः तमः रजस्तमः । जन्यजनकभावे षष्ठी । रजस्समुद्भूतं तम इत्यर्थः । तस्मिन् । वीराणाम् शूराणाम् अस्त्राणि आयुधानि तत्प्रयुक्तशस्त्राणीत्यर्थः । तेषाम् संघः समूहः परम्परा । तैः संघट्टनम् संमर्दनम् अन्योन्यसंघर्षणम् तस्मात् उत्थितैः उत्पन्नैः बहिरुद्गतैः तथोक्तैः । स्फुलिङ्गाः अग्निकणः तेषाम् संघाताः समूहाः । तैः कर्तृभिः । खं द्योतयन्ति खद्योताः । ज्योतिरिङ्गणाः । कर्मण्यण् । 'खद्योतो ज्योतिरिङ्गणः' इत्यमरः । तेषाम् निवहः सङ्घः तस्य द्युतिः कान्तिः तत्सदृशी कान्तिरित्यर्थः । बभ्रे दध्रे । भृञ् भरणे कर्मणि लिट् । सेनासमुत्थितेन रजसा गाढान्धकारे दृष्टिपथं निरुन्धति, योधप्रयुक्तपरस्परास्त्रसङ्घर्षणवशादुत्पन्नास्ततस्फुलिङ्गाः युद्धभूमौ तत्र तत्र खद्योतप्रभापूरा इव तदानीं विराजमानाः वीराणां परस्परदर्शने समुपाकुर्वन्निति तात्पर्यार्थः । अत्र खद्योतद्युतिनिवहस्य स्फुलिङ्गेष्वसंभवेन तत्सदृशद्युतेराक्षेप इति पदार्थनिदर्शना । तल्लक्षणं तु "असंभवद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना" इति ॥

**संग्रामदेवतापाङ्ग विभ्रमभ्रान्तिदायिनः ।**
**मिथो धनुर्धरैर्मुक्ताः पेतुश्शातमुखाश्शराः ॥ ॥56॥**

**संग्रामेति ॥** धरन्तीति धराः । पचाद्यच् । धनुषाम् धराः धनुर्धराः धानुष्काः तैः । मिथः अन्योन्यम् परस्परं लक्ष्यीकृत्ये त्यर्थः । मुक्ताः विसृष्टाः प्रयुक्ताः । शातम् तीक्ष्णम् मुखम् अग्र भागः येषां ते तथोक्ताः निशिताग्राः इत्यर्थः । अनेन कटाक्षाणा मुपमेयभूतानां कान्तिमत्त्वं द्योत्यते । शो तनूकरणे क्तः । शराः बाणाः । कर्तारः । संग्राम एव देवता युद्धाधिदेवता तस्याः अपाङ्ग विभ्रमाः कटाक्षविलासाः सविलासकटाक्षा इत्यर्थः । तेषाम् भ्रान्तिः भ्रमः शराणां कटाक्षाणां च साम्यस्य कविसमयसिद्धत्वात्त एवैत इति मिथ्यामतिरित्यर्थः । 'भ्रान्तिर्मिथ्यामतिर्भ्रमः' इत्यमरः । ताम् दातुं शीलमेषामिति ताच्छील्ये णिनिः । युगागमः । तादृशास्सन्तः । पेतुः तेषु न्यपतन् प्रासरन्निति च । पत्लृ गतौ लिट् । एत्वाभ्यास लोपौ । सोत्साहं युध्यमानानां शूराणां विजयलक्ष्मीं प्रदातुं साव मर्शं विलोकयन्त्यास्संग्रामदेवतायाः कन्तिमन्तः कटाक्षाः किमेत इति धीस्तत्र पश्यतां जनानां समुत्पन्नेति भावः । शराणां शातमुखा इति विशेषणं संग्रामदेवतायाः दीर्घालोचनापरत्वेन तदीयकटाक्षाणां साव धानप्रसरत्वमवगमयति । तेन वीराणां तारतम्यपरीक्षायां न्यूनताधिक्य निर्णयोऽतीव दुर्ग्रहो वर्तत इति द्योत्यते । तेन च योधानां तृणाय मत्वा प्रणान् युध्यमानानां पराक्रमपौरुषसाहसादयो गुणा निस्तुला इति व्यज्यते । विजयलालसेसु शूरवतंसेषु तेषु शातमुखा अपि शरा नैव व्यथां जनयामासुरिति तात्पर्यर्थः । अत्र शातमुखेषु शरेषु संग्रामदेवतापाङ्गविलासभ्रान्तिरियं सादृश्यहेतुका चमत्कारजनकतयानू दितेति भ्रान्तिमानलङ्कारः । वस्तुतो भ्रान्तिमात्रस्यैवालङ्कारत्वम् । भ्रान्तिमानिति व्यवहारस्त्वस्मिन्नौपचारिकः । यदाहुः प्रामाणिकाः – "प्रमात्रन्तरधीर्भ्रान्तिरूपा यस्मिन्ननूद्यते । स भ्रान्तिमानिति ख्यातो ऽलङ्कारेत्वौपचारिकः" इति । लक्षणं त्वस्याः – "चमत्कृतिमती भ्रान्तिर्यस्मिन् सादृश्यहेतुका । अनूदिता स्यात्सन्दर्भे तमाहुर्भ्रान्ति



मानिति" इति ॥

**क्षतजार्द्राः प्रवीराणां प्रेङ्खन्त्यः खड्गलेखिकाः ।**
**जिघत्सतः कृतान्तस्य जिह्वा इव विरेजिरे॥ ॥57॥**

**क्षतजेति ॥** प्रकृष्टाः वीराः प्रवीराः वीरवराः । प्रादिसमासः । तेषाम् । क्षतात् व्रणात् जायत इति क्षतजम् रुधिरम् । 'रुधिरे ऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इत्यमरः । पञ्चम्यामजातौ' इति जनेर्डः । तेन आर्द्राः सिक्ताः शात्रवकण्ठच्छेदादिना तद्रुधिरनिमग्ना इत्यर्थः । एतेन लौहित्यं भयंकरत्वं च खड्गेषु बोध्यते । प्रेङ्खन्त्यः चल न्त्यः । "चलने चलति प्रेङ्खत्येवं ह्मलति घट्टति" इति भट्टमल्लः । लेखा एव लेखिकाः पङ्क्तयः । स्वर्थे कः । 'प्रत्ययस्था' दितीत्त्वम् । खड्गानाम् लेखिकाः खड्गलेखिकाः खड्गपरम्पराः युद्धेषु शात्रववधाय समुत्सहतां योधानां हस्तेषु खेलन्त्य इत्यर्थः । ताः । अत्तुमिच्छन् जिघत्सन् बुभुक्षावान् । तस्य । अदेस्सन्नन्ताल्लटश्शता । 'लुङ्सनो' रिति घस्लृ । कृतान्तस्य यमस्य मृत्युदेवताया इत्यर्थः । 'कृतान्तो यमुनाभ्राता शमनो यमराडचमः' इत्यमरः । जिह्वाः दीर्घा लोहिता भयंकराश्चञ्चला इति गम्यते । ता इव । विरेजिरे प्रचकाशिरे । राजृ दीप्तौ लिट् । एत्वाभ्यास लोपौ । शात्रववधाय हस्ततलेषु वीरैः परिगृहीतास्सोत्साहं संचाल्यमाना दीर्घतमा भयंकराकाराः खड्ग श्रेणयः क्षुधापीडितायाः मृत्युदेवतायास्सोत्कण्ठं भक्षितुं प्रवृत्तायाः लोहितवर्णा भयंकराकारा दीर्घतमाश्चलन्त्यो जिह्वा इति संभाव्यन्ते । अतस्स्वरूपोत्प्रेक्षेयम् ॥

**आस्रापगासु परितो निरस्[illegible]सु सहस्रशः ।**
**भटानां भल्लनिर्लूनै रम्भोजायितमाननैः ॥ ॥58॥**

**आस्रेति ॥** परितः समन्ततः युद्धभूमौ सर्वत्रेत्यर्थः । 'समन्त

तस्तु परितस्सर्वतो विष्वगित्यपि' इत्यमरः। सहस्रशः सहस्रम् सहस्रम् असंख्याकतयेत्यर्थः। संख्यैकवचनाच्च वीप्सायाम्' इति द्विर्वचनम्। अस्रम् रक्तम् 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' इत्यमरः। तस्य इमे आस्राः रक्तपूराः। 'तस्येद' मित्यण्। ताः आपगाः नद्य इवेत्युपमितसमासः। नात्र रूपकम् अम्भोजायित मित्यस्य बाधकस्य सत्त्वात्। तासु। 'यस्य च भावे' नेति भाव लक्षणसप्तमीयम्। निस्सृतासु भृशं गच्छत्सु प्रवहत्सु सत्स्वित्यर्थः। शस्त्रैस्सव्रणेष्वपि गात्रेषु सैन्यानामपरावृत्तत्वादिति भावः। भटानाम् वीराणाम्। 'भटस्स्यात्पुंसि वीरे च विशेषे पामरस्य च' इति मेदिनी। (तेषाम्) भल्लाः शस्त्रभेदाः तैः लूनैः छिन्नैः। लूञ् छेदने क्तः। 'ल्वादिभ्य' इति निष्ठातो नः। तादृशैः आननैः मुखैः। कर्तृभिः। तत्र दृश्यमानैरिति भावः। अम्भोजायितम् - अम्भोजैः पद्मैरिवाचरितम्। पद्माकरत्वान्नदीनामेवमुक्तिः। 'कर्तुः क्यङ् सलोप' श्चेति क्यङ्। तदन्ताद्भावे क्तः। 'अकृत्सार्वधातुकयो' रिति दीर्घः। परस्परमाक्रम्य जिगीषया युध्यमानानि बलानि युद्धधर्मादणुमात्रमपि न च्यवन्ति। प्राणांस्तृणीकृत्य वीरस्वर्गमलङ्कुर्वन्तीति सेनयोरुभयोश्शौर्यातिशयः प्रस्तूयते। अम्भोजसाम्यं चाननस्य कान्तिमत्त्वं द्योतयदुक्तार्थे प्रमाणपदमधितिष्ठति। लुप्तोपमालङ्कारः॥

**कृपाणकृत्तान् वेदण्ड शुण्डादण्डानिवाभितः।**
**भुजङ्गशङ्किनो गृध्रा जगृहुर्भूभुजां भुजान्॥ ॥59॥**

**कृपाणेति**॥ अभितः समन्तात् युद्धभूमौ सर्वत्रेत्यर्थः। गृध्राः दाक्षाय्याः गरुडजातीयाः पक्षिविशेषाः। 'दाक्षाय्यगृध्रौ' इत्यमरः। वेदः सामवेदः अण्डः उत्पादकः येषां ते वेदण्डाः सामजाः गजाः। सामवेदाद् गजानामुत्पत्तिश्च गदितमेवं गजशास्त्रे – "सूर्यस्याण्डकपाले द्वे समानीय प्रजापतिः। परिगृह्य स्वहस्ताभ्यां सप्त सामान्यगायत॥ गायतो



ब्रह्मणस्तस्मात् समं पेतुर्मतङ्गजाः" इति। 'वेतण्ड' इति पाठस्तु न प्रामाणिकः। तेषाम् दण्डा इव शुण्डाः दीर्घाः करिकराः। तानिव तत्सदृशान्। इवशब्दस्य सादृश्ये यद्यपि वृत्तिः तथापि शब्दशक्तिस्वाभाव्यात्सदृशबोधकता न विरुद्धा। कृपाणैः असिभिः कृत्तान् छिन्नान् तथोक्तान्। कृती छेदने क्तः। भुवं भुञ्जन्ति पालयन्तीति भूभुजः भूमिपालाः राजानः। तेषाम्। भुजान् बाहून्। कर्म। भुजङ्गान् सर्पान् शङ्कन्त इति णिनिः। दैर्घ्यादिना भूयस्सादृश्यात्सर्पा एवैत इति तेषु भ्रान्तास्सन्त इत्यर्थः। जगृहुः अगृह्णन् आददिरे भक्षितुमिति शेषः। गृध्राणां वैनतेयजातीयत्वेन प्रियसर्पाहारत्वादायुध ग्रहणादिना नताङ्गुलीयुतप्रकोष्ठान् शुण्डादण्डवत् स्थूलदीर्घान् तद्बाहून् दृष्ट्वा सर्पा इति धिया सत्वरं भक्षणे प्रवृत्ता इति परमार्थः। गृध्राणां वैनतेयत्वं च रामायणादिषु वर्णितम्। अतएव सम्पातिं प्रति – "ततः कृतोदकं स्नातं तं गृध्रं हरियूथपाः" इन्युक्तम्॥ संपातिरपि – "वैनतेयाच्च नो जन्म सर्वेषां वानरर्षभाः" इत्याह। अत्र बाहुषु सादृश्यहेतुका सर्पभ्रान्तिरिति भ्रान्तिमानलङ्कारः। 'शुण्डादण्डानिवे' त्युपमा च तत्सादृश्यसंपादकतया चरितार्था। अत एतयोस्सङ्करः॥

**वेदण्डशुण्डाहर्म्याग्र मास्थितास्सचमत्क्रियम्।**
**आद्रियन्त कबन्धानां रक्तं नक्तंचरस्त्रियः॥ ॥60॥**

**वेदण्डेति**॥ नक्तं चरन्तीति नक्तंचराः रात्रिचराः राक्षसाः। 'चरेष्ट' इति टः। तेषाम् स्त्रियः राक्षस्य इत्यर्थः। ताः कर्त्र्यः। वेदण्ड शुण्डाः गजहस्ताः ता एव हर्म्याणि धनिनां वासाः उन्नतगृहाः। तेषाम् अग्रम् उपरिभागम्। 'अग्रं पुरस्तादुपरि परिमाणे पलस्यच। आलम्भने समूहे प्रान्ते च स्यान्नपुंसकम्। अधिके च प्रधाने च प्रथमे चाभिधेयवत्' इति मेदिनी। तत् कर्म। आस्थिताः आरूढाः 'अधिशीङ्

स्थासा ’ मित्याधारस्य कर्मत्वम् । तस्मिन् अधिरुह्येत्यर्थः । वीरै
श्छिन्नाः राशीभूतास्तत्रत्याः करिकराः पर्वता इवात्यन्तं समुन्नतास्तत्र
वर्तन्त इति तेषां प्रासादाग्रत्वरूपणं युज्यत इत्यवगन्तव्यम् । तादृशा
स्सन्तः । कबन्धानाम् कृत्तशिरस्कदेहानाम् स्वसमीपं प्राप्तानामित्यर्थः ।
हठाच्छिरस्त्रोटनेन समुत्पत्य समुत्पत्य तदुपर्यधःपतनं कबन्धानां स्वभाव
इत्येवमुच्यते । तेषाम् । रक्तम् असृक् लोहितम् । मद्यमिवेत्यर्थः ।
तत् कर्म । अत्र ‘ नक्तम् ’ इति त्वपपाठः । चमत्क्रियया सह सच
मत्क्रियम् सविस्मयम् । तादृशपानीयस्य कदाप्यनास्वादितपूर्वत्वदिति
भावः । सकौशलमिति वा । वीराणां हस्तलाघवातिशयेन छिन्नाः
कबन्धास्त्वरिततरमुपर्युपरि स्वसमीपमुपयान्तीति तद्रक्तपानस्यातीव दुष्कर
त्वेऽपि तास्तत्र भृशं निपुणा भूत्वा पिबन्त्यतित्वरितं तन्निरवशेषेण
श्रममन्तरैवेत्येवमुच्यते । आद्रियन्त सबहुमानमासेवन्त सादरमपिबन्नि
त्यर्थः । अनेन मद्यपानस्थानीयतास्य गम्यते । अतएव ‘ नक्तंचरस्त्रिय ’
इत्युक्तम् । लज्जावतीनां स्त्रीणामेव प्रियरञ्जनाय मद्यपानस्यात्यन्त
मावश्यकतेति यथादरस्तासां तस्मिन्, रक्तपानेऽस्मिन्नपि तथैव महा
नादर इति वेदितव्यम् । आङ्पूर्वात् दृङ् आदरे – लङ् । रूपक
मलङ्कारः ॥

**वीराः कुञ्जरकुम्भेषु शायिनश्शत्रुसायकैः ।**
**प्राबुध्यन्त सुरस्त्रीणां कुचकुम्भेषु तत्क्षणात् ॥ ॥61॥**

**वीरा इति** ॥ वीराः शूराः । शत्रुसायकैः वैरिप्रयुक्तैः बाणैः
करणभूतैः । कुञ्जरकुम्भेषु गजशिरस्तलेषु । अवश्यं शेरत इत्या
वश्यके णिनिः । तत्र गाढ़ं प्रसुप्ताः मृता इति यावत् । तादृशस्सन्तः ।
सुरस्त्रीणाम् देवकन्यानाम् अप्सरस्त्रियामिति यावत् । प्राबुध्यन्त
अजागरन् प्रबुद्धा अभवन् तत्र संक्रीडन्त इत्यर्थः । यत्र निद्रान्ति
तत्रैव जागरणस्य समुचितत्वादुभयत्र कुम्भग्रहणम् । गजारोहका



योद्धारश्शत्रुभिरपराङ्मुखा युध्यमानाः प्राणान् परित्यज्य स्वर्गं प्राप्य
रम्भादिभिस्सह रममाणा मोदन्त इति तात्पर्यार्थः । अत्र मनुः –
“ आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः । युध्यमानाः परं
शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ” इति । अत्र वीराणामेकत्र शयन
मपरत्र प्रबोध इति कार्यकारणयोर्भिन्नदेशत्ववर्णनादसंगतिरलङ्कारः ।
“ विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः ” इति तल्लक्षणात् ॥

अथ कम्पराजविजयो वर्ण्यते —

**ततः कम्पनरेन्द्रस्य भटैर्भुजबलोत्कटैः ।**
**पलायत पराभूता द्रमिड़ेन्द्रवरूथिनी ॥ ॥ 62 ॥**

**तत इति** ॥ ततः अनन्तरम् कंचित्कालमेवं तौल्येन युद्धे
प्रवृत्ते तदुत्तरकाल इत्यर्थः । द्रमिडेन्द्रः द्रविडराजः चम्पराज इत्यर्थः ।
तस्य वरूथिनी सेना । कर्म । भुजबलम् बाहुसत्त्वम् बाहुपराक्रम
इत्यर्थः । तेन उत्कटैः मत्तैः दुष्प्रधर्षैः । युद्धे प्रतिक्षणं वर्धमानबलै
रिति भावः । ‘मत्ते शौण्डोत्कटक्षीबाः’ इत्यमरः । (तथाविधैः)
कम्पनरेन्द्रस्य कम्पनप्रभोः भटैः योधैः । कर्तृभिः । पराभूता परा
जिता निर्जिता । ‘रणे भङ्गः पराजयः । पराजितपराभूतौ’ इत्य
मरः । तथाविधा सती । पलायत परायत अन्तरधात् युद्धभूमिं
परित्यज्यान्यत्र गतेत्यर्थः । आपत्काले नास्ति मर्यादेति न्यायादिति
भावः । “इष्यति नश्यति पलायतेऽन्तर्धत्त इत्यपि” इति भट्टमल्लः ।
परेत्युपसर्गपूर्वादयतेर्लङ् । ‘उपसर्गस्यायता’ विति रो लः । तृणी
कृतप्राणेभ्यस्सोत्साहं युध्यमानेभ्यः कम्पनसैन्येभ्योऽतीव भीताः पर
सेनाः पराङ्मुखास्स्वप्राणरक्षणैकपरायणा आसन्निति सारांशः । अत्र
भुजबलोत्कटैरित्येतद्विशेषणगत्या शात्रवपराजये हेतुरिति काव्यलिङ्ग
मलङ्कारः ॥

पलायनप्रकारं तावदाचष्टे —

**उल्लङ्घ्योल्लङ्घ्य धावद्भिर्भीत्या भ्रंशितमायुधम् ।**
**प्रायः प्रधनसंन्यासे शपथः कैश्चिदादधे ॥ ॥ 63 ॥**

**उल्लङ्घ्येति ॥** उल्लङ्घ्य उल्लङ्घ्य मण्डूका इव उत्प्लुत्य उत्प्लुत्य । धावद्भिः शीघ्रं गच्छद्भिः । शत्रुभ्यः प्राणान् रक्षितुमिति भावः । कैश्चित् कतिपयैस्सैनिकैः । प्रयोज्यकर्तृभिः । भीत्या भिया प्राणा अवश्यमस्मान् त्यक्ष्यन्तीति बुद्ध्युत्पन्नेन भयेन । प्रयोजककर्त्र्या । नायिकयेति गम्यते । तदाश्लेषजनितवेपथुना सात्त्विकभावेनेति च । आयुधम् स्वपरिगृहीतानि शस्त्राणीत्यर्थः । जातावेकवचनम् । भ्रंशितम् भ्रंशितानि अधःपातितानीत्यर्थः । भ्रशु भ्रंशु अधःपतने ण्यन्तात्कर्मणि क्तः । तत्रोत्प्रेक्षते – प्रधनम् युद्धम् । युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्' इत्यमरः । तस्य संन्यासः सर्वथा सर्वदा परित्यागः । तस्मिन् । शपथः सुतादिभिश्शपनम् । 'शपनं शपथः पुमान्' इत्यमरः । आदधे जगृहे अग्राहि । आङ्पूर्वात् डुधाञः कर्मणि लिट् । प्राय इति संभावनायाम् । नूनमित्यर्थः । अत्र प्रतिवीरेभ्यो भीतभीता एते प्रियतमं युद्धोपयोगिस्वशस्त्रजातं तृणवद्विसृज्य धावन्तो युद्धे जुगुप्सावन्तः प्राणरक्षणधिया यावज्जीवं रणरङ्गे नैव प्रवेक्ष्याम इति सशपथा आसन् क्रिमिति संभाव्यते । अतः क्रियोत्प्रेक्षेयम् । अनया परराजसेनाभीत्यतिशयसंभावनया प्रकृतवीराणां पराक्रमातिशयो निरुपम इति व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥

**हतानुकारिणः केचित् क्षितौ निपतितास्ततः ।**
**क्रोष्टुर्भयेन धावन्तः कर्णाटान् पर्यहासयन् । ॥ 64 ॥**

**हतेति ॥** ततः तत्र तस्यां सेनायामित्यर्थः । आद्यादित्वात्तसिः



केचित् कतिचन भटाः । कर्तारः । क्षितौ भूमौ युद्धभूमावित्यर्थः । निपतिताः अधो गताः तत्रत्यमृतशरीरैस्साकमधश्शयिता इत्यर्थः । तादृशाः । हतान् शत्रुभिर्निहतान् अनुकर्तुम् विडम्बयितुम् त इव स्थातुम् शीलमेषामिति ताच्छील्ये णिनिः । स्वप्राणरक्षणाय शत्रुभिर्यथा न प्रत्यभिज्ञायन्ते तथा शवा इव चेष्टादिराहित्येन स्थिता स्सन्त इत्यर्थः । क्रोष्टुः जम्बुकात् । 'सृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः' इत्यमरः । 'विभाषा तृतीयादिष्वचि' इति क्रोष्टुशब्दस्य पक्षे तृज्वद्भावः । भयेन भीत्या तदुत्पन्नेन भयेनेत्यर्थः । शववत् स्थितानिमान् दृष्ट्वा कुणपा एवेति बुद्ध्या भक्षितुं प्रवृत्तेभ्यः फेरवेभ्यः प्राणभयमापन्ना इति भावः । 'भीत्रार्थानां भयहेतु' रिति पञ्चमी । (तेन) धावन्तः शीघ्रं गच्छन्तः । कर्णाटान् कर्णाटदेश्यान् कम्पराजबलानीत्यर्थः । ( तान् ) पर्यहासयन् स्वकृतचेष्टादिभिस्तेषु हासं जनयामासुः हास्यालम्बनभूतांस्तान् चक्रुरित्यर्थः । 'गत्यर्थे' त्यणौ कर्तुः णौ कर्मत्वम् । अत्र वीररसाङ्गतया हास्यो निबध्यते । हास्यस्य च हासः स्थयी । तदालम्बनतया कर्णाटका अत्र निर्दिष्टाः । शत्रुभटेषु वर्णिता हतानुकारित्वादयो विकृतचेष्टाः एतद्रसोद्दीपका विभावाः । अनुभावा हर्षबाष्पादयः तत्सहकारिणोऽलसतादयश्च 'पर्यहासय' न्नित्यनेन कर्णाटेषु व्यज्यन्ते । तैश्चर्व्यमाणो हासो हास्यतामयासीदिति संक्षेपः । अत्र प्राणरक्षणार्थे प्रयतमानानां भटानां क्रोष्टृभ्यः प्राणभीतिस्तद्विरुद्धतया समुत्पन्नेत्यसंगतिरलङ्कारः । "अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा" इति तल्लक्षणात् ॥

तेषां भयातिरेकमेव वर्णयति —

**विक्षेप्तुं विस्मृतैश्चर्म फलकैर्निर्मितप्लवाः ।**
**मृषैव केचिदतरन् मृगतृष्णातरङ्गिणीः ॥ ॥ 65 ॥**

**विक्षेप्तुमिति ॥** केचित् अपरे कतिचन भटाः । कर्तारः

विक्षेप्तुम् विकरितुम् स्वशीघ्रगमनस्य प्रतिबन्धकत्वात्परित्यक्तुम् । विस्मृतैः अचिन्तितैः भयपारवश्यात्स्वहस्तेषु धृत्वापीत्यर्थः । चर्मफलकैः चर्ममयखेटकैः । 'फलकोऽस्त्री फलं चर्म' इत्यमरः । तैः निर्मिताः विरचिताः प्लवाः उडुपानि (नद्यादि) तरणसाधनानि यैः तथाभूतास्सन्तः । मृगाणां तृष्णा अस्त्यस्यामिति मृगतृष्णा मरीचिका आकाशे जलवद् दृश्यमानो रश्मिसमूहः । 'मृगतृष्णा मरीचिका' इत्यमरः । ता एव तरङ्गिणीः नदीः मिथ्याभूतान् प्रवाहान् स्वभावना बलेन संसृष्टानित्यर्थः । ताः कर्म । मृषा वितथमेव । अतरन् अत्यक्रामन् अलङ्घयन् । चर्मफलकानुडुपान् कृत्वा तरणक्रियामाचरन्तोऽपि तत्र कर्मभूतानाम् नदीनां स्वभावनापरिकल्पितत्वेन वस्तुतोऽसत्त्वात्तत्तरणमपि मिथ्यैव समभवदिति भावः । शात्रवभयाक्रान्त चित्तवृत्तयस्ते गन्तव्येऽध्वनि स्वमार्गप्रतिरोधान् तदधिगमोपायांश्च निरन्तरं भावयन्तस्तद्भावना बलेन स्वनिर्मितप्लवैस्ता नदीर्वा तदीयतरणानुभूतिं वा मिथ्यैवापुः, भावनया किं वा न संभाव्यत इति तात्पर्यार्थः । अत्र नदीभ्रान्त्या मृगतृष्णा समुत्तरणं, सन्निहितेष्वपि चर्मफलकेषु स्वोह्यमानेषु विस्मरणमित्यादि तेषां केवल भयपराधीनमनस्कतामवगमय्य भयानकस्थायिनो भयस्य परिपोष(ण)पराकाष्ठां नयत् कम्पराजभटालम्बिवीरं तदुत्साहपरिपुष्टिकरणेन सामाजिकास्वाद्यतां प्रापय्य रसतां प्रापयदिति वेदितव्यम् । अत्र चर्मफलकादिषु प्लवत्वादिरूपणाद्रूपकमलङ्कारः । तेन च भ्रान्तिमान् व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥

**छायामेवात्मनः केचि द्धावन्तो भीतिभाविताः ।**
**अरातिशङ्कया कष्टं दष्टाङ्गुलि ववन्दिरे ॥ 66 ॥**

**छायामिति** ॥ केचित् इतरे कतिचन भटाः । भीतिभाविताः भाविता प्राप्ता भीतिः भयम् यैरिति विग्रहः । शत्रुभ्यः प्राप्त प्राणभया इत्यर्थः । आहिताग्न्यादित्वात्क्तान्तस्य परनिपातः । तादृशाः ।



अतएव धावन्तः शीघ्रं गच्छन्तः । शात्रवानुगमनभयेनेति भावः । आत्मनः स्वस्य । छायाम् अनातपमेव । 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः' इति मेदिनी । ताम् कर्मभूताम् । अराति शङ्कया शत्रुभ्रान्त्या स्वहननाय शत्रवस्संप्राप्ता इति भ्रमेणेत्यर्थः । धावद्भिस्तैस्साकं तच्छायाया अपि धावनादेवं भ्रमस्तेषामासीदित्यव गन्तव्यम् । स्वच्छायायामपि शत्रुभ्रान्तिरिति तेषां भयव्यग्रता व्यज्यते । (तादृश्या भ्रान्त्या) दष्टाङ्गुलि – दष्टा व्यापृतदन्तव्यापारा अङ्गुलिः करशाखा यस्मिन् कर्मणि यथा भवति तथा । अङ्गुलि मुखे निक्षिप्य दष्ट्वेत्यर्थः । अङ्गुलिदंशनतृणभक्षणादयश्शरणागतिसंसूचका इति तद्वधे प्रत्यवायस्मरणात् स्वप्राणरक्षणाय तैस्तदाश्रयणमिति भावः । ( तथा कृत्वा ) ववन्दिरे अभ्यवादयन् नमश्चक्रुः । शत्रुभ्यः कृताञ्जलयोऽभवन्निति यावत् । कृताञ्जलीनां वधे च प्रत्यवायस्स्मर्यते यथाह मनुः – " न च हन्यात्स्थलारूढं न क्लीबं न कृताञ्जलिम् । न मुक्तकेशं नासीनं तवास्मीति च वादिनम् " इति । अङ्गुलिदंशनं चात्र दासतामभिदधत् तवास्मीतिवादिन एतान् करोति । दास्यलक्षणान्येवमुदाहृतान्यागमे – 'पद्यमङ्गुलिविच्छेदः उरोविन्यस्तमक्षरम् । तन्नामकरणं चेति दास्यमेतच्चतुष्टयम्' इति । तथाचाङ्गुलिदंशनमेव प्राणत्राणायालम् । कृताञ्जलितात्वेषामधिकस्याधिकं फलमिति न्यायेनेति भावः । यद्वा – दीर्घमालोचयतामङ्गुलिदंशनं लोकदृष्टमिति शत्रूणां हठादागमनेन तदपायप्रतीकारसंचिन्तनाय प्रवृत्तानां तेषामपि (लोक) स्वाभाव्यादेवं जातमिति मन्तव्यम् । कष्टमिति खेदे । एतादृशी स्थितिस्तेषां शोच्येत्यर्थः । स्वच्छायायां शत्रुभ्रान्तिरासीदिति भ्रान्तिमानलङ्कारः । तेन च नित्यानपायिनीषु स्वच्छायास्वपि शत्रुभ्रान्तिं जनयतां कम्पराजभटानां वीर्यातिशयोऽनितरसाधारण इति ध्वन्यते ॥

राजगम्भीरं नाम शत्रुदुर्गम् । तदाक्रमणमथ प्रब्रूते –

**अथ तस्य पुरीमेव नीत्वा शिबिरतां नृपः ।**
**अचलं राजगम्भीर मरुन्ध द्विषदाश्रितम् ॥ ॥ 67 ॥**

**अथेति** ॥ अथ अनन्तरम् शत्रुसैन्येष्वेवं पलायितेषु तदुत्तरकाल इत्यर्थः । नृपः राजा कम्पनः । तस्य चम्पप्रभोः । पुरीम् पत्तनमेव । शिबिरताम् स्वसेनानिवेशताम् । नीत्वा प्रापय्य सेनया सह काञ्चीनगर्यां प्रविश्येत्यर्थः । द्विषद्भिः आश्रितम् संश्रितम् स्वनिवासत्वेन स्वीकृतमिति यावत् । तथोक्तम् । राजगम्भीरम् तदाख्यम् । अचलम् पर्वतम् पर्वतदुर्गमित्यर्थः । ( तम् ) अरुन्ध अरुगत् सेनया सह तन्निर्गमनमार्गानावृत्य तस्थावित्यर्थः । रुधिर् आवरणे – लङ् ॥

आक्रमणप्रकारो वर्ण्यते –

**तद्दुन्दुभिप्रतिध्वान मुखरैः कन्दरामुखैः ।**
**भयादमन्दमाक्रन्द मकार्षीदिव पर्वतः ॥ ॥ 68 ॥**

**तद्दुन्दुभीति** ॥ पर्वतः अचलः शत्रूणामिदानीमाश्रयभूतः पर्वतदुर्ग इत्यर्थः । सः कर्ता । तेषाम् कम्पराजसैन्यानाम् दुन्दुभयः रणभेर्यः तेषाम् प्रतिध्वानाः प्रतिध्वनयः तैः मुखरैः वाचालैः अत्यन्तमविरतं च शब्दं कुर्वद्भिः । कन्दरामुखानि गुहाग्रभागाः तान्येव मुखानि वक्त्राणीति गम्यते । तैः करणभूतैः । भयात् भीत्येव भीतिं प्राप्येवेति संभावना । आसन्नं भयमाशङ्क्येवेति भावः । अनल्पम् महान्तम् आक्रन्दम् रोदनम् दैन्ययुतं ध्वानम् । अकार्षीत् अकरोत् भृशमाचक्रन्देत्यर्थः । तद्रणभेरीभयंकरमहाध्वानैः पर्वतदुर्गगुहामुखानि समापूर्यन्तेति परमार्थः । हेतूत्प्रेक्षेयम् । यथा भयमापन्नः कश्चिन्मुखं व्यादाय त्रायध्वं मामिति भृशं रोदिति तद्वदिति मुखाक्रन्दादिशब्दैरुपमाध्वनिः ॥

**प्रवाताभिमुखाधूतैः पताकापाणिपल्लवैः ।**
**आरोहणाय राजेन्द्र माजुहावेव पर्वतः ॥ ॥ 69 ॥**



**प्रवातेति** ॥ भूधरः पर्वतः (प्रकृतः पर्वतदुर्गः) कर्ता । राजेति च गम्यते । प्रकृष्टो वातः प्रवातः महावायुः तेन अभिमुखम् ( कम्पराजस्य ) सम्मुखम् यथा तथा आधूतैः भृशं कम्पितैः । पताकाः ध्वजाः । 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इत्यमरः । ता एव पाणिपल्लवाः करशाखाः अङ्गुल्यः । 'पल्लवः किसले बले विटपे विस्तरेऽलक्तरागे शृङ्गारषिद्गयोः' इति सुधा । तैः करणभूतैः । आरोहणाय आरोहणं कर्तुम् । स्वनिवासं प्राप्तुमिति गम्यते । 'क्रियार्थोपपदस्ये' ति चतुर्थी । राजेन्द्रम् राजश्रेष्ठम् कम्पराजम् । अभ्यागतमिति गम्यते । आजुहाव आकारयामासेव स्थित इत्युत्प्रेक्षा । आङ्पूर्वात् ह्वेञः लिट् । संप्रसारणादि । राजानं राजा समीपागतं यथा वा तदभिमुखं हस्तं प्रसार्य अङ्गुलिचालनैस्समाह्वयति स्वगृहमलंकर्तुं तद्वदिति भावः । अत्र पताकापाणिपल्लवेति रूपकं प्रवाताभिमुखाधूतेति विशेषणपरिपुष्टं सत् राजपर्वतारोहणसंभावनायां समुज्जीवकमभूदित्युत्प्रेक्षेयं रूपककाव्यलिङ्गाभ्यां संकीर्यते ॥

पर्वतदुर्गे प्रवृत्तमुभयसेनयोर्युद्धं सप्तभिश्श्लोकैः प्रकथयति –

**अथ प्रववृते युद्धं सेनयोरुभयोरपि ।**
**पतदुत्पतदस्त्रांशु ज्वलितोर्वीनभस्थलम् ॥ ॥ 70 ॥**

**अथेति** ॥ अथ अनन्तरम् कम्पराजसेनाकृतदुर्गावरोधनोत्तरकाल इत्यर्थः । उभयोः सेनयोः सेनाद्वयस्यापि । युद्धम् संग्रामः । प्रववृते प्रावर्तत अघटत अभवदित्यर्थः । प्रपूर्वात् वृतु वर्तने – इत्यस्माल्लिट् । कथमित्यत आह – पतन्ति सैन्यानामधस्थितत्वादधो गच्छन्ति । उत्पतन्ति द्रविडराजसैन्यानामुपरिस्थितत्वादूर्ध्वं व्रजन्ति इति पतदुत्पतन्ति । तानि च अस्त्राणि आयुधानि तथोक्तानि । तेषाम् अंशवः

कान्तयः तैः ज्वलितम् प्रकाशितम् । उर्वी च नभश्च उर्वीनभसी । तयोः स्थलम् प्रदेशः भूस्थलम् नभस्थलं च । तत् यस्मिन् तथोक्तम् । तादृशं सदित्यर्थः । भूमौ स्थिता कम्पराजसेना पर्वतोपरि स्थिता द्रविडराजसेना च परस्परं स्वोपरि प्रयुज्यमानैरस्त्रजालैः प्रदीव्यमानैः प्रज्वलयामासतुर्भूम्याकाशाविति तयोर्भीषणसंग्रामोऽत्र प्रस्तूयते ॥

**भ्रश्यत्तालफलाकारैः प्राकाराद्बाणपातितैः ।**
**रणश्रीकन्दुकभ्रान्तिं विदधे वीरमूर्धभिः ॥ ॥ 71 ॥**

**भ्रश्यदिति** ॥ भ्रश्यन्ति गलन्ति भूमौ पतन्ति तालानाम् तदाख्य द्रुमाणाम् फलानि तथोक्तानि । तद्वत् आकारः आकृतिः रूपम् येषां तैः तालफलानीव वर्तुलैः स्थूलैश्चेत्यर्थः । तादृशैः । प्राकारात् सालात् द्रविडवीराणामाश्रयभूतादित्यर्थः । बाणैः कर्णाटवीरप्रयुक्तैरित्यर्थः । पातितैः भ्रंशितैः । वीराणाम् प्रतियोधानाम् मूर्धभिः शीर्षैः । कर्तृभिः । रणश्रियः युद्धलक्ष्म्याः युद्धभूमौ क्रीडन्त्या इत्यर्थः । ( तस्याः ) कन्दुकाः वीटाः गेन्दुकाः । 'गेन्दुकः कन्दुकः' इत्यमरः । क्रीडार्थं विक्षिप्ता इति भावः । त इति भ्रान्तिः भ्रमः । कर्म । विदधे अकारि । तादृशीं बुद्धिं पश्यतां जनानां जनयामासुरित्यर्थः । अत्र क्रीडमानाया युद्धलक्ष्म्याः क्रीडासाधनीभूतकन्दुकभ्रान्तिर्भूयस्सादृश्यहेतुकेति भ्रान्तिमानलङ्कारः । स च 'तालफलानुकारिभिरित्युपमया साम्यसंपादनसाधिकया संकीर्यते ॥

**अग्रे निपेतुर्नृपते र्ग्रावाणो यन्त्रविच्युताः ।**
**दुर्गेणातरदानार्थं दूतास्संप्रेषिता इव ॥ ॥ 72 ॥**

**अग्र इति** ॥ दुर्गेण पर्वतरूपेण गिरिदुर्गेणेत्यर्थः । पराजितवता सामन्तराजेनेति गम्यते । तेन कर्त्रा । आतरः तरपण्यम् तत्सादृश्याल्लक्षणया सामन्तराजभिस्स्वप्रभोस्संतोषार्थं दीयमानं द्रव्यादि ।



तस्य दानार्थम् अर्पणार्थम् तत् सादरं प्रदातुमित्यर्थः । कर्मणि षष्ठी । विजितत्वेन शरणार्थी सन् तदनुग्रहसंपादनायेति भावः । संप्रेषिताः प्रस्थापिताः स्वसमीपं प्रापिताः । दूताः चारा इव । ते किमिति संभावना । 'स्यात्संदेशहरो दूतः' इत्यमरः । तन्मुखेनैव राज्ञामुपदादिसमर्पणस्यौचित्यादेवमुच्यते । यन्त्रेभ्यः शिलायन्त्रेभ्यः विच्युताः स्रस्ताः विगलिताः क्षिप्ता इति यावत् । ग्रावाणः पाषाणाः । 'ग्रावाणौ शैलपाषाणौ' इत्यमरः । नृपतेः राज्ञः कम्पराजस्य । अग्रे पुरः । अभिमुखमिति गम्यते । ( तथा ) निपेतुः न्यपतन् । अतिष्ठन्निति गम्यते । निपूर्वात्पतेर्लिट् । एत्वाभ्यासलोपौ । अत्र परवीरकृतशिलायन्त्रप्रयोगेण कम्पराजपुरःपतिताः पाषाणाः, कम्पराजविजयं सिद्धप्रायं समालोच्य तवास्मीति वादी पर्वतस्तदनुग्रहसम्पादनाय बलिं समर्पयितुं प्रेषिता दूताः किमिति संभाव्यन्त इति स्वरूपोत्प्रेक्षेयम् । न चेयमुपमा । उपमानस्याप्रसिद्धेः ॥

**धानुष्कमुक्तबाणाग्नि ज्वलितोर्ध्वगृहावलिः ।**
**विजयारात्रिकं तस्य मूर्ध्नेवाद्रिरधारयत् ॥ ॥ 73 ॥**

**धानुष्केति** ॥ अद्रिः पर्वतः । कर्ता । धनुः प्रहरणमेषाम् धानुष्काः धन्विनः । 'प्रहरण' मिति ठक् । तैः मुक्ताः विसृष्टाः प्रयुक्ता इत्यर्थः । त एव अग्निः वह्निः तेन ज्वलितः प्रदीपितः ऊर्ध्वगृहाणाम् उपरिगेहानाम् पर्वतदुर्गोपरिस्थितशत्रुनिवासानामित्यर्थः । ( तेषाम् ) आवलिः श्रेणिः यस्मिन् तथोक्तः । तथाविधस्सन् । पर्वतोपरि वसतां शत्रुवीराणां निवासाः कम्पराजभटप्रयुक्तबाणैराच्छाद्यमानाः तत्प्रकाशैरग्निज्वालापरीता इव जज्वलुः । तज्ज्वालाश्चोर्ध्वप्रसरणशीलाः पर्वतं परितः प्रदक्षिणं प्रचक्रमुरिति स्थितिः । अत्रोत्प्रेक्ष्यते । तस्य कम्पराजस्य । विजयः शात्रवजयः तस्य । हेतुहेतुमद्भावे षष्ठी । तन्निमित्तकमित्यर्थः । अरात्रौ दिवापि भवम् आरात्रिकम् नीराजनम् ।

( तत् ) मूर्ध्ना शिरसा। अधारयत् अग्रहीदिवेत्युत्प्रेक्षा। विजयिनां राज्ञां नीराजनविधिरुचित इति तं निर्वर्तत इव पर्वतो वर्तत इति भावः। पर्वतदुर्गोपरिभागस्सर्वोऽपि जाज्वल्यमानैर्बाणैराच्छादित इत्यत एवं संभाव्यते। धृङ् अवस्थाने – इत्यस्मात् हेतुमण्ण्यन्ताल्लङयमिति वक्तुं युक्तमिति पूर्वमवोचाम ॥

विजितशात्रवाणां कर्णाटभटानां बलाद् दुर्गाक्रमणप्रकारो वर्ण्यते –

**विन्यस्तकुन्तनिश्रेणी श्रेणिभिर्वीरपुङ्गवैः।**
**आक्रान्तसालशृङ्गाग्रै रारुह्यत महीधरः ॥ ॥ 74 ॥**

**विन्यस्तेति** ॥ कुन्ताः भल्लानि त एव निश्रेण्यः अधिरोहण्यः। कृदिकारादिति वा ङीष्। तासाम् श्रेणयः पङ्क्तयः। विन्यस्ताः निक्षिप्ताः दृढं स्थापिताः कुन्तनिश्रेणीश्रेणयः यैरिति विग्रहः। तैः। पर्वतमारोढुं स्वभल्लानि निश्रेणीरिव कृत्वा बद्धश्रेणीषु तेष्वधिरूढैरित्यर्थः। अतएव सालशृङ्गाणि प्राकारशिखराणि तेषाम् अग्रम् प्रान्तप्रदेशः। 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च। आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्' इति मेदिनी। आक्रान्तम् बलाद् गृहीतम् सालशृङ्गाग्रम् यैः तैः। वीरपुङ्गवैः योधश्रेष्ठैः कर्णाटसुभटैरित्यर्थः। महीधरः पर्वतः पर्वतदुर्गमित्यर्थः। आरुह्यत अध्याक्रमत। पश्यतश्शत्रूननादृत्य प्राकारशिखरप्रान्तप्रदेशं समुचितेनोपायेन समारुह्य तद्द्वारेतिभावः। कर्णाटसैन्यानि दुर्गं प्रविविशुर्द्रविडसैन्यानि तृणाय मत्वेति सारांशः। आङ्पूर्वाद् रुहेः कर्मणि लङ् ॥

अन्तर्दुर्गाच्चम्पराजबहिरागमनाय कृतं दुर्गोपद्रवं कथयति –

**अथोद्भटभटक्ष्वेडा गलितभ्रूणगार्भिणम्।**
**निहतास्रनदीमज्ज ज्जनताशास्यजीवितम्॥ ॥ 75 ॥**



**अथेति** ॥ अथ कम्पनसैन्यानां दुर्गारोहणसमनन्तरम्। उद्भटाः शूराः तेषाम्। कर्तरि षष्ठी। तत्कृता इत्यर्थः। क्ष्वेडाः सिंहनादाः। क्ष्वेडन्त इति ञिक्ष्विदा स्नेहमोचनयोरित्यस्मात्पचाद्यच्। 'पृषोदरादी' नीति दकारस्य डकार इति केचित्। डान्त एवायं धातुरिति कल्पद्रुमकाराः। धातूनामनेकार्थत्वादुक्तार्थलाभः। क्ष्वेल्ल चलने – पचाद्यच्। डलयोरेकत्वमित्यपरे। 'क्ष्वेडा तु सिंहनादस्स्यात्' इत्यमरः। तया गलिताः च्युताः। 'स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलित' मित्यमरः। ( तथाविधाः ) भ्रूणाः गर्भाः यस्मात् तथोक्तम्। 'भ्रूणः स्त्रीगर्भडिम्भयोः' इति मेदिनी। तथाविधम् गार्भिणम् – गर्भिणीनां समूहः यस्मिंस्तदिति बहुव्रीहिर्गर्भो बहुव्रीहिः। गर्भिणीशब्दात् 'भिक्षादिभ्योऽण्' इति सामूहिकोऽण्। 'भस्याढे' इति पुंवद्भावः। किञ्च। निहताः रणे हताः तेषाम् अस्रम् रक्तम् तस्य नद्यः प्रवाहाः तासु मज्जन्ती स्नाती। 'मज्ज त्याप्लवने स्नाति स्नायत्येतेऽत्रगाहते। स्युर्मज्जने' इति भट्टमल्लः। ( तादृशी ) जनता जनसमूहः। 'ग्रामजनबन्धुभ्यः' इति तल्। तया आशास्यम् अभिलषितम् जीवितम् स्वजीवनम् यस्मिन् तथोक्तम्। पर्वतदुर्गस्था जनाश्शत्रुभ्यस्स्वप्राणान् रक्षितुं प्रवहन्तीषु रक्तनदीषु शवैस्साकं संगताः स्वजीवितत्राणाय प्रयतन्त इति भावः। प्राणरक्षणैकतत्परास्समभवन् चम्पराजीया इति तेषां भयोत्कर्षः कम्पराजसैनिकशौर्यातिशयवर्णनाङ्गतया प्रस्तूयते। दुर्गम् एवम् उपद्रुतम् आसीदित्युत्तरश्लोकेन सम्बन्धः ॥

**[वह्निज्वालसमालीढ जनहाहारवाकुलम्]।**
**अलब्धनिर्गमं दुर्ग मासीदेवमुपद्रुतम् ॥ ॥ 76 ॥**

**वह्नीति** ॥ वह्निज्वालाः अग्निकीलाः दुर्गेऽग्निनिक्षेपणादुद्भूताः। तैः समालीढाः संग्रस्ताः समाक्रान्ता इत्यर्थः। सम् आ – इत्युपसर्ग

द्वयपूर्वात् 'लिह – आस्वादने' इत्यस्मात् क्तः। ढत्वधत्वष्टुत्वढलोप दीर्घाः। (तथाविधाः) जनाः चम्पराजसम्बन्धिनः तेषाम् हाहारवाः हाहाकाराः हा हा इत्येवंरूपाणि दीनाक्रन्दनानि तैः आकुलम् व्याप्तम् सर्वत्र संपूरितम्। दुर्गम् गिरिदुर्गम् राजगम्भीराख्यम्। अलब्धः अप्राप्तः अनधिगतः। तदन्तरा स्थितैर्जनैरिति भावः। निर्गमः बहिर्गमनम् यस्मिन् तथाभूतं सत्। उपद्रुतम् एवम् आपदं प्राप्तमेव न त्वनापन्नं क्वचिदपि। 'स्युरेवं तु पुनर्वैवेत्यवधारण वाचकाः' इत्यमरः। उपपूर्वात् द्रु गतावित्यस्मात् 'गत्यर्थे' ति कर्तरि क्तः। आसीत् अभवत् अतिष्ठदित्यर्थः। दुर्गस्था यथा बहिर्गन्तुं न पारयन्ति तथा सर्वत आवृत्य जागरूकाः दुर्गोपद्रवान् समकल्प यन् विजयानगरभटा इति समाकलितोऽर्थः। राज्ञां दुर्गेभ्यो बहि रागमनाय शत्रुभटैरग्निविसर्जनं तत्र क्रियते – तथा च रामायणम् - "लङ्कामभिमुखास्सोल्का जग्मुस्ते प्लवगर्षभाः। प्रासादेषु च संहृष्टा स्ससृजुस्ते हुताशनम्। तेषां गृहसहस्राणि ददाह हुतभुक् तदा" इति ॥

दुर्गाद् द्रविडराजनिर्गमनं प्रस्तौति –

**निर्जगाम निजागारा च्चम्पक्ष्मापोऽपि कोपनः।**
**कृपाणपाणिर्वल्मीका ज्जिह्वाल इव जिह्मगः॥ ॥77॥**

**निर्जगामेति ॥** कोपनः कुप्यति तच्छीलः इति 'क्रुधमण्डा र्थेभ्यश्च' इति युच्। चम्पक्ष्मापः अपि चम्पभूपोऽपि। पाणौ हस्ते कृपाणम् खड्गः यस्य तथोक्तः। खड्गधारी सन्नित्यर्थः। 'प्रहरणा र्थेभ्यः परे निष्ठासप्तम्यौ भवत' इति सप्तम्याः परनिपातः। निजागारात् स्वभवनात्। निर्जगाम बहिः निरगच्छत्। महता संरम्भे णेति भावः। तत्र दृष्टान्तः प्रदर्श्यते – जिह्वालः जिह्वावान्। पादा हृतत्वेन क्रोधवशात् स्वरसने चलयन्निति भावः। 'प्राणिस्थादातो



लजन्यतरस्याम्' इति लच्। जिह्मगः भुजगः सर्पः। वल्मीकात् नाकोरिव। 'वामलूरुश्च नाकुश्च वल्मीकं पुंनपुंसकम्' इत्यमरः। यथा वा पराभूतः कालाहिर्भीषणक्रोधेन परिस्फुलज्जिह्वश्शीघ्रं शत्रु वधाय स्वाश्रयाद्बहिस्समागच्छति तथायमपि द्रविडराजस्स्वदुर्गोपद्रवेण शात्रवजनितेन प्रकुपितः खड्गहस्तो युद्धाय महता वेगेन समागच्छ दित्युपमार्थः। सावयवोपमेयम् ॥

द्रविडाधीशकर्णाटाधीशयोर्युद्धं वर्णयितुमुपक्रमते –

**अहंपूर्विकया वीरे ष्वभितो युद्धकाङ्क्षिषु।**
**प्रत्यग्रहीन्महीपाल श्चम्पं सिंह इव द्विपम्॥ ॥78॥**

**अहंपूर्विकेति ॥** वीरेषु शूरेषु स्वयोधेषु। 'शूरो वीरश्च विक्रान्तः' इत्यमरः। अहंपूर्विकया – अहं पूर्वः अहं पूर्वः इति यस्यां तया (योधानां) धावनक्रियया। 'अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम्' इत्यमरः। अभितः शीघ्रम् सोत्कण्ठमित्यर्थः। 'समीपो भयतश्शीघ्रसाकल्याभिमुखेऽभितः' इत्यमरः। युद्धकाङ्क्षिषु – युद्धं काङ्क्षन्ति वाञ्छन्ति इति णिनिः। सोत्साहं योद्धुं सन्नद्धेषु तान नादृत्येत्यर्थः। 'षष्ठी चानादरे' इति चकारात् सप्तमी। महीपालः राजा कम्पनः। कर्ता। सिंहः मृगेन्द्रः। द्विपम् गजमिव। महोत्सा हेनेति भावः। 'द्विरदोऽनेकपो द्विपः' इति गजपर्यायेष्वमरः। द्वाभ्याम् करेण मुखेन च पिबतीति 'सुपि स्थः' इत्यत्र 'सुपी' ति योग विभागात्कः। प्रत्यग्रहीत् जग्राह आचक्रामेत्यर्थः। प्रतिपूर्वात् ग्रह उपादाने इत्यस्माल्लुङ्। मृगेन्द्रः द्विपमिवेत्युपमया सिंहद्विपयोरिव महदन्तरमेतयोरिति नायकोत्कर्षस्सूच्यते ॥

इत आरभ्य चतुर्भिश्श्लोकैः कम्पराजचम्पराजयोर्द्वन्द्वयुद्धं वर्ण्यते –

**तौ निकुञ्चितपूर्वाङ्गौ निश्चलाक्षौ कृपाणिनौ।**
**उचितस्थानकावास्तां चित्रन्यस्ताविव क्षणम्॥ ॥79॥**

**तौ निकुञ्चितेति** ॥ स च स च तौ। पूर्वोक्तौ कम्पराज
चम्पराजावित्यर्थः। तौ क़र्तारौ। अङ्गस्य शरीरस्य पूर्वे पूर्वाङ्गे।
'पूर्वापराधरोत्तर' मित्येकदेशिसमासः। 'अङ्गं गात्रे प्रतीकोपा
ययोः पुंभूम्नि नीवृति' इत्यमरः। निकुञ्चिते सुष्ठु संकुचिते ह्रस्वी
भूते नते इति यावत्। तादृशी पूर्वाङ्गे ययोः तथोक्तौ अन्योन्य
स्योपरि कन्दुकवदुत्प्लुत्य पतनार्थं पूर्वदेहमधोनमय्य स्थितावित्यर्थः।
किञ्च। निश्चले निर्निमिषे तद्दर्शन एव दत्तावधाने अक्षिणी नेत्रे
ययोः तथोक्तौ। छिद्रान्वेषणाय परस्परं सावधानमीक्षमाणावित्यर्थः।
'बहुव्रीहौ सक्थ्यक्ष्णो' रिति षच्। किञ्च। उचितानि अर्हाणि
योधैरवश्यमाचरितव्यानि स्थानकानि स्थानानि पादयोः पूर्वापरतिर्यङ्
निक्षेपरूपपादविन्यासविशेषैस्सिहव्याघ्रादितुल्यावस्थानरूपाणि वैष्णवादि
संज्ञानि ययोस्तौ। अत्र भरतः – "वैष्णवं समपादं च वैशाखं
मण्डलं तथा। प्रत्यालीढमथालीढं स्थानान्येतानि षण्णृणाम्" इति।
धनुर्वेदे तु पञ्चैवैतान्युक्तानीति विशेषः। तादृशौ। किञ्च। कृपाणिनौ
प्रशस्तखड्गधरौ। परस्परं प्रहर्तुमिति भावः। तथाविधौ सन्तौ।
चित्रे आलेख्ये। 'आलेख्याश्चर्ययोश्चित्र' मित्यमरः। न्यस्तौ निक्षिप्तौ
लिखिताविति यावत्। ताविव। निश्चेष्टाविति भावः। क्षणम्
मुहूर्तकालम् अत्यल्पकालमित्यर्थः। 'क्षणो व्यापारशून्यत्वमुहूर्तोत्सव
पर्वसु' इति रुद्रः। 'कालाध्वनो' रित्यत्यन्तसंयोगे द्वितीया। आस्ताम्
अभवताम् परस्पराभिमुखमतिष्ठतामित्यर्थः। इतरेतरविजिगीषया भक्षणे
दत्तावधानौ मार्जाराविव परस्पराक्रमणे दत्तदृष्टी प्रत्यालीढ़ादिभि
र्वीरोचितप्रकारैः पादौ विन्यस्य परस्परमीक्षमाणौ मुहूर्तकालमितरेतर
माभिमुख्येन स्थितौ तौ वीराविति पिण्डीकृतोऽर्थः। अत्र यथावद्व
स्तुवर्णनं चमत्कारजनकमभूदिति स्वभावोक्तिः। चित्रन्यस्ताविति तु
तादात्म्यसंभावनाविषयतयोत्प्रेक्षैव। उत्प्रेक्षा चेयं नैश्चल्यमनयोर्विस्पष्ट
मापादयन्ती स्वभावोक्तेः परिपुष्टिं घटयतीत्येतयोस्सङ्करः॥



**क़क्ष्याविभक्तवपुषो श्चारीभिश्चरतोस्तयोः।**
**पश्यद्भिस्सौष्ठवं देवै रनिमेषत्वमादृतम्॥** ॥80॥

**कक्ष्येति** ॥ चारीभिः परिभ्रमणविशेषैः सव्यापसव्यार्थभ्रमणादि
भिरित्यर्थः। यथाह भरतः – "एकपादप्रचारो यस्स चारीत्यभिधी
यते। द्विपादक्रमणं यत्तु करणं नाम तद्भवेत्॥ करणानां समा
योगात्खण्डमित्यभिधीयते। खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत्॥"
'चारीभि' रिति बहुता सर्वानेतान् संगृह्णाति प्रवृत्तिनिमित्तारोप
रूपनिरूढलक्षणया। स्पष्टं चेदं 'सप्तमी शौण्डै' रित्यत्र कैयटे।
एताभिः करणभूताभिः। चरतोः परिभ्रमतोः। अतएव कक्ष्या
विभक्तवपुषोः – कक्ष्ये रशने ( अथवा ) योधानां परिधानबन्धविशेषौ
वा। 'कक्ष्या कच्छे वरत्रायां काञ्चयां गेहप्रकोष्ठके' इति नानार्थ
रत्नमाला। ताभ्याम् विभक्ते पृथक्कृते वपुषी शरीरौ शरीरावयव
भूतपूर्वकायापरकायावित्यर्थः। वपुश्शब्दोऽत्र - समुदाये वर्तमानाश्शब्दा
अवयवेष्वपि वर्तन्त' इति न्यायेन तदवयवपरः। ते (वपुषी)
ययोः तथोक्तौ। परिभ्रमणकृतवेगातिशयेन तच्छरीरयोरेकाकारतैव
स्फुरति नतु तत्र पूर्वापरविभागः। स तु केवलं कक्ष्याविभागेनेति
भावः। (तादृशयोः) तयोः प्रकृतनृपालयोः। सुष्ठु भावः सौष्ठ
वम् सुष्ठुता परिभ्रमणपाटवमित्यर्थः। अव्ययात् सुष्ठुशब्दात् 'उद्
गात्रादिभ्यः' इत्यञ्। तत् कर्म। पश्यद्भिः आलोकयद्भिः। देवैः
अमरैः। 'अमरा निर्जरा देवाः' इत्यमरः। तैः कर्तृभिः। अविद्य
मानाः निमेषाः नेत्रनिमीलनानि येषाम् ते अनिमेषाः देवाः। तेषां
भावः तत्त्वम् – देवत्वम्। स्वीयमित्यर्थः। आदृतम् संभावितम्।
अनिमेषत्वमिदानीमस्माकं चरितार्थमिति सानन्दममन्यन्त। अन्यथा
तद्दर्शनावसरे नेत्रनिमीलनेन मध्ये मध्ये क्रियाविच्छित्तेरनिवार्यत्वेन
तज्जनिताखण्डानन्दानुभूतेरपि क्षणक्षणविच्छेदसंभवादिति भावः। अत्र

देवानामनिमेषतादरासम्बन्धेऽपि तत्सम्बन्धोऽत्र वर्णित इत्यतिशयोक्तिरलङ्कारः ॥

अन्तर्बिम्बितचम्पेन्द्रा कम्पेन्द्रस्यासिपुत्त्रिका ।
अप्सरोभ्यः पतिं दातु मन्तर्वत्नी किलाभवत् । ॥81॥

**अन्तर्बिम्बितेति** ॥ अन्तः अन्तरा विम्बितः संजातप्रतिबिम्बः बिम्बवान् कृत इति वा । 'बिम्बं तु प्रतिबिम्बे स्यान्मण्डले बिम्बिकाफले' इति हैमः । ( तादृशः ) चम्पेन्द्रः चम्पराजः यस्यां तथोक्ता । प्रतिफलितचम्पराजप्रतिबिम्बाश्रयेत्यर्थः । कम्पेन्द्रस्य कम्पराजस्य । असिपुत्त्रिका – असेः पुत्त्री असिपुत्त्री । सैव असिपुत्त्रिका अल्पोऽसिरित्यर्थः । अतएव 'स्याच्छस्त्री चासिपुत्त्री च छुरिका चासिधेनुका' इत्यमरः । तथाप्यत्र विशेषस्य सामान्ये लक्षणया खड्गमात्रपरतास्य । तत्खड्ग इत्यर्थः । अथवा – पुत्त्रिकेवासिरित्युपमितसमासः । पुत्त्रिकेव प्रियतमोऽसिरिति वा । असिरेव पुत्त्रिकेति च गम्यते । अनेन परिभ्रमणानन्तरमेकत्रावस्थितिरेतयोस्सूच्यते । ( सा ) अप्सरोभ्यः सुरकन्याभ्यः । पतिम् भर्तारम् समुचितमित्यर्थः । दातुम् अर्पयितुम् समुचितपतिसमर्पणेन ता अनुग्रहीतुमिवेति गम्योत्प्रेक्षा । अन्तर्वत्नी आपन्नसत्त्वा तदर्थे गर्भवती । 'आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । अन्तः अस्त्यस्यां गर्भ इति विग्रहे 'अन्तर्वत्पतिवतो' रिति मतुब्नुगागमौ । ङीप् च । तथाविधा । अभवत् आसीत् । किलेति संभावनायाम् । एवमुत्प्रेक्ष्यत इत्यर्थः । अभिचम्पराजं प्रसारिता प्रतिवीरप्रतिबिम्बसमलङ्कृता कम्पराजखड्गलता सा अन्तस्सत्त्वा तस्य कुमारीव व्यराजत इत्येवं सम्भाव्यते । कम्पराजकरवाले चम्पराजप्रतिफलनवर्णनात् लक्ष्यपातापसरणेऽशक्तता चम्पराजस्य ज्ञायते । अप्सरोभ्यः पतिं दातुमित्यनेन महावीरस्य चम्पराजस्य वध एतदुत्तरक्षण एवावश्यं भविष्यतीति गम्यते । 'दातुम्'



इत्यनेन समुचितस्यैव वस्तुनो दानार्हतेति ताभिः पूर्वं वृतेभ्यस्सर्वेभ्यः पतिभ्योऽप्यतिरिच्यतेऽयं पतिरिति प्रतिनायकोत्कर्षः प्रकृतनायकपराक्रमातिशयवर्णनाङ्गतया व्यज्यते । असिपुत्त्रिकेतिशब्दशक्तिकृतरूपकावगतः कुमारिकाया अस्यास्समुचितपतिभिक्षावदान्यतातिशयः 'कारणगुणाः कार्ये संक्रामन्ती' ति न्यायेन कम्पराजं लक्ष्यीकुर्वंस्तस्मिन् दानवीरत्वमवगमयति । 'अप्सरोभ्यः' इत्यनेन लोकातिशायिसौन्दर्यवत्यस्ता इति तत्पतेरस्यापि लोकातिशायिसौन्दर्यवत्त्वं व्यज्यते । तेन च 'यत्राकृतिस्तत्र गुणा' इति न्यायेन – धैर्यशौर्यमानगाम्भीर्यादयो वीरगुणा एतस्मिन् द्योत्यन्ते । तेन चैतादृक्कुमारस्य जनयित्र्यामस्यां वीरमातृत्वादयो भाग्यैकलभ्याः महागुणाः प्रतीयन्ते । एतेन चास्याः पितरि प्रकृतनायके लोकातिशायिसुकृतवतामग्रेसरत्वं महामहिमवत्त्वं च ध्वन्यत इत्येवं ध्वनिमयोऽयं श्लोकराडुत्तमकाव्यमूर्धालंकृततामस्य गमयति । अतएवात्र गाम्भीर्यं नाम काव्यगुणः । 'ध्वनिमत्ता तु गाम्भीर्य' मिति तल्लक्षणात् । अत्र प्रतिबिम्बितचम्पेन्द्रायामसिपुत्त्रिकायामन्तर्वत्नीभवनसंभावनेति क्रियोत्प्रेक्षा । अस्याश्च 'पतिं दातु' मिति गम्योत्प्रेक्षा हेतुत्वसंपादनेन बहूकरोतीत्येतयोरुत्प्रेक्षयोरङ्गाङ्गिभावेन संकरः ॥

अथ काञ्चीपुरविजयापरपर्यायश्चम्पराजवधः कथ्यते —

अथ वञ्चिततत्खड्ग प्रहारः कम्पभूपतिः ।
अक्रोदसिना चम्प ममरेन्द्रपुरातिथिम् ॥ ॥ 82 ॥

**अथेति** ॥ अथ अनन्तरम् परिभ्रमणविशेषैः परस्परविजिगीषया संचरणसमनन्तरम् । कम्पभूपतिः प्रकृतनायकः । कर्ता । वञ्चितः विप्रलब्धः नैपुणेनापसारितः तस्य चम्पस्य खड्गप्रहारः करवालाहतिः येन तथाभूतस्सन् । लक्ष्यपथादपसरणेन तत्प्रहारं मोघीकृत्येत्यर्थः ।

असिना स्वकरवालेन। करणभूतेन। चम्पम् चम्पराजम्। कर्म। अमरेन्द्रस्य पूः अमरेन्द्रपुरम् अमरावतीम्। 'पूः स्त्री पुरी नगर्यौ वा' इत्यमरः। 'ऋक्पूरब्धूःपथामानक्षे' इत्यच्। अमरेन्द्रस्य पुरमिति वा विग्रहीतुमुचितमिति पूर्वमवोचाम। तस्य अतिथिम् आगन्तुकम् परलोकगतम् मृतमिति यावत्। 'स्यादावेशिक आगन्तुरतिथिर्ना गृहागते' इत्यमरः। कम्पराजं हन्तुकामश्चम्पराजोऽसिना प्राहरत्ससंरम्भम्। लाघवेन तं प्रहारमपगतलक्ष्यं विधाय स्वकरवालेन तस्य शिरश्छित्वा काञ्चीपुरविजयलक्ष्मीसमाश्लेषभाजनमभूत्कम्पराज इति समाकलितोऽर्थः। अत्र चम्पराजमवधीदिति वक्तव्ये अमरेन्द्रपुरातिथिमकरोदित्युक्त्या पर्यायोक्तमलङ्कारः। "पर्यायोक्तं यदुक्तस्य वचो भङ्ग्यन्तराश्रयम्" इति तल्लक्षणात्॥

'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानी'ति न्यायेन काव्यमध्येऽपि मङ्गलाचरणं करोमीति काञ्चीपुरराज्यलाभरूपामर्थप्राप्तिं कम्पराजस्य वर्णयन्ती सर्गमिममुपसंहरति मङ्गलान्तं कवयित्री —

**इत्थं सङ्गरमूर्ध्नि चम्पनृपतिं नीत्वा कथाशेषतां**
**श्रीमान् कम्पनृपेश्वरो जनयितुस्संप्राप्तवान् शासनम्।**
**काञ्चीन्यस्तजयप्रशस्तिरमिथस्संकीर्णवर्णाश्रमं**
**नीत्या नित्यनिरत्ययर्द्धिरशिषत्तुण्डीरभूमण्डलम्॥ ॥ 83॥**

**इत्थमिति॥** इत्थम् अनेन प्रकारेण। 'इदमस्थमुः' इति प्रकारवचने थलोऽपवादस्थमुः। सङ्गरमूर्ध्नि रणशिरसि युद्धभूमेरग्रभागे इत्यर्थः। चम्पनृपतिम् चम्पराजम्। कथा कथनम् (चम्प इति) भणनम् तया शेषः (अब्भक्षणन्यायेन) तयैव शिष्टः नतु शरीरेणेत्यर्थः। तस्य भावः तत्ता। ताम् नाममात्रावशिष्टतामिति यावत्। (ताम्) नीत्वा प्रापय्य तं हत्वेत्यर्थः। श्रीः अस्यास्तीति श्रीमान् विजयलक्ष्मीवान् कृतजयलक्ष्मीस्वयंवर इत्यर्थः। तादृक् कम्पनृपेश्वरः कम्पराट्। कर्ता। जनयितुः जनकस्य पितुः बुक्कराजस्य। जनयतीति जनेर्ण्यन्तात्तृच्। 'जनिवध्योश्चे'ति न वृद्धिः। (तस्य) शासनम् आज्ञाम् स्वपित्राज्ञाम् काञ्चीपुरविषयिणीमित्यर्थः। अन्यथा तदुपदिष्टस्य प्रधानयानस्य मधुराविजयस्येदानीमनिष्पत्तेरेतदसङ्गतिस्पष्टैव। संप्राप्तवान् कृतवान्। तदुपरि काञ्चयाम् तदाख्यायां नगर्याम् न्यस्ता निक्षिप्ता जयप्रशस्तिः स्वविजयप्रशंसनम्। शासनद्वारेति भावः। सा येन तथोक्तः काञ्चीं जित्वा स्वविजयख्यापनाय तन्नगर्यां निखातजयस्तम्भस्सन्नित्यर्थः। विजयानन्तरं जयस्तम्भैस्स्वविजयख्यापनमेतद्राज्ञां संप्रदायसिद्धस्समुदाचार इति प्रतिभाति। अतएव रघौ कालिदासः — 'वङ्गानुत्खाय तरसा नेता नौ साधनोद्यतान्। निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः॥" इत्याह। किञ्च। नीत्या नयेन गुरूपदेशशास्त्रपठनादिभिस्समुपलब्धेन समुचितसामाद्युपायप्रयोगचातुर्येणेत्यर्थः। तेन करणेन। नित्यनिरत्ययर्द्धिः — नित्यम् सदा सर्वस्मिन् काले प्रतिक्षणमित्यर्थः। निरत्यया निरपाया ऋद्धिः वृद्धिः स्वाभ्युदयः यस्य तथोक्तः। स्वनीतिप्रयोगचातुर्येण सर्वाणि मित्राणि कृत्वा सम्पादितस्वाभ्युदयस्सन्नित्यर्थः। ऋधु वृद्धौ — क्तिन् (ऋद्धिः)। मिथः अन्योन्यम् संकीर्णाः संकलिताः संपृक्ताः परस्परं साङ्कर्यभाज इत्यर्थः। तादृशा न भवन्तीति अमिथस्संकीर्णाः (विजातीयेन परधर्मेणासंकीर्य) स्वरूपेण पृथक्पृथगवस्थिता इत्यर्थः। तादृशः वर्णाः ब्राह्मणादिजातयः आश्रमाः गार्हस्थ्यादयः यस्मिन् कर्मणि तथा। वर्णसांकर्यम् आश्रमधर्मसांकर्यं च यथा न भवति तथेत्यर्थः। 'वर्णास्स्युर्ब्राह्मणादयः' 'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये। आश्रमोऽस्त्री' इत्यमरः। तुण्डीरभूमण्डलम् तुण्डीराख्यं भूवृत्तम्। काञ्चीपुरमिति यावत्। तथा च मार्कण्डीयपुराणम् — 'यावत्तुण्डीरभूवृत्तं तावत्काञ्चीतलंस्मृतम्' इति। (तत् कर्म।) अशिषत् अन्वशासत् पर्यपाल

यदित्यर्थः । शासु अनुशिष्टौ – लुङ् । 'सर्तिशास्त्यर्तिभ्यश्च' इति च्लेरङ् 'शास इदङ्हलोः' इत्युपधाया इत्वम् । 'शासिवसिघसीनां चेति षत्वम् । ) काञ्चीपुरविजयानन्तरमयं राजा वर्णाश्रमधर्मरक्षणेन तत्प्रजास्स्वस्वधर्मे स्थापयन् 'धर्मो रक्षति रक्षितः' इति न्यायतस्समधिगतदिनदिनाभ्युदयेन स्वशक्त्युपचयं कुर्वाणश्शत्रोर्यवनराजस्य व्यसनेन तदपचयं च प्रतीक्षमाणः काञ्च्यां कञ्चित्कालं परिपालयामास प्रजाः कम्पराजस्सुखेनेति तात्पर्यार्थः । सर्गपरिसमाप्तिं सूचयति वृत्तविपरिणामः । वृत्तमिदं शार्दूलम् - 'सूर्याश्वैर्मसजास्ततस्सगुरवश्शार्दूलविक्रीडितम्' इति ॥

इति
श्रीगङ्गादेव्या विरचिते
मधुराविजयनाम्नि वीरकम्परायचरिते
काञ्चीपुरविजयप्रशंसा नाम
चतुर्थसर्गः

* * * *

**इतीति** ॥ सर्वं पूर्ववत् । काञ्चीपुरविजयः चम्पराजवधेन काञ्चीनगरवशीकरणम् । तस्य प्रशंसा प्रस्तुतिः कीर्तनम् । नामेति प्रसिद्धौ । कम्पराजकृतकाञ्चीपत्तनाक्रमणवृत्तान्तेन प्रख्यातम् प्रधानतया समुपवर्णिततद्वृत्तविषय इत्यर्थः । चतुर्थः चतुर्णाम् पूरणः चतुस्संख्यापूरकः । 'षट् कतिपयचतुरा' मिति डटि थुक् । अत एव ज्ञापकाड्डुट् । ( सर्गः काव्यभागः ) इति समाप्तः – ) इति तु विशेषः ॥



इति
श्रीपरमेश्वरीकृपासमुपलब्धशास्त्रसाहितीवैदुष्य
'साहित्यालङ्कार' 'विद्वत्कवीशान'
**पोतुकुच्चि सुब्रह्मण्यशास्त्रिणा**
'काव्यकलानिधि' 'महीशूरमहाराजास्थानमहाविद्वत्कवि'
श्रीचिदम्बरशास्त्रिणां भागिनेयेन विरचितया
**भावप्रकाशिका**ख्यव्याख्यया समलङ्कृतायाम्
श्रीगङ्गादेव्याः कृतौ मधुराविजये महाकाव्ये
काञ्चीपुरविजयवर्णनं नाम
**चतुर्थसर्गः**

* * * *

*

श्रीः

# मधुराविजयम्

## भावप्रकाशिकाख्यव्याख्यासमेतम्

## पञ्चमसर्गः

'अशिषत्तुण्डीरभूमण्डलमिति पूर्वमुक्तम्। तत्परिपालनाप्रकारं राजवैभवं च वर्णयत्यधुना त्रयोदशश्लोकैरित आरभ्य —

**अथ स तत्र महीतलमण्डने**
**मरकताह्वयभाजि महापुरे।**
**विरचितस्थितिरप्रतिशासनं**
**जगदशेषमरक्षदनाकुलम्॥** ॥ 1 ॥

**अथेति**॥ अथ अनन्तरम् शासनस्तम्भनिर्माणादिभिः काञ्ची पुरविजयप्रख्यापनोत्तरकाल इत्यर्थः। सः कम्पराजः तत्र तस्यां काञ्चीपुर्याम्। महीतलस्य भूमेः मण्डने अलङ्कारभूते भूमण्डलस्य मण्डनायमाने। 'मण्डनं तु प्रसाधने। मण्डनोऽलंकरिष्णौ' इति हैमः। किञ्च। मरकतम् मरकतमित्येवम् आह्वयम् नाम भजते सेवते प्राप्नो तीति भजो ण्विः। मरकतनाम्नीत्यर्थः। तस्मिन् महापुरे बृहन्न गरे बहुग्रामव्यवहाराश्रये दुर्गपरिखादिभिरभेद्ये पत्तने इत्यर्थः। विर चिता निर्मिता परिकल्पिता स्वीकृता स्थितिः सत्ता स्वनिवासः येन तथोक्तः। अङ्गीकृततद्राजधानीक इत्यर्थः। तथाभूतस्सन्। अशेषम् समस्तम् जगत् भूमिम् तुण्डीरभूमण्डलं सर्वमित्यर्थः। प्रतिशासनम् स्वाज्ञाविरुद्धनिदेशः 'अपवादस्तु निर्देशो निदेशश्शासनं च सः।



शिष्टिश्चाज्ञा च' इति सुधा। अविद्यमानम् प्रतिशासनम् यस्मिन् कर्मणि यथा भवति तथा। 'नञोऽस्त्यर्थाना' मित्युत्तरपदलोपः। अप्रतिहतया निजाज्ञयेत्यस्मिन् दण्डविजयः कथ्यते। यथाह मनुः — "सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः। दण्डस्य हि भया त्सर्वं जगद्भोगाय कल्पते" इति। अतएव अनाकुलम् अव्याकुलम् निरुपद्रवम् निरीतिबाधं यथा भवति तथा। ईतिबाधाश्च षड्— "अति वृष्टिरनावृष्टिर्मूषिकाश्शलभाश्शुकाः। अत्यासन्नाश्च राजानो षडेता ईतय स्स्मृताः" इति। तथा अरक्षत् पर्यपालयत्। मरकतनगरीं स्वराज धानीं कृत्वा सुग्रीवाज्ञया शासत् प्रजास्सुखयांबभूव कम्पराज इति निर्गलितोऽर्थः। अत्र वृत्त्यनुप्रासो नाम शाब्दोऽलङ्कारः। तल्लक्षणं तु पूर्वमुक्तम्। सर्गोऽस्मिन् द्रुतविलम्बितं वृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ' इति तल्लक्षणात्। सर्गोऽयं काञ्चीपुरराज्यपरिपालनया समारब्धस्समाप्यते ऋतुवर्णनया साकं नायकस्य तत्समयोचिततृतीय पुरुषार्थानुभूतिसमुपवर्णनेन॥

देवतात्मतापरपर्यायं महामहिमत्वं नाम नायकगुणः कम्पराजे वर्ण्यते—

**अरिबलापहमाश्रितनन्दनं**
**सुमनसां मनसः प्रियदायिनम्।**
**वसुमतीमवतीर्णमिवापरं**
**हरिममंसत तं सततं प्रजाः॥** ॥ 2 ॥

**अरीति**॥ प्रजाः जनाः लोक इत्यर्थः। ते कर्तारः। अरिबलाप हम् — (राजपक्षे) अरिबलम् शत्रुसैन्यम् अपहन्ति नाशयति शात्रव सैन्यानां विजेतेत्यर्थः। (विष्णुपक्षे) अरिबलम् शत्रुभूतां राक्षससेनाम् अप हन्तीति तथा। राक्षससंहर्तेत्यर्थः। विष्णोर्दैत्यारित्वेन लोकविदितत्वादेव

मुक्तिः। अरिणा चक्रेण बलापहम् दैत्यसेनानाशकमिति वा। (इन्द्रपक्षे) अरिः (स्वस्य) शत्रुभूतः बलः तदाख्योऽसुरः तम् अपहन्तीति तथा। बलासुर निषूदन इत्यर्थः। 'अपे क्लेशतमसो' रिति हन्तेर्डः क्लेशतमसोः कर्मणो रुपपदयोरेव विहितस्तथापि 'अन्येष्वपि दृश्यते' इत्यपिशब्दसामर्थ्या द्धन्तेरितरोपपदादपि क्वचिड्डः। अतएव कालिदासः – "परकर्मापहस्सो ऽभूदुद्यतस्स्वेषु कर्मसु' इति प्रायुङ्क्त। किञ्च। आश्रितनन्दनम् – (राज पक्षे, विष्णुपक्षे च) नन्दयतीति नन्दनः संतोषजनकः। नन्द्यादित्वाल्ल्युः। आश्रितानाम् स्वसेवकानाम् नन्दनः स्वाश्रितत्राणपरायण इत्यर्थः। (इन्द्र पक्षे) आश्रितम् स्वनिवासतया प्राप्तम् नन्दनम् तदाख्यं देवोद्यानम् येन तथोक्तः। नन्दनोद्यानविहारीत्यर्थः। तम्। किञ्च। सुमनसाम् (राज पक्षे) विदुषाम् (इन्द्रपक्षे, विष्णुपक्षे च) सुमनसाम् देवानाम् 'सुमनाः पुष्पमालत्योः। स्त्रियां ना धीरदेवयोः' इत्युभयत्रापि मेदिनी। मनसः चित्तस्य। प्रियम् प्रीतिम् संतोषम् ददातीति णिनिः। युगागमः। आपद्भ्यो रक्षणेन देवताप्रीतिभाजने इन्द्रोपेन्द्राविव विद्यागोष्ठीभिर्विद्व ज्जनप्रीतिभागयं राजेति वाक्यार्थः। (इत्थं शब्दकृतसाम्यात्) तम् कम्पनप्रभुम्। कर्म। वसुमतीम् भूमिम् 'सर्वंसहा वसुमती वसुधोर्वी वसुंधरा' इत्यमरः। अवतीर्णम् प्राप्तम् भूलोके कृतनिवासमित्यर्थः। तम् कम्पनप्रभुम्। अपरम् द्वितीयम्। हरिम् विष्णुम् इन्द्रं च। 'हरि र्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु' इति विश्वः। इवेति संभावनायाम्। तमिव। सततम् निरन्तरम् अविश्रान्तम्। निरन्तरक्रियाकरणं संतता दिभिरुच्यत इति मकुटः। आश्रितनन्दनादीनि सततं राजा करोतीति सततं तथा संभावयन्ति तं जना इति भावः। अमंसत अमन्यन्त। मन ज्ञाने – इत्यस्यानिटो लुङ्। अरिबलापहाश्रितनन्दनसुमनःप्रियत्वादि गुणसंपत्त्या राजायं विष्णुर्भवेदिन्द्रोऽयं भवेदिति जना उत्पश्यन्तीति निर्ग लितोऽर्थः। राज्ञो विष्णुत्वं दिक्पालांशकत्वेन देवेन्द्रत्वं च शास्त्रसिद्धमित्यु त्प्रेक्षेयमौचित्यं परिपोषयति। अत्रागमः – "ना विष्णुः पृथिवीपतिः"



"सोऽग्निर्भवति वायुश्च सोऽर्कस्सोमस्स धर्मराट्। स कुबेरस्सवरुणस्स महेन्द्रः प्रभावतः" इति। अत्र राजनि तात्रदिन्द्रोपेन्द्रत्वसंभावनया समु त्थितायां द्रव्योत्प्रेक्षायाम् 'अरिबलापह' मित्यादिशब्दगतार्थद्वयात्मक श्लेषस्साम्यसंपादनेन चरितार्थ इति श्लेषानुप्राणितोत्प्रेक्षालङ्कारः॥

कम्पराजस्य नीतिनैपुणं प्रशंसति –

**प्रथितशक्तिरवाप्तफलोदयः**
**प्रगुणयन् पणबन्धमुखान् गुणान्।**
**निपुणधीर्निरपायमुपायवि**
**त्प्रभुरभुङ्क्त नवां नयसम्पदम्॥** ॥ 3 ॥

**प्रथितेति॥** निपुणा कुशला कर्तव्यार्थेषु चतुरतां प्रदर्श्य श्रममन्तरैव फलसाधिकेत्यर्थः। तादृशी धीः बुद्धिः यस्य तथोक्तः। तथाभूतः। किञ्च। उपायान् सामादीनुपायान् सर्वान् विदितवानिति विदेः क्विप्। 'भेदो दण्डस्सामदानमित्युपायचतुष्टयम्' इत्यमरः। उपेक्षया साकं पञ्चेति शुक्रः। केचित्तु मायोपेक्षेन्द्रजालैस्साकं सप्ते त्यपि वदन्ति। "साम दानं च भेदश्च दण्डश्चेति चतुष्टयम्। मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः" इति। देशकालानुगुण्येन यथोचितमेतान् प्रयुज्य फलसम्पादनेऽत्यन्तं समर्थ इति भावः। तादृशः। विशेषणद्वयमिदमुत्तरत्र हेतुतयान्वेति। यतो निपुणधीः यत उपायवित् तत इत्यर्थः। प्रभुः कम्पराजः। कर्ता। पणबन्धः सन्धिः। "पणबन्धस्सन्धि" रिति कौटिल्यः। अतएव कालिदास आह – "पणबन्धमुखान् गुणानजषड्डुपायुङ्क्त समीक्ष्य तत्फलम्" इति। सः मुखम् आदिः येषां ते तथोक्ताः। संध्यादय इत्यर्थः। तान् गुणान् षड्गुणान् 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः' इत्यमरः। प्रगुणान् कुर्वन् प्रगुणयन् देशकालाद्यौचित्येन सम्यक्प्रयुज्य

तेषु सुष्ठु गुणं सम्पादयन्नित्यर्थः। अतएव प्रथिताः प्रसिद्धिं गताः समार्जितयशोवत्य इत्यर्थः। तादृश्यः। शक्तयः प्रभुमन्त्र . . ˎ ˜ ꞉ यस्मिन् तथोक्तः। 'शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इत्यमरः। कोशदण्डबलम् प्रभुशक्तिः। विक्रमबलमुत्साहः पञ्चाङ्गमन्त्रो मन्त्रशक्तिरित्येषां स्वरूपसंक्षेपः। "षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षो रसायनम्" इति माघः। संपादितराज्यबल इति भावः। राज्यं च सप्तप्रकृत्यङ्गम् "स्वामी जनपदोऽमात्यः कोशो दुर्गबलं सुहृत्। राज्यं सप्तप्रकृत्यङ्गं नीतिज्ञास्संप्रचक्षते" इति। अतएव अवाप्ताः प्राप्तः सम्पादितः संसाधित इति यावत्। तादृक् फलानाम् तत्तत्कार्यसिद्धीनाम् उदयः उत्पत्तिः येन तथोक्तः। संसाधितसर्वार्थसंसिद्धिस्सन्नित्यर्थः। अतएव नवाम् नूतनाम् अपूर्वाम् यदा कदापि न दृष्टपूर्वाम् नापि श्रुतपूर्वामित्यर्थः। लोके नीतावर्थसिद्धिवैपरीत्यं सर्वत्र यदा कदापि दृष्टपूर्वमत्र तु न तथेतीयमपूर्वा नीतिरिति भावः। तादृशीम् नयसम्पदम् नीतिसमृद्धिम् आत्माभिवृद्धिपरज्यानिलक्षणाम् "आत्मोदयः परज्यानिर्द्वयं नीतिरितीयती" इति माघः। निरपायम् निराबाधम् सानन्दमित्यर्थः। अनुबभूव अन्वभूत् संप्राप्तवान्। नीतिसमृद्ध्या फलसमृद्धिं स्वहस्तगतामकरोदित्यर्थः। अनुपूर्वात् 'भुजपालनाभ्यवहारयोः' इत्यस्माल्लङ्। 'भुजोऽनवने' इत्यात्मनेपदम्। सामाद्युपायप्रयोगचतुरो बुद्धिमान् स राजा परेषु षड्गुणान् यथोचितमुपयुज्य स्वशक्त्युपचयं कुर्वन् सर्वार्थसिद्धिं स्वहस्तगतां कृत्वा फलसिद्धेः पाक्षिकतां त्याजयन्निरुपममात्मोदयं तदुद्भूतमानन्दातिशयं च निष्प्रतिबन्धमनुबभूवेति तात्पर्यार्थः॥

अस्य राजनीतिचातुरीमेव प्रकथयति—

**असुहृदां सुहृदामिव मण्डले**
**ष्वजनि तेन न किञ्चिदलक्षितम्।**



**प्रहितचारगणेन विवस्वता**
**प्रसृतदीधितिना भुवनेष्विव॥** ॥ 4 ॥

**असुहृदामिति॥** तेन राज्ञा। प्रहिताः प्रेषिताः चरन्ति देशानिति चराः। पचाद्यच्। त एव चाराः गूढपुरुषाः। प्रज्ञादित्वादण्। 'प्रणिधिरपसर्पश्चर स्पशः। चारश्च गूढपुरुषश्च' इत्यमरः। तेषाम् गणः समूहः सः येन तथोक्तः। तथाभूतेन सता। सुहृदाम् मित्त्राणाम् मण्डलेषु देशेषु राष्ट्रेष्विव। 'मण्डलं देशबिम्बयोः' इति सुधा। असुहृदाम् दुर्हृदाम् शत्रूणाम् मण्डलेष्वित्यस्यार्थादाक्षेपः। शत्रुराष्ट्रेष्वित्यर्थः। विवस्वता जगच्चक्षुषा सूर्येण 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः। तेन प्रसृताः व्यापृताः दीधितयः किरणाः येन। तथाविधेन सता। भुवनेषु जगत्स्विव 'अथो जगती लोको विष्टपं भुवनं जगत्' इत्यमरः। तेषु अलक्षितम् चारवीक्षणेन अदृष्टम् अनधिगतम् अज्ञातमिति यावत्। 'राजानश्चारचक्षुषः' इति स्मरणादिति भावः। लक्ष दर्शनाङ्कयोः-कर्मणि क्तः। किञ्चित् ईषत् अल्पम् अणुमात्रमपीत्यर्थः। न नभवति। अमित्त्राणां मित्त्रणां च वृत्तानि सर्वाणि सर्वत्र चारमुखेन क्षणक्षणं स विदितवानिति भावः। अत्र कामन्दकः – "चारान् विचारयेत्तीर्थेष्वात्मनश्च परस्य च। पाषण्डादीनविज्ञातानन्योन्यमितरैरपि" इति। सूर्यो यथा स्वकिरणव्याप्त्या जगत्सर्वमधिगच्छति तद्वदयमपि सर्वत्र स्वचारसंचारणेन सर्वान् तत्तन्मण्डलवृत्तान्तानित्युपमार्थः। सूर्यकिरणानां यथावाऽप्रतिहतप्रसरत्वं सर्वत्र तथास्य चाराणामपि शत्रुमण्डलेष्विति वाक्यार्थगतोपमेयम्। कालिदासोऽप्यतिथिप्रभुमेवमेव वर्णयति - "न तस्य मण्डले राज्ञो न्यस्तप्रणिधिदीधितेः। अदृष्टमभवत्किञ्चिद्व्यभ्रस्येव विवस्वतः" इति॥

'प्रशाधि काञ्चीमनुवर्तितप्रज' इति पूर्वं पित्रा यदुपदिष्टं पितृदेवोऽयं तदक्षरशः परिपालयतीति प्रकृतिरञ्जनं राज्ञ्यस्मिन् प्रस्तौति —

**करपरिग्रहमाचरति प्रभौ**
**मृदुतरं मुदितप्रकृतिर्मही ।**
**विविधसस्यविशेषनिरन्तरा**
**पुलकितेव भृशं समरज्यत ॥ ॥ 5 ॥**

**करेति** ॥ प्रभौ कम्पराजे । चिरात्स्वाभिलषितवरे इति गम्यते । तस्मिन् करस्य बलेः कर्षकादिभ्यो (राज) ग्राह्यधनस्य 'भागधेयः करो बलिः' इत्यमरः । तस्य परिग्रहम् स्वीकारम् । पाणिग्रहणमिति च गम्यते । मृदुतरम् अत्यन्तसुकुमारम् अणुमात्रमपि मनःपीडा यथा न भवति तथा । राज्ञां करग्रहणविषये यथाह मनुः – "नोच्छिन्द्यादात्मनो मूलं परेषां चातितृष्णया । उच्छिन्दन् ह्यात्मनो मूलमात्मानं तांश्च पीडयेत्" इति । पञ्चमवेदस्त्वेवमाह – "यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः । तद्वदर्थान् मनुष्येभ्य आदद्यादविहिंसया" इति । अनुरागवशान्नागरकवृत्त्येति च गम्यते । आचरति कुर्वति प्रजाः रक्षन्नविहिंसया ताभ्यो बलिं गृह्णति सतीत्यर्थः । अनुष्ठितवतीति च गम्यते । मही भूमिः भूसती राज्यलक्ष्मीरिति च गम्यते । मुदिता प्रमोदिता संतोषिता प्रकृतिः पौरवर्गः यस्याः तथोक्ता । (राज्ञा) संतोषितस्वप्रजानीका सतीत्यर्थः । मुदेर्ण्यन्तात्कर्मणि क्तः । 'उदुपधाद्भावादिकर्मणो' रिति पाक्षिकं कित्त्वम् । संतुष्टस्वभावेति च गम्यते । 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे' इत्युभयत्रापि मेदिनी । तथाविधा सती । विविधैः बहुविधैः अनेकरूपैः सस्यविशेषैः सस्यभेदैः वृक्षादिफलभेदैः शमीधान्यशूकधान्यतृणादिधान्यभेदैश्च । निरन्तरा निरवकाशा आच्छादितस्वरूपा अत्यन्तसमृद्धिमतीत्यर्थः । (शमीधान्यं माषमुद्गादि 'माषो मुद्गो राजमाषः कुलत्थश्चणकस्तिलः । काकाण्डश्चीवर इति शमीधान्यगणस्स्मृतः' इति रत्नकोषः । यवगोधूमादिशूकधान्यम् – 'शूकधान्ये यवादयः'



'शालयः कलमाद्याः') इत्यमरः । तृणधान्यानि नीवारश्यामकादीनि 'तृणधान्यानि नीवाराः' इत्यमरः । एवं धान्यभेदा उक्ताः फलभेदाश्च प्रसिद्धाः ।) तथासती । भृशम् अधिकम् अत्यन्तम् सर्वाङ्गेषु सान्द्रं यथा भवति तथा । पुलकिता संजातरोमाञ्चा एकत्र संतोषातिशयात् अन्यत्र रागातिशयाच्च । धृतपुलकाङ्कुरा । इवेति संभावनायाम् । तथाभूतेव समरज्यत गाढमन्वरज्यत भृशं संतोषमनुरागं चानुबभूवेत्यर्थः । संपूर्वात् 'रञ्ज़ रागे' इत्यस्माल्लङ् । चिरात्स्वाभिलषिते भर्तरि संप्राप्ते तत्समागमेन संभृतरागोदयां सर्वाङ्गीणरोमाञ्चवतीं नायिकां भूयसानुकुर्वाणा भूमिरियं ऋद्धिमतीं सस्यसम्पदं तस्मिन् राजनि प्रासूतेति निर्गलितोऽर्थः । प्रजास्सुखमेधयतो राज्ञः कल्पलतेव भूस्सर्वार्थसाधिका भवतीत्यस्मिन्नपि राज्ञि तथा समभवदिति परमार्थः । अतएव भर्तृहरिरेवमाह – "राजन् दुधुक्षसि यदि क्षितिधेनुमेनां । तेनास्य वत्समिव लोकमिमं पुषाण । तस्मिंश्च सम्यगनिशं परिपुष्यमाणे । नानाफलं फलति कल्पलतेव भूमिः ॥" इति । अत्र सस्यनिरन्तरा भूमिः पुलकवतीत्येवं संभाव्यत इति धर्मोत्प्रेक्षा । श्लेषश्च नान्तरीयक इत्युत्प्रेक्षांश एव निलीनो न पृथगलङ्कारव्यवहारतां लभत इत्यवगन्तव्यम् ॥

धौरंधर्यं नाम नायकगुणः कम्पराजे प्रस्तूयते –

**द्रढिमशालिनि भोगमनोहरे**
**कटकधारिणि दानगुणोर्जिते ।**
**नृपतिदोष्णि निवासमुपेत्य भू**
**रलघयत्प्रथमास्पदगौरवम् ॥ ॥ 6 ॥**

**द्रढिमेति** ॥ भूः भूमिः । कर्त्री । दृढस्य भावः द्रढिमा दार्ढ्यम् स्थौल्यम् अन्यत्र काठिन्यं च । कूर्मपृष्ठस्यातिकठिनत्वात् ।

'दृढ स्थूले नितान्ते च प्रगाढे बलवत्यपि' इति मेदिनी। तेन शालते प्रकाशत इति णिनिः। तस्मिन्। भोगैः सुखैः सुखजनकैः स्रक्चन्दनानुलेपनादिभिः अन्यत्र फणाभिः। 'भोगस्तु भोजने वित्ते निर्वेदे पालने सुखे। वनितादिभृतौ राज्ये सर्पस्य फणकाययोः' इति नानार्थरत्नमाला। तैः मनोहरे मनोज्ञे दर्शनीये एकत्र सौष्ठवेन अन्यत्र अतिसुकुमारत्वेन। सर्पफणानामतिकोमलत्वात्। कटकम् वलयम्। तत् धर्तुं शीलमस्येति ताच्छील्ये णिनिः। अन्यत्र अद्रेः मध्यभागः कटकः तद्धारिणि। 'कटकोऽस्त्री नितम्बोऽद्रेर्दन्तिनां दन्तमण्डने। सामुद्रलवणे राजधानीवलययोरपि' इति मेदिनी। दानगुणः दानम् अर्थिभ्योऽभिलषितार्थप्रदानम्। अन्यत्र करिणां मदः। 'दानं गजमदे त्यागे पालनच्छेदशुद्धिषु' इति विश्वः। तेन ऊर्जिते उदारे महति दानवीरे इत्यर्थः। अन्यत्र बलवति। दन्तिनां मदस्य तेजोऽभिवर्धकत्वादेवमुक्तिः। नृपतेः राज्ञः दोः बाहुः तथोक्तः। 'भुजबाहू प्रवेष्टो दोस्स्यात्' इत्यमरः। तस्मिन् निवासम् वसतिम् स्वस्य स्थितिम्। उपेत्य प्राप्य। प्रथमास्पदानि प्रथमस्थानानि आदौ स्वाश्रयतया समधिगतानि आदिकूर्मशेषकुलाचलदिग्गजरूपाणि। तेषाम् गौरवम् गुरुता भारः तत् अलघयत् लघूचकार। अलङ्कारमात्रेण तत्र स्थित्वा स्ववहनभारं सर्वमत्रैव निचिक्षेपेति भावः। स्ववहनेन तेषां यद् गौरवं (लोके पूज्यतातिशयः) तदसत्कल्पं चकारेत्यर्थान्तरम्। व्यष्टचा कूर्मादिषु ये दाढर्चादयो महान्तो गुणा वर्तन्ते ते सर्वेऽप्यत्र कम्पराजभुजे सङ्घीभूय वर्तन्त इत्यस्मिन्नतिशयप्रीतिमती स्वस्य प्रथमास्पदेषु कूर्मादिषु यद् गौरवं तत् लघु अकरोत् तस्य लाघवं जनयामासेत्यप्यर्थान्तरम्। नात्यन्तं तत्र प्रीतिमती बभूवेति भावः। अतएव तेभ्योऽतिशायी कम्पराजभुज इति व्यतिरेको ध्वन्यते। कम्पराजभुजसमाश्लिष्टा भूसती महदननुभूतपूर्वं सुखमनुभवन्ती पूर्वं स्वाश्रयभूतेभ्यः कूर्मादिभ्यस्स्वस्य संजातं सुखं सुखमिति नैव गणयामासेति



तात्पर्यार्थः। अत्र प्रथमास्पदगौरवं लघूचकारेति वाक्यार्थे 'द्रढिमशालि' नीत्यादयः पदार्थाः विशेषणगत्या हेतुतामगमन्निति काव्यलिङ्गमलङ्कारः। श्लेषश्चास्य जीवातुरिति श्लेषेण सङ्कीर्यते चायम्॥

राज्ञो वैभवसमृद्धिं प्रब्रूते –

**नरपतेः प्रतिहारमहीं मुहु**
**र्विजयदन्तिमदोदकपङ्किलाम्।**
**क्षितिभुजां भुजभूषणघट्टन**
**प्रसृमरो मणिरेणुरशोषयत्॥** ॥ 7 ॥

**नरपतेरिति**॥ क्षितिभुजाम् राज्ञाम् कम्पराजसेवार्थमागतानामित्यर्थः। (तेषाम्) भुजानां भूषणानि अलंकाराः केयूरादयः तेषाम् घट्टनम् संघर्षः परस्परसम्मर्दनम् तेन प्रसृमरः सुष्ठु प्रसरणशीलः सर्वतो व्याप्नुवदिति यावत्। 'सृघस्यदः क्मरच्' इति ताच्छीलिकः क्मरच्। तादृक् मणिरेणुः रत्नानां परागः। सः कर्ता। नरपतेः राज्ञः विजयदन्तिनः जयसिन्धुराः गन्धगजाः उपदाप्रदानार्थं राजभिरानीताः। तेषाम् मदोदकम् दानजलम्, तेन पङ्किलाम् पङ्कवतीम् कर्दमयुताम्। 'निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ' इत्यमरः। पिच्छादित्वादिलच्। तथाविधाम् प्रतिहारमहीम् द्वारभूमिम्। मुहुः पुनः पुनः। अशोषयत् अतापयत्। शुष्कामकरोत्। शुष शोषणे – ण्यन्ताल्लङ्। राजानं सेवितुं द्वारभूमिषु प्रतीक्षमाणा राजानस्तत्र स्थातुमप्यवकाशमलभमानास्संख्यातिगा वर्तन्ते। उपदादानार्थं तैरानीता मदगजाश्च तत्र गृहाङ्गनेषु बद्धास्स्वमदधारास्रावैर्द्वारभूमीरार्द्रीकुर्वन्ति। तदानीं तद्राजसेवकानां परस्परसम्मर्दनगलितास्तदलङ्कृतभूषणरत्नपरागराशयश्च तदार्द्रीभावं शमयन्तीत्यस्य राज्ञो वैभवसमृद्धिर्वर्णिता। अतएवायमुदात्तालङ्कारः॥

" धर्मैकायत्तचित्तत्वं धार्मिकत्वमुदाहृतमिति यदुक्तं तदस्मिन् वर्ण्यते —

**अहरहर्नृपतेः पदपीठिका**
**तटसमुल्लिखितैरलिकस्थलैः ।**
**पुनरिवार्पितभाग्यमयाक्षरै**
**रजनि वैरमुचामवनीभुजाम् ॥ ॥ 8 ॥**

**अहरिति** ॥ अहः अहः दिने दिने ' नित्यवीप्सयो ' रिति वीप्सायां द्वित्वम् । नृपतेः राज्ञः । पदपीठिका राज्ञां पादविन्यासार्थे निक्षिप्तम् उपपीठम् उपसिंहासनमित्यर्थः । अतएव मृणालीत्यादाविव विवक्षापचये पीठशब्दस्य स्त्रीलिङ्गता । अतएव ' पत्युः काकतिनाथस्य पादपीठीमनारत ' मिति प्रतापरुद्रीयपद्यव्याख्यावसरे कुमारस्वामिसोमपीथिना " पादपीठी " मिति । अल्पं पीठम् पीठी गौरादित्वात् ङीष् । अतएवोक्तममरकोशे – ' स्त्री स्यात्काचिन्मृणालादिर्विवक्षापचये यदी ' ति । बाहुल्यप्रतीतिः प्रयोजनमित्याह । " यद्यपि ' पीठमासन ' मित्यमरः । ' विष्टरः पीठमस्त्रियाम् ' इति त्रिकाण्डशेषः । तथाप्यपचयत्वाविवक्षायां तथेति तत्तात्पर्यमत्रगन्तव्यम् । मृणालादिरित्यत्रादिशब्देन पीठशब्दोऽपि ग्राह्य इति स्पष्टं व्याचख्यौ लिङ्गाभट्टीयकारः । पीठ्येव पीठिका । स्वार्थे कः । ह्रस्वः । पदस्य पीठिकेति विग्रहः । ' पदं शब्दे च वाक्ये च व्यवसायापदेशयोः । पादतच्चिह्नयो स्थानत्राणयोरङ्कवस्तुनोः ' इति विश्वः । तस्याः तटम् उन्नतप्रदेशः तस्मिन् समुल्लिखितैः संघट्टनेन तनूकृतैः लिखितैरिति च गम्यते । वैरं मुमुचुरिति क्विप् । वैरमुचाम् त्यक्तवैराणाम् वैरं विहाय कृतस्नेहानाम् शरणागतानामिति यावत् । अवनीभुजाम् शत्रुराजानाम् अलिकस्थलैः फालभागैः । कर्तृभिः । पुनः भूयः नूतनतयेत्यर्थः । अर्पितानि न्यस्तानि लिखितानीति यावत् । भाग्यमयानि



भागधेयरूपाणि । स्वार्थे मयट् । अक्षराणि वर्णाः लिप्याकारेण धृतमूर्तीनि भागधेयानीति यावत् । तादृशानि तानि येषु तथोक्तानि । अदृष्टपरिणामिमहैश्वर्यादिभोगजनकाक्षरविन्यासवन्तीति भावः । तथाविधैरिवेत्युत्प्रेक्षा । अजनि अभावि । जनी प्रादुर्भावे लुङ् । ' दीपजनबु ' धेति पक्षे चिण् । ' चिणो लु ' गिति तस्य लुक् । स्वशत्रूनपि शरणागतान् तद्राज्यदानादिना परमनुगृह्णन् पूर्वं ब्रह्मणा यल्लिखितमभूददृष्टहीना एते भवन्त्विति तां लिपिं परिमृज्य पुनरन्यथा समुल्लिख्य, तत्कृतस्वसेवायाः फलतया तानदृष्टभाजः कुर्वन् स्वलिखितलिपेरर्थवत्तां सम्पादयति कम्पराज एतेषु राजस्वित्युत्प्रेक्षार्थः । ब्रह्माणमप्यतिशेतेऽयं स्वमहिमत इत्यतः कारणजन्मायं रामादिवदिति वस्तु ध्वन्यते । श्रीहर्षस्तावन्नलवर्णनावसरे – " अयं दरिद्रो भवितेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् । मृषा न चक्रेऽल्पितकल्पपादपः प्रणीय दारिद्र्यदरिद्रतां नलः " इत्युक्तवान् । अत्र नलोऽयं ब्रह्मलिखितस्यार्थवत्तां यथाकथमपि सम्पादयितुमेव प्रभवति । नान्यथा कर्तुम् । अयं तु कम्पराजोऽपरब्रह्मेवान्यथा कृत्वा स्वलिखितं फलयतीति नलाद्विशिष्टः प्राभवातिशयेनेति विशेषः । शात्रवास्सर्वेऽस्मिन् वैरफलमनुपलभमाना एतत्पराक्रमभीता गतव्रीडास्तं नित्यं संसेवन्ते। अयमपि तेषु वैरं विस्मृत्य कृपया मित्त्राणीवताननुगृह्णाति भाग्यभोग्यैरिति राज्ञोऽस्य शरणागतत्राणपरायणत्वं प्रकथ्यते । अत्र वैरिफालफलकेषु भाग्यमयाक्षरवत्त्वं संभाव्यत इति धर्मस्वरूपोत्प्रेक्षेयम् ॥

"विश्वम्भराधिपत्यं यत्तन्महाभाग्यमुच्यत" इत्येतल्लक्षणलक्षितं महाभाग्यवत्त्वमस्मिन्नुपश्लोकयति —

**मगधमालवसेमर्णसिंहल**
**द्रमिलकेरलगौलमुखैर्नृपैः ।**
**अवसराप्तिपरैरनुवासरं**
**रुरुधिरे प्रतिहारभुवः प्रभोः ॥ ॥ 9 ॥**

**मगधेति ॥** अनुवासरम् प्रतिदिनम् । वीप्सायाम् यथार्थेऽव्ययीभावः । अवसरः राजसेवासमयः तस्य आप्तिः लब्धिः प्राप्तिः तस्याम् पराः आसक्ताः तदेकायत्तचित्ता इत्यर्थः । तैः सेवायास्समुचितं कालं प्रतीक्षमाणैरेव कालं नयद्भिरित्यर्थः । मगधानां राजा मागधः । 'जनपदशब्दा' दित्यञ् । मालवः मालवानां राजा । अञ् । अत्र 'सेवुण ... गौड' इति परिष्कर्तृभिस्संस्कृतः पाठः । देशनामस्वित्थमेवेति नैवाग्रहः कर्तव्य इति मातृकापाठ एवादृतः । विद्यानाथस्तु स्वप्रतापरुद्रीये - 'काम्बोजाः क्षतकुम्भिनीपरिचयाः प्राप्तव्रणास्सेवणाः । गौडाः पीडितविग्रहाः' इति "सेवणाः" "गौडाः" इति शब्दद्वयमनुप्रासजुष्टं निर्धारकतया प्रायुङ्क्त । अत एवमेव तद्देशनामभ्यां भवितव्यम् । डलयोरैक्यात् 'गौल' शब्दोऽपि साधीयान् । सिंहलः सिंहलानां राजा । द्रमिडः द्रविडानां राजा । द्रमिडद्रविडशब्दावुभावपि साधू । 'द्रामिडो द्रमिडश्चापि द्रविडो द्राविडस्तथा' इति श्रीहर्षः। केरलः केरलानां राजा । गौलः गौडानां राजा । अत्र सर्वत्र 'कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम्' इत्यञो लुक् । एते मुखम् आदिः येषां तथोक्तैः । अन्यैरपि तादृशैः सर्वैर्नृपैरिति यावत् । तैः । नृपैः नरपतिभिः । कर्तृभिः । प्रभोः स्वामिनः कम्पनस्य । प्रतिहारभुवः (राज) द्वारभूमयः । कर्म । 'उपसर्गस्य घ' ञीति पाक्षिको दीर्घाभावः । ताः । रुरुधिरे आव्रियन्त निरवकाशाः कृताः । रुधिर् अवरणे - कर्मणि लिट् । राजद्वाराणि सर्वाणि सेवावसरप्रतीक्षिभिर्नरपतिभिस्समावृतानि भूत्वा सिकतारेणुपतनस्यापि नैवावकाशं ददिरे इति राजायं विश्वम्भराधिपत्येन श्लाघ्यते ॥

मागधस्तुत्यादिराजलाञ्छनानि प्रकथ्यन्ते —

**परिसरद्वयचामरधारिणी**
**कनककङ्कणरिङ्खणनिस्वनः ।**



**आशमयन्नृपतेर्बिरुदावली**
**मुखरमागधमण्डलवैखरीम् ॥** ॥ 10 ॥

**परिसरेति ॥** परिसरः पर्यन्तभूः राज्ञस्समीपप्रदेशः । तस्य द्वयम् द्व्यवयवकसमुदायः उभौ पार्श्वप्रदेशावित्यर्थः । तस्मिन् चामरधारिण्यः चामरग्राहिण्यः किरातस्त्रियः । 'क्िराती चामरधरा यवनी शस्त्रधारिणी' इति शब्दार्णवः । तासाम् कनककङ्कणानि सुवर्णवलयानि । 'कङ्कणं करभूषणम्' 'कटको वलयोऽस्त्रियाम्' इति भेदेन 'कङ्कणवलय' शब्दौ व्यवहरन्नमरसिंहस्तथापि 'वलयः कण्ठरोगे ना कङ्कणे पुंनपुंसकम्' इति मेदिनीतो न विरुद्धा वलयार्थकता कङ्कणस्य । तेषाम् रिङ्खणम् स्खलनं तत इतस्संचलनम् 'रिङ्खणं स्खलनं समे' इत्यमरः । 'रिङ्गण' मिति तु पाठान्तरम् । रिगि गतौ – भावे ल्युट् । तस्मात् निस्वनः तज्जनितो ध्वनिः । कर्ता । नृपतेः राज्ञः बिरुदावल्यः काव्यविशेषाः । तल्लक्षणं त्वेवम् – "वर्ण्यमानाङ्कबिरुदवर्णनप्रचुरोज्ज्वला । वाक्याडम्बरसंयुक्ता सा मता बिरुदावली" इति । ताभिः मुखम् आननम् तत्स्थत्वाद्वागपि मुखम् । तदेषामस्तीति मुखराः वाचकाः । 'रप्रकरणे मुखकुञ्जेभ्यो रः' इति रः । बिरुदावलीनां पाठका इत्यर्थः । तथाविधाः मागधाः वंशशंसकाः राज्ञः स्तुतिपाठकविशेषाः । तद्भेदाश्चैवं वर्णिताः – 'सूताः पौराणिकाः प्रोक्ताः मागधा वंशशंसकाः । वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः' इति । तेषाम् मण्डलम् समूहः । अनेन ध्वनेरुच्चैस्त्वं प्रतिपाद्यते । तस्य वैखरीम् वाचम् नादरूपाम्। सर्वैर्मिलित्वा युगपद् गीयमानतया महता संरम्भेण समुद्भूतामिति भावः । मौखिकवाय्वभिव्यङ्ग्यस्सर्वश्रुतिगोचर स्थूलशब्दो वैखरीति पदार्थलक्षणसंग्रहकाराः । ताम् कर्म । अशमयत् उपशमयाञ्चकार आच्छादयामासेत्यर्थः । शमेर्ण्यन्ताल्लङ् । 'शमोऽदर्शने' इति मित्वा

दुपधाह्रस्वः । तदानीं चामरधारिणीकङ्कणाराव एव भृशं श्रूयते नतु मागधानां स्तुतिपठनमितिवर्णना कङ्कणध्वनेराधिक्यमवगमयन्ती गीतस्य तालमिव स्तुतिपाठानां तेषां तालभावमस्य ध्वनयति ॥

कम्पराजस्य विद्वद्गोष्ठीरसिकतां प्रस्तौति—

**चतुरचङ्क्रमचारुसरस्वती**
**चरणनूपुरशिञ्जितमञ्जुलैः ।**
**भृशमरज्यत कम्पमहीपति**
**स्सदसि सत्कविसूक्तिसुधारसैः ॥** ॥ 11 ॥

**चतुरेति ॥** चतुरम् निपुणम् यथा तथा । चङ्क्रमाः पुनः पुनः पादविन्यासाः सविलासनर्तनमिति यावत् । तैः चारू सुन्दरौ दर्शनीयौ सरस्वत्याः भाषादेव्याः चरणौ अङ्घ्री तयोः नूपुरे तत्र धृते पादाङ्गदे । 'पादाङ्गदे तुलाकोटिर्मञ्जरी नूपुरोऽस्त्रियाम्' इत्यमरः । तयोः शिञ्जितम् ध्वनिः । 'अथ मर्मरः । स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम्' इत्यमरः । तद्वत् मञ्जुलैः मनोहरैः श्राव्यैः । सत्कवयः महाकवयः । 'सन्मह' दिति समासः । तेषाम् सूक्तयः शोभना वाचः रसमय्यो गिरः ता एव सुधारसाः अमृतद्रवाः अमृतप्रवाहा इति यावत् । तैः करणभूतैः । सदसि सभासु विद्वद्गोष्ठीषु । जातावेकवचनम् । भृशम् गाढम् अरज्यत आमोदत । रञ्जेर्लङ् । नलोपश्च । सुधाप्रवाहनिमग्न इव स महान्तमानन्दमनुबभूवेत्यर्थः । "विद्वानेव विजानाति विद्वज्जनपरिश्रम" मिति न्यायेन विद्वत्प्रभुत्वादस्येति भावः । प्रसादगुणभरितैर्मृदुमधुरस्ववाग्वैभवैर्विद्वत्प्रभुममुमानन्दयन् विद्वत्प्रवरा महाकवयः । सोऽपि साहितीरसिकतया परं पारवश्यमवाप्य यथोचितं तान् संभावयामासेति तात्पर्यार्थः । एतेन '(संगीत) साहित्यार्णव' इति बिरुदमस्य सर्वथार्थवदिति



ज्ञायते । अत्र सूक्तिषु सुधारसत्वरूपणे साम्यसंपादनेन चरितार्था 'सरस्वतीनूपुरशिञ्जितमञ्जुलै' रित्युपमा रूपकेणाङ्गभावमनुभवन्ती तेन साकं संकीर्यते । पाण्डित्यं नाम नायकगुणोऽत्र प्रस्तूयते । तल्लक्षणं तु – 'सर्वविद्याधिकत्वं यत्पाण्डित्यं तदुदाहृतम्' इति ॥

साहितीरसज्ञतामस्य पूर्वमुपवर्ण्य संगीतपाण्डित्यमप्यस्मिन् वर्णयन्ती 'गानपरममाहेश्वर' इत्येतदीयबिरुदनामास्मिन्नर्थवत्तामापेति कीर्तयति —

**तरलिताङ्गुलिताडितवल्लकी**
**निरततानिनिरन्तरितैस्स्वरैः ।**
**जगुरमुष्य जगत्प्रथितं यशो**
**गमकभङ्गितरङ्गितमङ्गनाः ॥** ॥ 12 ॥

**तरलितेति ॥** अङ्गनाः सुन्दर्यः स्त्रियः । 'अङ्गात्कल्याण' इति नः । तरलिताः चलिताः अङ्गुलयः करशाखाः ताभिः ताडिता वादिता वल्लकी वीणा । 'वीणा तु वल्लकी विपञ्ची' इत्यमरः । तस्याः निरततानानि अविच्छिन्नानि तानानि अविश्रान्ततया प्रवृत्ताः गानाङ्गविशेषाः इत्यर्थः । 'कश्चन गानाङ्गविशेषस्तान' मिति केशवः । भरतस्तु – 'ग्रामद्वयशुद्धचतुर्दशमूलमूर्छनाभेदाः षाडवौडवमार्गसंयुक्ता स्ताननामका बहुविधा भवन्तीत्याह । तैः । निरन्तरिताः निरवकाशवन्तः कृताः अव्यवहिताः एतदुत्तरकाल एव भाविन इति यावत् । तैः । (तथाविधैः) स्वरैः षड्जादिध्वनिभिः दारववीणोत्थितैस्सप्तभिरित्यर्थः । वीणा च द्विविधा दारववीणा गात्रवीणा चेति । अत एवाहामरसिंहः – 'निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थितास्स्वराः' इति । स्वरलक्षणं त्वेवमुक्तमन्यत्र "श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः । स्वतो रञ्जयति

श्रोतुश्चित्तं स स्वर उच्यते ' इति। विशदीकृतं च तदेवेत्थम् — " श्रुतिभ्यस्स्युस्स्वराष्षड्जर्षभगान्धारमध्यमाः। पञ्चमो धैवतश्चाथ निषाद इति सप्त ते। तेषां संज्ञास्सरिगमपधनीत्यपरा मताः ' इति। तैः करणभूतैः। गमकभङ्ग्यः कम्पसहितस्वनरीतयः तासाम् तरङ्गाः तरङ्गवदनुगताः परम्पराः तद्वन्तः कृतास्तथोक्ताः। तथाभूतं यथा तथा। चित्रविचित्रतया पञ्चविधान् गमकान् स्वरैस्साकं गाने संयोजयन्त्य इत्यर्थः। गमकलक्षणं त्वेवमुक्तमन्यत्र - " स्वनस्सकम्पो गमकस्स च पञ्चविधः स्मृतः " इति। (एवम्) अमुष्य राज्ञः। जगत्प्रथितम् लोकविश्रुतम् आबालगोपालं सर्वजनैर्विदितम्। यशः कीर्तिम्। कर्म। जगुः चकुः अगायन्। कैगै शब्दे - लिट्। कलावत्यः स्त्रियो वीणावादने स्वनैपुणं प्रदर्श्य गानपरममाहेश्वरं तं रञ्जयित्वा स्वगानकलां चरितार्थामकुर्वन्निति सारांशः॥

आस्थानगोष्ठ्यः पूर्वं वर्णिताः। इदानीमन्तःपुरगोष्ठ्यो वर्ण्यन्ते। किञ्च ' संगीतसाहित्यार्णव ' इत्येतदीयपौरुषनामन्सस्साकल्येनार्थवत्तां संघटयितुं पूर्वं साहितीरासिक्यं गानरासिक्यं चास्य प्रस्तुत्य नृत्तवाद्यरसज्ञतामधुना प्रक्रथयति—

**उचिततालमुदञ्चितविभ्रमं**
**चतुरचारिचमत्कृतसौष्ठवम्।**
**मुहुरसाववरोधमृगीदृशां**
**मुखरसोज्ज्वलमैक्षत नर्तनम्॥** ॥ 13 ॥

**उचितेति॥** असौ प्रकृतो राजा। कर्ता। उचितः गीतादेः अर्हः तालः अङ्गुलिविन्यासादीनां कालक्रियापरिमाणरूपः। ' तालः कालक्रियामानम् ' इत्यमरः। अयम् — ' कालो लघ्वादिमितया क्रियया सम्मितो मितिम्। गीतादेर्विदधत्तालः ' इत्यन्यत्र प्रपञ्चितः। सः यस्मिन्



तथोक्तम्। तथाभूतं यथा तथा। किञ्च। उदञ्चिताः महान्तः सहृदयरञ्जका इत्यर्थः। तादृशाः विभ्रमाः विलासाः भावानुकारिभ्रूविक्षेपादयः यस्मिन् तथोक्तम्। तथाभूतं यथा तथा। किञ्च। चतुराः निपुणाः कौशलेन प्रदर्शिता इत्यर्थः। तादृशाः चारयः गतिभेदयुक्तनृत्यक्रीडाः। " एकपादप्रचारो यस्स चारीत्यभिधीयत " इति भरतः। तत्र चमत्कृतानि चमत्काराः सुखदुःखोद्भूतानन्दैर्हठोत्थितचित्तविक्रियाः ससीत्कारशरीरोल्लसनादिकृतश्रमत्कारशब्दवाच्याः। चमदित्यव्ययम्। आश्चर्यानुकरणवाचि। कृतमिति भावे क्तः स्वरूपपरः। तेषाम् सौष्ठवम् सौभाग्यम् यस्मिन् तथोक्तम्। तथाभूतं यथा तथा। किञ्च। मुखानि ( नर्तकीनाम् ) आननानि। तेषाम् रसः अनुरागः तज्जन्यः प्रसादः तेन उज्ज्वलम् कान्तिमत् (सरस) रञ्जकमुखप्रसादवदिति यावत्। तथाभूतं यथा भवति तथा। मुखप्रसन्नता च नर्तक्याः अवश्यंभावि प्रधानलक्षणमिति नाट्यागमज्ञाः। नर्तकीलक्षणं चैवमभिहितम् — " तन्वी रूपवती श्यामा पीनोन्नतपयोधरा प्रगल्भा सरसा चित्रा कुशला ग्रहमोक्षयोः॥ चारीताललयाभिज्ञा मण्डलादिविचक्षणा। नातिस्थूला नातिकृशा नात्युच्चा नातिवामना। सुदीर्घलोचना गीतावाद्यतालानुवर्तिनी। परार्थ्यभूषासंपन्ना प्रसन्नमुखपङ्कजा॥ भावहावविलासाढ्या नर्तकी स्याज्जितश्रमा। " इति। ( एवम् ) अवरोधमृगीदृशाम् अन्तःपुरसुन्दरीणाम् ' स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्। शुद्धान्तश्चावरोधश्च ' इत्यमरः। नर्तनम् नृत्यम्। कर्म। मुहुः पुनः पुनः। रसज्ञत्वेन तत्र तृप्तिमलभमान इति भावः। ऐक्षत अपश्यत्। ईक्ष दर्शने – लङ्। आटश्चेति वृद्धिः। शुद्धान्तसुन्दर्यः कम्पराजसविधे तं रञ्जयितुं पादाभ्यां तालं ददत्यस्सविलासं हस्तसंज्ञाभ्रूविक्षेपादिभिर्भावं प्रकाशयन्त्यः कटाक्षपातमुखप्रसन्नतादिभिः काममुद्दीपयन्त्यश्चारीभ्रमणैर्विस्मयमावहन्त्यो ननृतुः। रसज्ञशिरोमणिस्स च तदीक्षणेन नैव तृप्तिमालभतेति परमार्थः। नर्तनं प्रति

तत्कलाभिज्ञा एवमाहुः – " अङ्गैरालापयेद् गीतं हस्तेनार्थं प्रदर्शयेत् । दृष्टिभ्यां भावयेद्भावं पादाभ्यां तालनिर्णयः । यतो हस्तस्ततो दृष्टिर्यतो दृष्टिस्ततो मनः । यतो मनस्ततो भावो यतो भावस्ततो मनः " इति ॥

कलाभिज्ञत्वमस्मिन् प्रस्तूय तृतीयपुरुषार्थानुभूतिं वर्णयितुकामा तदङ्गतया भाविनि ऋतुवर्णने प्रथममवतरिष्यतो ग्रीष्मस्य द्वारीकरोत्याखेटम्—

**हततरक्षु परिक्षतसैरिभं**
**मृदितरङ्कु निषूदितसूकरम् ।**
**ग्लपितखड्गि गृहीतमतङ्गजं**
**वनमसौ मृगयासु मुहुर्व्यधात् ॥** ॥ 14 ॥

**हतेति** ॥ असौ राजा । मृगयासु आखेटेषु 'आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रिया' मित्यमरः । वनम् अरण्यानि । जातावेकवचनम् । मुहुः पुनः पुनः । हताः आहताः संहृताः तरक्षवः क्षुद्रशार्दूलाः 'तरक्षुस्तु मृगादनः' इत्यमरः । ते । यस्मिन् तथोक्तम् । तथाभूतं यथा तथा । उत्तरत्राप्येवम् । किञ्च । परिक्षताः व्रणिताः सुष्ठु हिंसिताः । क्षणु हिंसायाम् - क्तः । अनुनासिकलोपः । सैरिभाः महिषाः यस्मिन् तथा । 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः । किञ्च । मृदिताः संचूर्णिताः रङ्कवः मृगभेदाः । 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः' इत्यमरः । ते यस्मिन् तथा । किञ्च । निषूदिताः नाशिताः सूकराः वराहाः यस्मिन् तथा । ग्लपिताः तापिताः । ( ग्लै हर्षक्षये – ण्यन्तात् क्तः । 'ग्लास्नावनुवमां चे' ति मित्त्वविकल्पात्पक्षे ह्रस्वः । ) तथाविधाः खड्गिनः खड्गमृगाः यस्मिन् तथा । 'गण्डके खड्गखड्गिनौ' इत्यमरः । किञ्च । गृहीताः स्वीकृताः



बन्धिताः नतु हताः । युद्धादन्यत्र करिणां वधे प्रत्यवायश्रवणात् । यथाह चाक्षुषः – " लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् " इति । अतएव कालिदासः " नृपतेः प्रतिषिद्धमेव तत्कृतवान् पङ्क्तिरथो विलङ्घ्य यत् । अपथे पथमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः " इति दशरथमनिन्दत् । तादृशः मतङ्गजाः गजाः यस्मिन् तथा । 'मतङ्गजो गजो नागः' इत्यमरः । व्यधात् व्यतनोत् अकरोत् । कृतौ करोत्यावहति विदधात्यादधाति च । वितनोत्यात्मने पञ्च " इति भट्टमल्लः । विपूर्वात् डुधाञो लुङ् । 'गातिस्थेति' सिचो लुक् । क्रूरमृगास्पदानि प्रजोपद्रवकारीणि वनान्यटित्वाटित्वा तदुपद्रवेभ्यस्स्वप्रजा मृगयाव्याजेन राजा ररक्षेति परमार्थः । मृगयाव्यसनमेव राज्ञो निषिध्यते । ननु मृगयेति पूर्वमुक्तम् । मृगयायाः प्रयोजनानि वर्णितानि राज्ञां कालिदासेन – " परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिङ्गितबोधनम् । श्रमजयात्प्रगुणा च करोत्यसौ तनुमतोऽनुमतस्सचिवैर्ययौ ॥ " इति । तथापि प्राणोपद्रवकारिणीयमिति प्रजारक्षणादिप्रयोजनं विना न तत्र प्रवर्तेत राजेत्यवगन्तव्यम् ॥

ऋतून् वर्णयन्ती ग्रीष्मर्तुं प्रथमतोऽवतारयति—

**अथ सुगन्धिहिमान् व्यजनानिलान्**
**मृगदृशः कृतचन्दनर्चर्चिकाः ।**
**शशिमतीश्च निशाः प्रियतां नय**
**न्नरपतेरुदभूदृतुरूष्मलः ॥** ॥ 15 ॥

**अथेति** ॥ अथ अनन्तरम् गते वसन्ते इत्यर्थः । ऊष्मलः ऋतुः ग्रीष्मर्तुः । ऊष्मः घर्मः अस्मिन्नस्तीति सिध्मादित्वाल्लः । ,... वर्ध्मफेनोष्मपर्ण' मिति गणरत्नमहोदधिरेनं सिध्मादिषु पपाठ । " धनुष्मन्तौ वत्सौ दशमुखभुजैरूष्मलतमा " इत्युदाजहार च । 'ऊष्मो

घर्मेऽश्रुणि तथा ज्येष्ठे ऊष्मा स्त्रियां त्विषि' इति वोपालितः। ऊष रुजायाम् – 'अन्येभ्य इति मनिक्। मकि बाहुलकाददन्तोऽपि। शोभनः आह्लादकः गन्धः परिमलः येषां सुगन्धिनः। 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इति समासान्त इत्। (तान्) सुगन्धातिशयवतः। तादृशान् हिमान् शीतलान्। 'हिमं तुषारमलयोद्भवयोस्स्यान्नपुंसकम्। शीतले वाच्यलिङ्गः' इति मेदिनी। व्यजनानि तालवृन्तकानि वीजनसाधनानि। 'व्यजनं तालवृन्तक' मित्यमरः। तेषाम् अनिलान् वायून्। जन्यजनकभावे षष्ठी। तदुद्भवान् वायून्। भृशमातपादिना परितप्यमानस्य शीतलसुगन्धवाय्वपेक्षा भवत्यस्मिन्नित्येवमुक्तिः। किञ्च। कृता विहिता रचिता धृतेति यावत्। 'कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु' इति मेदिनी। तादृशी चन्दनचर्चिका गन्धसारविलेपनं यैः तथोक्ताः। 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः। तथाविधाः। मृगीदृशः सुन्दरीः। अनेन स्तनधृतचन्दनानुलेपाः स्त्रिय इत्युक्तं भवति। 'कूपोदकं वटच्छाया ताम्बूलं तरुणीस्तनम्। शीतकाले भवेदुष्णमुष्णकाले च शीतल' मिति तासां कुचा एव तदानीं शीतलास्सति चन्दनानुलेपे किमुतेत्यादरातिशयोऽत्र कथ्यते। किञ्च। शशिमतीः – शशी चन्द्रः सः आसु अस्तीति प्रशंसायां मतुप्। प्रशस्तचन्द्राः दिवसतापापनोदनेन भृशमाह्लादकश्चन्द्र इदानीं भवतीति प्राशस्त्यमेतस्य। तादृशीः निशाः रात्रीः। कर्म। अत्र सर्वत्राविवक्षितकरणविशेषत्वेन 'अकथितं चे' ति कर्मत्वम्। च समुच्चये। तैः ताभिः ताभिश्चेत्यर्थः। नरपतेः राज्ञः। प्रियताम् प्रीतिम्। प्रधाने कर्मणि द्वितीया। ताम्। नयन् आपादयन् नयतिरयं द्विकर्मकः। "दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्। कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्" इति द्विकर्मकेषु परिगणितत्वात्। तादृशस्सन्। उदभूत् उदियाय अवातरत् समागच्छदित्यर्थः। ग्रीष्मे दिवसतापितो राजा सुगन्धिशीतलान् वायूनुद्वमद्भिर्व्यजनैर्वीज्यमानश्चन्दनानुलिप्ताभिः कान्ताकुचतटीभिर्गाढं परिष्वज्यमानश्चन्द्रोदयेन सुप्रसन्नासु सुधामयीषु रात्रिषु विहरमाणस्तापं जहत्परं सुखमवापेति परमार्थः॥



ग्रीष्मदिवसा वर्ण्यन्ते —

**विकचपाटलगन्धिसमीरणै**
**स्सलिलकेलिपरायणयौवतैः।**
**अजनि दैर्घ्यहरैरधिकोल्लस**
**द्रविमहोभिरहोभिरभूयत॥** ॥ 16 ॥

**विकचेति**॥ पाटलायाः पुष्पाणि पाटलानि। बिल्वादित्वादण्। 'पुष्पमूलेषु बहुल' मिति बहुलग्रहणान्न लुक्। विकचानि विकसितानि पाटलानि पाटलपुष्पाणि तथोक्तानि। तेषाम् गन्धः आमोदः स एषामस्तीति तथोक्ताः। सर्वधनादित्वादिनिः। तादृशः समीरणाः वायवः येषु तथोक्ताः। 'समीरमारुतमरुज्जगत्प्राणसमीरणा' इत्यमरः। तैः। किञ्च। सलिलकेलयः जलक्रीडाः तासु परायणानि आसक्तानि आतपतापेन सदा कुतूहलवन्ति यौवतानि युवतिसमूहाः तरुणीजनः येषु तैः। भिक्षादित्वात् सामूहिकोऽण्। तैः। किञ्च। रजनिः रात्रिः तस्याः दैर्घ्यम् आयामः विस्तारः अन्यर्तुषु दृश्यमान इत्यर्थः। तस्य हरैः अपहारकैः तद्ध्वर्धमानैः। ग्रीष्मे रात्रीणां ह्रासः दिवसस्य वृद्धिश्च प्रत्यक्षं दृश्यते। अत एवमुक्तिः। किञ्च। (इदमेव न) अधिकम् सर्वोत्कृष्टं यथा तथा उल्लसन्ति प्रकाशमानानि रविमहांसि सूर्यतेजांसि येषु तैः। सूर्यकिरणास्तदानीमत्यन्तं दीप्तिमन्तो जगद्भासयन्तीत्येवं कथ्यते। तथाविधैः अहोभिः दिनैः। कर्तृभिः। अभूयत अभावि अवृत्यत। भू सत्तायाम्। भावे लङ्। ग्रीष्मे पाटलाः पुष्प्यन्ति। तेषां संसर्गेण वाता दिक्षु सौरभ

घर्मेऽश्रुणि तथा ज्येष्ठे ऊष्मा स्त्रियां त्विषि' इति वोपालितः। ऊष रुजायाम् – 'अन्येभ्य इति मनिक्। मकि बाहुलकाददन्तोऽपि। शोभनः आह्लादकः गन्धः परिमलः येषां सुगन्धिनः। 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इति समासान्त इत्। (तान्) सुगन्धातिशयवतः। तादृशान् हिमान् शीतलान्। 'हिमं तुषारमलयोद्भवयोस्स्यान्नपुंसकम्। शीतले वाच्यलिङ्गः' इति मेदिनी। व्यजनानि तालवृन्तकानि वीजनसाधनानि। 'व्यजनं तालवृन्तक' मित्यमरः। तेषाम् अनिलान् वायून्। जन्यजनकभावे षष्ठी। तदुद्भवान् वायून्। भृशमातपादिना परितप्यमानस्य शीतलसुगन्धवाय्वपेक्षा भवत्यस्मिन्नित्येवमुक्तिः। किञ्च। कृता विहिता रचिता धृतेति यावत्। 'कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु' इति मेदिनी। तादृशी चन्दनचर्चिका गन्धसारविलेपनं यैः तथोक्ताः। 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः। तथाविधाः। मृगीदृशः सुन्दरीः। अनेन स्तनधृतचन्दनानुलेपाः स्त्रिय इत्युक्तं भवति। 'कूपोदकं वटच्छाया ताम्बूलं तरुणीस्तनम्। शीतकाले भवेदुष्णमुष्णकाले च शीतल' मिति तासां कुचा एव तदानीं शीतलास्सति चन्दनानुलेपे किमुतेत्यादरातिशयोऽत्र कथ्यते। किञ्च। शशिमतीः – शशी चन्द्रः सः आसु अस्तीति प्रशंसायां मतुप्। प्रशस्तचन्द्राः दिवसतापापनोदनेन भृशमाह्लादकश्चन्द्र इदानीं भवतीति प्राशस्त्यमेतस्य। तादृशीः निशाः रात्रीः। कर्म। अत्र सर्वत्राविवक्षितकरणविशेषत्वेन 'अकथितं चे' ति कर्मत्वम्। च समुच्चये। तैः ताभिः ताभिश्चेत्यर्थः। नरपतेः राज्ञः। प्रियताम् प्रीतिम्। प्रधाने कर्मणि द्वितीया। ताम्। नयन् आपादयन् नयतिरयं द्विकर्मकः। "दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्। कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्" इति द्विकर्मकेषु परिगणितत्वात्। तादृशस्सन्। उदभूत् उदियाय अवातरत् समागच्छदित्यर्थः। ग्रीष्मे दवसतापितो राजा सुगन्धिशीतलान् वायूनुद्वमद्भिर्व्यजनैर्वीज्यमान



श्चन्दनानुलिप्ताभिः कान्ताकुचतटीभिर्गाढं परिष्वज्यमानश्चन्द्रोदयेन सुप्रसन्नासु सुधामयीषु रात्रिषु विहरमाणस्तापं जहत्परं सुखमवापेति परमार्थः॥

ग्रीष्मदिवसा वर्ण्यन्ते —

**विकचपाटलगन्धिसमीरणै**
**स्सलिलकेलिपरायणयौवतैः।**
**अजनि दैर्घ्यहरैरधिकोल्लस**
**द्रविमहोभिरहोभिरभूयत॥** ॥ 16 ॥

**विकचेति॥** पाटलायाः पुष्पाणि पाटलानि। बिल्वादित्वादण्। 'पुष्पमूलेषु बहुल' मिति बहुलग्रहणान्न लुक्। विकचानि विकसितानि पाटलानि पाटलपुष्पाणि तथोक्तानि। तेषाम् गन्धः आमोदः स एषामस्तीति तथोक्ताः। सर्वधनादित्वादिनिः। तादृशाः समीरणाः वायवः येषु तथोक्ताः। 'समीरमारुतमरुज्जगत्प्राणसमीरणा' इत्यमरः। तैः। किञ्च। सलिलकेलयः जलक्रीडाः तासु परायणानि आसक्तानि आतपतापेन सदा कुतूहलवन्ति यौवतानि युवतिसमूहाः तरुणीजनः येषु तैः। भिक्षादित्वात् सामूहिकोऽण्। तैः। किञ्च। रजनिः रात्रिः तस्याः दैर्घ्यम् आयामः विस्तारः अन्यर्तुषु दृश्यमान इत्यर्थः। तस्य हरैः अपहारकैः तद्वद्वर्धमानैः। ग्रीष्मे रात्रीणां ह्रासः दिवसस्य वृद्धिश्च प्रत्यक्षं दृश्यते। अत एवमुक्तिः। किञ्च। (इदमेव न) अधिकम् सर्वोत्कृष्टं यथा तथा उल्लसन्ति प्रकाशमानानि रविमहांसि सूर्यतेजांसि येषु तैः। सूर्यकिरणास्तदानीमत्यन्तं दीप्तिमन्तो जगद्भासयन्तीत्येवं कथ्यते। तथाविधैः अहोभिः दिनैः। कर्तृभिः। अभूयत अभावि अवृत्यत। भू सत्तायाम्। भावे लङ्। ग्रीष्मे पाटलाः पुष्प्यन्ति। तेषां संसर्गेण वाता दिक्षु सौरभ

मुद्वमन्ति। सूर्योऽतीव भ्राजमानस्संतापयति लोकम्। संतापहरणाय स्वपतिभिस्साकं क्रीडासरस्सु जलक्रीडा अनुभवितुं त्वरते वधूजनः। सूर्यतेजोभिस्साकं वर्धन्ते च दिवसानीति स्वभावोक्तिः। एतदृतुस्वभावमेवं कीर्तयति महाकविः कालिदासः — "सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः। प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥' इति ॥

ग्रीष्मे सूर्यगमनं वर्णयति —

**नियतिनिर्मितदक्षिणदिग्वधू**
**विरहतापनिवारणवाञ्छया।**
**अहिमभानुरहन्यहनि ध्रुवं**
**हरितमाप हिमाचलशीतलाम् ॥** ॥ 17 ॥

**नियतीति ॥** नियतिः दैवम् पुरातनं कर्म। 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः। तया निर्मितः सृष्टः कल्पितः अवश्यं भोक्तव्यमिदमिति निर्णीतः। दक्षिणा दिक् अवाची आशा सैव वधूः भार्या। तया सह संगतत्वादेवमुक्तिः। 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः। तया विरहः वियोगः। तस्याः दूरस्थितिरिति गम्यते। तस्मात् तापः तज्जनितो विरहसंतापः। दाह इति गम्यते। तस्य निवारणम् अपनयनम् तस्मिन् वाञ्छा तद्विषयकोऽभिलाषः। तया। ध्रुवमिति संभावनायाम्। तयेवेति संभाव्यते। अहिमभानुः चण्डकिरणः सूर्यः। कर्ता। अहनि अहनि दिने दिने। नत्वेकदा तापस्य दुर्भरत्वादेवमुक्तिः। वीप्सायां द्विर्वचनम्। अस्मिन् समये सूर्यः प्रतिदिनमुत्तराशां गच्छतीत्येवं संभाव्यते। हिमाचलः हिमवन्नगः तेन शीतलाम् तत्स्थितया शैत्यवतीम्। हरितम् दिशम् उत्तरदिशमित्यर्थः। नायिकामिति गम्यते। ताम् आप प्राप। तया



सह संगतत्वानित्यर्थः। अयं भावः। ऋतून् द्वारीकृत्य द्वे गती सूर्यस्य। ते च दक्षिणोत्तरे। त एव दक्षिणोत्तरायणे इति व्यवह्रियेते। तत्र ग्रीष्मद्वारा गतिरुत्तरायणे भवति बाहुल्येन। द्विविधमेतद्गमनं कालोपाधिकमिति दैवनिर्मितम्। उत्तरायणस्यान्ते ग्रीष्मो भवतीति दक्षिणदिशाया अतिदूरस्थितिः, उत्तरस्या अतिसमीपस्थितिश्चैतस्मिन् ऋतावस्य संभवति। दक्षिणायनसमनन्तरमुत्तरायणम् दक्षिणत उत्तरां गच्छतस्सूर्यस्य दक्षिणदिशया पृथक्स्थितिश्च जायते। तदेवं संभाव्यते। दक्षिणदिशा काचिन्नायिका सूर्यस्येति तया पृथक्स्थितिरस्य नायिकया सह वियुक्तताप्रयुक्तविप्रलम्भ इति, कालोपाधिकतया दैवनिर्मितस्य तद्गमनस्य नायकस्य पुराकृतवशाद् दुरुल्लङ्घतयावश्यमनुभोक्तव्यत्वेन दैवनिर्मितो विरहताप इति, तथात्वेऽपि स्वयमयमहिमभानुस्तत्र दारुणो विरहताप इति तापस्य दुर्भरत्वेन प्रयत्नशतैर्दुस्साधेऽस्मिन्नपि तन्निवारणाय नायकस्य प्रवृत्तिरासीदिति तत्र दाहस्य च शामकं शैत्यमेवेति, तच्च शैत्यं कौबेर्यां दिश्येव समुपलभ्यत इति ग्रीष्मे तापभीतास्तच्छमनाय शीतलप्रदेशान् गच्छन्तो जना इव नायकोऽयमपि स्वतापशान्त्यै दिशमुत्तरां गच्छतीति। अत्र 'अयने द्वे गतिरुदग्दक्षिणार्कस्ये' ति स्वतस्सिद्धस्य सूर्यकर्तृकोत्तरदिशागमनस्य नायिकाविरहसंजाततापनिवारणवाञ्छाहेतुकत्वसंभावनेति हेतूत्प्रेक्षा। इयं च दिग्वधूरित्यादिरूपकेण 'हिमाचलशीतला' मित्यादिविशेषणगत्या तापनिवारणे हेतुतां संपाद्य संप्राप्तोदयेन काव्यलिङ्गेन च लब्धस्थितिरिति रूपककाव्यलिङ्गाभ्यां संकीर्णा ॥

ग्रीष्मर्तौ दीर्घाहत्वस्य हेतुमुत्प्रेक्षते —

**परुषतापविशेषपरिस्खल**
**द्रथतुरङ्गममन्दगताविव।**

**अहिमधाम्नि रथाङ्गसुखावहा**
**महरगा ( हत दै ) र्घ्यवतीं दशाम् ॥** ॥ 18 ॥

**परुषेति** ॥ अहिमम् उष्णम् धाम तेजः यस्य तथोक्तः । तस्मिन् सूर्ये । अमन्दा अनल्पा अत्यन्ततापकरी गतिः गमनम् संचारः वेगत आकाशयानमित्यर्थः । सा यस्य तथोक्तः । तस्मिन् तथाविधे, स्वचण्डकिरणैर्लोकांस्तापयन् ( तस्मिन् ) शीघ्रं गच्छति सतीत्यर्थः । परुषः रूक्षणः तीक्ष्णः दुःखजनकः । 'परुषं कर्बुरे रूक्षे स्यान्निष्ठुरवचस्यपि' इति हैमः । तादृशः तापः संतापः तस्य विशेषः आधिक्यम् । तेन परिस्खलन्तः संचलन्तः इतस्ततस्खलन्तः रथतुरङ्गाः रथ्याः सप्त यस्य तथोक्तम् । तापवशात् शरीरवैवश्यं संजातमिति रथं वोढुमसमर्थाः यथाकथमपि गच्छन्त स्खलन्ति सूर्याश्वा इति गमनमान्द्यं तेषु कथ्यते । तथाभूतमिवेत्युत्प्रेक्षा । तथाविधम् अहः कर्तृ । दैर्घ्यवतीम् – दैर्घ्यम् आयतता विस्तृतता दीर्घयामता सा अस्यामस्तीति मतुप् । दीर्घामित्यर्थः । अतएव रथाङ्गानाम् चक्रवाकाणाम् । 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः । ( तेषाम् ) सुखावहाम् सौख्यसंपादिकाम् । रामशापेन रात्रौ वियोगानुभव इति दिवा संयुक्तानां तेषां दीर्घकालसुखदायिनीमिति भावः । तादृशीम् दशाम् अवस्थाम् स्थितिम् । मुहुः पुनः पुनः वारं वारम् अगाहत प्राप । प्रतिदिनं ग्रीष्मे तथात्वादिति भावः । अत्र दिनदैर्घ्ये स्वतस्सिद्धे कविप्रौढोक्त्या सूर्यतेजस्संतापिततुरगपरिस्खलत्संजातगतिमान्द्यमुत्प्रेक्ष्यत इति गुणस्वरूपोत्प्रेक्षेयम् ॥

ग्रीष्मे हारचन्दनानुलेपैरतीव मन्मथोद्दीपकास्सुन्दरीणां कुचतटा इति कीर्त्यते —

**सरसचन्दनधारिषु मौक्तिक**
**त्रिसरनिर्झरहारिषु सुभ्रुवाम् ।**



**कुचतटेषु निदाघनिपीडितो**
**धृतिमगात्कुसुमायुधकुञ्जरः ॥** ॥ 19 ॥

**सरसेति** ॥ कुसुमायुधः मन्मथः स एव कुञ्जरः गजः । कर्ता । 'खमुखकुञ्जेभ्यो रः' इति रः । अप्रतिहतप्रसरत्वाद् दुर्निग्रहत्वाच्चैव मुक्तिः । ( निदाघनिपीडितः – ( मन्मथपक्षे ) निदाघे ग्रीष्मे निपीडितः अत्यन्तं व्यथितः । अङ्गाङ्गसंस्पर्शमसहमानयोर्निवृत्तकामयोर्दम्पत्योस्तदानीमलब्धावकाशतया स्वस्य परं दुःखित इति भावः । तथाभूतस्सन् । गजपक्षे । निदाघः ग्रीष्मः तज्जन्य उष्णः 'निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि' इति सुधा । तेन पीडितः नितरां संतप्तः । हस्तिनामौष्ण्यं दुस्सहम् । तेषां शरीरे नित्यं प्रज्वलत्यूष्म । अतएव तेषां शीतलप्रदेशजलविहारजलपातादयस्सुखदायिनः । स्नानाभावे तेषां संजायते कुष्ठम् । एतत्सर्वं कामन्दके स्पष्टमुक्तम् । अत एव निपीडितः नितरां तापातिशयेन बाधित इत्युच्यते । तथाविधस्सन् । सरसचन्दनधारिषु ( कुचपक्षे ) सरसम् सार्द्रम् चन्दनम् मलयजम् तत् धर्तुं शीलमेषामिति णिनिः । ( तटपक्षे ) सरसाः सारवन्तः चन्दनाः मलयजाः वृक्षाः तान् धर्तुमिति पूर्ववत् । किञ्च । मुक्ता एव मौक्तिकानि । 'विनयादिभ्यश्चे' ति ठक् । तेषाम् त्रिसराः हाराः संतापहरणाय तदानीं स्त्रीभिर्धृता मुक्ताहारा इत्यर्थः । त एव निर्झराः प्रवाहाः तैः हारिषु मनोहरेषु । एकत्र कामोद्दीपकत्वात् अन्यत्र क्वाप्यलब्धस्य जलस्य लाभाच्च । सुभ्रुवाम् सुन्दरीणाम् । कुचा एव तटाः प्रपाताः पर्वतोपरि स्थिता उन्नतप्रदेशाः । 'प्रपातस्तु तटो भृगुः' इत्यमरः । 'प्रपातस्त्वतटो भृगु' रिति तु पाठान्तरम् । तेषु । धृतिम् सौख्यम् । एकत्र कामोद्दीपकत्वात्, अन्यत्र चन्दनवृक्षादिभिरत्यन्तं शीतलत्वाच्च । 'धृतिस्सौख्येऽपि धारणे' इति यादवः । ( ताम् ) अगात् अवाप अनुबभूवेत्यर्थः । इण् गतौ लुङ् ।

'इणो गा लुङि' इति गाङादेशः। नायिकाः नायकाश्च ग्रीष्मे स्वेद तापादिना परस्परमङ्गाङ्गसंस्पर्शमसहमानाः कामोपभोगेषु लालसा न भवन्ति। अतो मन्मथस्तेष्ववकाशमलभमानस्स्वाश्रयभङ्गसंजातां महतीं व्यथामनुबभूव। तस्मिन्नेव समये तापशान्त्यै युवतयस्स्वकुचतटान् चन्दनानुलेपमुक्ताहारधारणादिना शोभायमानांश्चक्रुरिति तेन जाताश्वासो मन्मथस्तत्राश्रयं सम्पाद्य सुखी समपद्यत। यथावा कश्चन गजो निदाघे प्रचण्डातपेन भृशं संतापितस्स्वास्थ्यमलभमानस्सिष्णासया तृषया च पीडितः परिभ्रमन् क्वापि जलमप्राप्य कथंचित्पर्वतोपत्यकां प्रवाहसंभरितां चन्दनवृक्षैरतिशीतलां च समधिगम्य महान्तमानन्दमनु भवति तद्वदिति पिण्डीकृतोऽर्थः। तदानीं मुक्ताहारचन्दनानुलेपनादिभि रलंकृतं सदतीव मन्मथोद्दीपकं वर्तते युवतीनां स्तनयुगमिति परमार्थः। कामस्य निरवकाशत्वं ग्रीष्मे कश्चन कविरेवं कथयति — 'अङ्गाङ्ग सङ्गासहने तपर्तावन्योन्यमेवाभिमुखा युवानः। वाचापि केचिन्मनसापि केचिद् दृशापि केचिद् दृढमालिलिङ्गुः' इति। ग्रीष्मतापशान्त्यै युवतीनां मुक्ताहारधारणादि प्रसिद्धम् — "तं पयोधरविषक्तचन्दनैर्मौक्तिकग्रथित चारुभूषणैः। ग्रीष्मवेषविधिभिस्सिषेविरे श्रोणिलम्बिमणिमेखलैः प्रियाः" इति रघुः। अत्र 'कुसुमायुधकुञ्जरः' 'कुचतटेषु' इत्यादिना रूपणमवयावयविनोस्सामस्त्येन निबद्धमिति समस्तवस्तुविषयकं रूपक मिदम्। सरसचन्दनधारिष्वित्यादिष्वर्थद्वयावगतिश्च साम्यवर्णने चमत्कार कारीति रूपकपरिपोषण एव तस्य तात्पर्यमित्यवगन्तव्यम्॥

ग्रीष्मर्तौ 'सरःपथिकशोषणवातोल्काः वर्ण्याः' इति देवेशः। तत्र सरश्शोषणं वर्ण्यते —

**सलिलकेलिकुतूहलकुन्तली**
**कुचतटाहतिजातभयैरिव।**



**अपसृतैरजनि प्रतिवासरं**
**नृपतिगेहविहारसरोजलैः॥** ॥ 20 ॥

**सलिलेति॥** सलिलकेलयः जलक्रीडाः तासु कुतूहलम् कुतुकम् गाढाभिलाषः। तत्सहिताः कुन्तल्यः कर्णाटयुवतयः। तासाम् कुचतटाः स्तनप्रदेशाः त एव पर्वततटाः इति च गम्यते। तेषाम् आहतिः आघातः भृशताडनम् तस्मात् जातम् समुत्पन्नम् भयम् भीतिः येषां तैः। तादृशैरिवेत्युत्प्रेक्षा। नृपतिगेहम् राजसदनम् तत्र विहारसरः क्रीडावापी तेषां जलैः तदीयोदकैः। कर्तृभिः। प्रतिवासरम् दिन दिनम् दिवसक्रमेणेत्यर्थः। अपसृतैः मन्दमन्दमपगतैः। अजनि अभूयत। जनेर्लुङ्। भीतस्य शनैश्शनैरपयानं लोकदृष्टमिति तथैव जलानीमा न्यपी'ति भावः। ऋतावस्मिन् सूर्यकिरणैस्सरोजलं शुष्यति। तत्र च कारणं सम्भाव्यते। तापतप्ताः कुलस्त्रियो जलक्रीडाः नित्यं वाञ्छन्ति। तदीयकुचाः अत्युन्नताः पाषाणकठिनाश्च। तत्ताडनमतीव दुस्सहं सदात्मनः प्राणभयं जनयेदिति धिया जलं दिनदिनमपसरति शनैश्शनैरिति तदपसरणे भयस्य हेतुत्वमुत्प्रेक्ष्यते। अतएवेयं गुण हेतूत्प्रेक्षा॥

ऋतूचितवेषधारिण्यः कम्पराजरमण्यः प्रकथ्यन्ते —

**प्रचुरघर्मपयःकणजालिका**
**गुणितमौक्तिकमण्डनशालिभिः।**
**नवशिरीषवतंसमनोहरै**
**स्सुवदना वदनैस्तममोदयन्॥** ॥ 21 ॥

**प्रचुरेति॥** शोभनं वदनं यासां ताः सुवदनाः। सुन्दराननाः चन्द्रवदना इति यावत्। अनेन ताः नैसर्गिकसौन्दर्यवत्य इत्युक्तं भवति। ताः कर्त्र्यः। प्रचुराः बहुलाः 'प्रभूतं प्रचुरं प्राज्यमदभ्रं

बहुलं बहु ' इत्यमरः । तादृशः घर्मपयःकणाः स्वेदोदकबिन्दवः त एव जालिका वसनान्तरम् अवगुण्ठिका । ' जालकं कोरके दम्भे कुलायानाययोरपि । न पुंसि मोचनफले स्त्रियां तु वसनान्तरे ' इति सुधा । यद्वा । जालमेव जालिका ( तेषां ) समूहः । स्वार्थे कः । स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिक्रामन्ती ' ति स्त्रीलिङ्गता । तया गुणितम् गुणवत्कृतम् आवर्तितम् द्विसंख्याकमिति यावत् । तादृशम् मौक्तिकमण्डनम् अलकेषु धार्यमाणो मुक्ताभरणविशेषः ' जालक ' मित्याख्यातः । तेन शालत इति णिनिः । तदानीं तत्सुन्दरीणां मुखमाच्छादयन्तस्स्वेदबिन्दुवो जालकग्रथिता मुक्तामणय इव विराजन्ते । तेन तासामलकेषु धृतं द्वितीयं मुक्ताभूषणं जालकमिदं किमिति भ्रान्तिं पश्यतां जनयन्ति त इति भावः । तथाविधैः । किञ्च । नवानि नूतनानि सद्योविकसितानि । अनेन कोमलातिशय एतेषु कथ्यते । तथाविधानि शिरीषाणि शिरीषपुष्पाणि तान्येव वतंसाः अवतंसाः कर्णपूराः कर्णाभरणानि । ' पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे ' इत्यमरः । अवतंसशब्दस्यैव ' वष्टिभागुरि ' रित्यल्लोपे ' वतंस ' शब्दस्सिद्धः । तैः मनोहरैः मनोज्ञैः । सद्योविकसितशिरीषपुष्पालङ्कृत कर्णयुगेन सम्मोहजनकैरित्यर्थः । तादृशैः वदनैः । करणभूतैः । यद्वा एतादृशवदनैः सुवदना भूत्वा इति वा सम्बन्धः । तम् कम्पराजम् । कर्म । अमोदयन् अतोषयन् । ऋतुकालोचितवेषान् धृत्वा तद्रामणीयकेन तत्कालसमुचितभोगानुभूतये तमचोदयन्निति भावः । अत्र ' अमोदयन्निति ' वाक्यार्थसमर्थने प्रयोजकानि विशेषणगतया वदनविशेषणानीति काव्यलिङ्गमलङ्कारः ॥

ग्रीष्मे मल्लिकाः पुष्प्यन्तीति तत्सौभाग्यं प्रस्तौति —

**दिनविरामविकस्वरमल्लिका**
**कुसुमसौरभहारिषु सुभ्रुवाम् ।**



**कुचभरेषु निवेशयतो मुखं**
**नरपतेर्न वितृष्णमभून्मनः ॥** ॥ 22 ॥

**दिनविराम इति ॥** दिनविरामः सायंकालः तस्मिन् विकस्वराणि विकासीनि विकसनशीलानि । ' विकासी तु विकस्वरः ' इत्यमरः । ' स्थेशभासेति ' वरच् । तादृंशि मल्लिकाकुसुमानि मल्लीपुष्पाणि तेषाम् सौरभम् सुगन्धः तेन हारीणि मनोहराणि मनोज्ञानि । तेषु । सुभ्रुवाम् सुन्दरीणाम् । कचभरेषु केशपाशेषु । मुखम् आननम् । निवेशयतः तदाघ्राणनाय विन्यस्यतः जिघ्रत इति यावत् । नरपतेः राज्ञः मनः चित्तम् । विगता अपगता तृष्णा स्पृहा अभिलाषः यस्मिन् वितृष्णम् निस्पृहम् तृप्तिमदिति यावत् । न अभूत् न आसीत् । अवितृप्ततया तन्मनः पुनस्तत्र प्रवृत्तमेवेति मल्लिकानां ऋतूचितसौभाग्यातिशयः प्रस्तूयते । अत्रापि ' सौरभहारि ' ष्वित्यादि विशेषणगत्या हेतुतासमर्थकं तृप्त्यभावरूपवाक्यार्थ इति काव्यलिङ्गम् ॥

हिमगृहाः वर्ण्यन्ते —

**हिमगृहेषु निरन्तरशीकर**
**प्रकरदर्शिततारकपङ्क्तिषु ।**
**दिवसतापमहापयदायतं**
**वरवधूसहितो वसुधाधिपः ॥** ॥ 23 ॥

**हिमगृहा इति ॥** वसुधाधिपः भूपतिः । वरवध्वः रूपादिना उत्तमाः स्त्रियः ( स्व ) शुद्धान्तकान्ता इति यावत् । ताभिः सहितः तद्युक्तः ताभ्यां सहेत्यर्थः । निरन्तराः निरवकाशाः अविच्छिन्नप्रसराः शीकराः जलबिन्दवः तेषाम् प्रकरः समूहः तेन दर्शिताः चक्षुर्विषयतां नीताः आविर्भाविताः कल्पिता इति यावत् । तादृश्यः तारकपङ्क्तयः

नक्षत्रश्रेणयः तत्परम्पराः यैः तथोक्ताः। जलयन्त्रैर्निरन्तरं प्रकीर्यमाणा जलबिन्दवस्तारकाभ्रान्तिं जनयन्तीत्येवमुच्यते। तेषु हिमगृहेषु जलयन्त्रैरत्यन्तं शीतलेषु भवनेषु 'स्थित्वा' इति शेषः। आयतम् विस्तृतम् अतिवेलं प्रवृत्तम् दुस्सहमिति यावत्। तादृशम् दिवसतापम् ग्रीष्मदिवसकृतमातपबाधम्। अहापयत् अगमयत् उपशमयांचकारेति यावत्। ओहाङ् गतौ – इत्यस्माद्धेतुमण्ण्यन्ताल्लङ्। 'अर्तिह्री' ति पुगागमः। जलयन्त्रेभ्यस्सततमविच्छिन्नतया प्रसृता जलबिन्दवस्तारका इव राजन्ते। तत्संपर्कादतीव शैत्यं वहन्ति जलयन्त्रिता गृहाः। तेषु स्ववधूभिस्सह विहरन् ग्रीष्मतापं नाविन्दत कम्पराज इति पिण्डीकृतोऽर्थः। अत्र चाहार्यभ्रान्त्या तारकप्रसन्नकान्तिं शीकरेषु संपाद्य विशेषणगत्या दिवसतापापगमने हेतुसम्पादनं क्रियत इति भ्रान्तिमदङ्गं काव्यलिङ्गमलङ्कारः॥

इत आरभ्य वर्षर्तुं वर्णयति —

**अथ दलन्निचुलद्रुममञ्जरी**
**निचयदर्शितचामरविभ्रमः।**
**कृतनुतिः किल चातकयाचकै**
**र्नृपतिमन्वगमज्जलदागमः॥** ॥ 24 ॥

**अथेति**॥ अथ अनन्तरम् ग्रीष्मर्तौ गते तदुत्तरकाल इत्यर्थः। जलदागमः वर्षर्तुः। जलदानाम् मेघानाम् आगमः आगतिः नूतनतयेत्यर्थः। सः अस्मिन्नस्तीति अर्शआदित्वादच्। सः कर्ता। दलन्तः विकसन्तः निचुलद्रुमाः स्थलवेतसाः 'वानीरे कविभेदे स्यान्निचुलः स्थलवेतसे' इति शब्दार्णवः। तेषाम् मञ्जर्यः पुष्पगुच्छाः तेषाम् निचयः समूहः। एकीभूताः पुष्पस्तबका इत्यर्थः। चामरसादृश्यसिद्धयर्थमेवमुक्तिः। तेन दर्शितः दृष्टिपथं प्रापितः बहिःप्रकाशित



इत्यर्थः। चामरयोः वालव्यजनयोः वीज्यमानयोरित्यर्थः। (तयोः) विभ्रमः विलासः। विशेषभ्रमणं चेति गम्यते। सः यस्मिन् तथोक्तः। तथाविधस्सन्। किञ्च। चातकाः सारङ्गाः वर्षाम्बुपायिनः। 'सारङ्गश्चातकस्तोककस्समाः' इत्यमरः। त एव याचकाः अर्थिनः। 'वनीपको याचनको मार्गणो याचकार्थिनौ' इत्यमरः। तैः। कृतनुतिः आचरितस्तुतिः स्तुत इत्यर्थः। नृपतिम् राजानम्। अन्वकरोत् अनुचकार। तत्सदृशो भूत्वा स्थित इत्यर्थः। अनुपूर्वाद् गमेर्लुङ्। लृदित्वादङ्। निचुलाः वर्षासु पुष्प्यन्ति। मञ्जर्यस्तासामितस्ततो वायुचालिताः परिभ्रमन्ति। चातकाश्च जलार्थिनो मेघं स्तुवन्त इव मधुरं स्वनन्ति। राजा च उभयतश्चामराभ्यां वीज्यते। द्रव्यार्थिनश्च याचकाः मृदुमधुरवचनैः राजानं स्तुवन्ति। एवंविधसाम्यसंपन्नो वर्षर्तुरयं राजा संवृत्तः। ऋतोः राजभावं वर्णयन्ति प्रायेण कवयः। "पुण्डरीकातपत्रस्तं विकसत्काशचामरः। ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम्" इति कालिदासः। कालिदासोऽयमेवैतादृग्वर्णने मार्गदर्शी कवयित्र्याः। तथाहि – "स्तूयमानः क्षणे तस्मिन्नलक्ष्यत स वन्दिभिः। प्रवृद्ध इव पर्जन्यस्सारङ्गैरभिनन्दितः" इति। अत्र चातकयाचकैरित्यादिरूपकानुप्राणितोपमालङ्कारः। "तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति। तस्य चानुकरोतीति शब्दास्सादृश्यवाचका" इत्याचार्यदण्डी॥

मेघोदयो वर्ण्यते —

**तत इतो विहरत्तटिदङ्गना**
**ललितलास्यहरिन्मणिमण्डपैः।**
**पटुमृदङ्गरवोपमगर्जितै**
**र्निबिडमाविरभूयत वारिदैः॥** ॥ 25 ॥

**तत इति**॥ इतः ततः अस्मिन् तस्मिंश्च प्रदेशे तत्र

तत्रेत्यर्थः। विहरन्त्यः खेलन्त्यः संचलन्त्यः नृत्यन्त्यः तटितः विद्युतः ता एव अङ्गनाः स्त्रियः नर्तक्यः तासाम् ललितलास्यम् सुकुमाराङ्ग विन्यासरूपं (स्त्री) नृत्यम्। "पुंनृत्यं ताण्डवं प्रोक्तं स्त्रीनृत्यं लास्य मुच्यते" इत्यभिज्ञाः। नाट्यभेदा एवं प्रदर्शिता भरतशास्त्रे - "उद्धत करणाङ्गविक्षेपमारभटीवृत्तिप्रधानं ताण्डवम्। कोमलकरणाङ्गविक्षेपं कैशिकीवृत्तिप्रधानं लास्यम्। अङ्गविक्षेपमात्रं नृत्तम्। विवाहाभ्युदयादौ सर्वरसप्रधानं नाट्यम्" इति। तस्य हरिण्मणयः गारुत्मतरत्नानि तेषाम् मण्डपाः जनाश्रयाः रङ्गप्रदेशाः। मयडर्थे षष्ठी। मरकत मणिनिर्मिताः मण्डपा इत्यर्थः। तथाभूतैः। किञ्च। पटुः स्फुटः मृदङ्गरवः मर्दलध्वनिः स एव उपमा उपमानम् येषाम् तथोक्तानि। तादृशि गर्जितानि स्तनितानि येषु तेष्विति बहुव्रीहिगर्भो बहुव्रीहिः। 'स्तनितं गर्जितं मेघनिर्घोषो रसितादि च' इत्यमरः। तादृशैः वारिदैः मेघैः निबिडम् सान्द्रं यथा तथा। आविरभूयत प्रादुर भावि। भावे लङ्। दिशस्सर्वा व्याप्तास्तदानीं निरवकाशतया वार्षिकैर्मेघैरिति भावः। तदानीं जलगर्भा नीलवर्णा मेघाः क्षणक्षणं चलद्विद्युत्कान्तिभिः मृदुमधुरगम्भीरगर्जितैः वर्षितुं प्रावर्तन्तेति वस्तु स्थितिः। अत्र प्रौढोक्त्या संगीतं तदानीं प्रवृत्तमिति कल्प्यते। तत्र मेघानां नीलवर्णतया विशालतया च नर्तनादीनामाश्रयभूतानि नाट्य रङ्गस्थलानीव ते राजन्ते। (हरिद्वर्णे नीलवर्णस्यापि सम्मिलितत्वा न्नीलवर्णतया हरिद्वर्णं व्यवहरन्ति कवयः – 'मरकतमणिनीलं बाल मालोकयामः' इत्यादिना)। विद्युतश्च तत्र क्षणक्षणं प्रकाशमानास्तत इतो भ्रमणं कुर्वन्त्यो नर्तक्य इव दृश्यन्ते। गर्जितानि च तेषां मधुरगम्भीराणि, तदङ्गतया प्रवृत्ताः मृदङ्गध्वनय इव लक्ष्यन्ते – इति। आकाशे संगीतं प्रवृत्तमिति नृत्यगीतवाद्यानि प्रदर्शयितुं तटि दादिष्वङ्गनात्वादिरूपणं क्रियत इति रूपकमलङ्कारः। तच्च परम्प रितम्। 'मृदङ्गरवोपमगर्जितै' रित्युपमा च रूपकपरिपोषणायैव



लब्धसत्ताकमिति तेन संकीर्यते ॥

भङ्ग्यन्तरेण मेघोदय एव प्रकथ्यते —

**स्फुटतटित्तपनीयगुणोज्ज्वलैः**
**पृथुपयःकणमौक्तिकसङ्गिभिः ।**
**अलिकदम्बकसच्छविभिर्दिशा**
**मसितकञ्चुलिकायितमम्बुदैः ॥** ॥ 26 ॥

**स्फुटेति** ॥ स्फुटाः विस्पष्टाः सुष्ठु प्रकाशमानाः तटितः विद्युत एव तपनीयगुणाः सुवर्णमयसूत्राणि तैः उज्ज्वलैः भृशं दीप्यमानैः। किञ्च। पृथवः महान्तः अतिस्थूला इत्यर्थः। पयःकणाः जलबिन्दवः त एव मौक्तिकानि मुक्ताः तैः सङ्गिभिः संगतैः सह स्थितिं कुर्वद्भिः। किञ्च। अलीनाम् भ्रमराणाम् कदम्बकम् समूहः परम्परा तेन सच्छविभिः समानकान्तिभिः। अम्बुदैः मेघैः। दिशाम् दिगङ्गनानाम्। असिता नीलाः कञ्चुलिकाः स्तनाच्छादकवस्त्राणि चोलकानि तैरिव आचरितम्। 'कर्तुः क्यङ् सलोपश्च' ति क्यङन्ता द्भावे क्तः। अयं भावः। जलभरितत्वेन नीला मेघाः दिक्षु व्याप्ताः दिगङ्गनाधृताः कञ्चुलिका इव राजन्ते। तत्र मेघाश्रया विद्युतः कूर्पासिकेषु शोभमानास्सुवर्णतन्तव इव प्रकाशन्ते। तदीया स्थूल जलबिन्दवश्चोलकेषु ग्रथिता मुक्ता इव लक्ष्यन्त इति। अत्र तटित्सु तपनीयगुणत्वाद्यारोपः जलदानां कञ्चुलिकायितत्वे साम्यं सम्पाद यन् कृतार्थः। अलिकदम्बकसच्छविरित्युपमा च कञ्चुलिकानामसित त्वसमर्थने भृशमुपकरोति। अतो विजातीयसजातीयाभ्यां रूपकोपमाभ्या मुपमेयं संकीर्यते ॥

इन्द्रधनुर्वर्ण्यते —

**हरितलोहितपाण्डुरराजत**
**त्रिदशराजशरासनलेखिका ।**

मरतकोपलविद्रुममौक्तिकै
र्विरचिता रशनेव नभश्श्रियः ॥ ॥ 27 ॥

**हरितेति** ॥ हरिता हरिद्वर्णा मरकतसवर्णा । 'पलाशो हरितो हरित्' इत्यमरः । लोहिता रक्तवर्णा । पाण्डुः हरिणा पीतसंवलित शुक्लवर्णा 'हरिणः पाण्डुरः पाण्डुः' इत्यमरः । एवं त्रिवर्णेत्यर्थः । तादृशी । त्रिदशराजः देवराट् इन्द्रः । 'राजाहस्सखिभ्य' इति टच् । तस्य शरासनम् चापः । इन्द्रधनुरित्यर्थः । तस्य लेखा रेखा सैव लेखिका । स्वार्थे कः । सा कर्त्री । मरतकम् मरकतम् गारुत्मतम् । 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः' इत्यमरः । 'पृषोदरादित्वा द्वर्णव्यत्यये मरतकम् । वराहमिहिरो रत्नभेदवर्णनावसरे 'मरतक कुरुविन्द ... रत्नभेदाः' इति 'मरतक' मित्येवामुं व्याजहार । तदाख्यः उपलः मणिः गारुत्मतमणिरित्यर्थः । 'उपलो ग्रावरत्नयोः । उपला तु शर्करायाम्' इति हैमः । विद्रुमः प्रवालः 'अथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम्' इत्यमरः । सः । मुक्तैव मौक्तिकम् मुक्तामणिः विनयादित्वाट्ठक् । तैः । त्रिभिरेतैः क्रमात् हरिल्लोहितपाण्डुवर्णै रित्यर्थः । (तैः) विरचिता निर्मिता । नभश्श्रियः आकाशलक्ष्म्याः । रशना काञ्चीव । अराजत अशोभत । इन्द्रधनुषा विराजमाना गगन लक्ष्मीस्स्वसौभाग्यसंपत्तये चित्रवर्णां मणिखचितां काञ्चीं धृतवतीव भृशं विराजत इति भावः । अत्र गगनं वर्षास्विन्द्रधनुषा चित्रवर्णेन व्याप्तं सत् शोभायमानं वर्तते । अतो गारुत्मतप्रवालमुक्तामणिखचितां काञ्चीं धरति किमाकाशलक्ष्मीरिति चित्रवर्णं धनुराकाशलक्ष्मीमणि मेखलात्वेन संभाव्यते । अतस्तादात्म्यसंभावनात्वेति द्रव्योत्प्रेक्षेयम् । नभश्श्रिय इति रूपकमस्या जीवातुरिति तदङ्गता चास्याः निश्च प्रचा ॥

इन्द्रगोपकीटाः वर्ण्यन्ते —



रुधिरबिन्दुनिभच्छविरन्वगा
त्क्षितितले हरिगोपपरम्परा ।
घनघरट्टपरस्परघट्टन
क्षरदिरम्मदवह्निकणावलिम् ॥ ॥ 28 ॥

**रुधिरेति** ॥ क्षितितले भूतले भूमावित्यर्थः । रुधिरबिन्दवः रक्तकणाः तैस्समा तथोक्ता । तादृशी छविः कान्तिः यस्याः । अति लोहितवर्णेत्यर्थः । हरिगोपाः इन्द्रगोपाख्याः कीटाः तेषाम् परम्परा श्रेणिः श्रेणीभूता इन्द्रगोपा इत्यर्थः । सा कर्त्री । घनाः मेघाः त एव घरट्टाः भ्रम्यच्छिलाद्वयरूपाः । ध्वनिसाम्यादेवमुच्यते । तेषाम् परस्परघट्टनम् अन्योन्यगाढसंस्पर्शः तेन क्षरन् स्रवन् स्वस्थानात्संच लन् बहिरागच्छन् । कासु चिच्छिलासु शिलाद्वयसंघर्षणादग्न्युत्पत्ति र्लोकदृष्टा । तद्वदेवेत्यर्थः । तादृशः इरम्मदवह्निः मेघज्योतिः । 'मेघज्योतिरिरम्मदः' इत्यमरः । इरया जलेन माद्यति दीप्यत इति व्युत्पत्तिः । 'उग्रं पश्येरम्मद' इति साधुः । तस्य कणाः लेशाः विस्फुलिङ्गाः । प्रकाशनस्वाभाव्यादेवमुक्तिः । तेषाम् आवलिम् श्रेणिम् । अन्वगात् अनुससार । सर्वथा तया सादृश्यं प्रापेत्यर्थः । इन्द्रगोपाः रक्तवर्णाः धगद्धगितप्रकाशाश्च । वर्षासु ते सर्वत्र व्याप्य श्रेणीभूता स्तिष्ठन्ति । एतादृशास्ते संघर्षणवशान्मेघान्निसृत्य वृक्षादौ पततां वज्राग्नीनां स्फुलिङ्गपरम्परां धिक्कुर्वन्तीत्युपमार्थः । रुधिरबिन्दुनिभे त्युपमा च लौहित्यातिशयसंपादनेन प्रधानोपमायामुपकरोतीत्युपमाद्वय सङ्करः ॥

वर्षोपलवृष्टिं प्रवृत्ते —

पटुपुरःपवनाधिगतभ्रमा
जलमुचः करकोपलकैतवात् ।

**सलिलराशिपयस्सहचूषिता**
**मुदवमन्निव मौक्तिकसंहतिम् ॥ ॥ 29 ॥**

**वर्षेति ॥** पटवः तीक्ष्णाः प्रचण्डाः 'पटुस्तीक्ष्णे स्फुटे दक्षे निष्ठुरे निर्दयेऽपि च' इति रुद्रः। पुरःपवनाः स्वाभिमुखं वीज्यमाना वायवः। तैः अधिगताः प्राप्ताः समुपलब्धाः भ्रमाः भ्रमणानि एकत्रानवस्थानानि संचलनानीति यावत्। भ्रमु अनवस्थाने – भावे घञ्। 'नोदात्तोपदेशस्ये' ति न वृद्धिः। तथाविधाः जलमुचः मेघाः। 'घनजीमूतमुदिरजलमुग्धूमयोनय' इत्यमरः। ते कर्तारः। क़रकोपलाः वर्षोपलाः। 'वर्षोपलस्तु करका' इत्यमरः। अनेन प्रचण्डवाताभिहत्या क्षोभिता मेघाः करकोपलान् वर्षन्तीति ज्ञायते। त इति कैतवम् व्याजः वस्तुतस्तु न तथेत्यर्थः। तस्मात्। सलिलराशिः पयोराशिः समुद्रः तस्य पयः उदकम् तेन सहचूषिताम् एककाले पीताम्। चूष पाने – क्तः। समुद्रेभ्यो जलमधिगम्य मेघाः वर्षन्ति। अतएवमुक्तिः। तथाविधाम् मौक्तिकसंहतिम् मुक्तामणिसमूहम्। उदवमन् उदगिरन् बहिरगमयन्निवेति संभावना। समुद्राणां रत्नाकरत्वादेवं संभाव्यते। उत्पूर्वात् टु – वम उद्गिरणे – लङ्। "निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्। अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते" इत्याचार्यदण्डी। अत्र क़रकाः वर्तुला धवला इति मुक्तासाम्यं भवति तेषाम्। तेन मुक्ता एव ते न वर्षोपला इत्यपह्नवः कैतवशब्देनेति कैतवापह्नुतिरलङ्कारः। सा च करकोपलेषु मुक्तात्वं संपाद्य मुक्तावमनरूपक्रियोत्प्रेक्षायां सहकारिणीति तया साकं संकीर्यते। मुक्तालब्धौ हेतुस्तु समुद्रजलपाने तत्स्थानां रत्नानां तैस्सहपानम्। स च मुक्तोपलब्धिहेतुः 'सलिलराशिपयस्सहचूषिता' मिति विशेषणगत्या प्रतिपाद्यत इति काव्यलिङ्गमपि क्रियोत्प्रेक्षायामङ्गभावमनुभवत्तया च साकं संकीर्यते। मेघानां मुक्तावर्षणमप्यागमसिद्धमित्यौचिती परिपोषिता सेयं संभावना। तथाचागमः – "वर्षोपलवज्जातं वायुस्कन्धाच्च सप्तमाद् भ्रष्टम्। ह्रियते किल खाद्दिव्यैस्तटित्प्रभं मेघसंभूतम्" इति। भोजोऽस्मिन् वर्णने मार्गदर्शीव प्रतिभाति - "अम्भोधिपाने सलिलेन साकमापीतमौर्वाग्निशिखाकलापम्। तप्तोदरा वारिधरा वमन्ति विद्युल्लतोन्मेषमिषेण नूनम्" इति ॥



'वर्षास्वेव मयूराणां रुतं नृत्यं च वर्णये' दिति देवेशः। तं प्रमाणयति –

**अभिमते सति वारिधरोदये**
**मधुरषड्जमनोहरगीतिभिः।**
**गिरितटीषु मुहुः परिमण्डली**
**कृतकलापमनर्ति शिखण्डिभिः ॥ ॥ 30 ॥**

**अभिमत इति ॥** अभिमते प्रिये स्वाभिलषिते स्वस्य प्रीतिजनके इत्यर्थः। तादृशे। वारिधरोदये मेघोदये सति भवति संजाते सतीत्यर्थः। शिखण्डः बर्हः एषामस्तीति इनिः शिखण्डिनः मयूराः। अनेन शिखावत्त्वं नर्तकानामावश्यकमिति सूच्यते। अतएवागमः – "पुष्पाक्षी केशहीना च स्थूलोष्ठी लम्बितस्तनी। कुब्जा च स्वरहीना च षडेता नाटचवर्जिताः" इति। तैः कर्तृभूतैः। मधुराः श्राव्याः षड्भ्यः जायन्त इति षड्जाः केकाः। षडुत्पत्तिस्थानानि चैवमुक्तानि – "नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संस्पृशन्। षड्भ्यस्संजायते यस्मात्तस्मात्षड्ज इति स्मृतः" इति। 'षड्जं मयूरो वदति गावस्त्वृषभभाषिणः' इत्यमरः। त एव मनोहराः मनोज्ञाः गीतयः गानानि। ताभिः। सहार्थे तृतीया। ताभिस्सहेत्यर्थः। मुहुः पुनः पुनः। परितः अभितः स्वदेहाभिव्याप्त्येति यावत्। तथा मण्डलीकृतः वलयीकृतः परिभ्रामित इत्यर्थः। अभूततद्भावे च्विः। दीर्घः। तथाविधः कलापः बर्हः (स्व) पिञ्छः यस्मिन्

कर्मणि यथा भवति तथा। 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' इत्यमरः। अनेन नर्तनमिदं देशिकमिति सूचितम्। चामरादि परिभ्रमणं च देशिकनृत्ये भवति। तथा च लक्षणम् "दुकूलदण्डि कामालाखड्गचामरगोलकैः। हस्तसंचारिभिः कुर्युर्नृत्तं तद्देशिकं मतम्" इति। गिरितटीषु पर्वतोपरिप्रदेशेषु उन्नतासु रङ्गस्थलीष्विवेति भावः। अनर्ति अनृत्यत। नृतु नर्तने – भावे लुङ्॥

मेघगर्जितानि कवयति –

**पटुतटिद्गणकोणहताः पुरो**
**रतिपतेः पटहा इव दिव्यकाः।**
**निशमिताः स्फुटसाहसमध्वगै**
**र्जलधरा वियदध्वनि दध्वनुः॥** ॥ 31 ॥

**पट्विति** ॥ वियदध्वनि आकाशवीथौ। जलधराः नीलजीमूताः मेघाः। कर्तारः। रतिपतेः मन्मथस्य पुरतः अग्रतः जैत्रयात्रामारभमाणे तस्मिन् तस्याग्रभागे इत्यर्थः। पटुः तीक्ष्णः निशितः कान्तिमान् अन्यत्र दृढ इति च गम्यते। तादृशः तटिद्गणः विद्युत्समूहः स एव कोणः वादनसाधनम्। 'कोणो वीणादिवादन' मित्यमरः। तेन हताः हिंसिताः व्यथिताः ताडिताः वाद्यमाना इत्यर्थः। अन्यत्र तम् विद्युद्गणम् हताः प्राप्ताः तद्वन्त इति च गम्यते। हिंसागत्योः क्रमात् हन्तेरेकत्र कर्मणि अन्यत्र कर्तरि क्तः। दिव्यकाः दिव्याः अमानुषाः देवतासम्बन्धिनः। अन्यत्र दिवि भवाः आकाशवर्तिन इति च गम्यते। पटहाः आनका इव 'आनकः पटहोऽस्त्रियाम्' इत्यमरः। जैत्रयात्रायां पटहा वाद्यन्ते। अतएव - "प्रतापरुद्रस्य दिगन्तजैत्रयात्राप्रभूतैः पटहप्रणादैः" इति विद्यानाथः। पटहशब्दो भेरीपर्याय इति वा। त इव। वर्षासमये मेघगर्जितानामत्यन्तं कामोद्दीपकत्वादेव



मुक्तिः। दध्वनुः अगर्जन्। प्रणेदुः इति च गम्यते। अध्वगैः पथिकैः प्रवासिभिः विरहिभिः। अध्वानं गच्छन्तीति गमेर्डः। स्फुटम् स्पष्टम् प्रकाशितम् सर्वजनविदितम् साहसम् सहसा प्रवृत्तिः अविमृश्यकृतिः यस्मिन् कर्मणि तथा। प्रकाशितस्वाविवेकमिति भावः। निशमिताः आकर्णिताः। 'शृणोत्याकर्णयति च तद्वन्निशमयत्यपि' इति भट्टमल्लः। मेघगर्जितानामत्यन्तं रागोद्दीपकत्वेन विरहबाधां सोढुमशक्नुवन्तः प्रवासिनस्तद्गर्जनश्रवणेन सुखिनो भवामेति तान्याकर्णयितुं प्रवृत्ता इतीदं तदविवेकिताप्रख्यापकं केवलं साहसमेवेति तात्पर्यम्। अत्र जलदध्वनिषु मन्मथपटहत्वतादात्म्यसंभावनेति द्रव्योत्प्रेक्षा। 'पटुतटिद्गणकोण' इति रूपकं पटहसाम्यनिर्वहणे कृतप्रयत्नमित्यङ्गभावमस्या अनुभवदनया संकीर्यते॥

वर्षर्तोस्स्वभावः कथ्यते –

**दलितकन्दलमुच्छ्वसदर्जुनं**
**स्फुटकदम्बमुदञ्चितकैतकम्।**
**मुदितचातकमुन्मुखबर्हिणं**
**कतिचिदास दिनानि वनान्तरम्॥** ॥ 32 ॥

**दलितेति** ॥ वनान्तरम् वनप्रदेशः। कतिचित् दिनानि कानिचन दिवसानि केषुचिद्दिवसेषु वर्षर्तुदिनेष्विति यावत्। 'कालाध्वनो' रिति द्वितीया। दलितानि स्फुटितानि उद्भिन्नानि कन्दलानि नवाङ्कुराणि यस्मिन् तथाभूतं सत्। 'कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे' इति मेदिनी। अङ्कुरितावस्थया स्थगितानि पल्लवादीनि स्वरूपाविष्करणं कुर्वन्तीति पल्लवितावस्थाप्रायमवस्थान्तरमनुभवन्त्येत इति भावः। किञ्च। उच्छ्वसन्तः विकसन्तः पुष्प्यन्तः अर्जुनाः ककुभाः यस्मिन्। तथाभूतं सत्। 'नदीसर्जो वीरतरुरिन्द्रस्तु ककुभोऽर्जुनः'

इत्यमरः । किञ्च । स्फुटन्तीति स्फुटाः प्रफुल्लाः । 'स्फुटोऽव्यक्त प्रफुल्लयोः' इत्यमरः । स्फुट विकसने 'इगुपधेति' कः । तथाविधाः कदम्बाः नीपवृक्षाः येषु । तथाभूतं सत् । 'नीपप्रियककदम्बास्तु हलिप्रिये' इत्यमरः । किञ्च । केतक्याः इमानि कैतकानि केतकीपुष्पाणि उदञ्चितानि विजृम्भितानि अतिशयितसौगन्ध्यवन्ति कैतकानि यस्मिन् तथाभूतं सत् । किञ्च । मुदिताः संतुष्टाः चातकाः सारङ्गाः यस्मिन् तथाभूतम् । 'सारङ्गस्तोककश्चातकस्समाः' इत्यमरः । दिव्याम्बुपायित्वेन तेषां वर्षामेघदर्शने संतोष इत्येवमुच्यते । किञ्च । उन्मुखाः उन्नमितमुखाः । मेघप्रियत्वान्मुखमुन्नमय्य मेघावृतमाकाशं संतोषातिशयेन वीक्षमाणा इत्यर्थः । तथाविधाः बर्हिणाः शिखिनः मयूराः यस्मिन् । तथाभूतं सत् । 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्' इत्यमरः । एवंविधं सत् आस रराज । अस गतिदीप्त्यादानेषु — लिट् । विभिन्नाङ्कुरं विकसितार्जुनं पुष्पितकदम्बं सुरभिकेतकीपुष्पं संतुष्टचातकं सोत्साहमुद्वीक्ष्यमाणाकाशकबर्हिकुलं च सत् दर्शनीयमासीद्वनानीकं तदानीमिति वर्षर्तुवैशिष्ट्यं प्रस्तूयते ॥

मेघगर्जितानां मन्मथोद्दीपकत्वं प्रस्तूयते —

**करतलैरिव गन्धवहैर्घनाः**
**प्रहितकैतकपांसुविभूतयः ।**
**स्तनितहुंकृतिभिर्निरकासय**
**न्नृपतियौवतमानमहाग्रहम् ॥** ॥ 33 ॥

**करतलैरिति** ॥ घनाः मेघाः मान्त्रिका इति गम्यते । मान्त्रिकाः मन्त्रैर्भस्म संमन्त्र्य ग्रहग्रस्तस्योपरि करतलद्वारा विक्षिपन्ति तथा मेघा अपि वायुद्वारा मन्मथोद्दीपकं केतकीपुष्पपरागं विक्षिपन्तीत्येवमुच्यते । करतलैः हस्ताधःप्रदेशैरिव । वहन्त इति वहाः पचाद्यच् । गन्धस्य



वहाः गन्धवहाः वायवः । 'पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः' इत्यमरः । तैः करणभूतैः । प्रहिताः प्रेषिताः ग्रहाविष्टस्य समीपं प्रापिताः । तं संस्पृष्टाः इति यावत् । अन्यत्र मानवतीनां समीपं गमिताः । कैतकपांसवः केतकीकुसुमरेणवः । ता एव विभूतयः भस्मानि यैः तथोक्ताः । भस्म यथा ग्रहाणां पीडाजनकतया ग्रहनिष्कासनसाधनं तथा केतकीरेणुरयमपि रागोद्दीपकतया मानोच्चाटनसाधनमित्येवमुक्तिः । किञ्च । स्तनितानि मेघगर्जितानि तान्येव हुंकृतयः हुंकाराः भयंकरतया मान्त्रिकैर्ग्रहोच्चाटनाय समुच्चार्यमाणा हुमित्येवंरूपा निर्भर्त्सनशब्दाः । मेघगर्जितानि श्रुत्वा हुंकारश्रवणेन ग्रहाविष्टाः ग्रहमिव मानं विमुञ्चन्ति स्त्रिय इत्येवमुक्तिः । तैः करणभूतैः । युवतीनां समूहः यौवतम् । भिक्षादित्वादण् । नृपतेः राज्ञः यौवतम् नृपतियौवतम् राजवधूजन इत्यर्थः । तस्य मानः प्रणयकोपः स एव महाग्रहः अनल्पः पूतनादिः भूतविशेषः ग्रहग्रस्ताः प्रियं द्विषन्ति तथा एता अपि मानग्रस्ता इत्युभयोस्साम्यादेवमुच्यते । तम् कर्म । निरकासयन् निरासयन् अमोचयन् । ग्रहाविष्टा ग्रहादिव प्रियपराङ्मुखा वल्लभा मानान्मुक्ताः रागातिशयेन प्रियं समाश्लिष्यन्तीति भावः । कस गतौ हेतुमण्ण्यन्ताल्लङ् । मान्त्रिका यथा ग्रहग्रस्तानां ग्रहोच्चाटनाय हुंकृत्य तर्जयन्तः स्वहस्ततलादुत्क्षिप्तमन्त्रविभूतिसंपर्केण महाग्रहानुच्चाटयन्ति तद्वन्मेघा अपि स्वगर्जितैः प्रणयकोपेन प्रियपराङ्मुखीनां मानवतीनां वर्षाकालवायुविक्षिप्तसौगन्ध्यवत्केतकीकुसुमपांसुसंपर्केण स्वगर्जितैश्च कामोद्दीपनं कृत्वा भयमुत्पादयन्तः प्रियसंगमोन्मुखीस्ताः कुर्वन्तीति तात्पर्यार्थः । अत्र करतलादीनां गन्धवहादीनां च सादृश्यमित्युपमा । सा च कैतकपांसुत्वाद्यवयवरूपणेन मेघस्य मान्त्रिकत्वरूपावयविरूपणगम्यस्यैकदेशविवर्तिरूपकस्य महदुपकरोतीति तेन साकं संकीर्यते । मेघगर्जितानि कामोद्दीपकानि प्रणयकोपापनोदकानि चेति कविलोके प्रसिद्धम् — "पयोधरैर्भीमगभीरनिस्वनैस्तटिद्भिरुद्वेजितचेतसो भृशम् ।

कृतापराधानपि योषितः प्रियान् परिष्वजन्ते शयने निरन्तरम् ” इत्यादिना ॥

नायिकाप्रणयसमुद्दीपकत्वं वर्षर्तोः पूर्वमुक्त्वा “ उभयप्रार्थना रतिं कुरुत ” इति नायकस्यापि तदुद्दीपकत्वममुमारभ्य चतुर्भिश्श्लोकै र्वर्णयन्त्युपसंहरत्यस्य ऋतोर्वर्णनाम् —

**चलितबर्हिणचन्द्रकचित्रितै**
**स्सुरभिगन्धिशिलामदशालिभिः ।**
**विकचनीपवनैर्नृपतेर्मनो**
**मुहुरहारि विहारमहीधरैः ॥** ॥ ३४ ॥

**चलितेति** ॥ चलिताः विलसिताः । चल विलसने - कर्तरि क्तः । बर्हिणाः मयूराः तेषाम् चन्द्रकाः मेचकाः पिञ्छस्थबर्हिनेत्राणि । ‘समौ चन्द्रकमेचकौ’ इत्यमरः । चन्द्र इव चन्द्रक इति ‘इवे प्रतिकृतौ’ इति कन् । तैः चित्रितैः शवलितैः संजातानेकवर्णैः । तारकादित्वा दितच् । सविलासं संचरतां मयूराणां चन्द्रकैर्हरिन्नीलादिवर्णाननेकान् धारयन्ति क्रीडाभूधरास्ते इति भावः । किञ्च । सुरभिः इष्टः अभिमतः आह्लादक इत्यर्थः । तादृशः गन्धः यस्येति बहुव्रीहिः । ‘गन्धस्ये’ दितीत्त्वम । ‘सुरभिर्घ्राणतर्पणः’ इत्यमरः । गन्धशब्द सान्निध्येन विशेषणतानुकूलार्थप्रतीतिर्गोबलीवर्दन्यायेन शक्तिसंकोचा त्सुरभिशब्दस्य । तादृशः शिलामदः शैलेयम् शिलाजतु गन्धवानोषधि विशेषः । ‘शिलाजतु च शैलेयम्’ इति यादवः । “ शैलेयनद्धेषु शिला तलेषु ” इति कुमारसंभवे कालिदासः । तेन शालन्ते प्रकाशन्त इति णिनिः । गन्धवदोषधिद्रव्यैरत्यन्तं घुमघुमितास्ते पर्वता इति भावः । किञ्च । विकचानि विकसितानि प्रफुल्लोत्फुल्लसंफुल्लव्याकोचविकच स्फुटा’ इत्यमरः । तथाविधानि नीपवनानि कदम्बवृक्षसमूहाः यस्मिन्



तथोक्तैः । ते कदम्बपुष्पैरतिमनोहरा वर्तन्त इति भावः । एवंविधैः । विहारमहीधरैः क्रीडापर्वतैः । कर्तृभिः । नृपतेः राज्ञः । मनः चित्तम् । कर्म । मुहुः पुनः पुनः । अहारि अहृत अह्रियत । बलादाकर्षि । क्रीडामहीधरांस्तथाविधान् पश्यतस्तस्य मनो न वितृप्तमासीदिति भावः । ‘क्रीडामहीधरैर्नृपतेर्मनः अह्रियतेति वाक्यार्थे चलितबर्हिणे त्यादिपदार्थाः विशेषणगतया हेतुतामनुभवन्तस्समर्थनीयार्थसमर्थका अभ वन्निति काव्यलिङ्गमलङ्कारः ।

यद्यपि मयूरनाटचनीपविकासादयः पूर्वं वर्णितास्तथापि क्रीडा पर्वताश्रयत्वेन नृपमनोहारित्वेन च (भङ्ग्यन्तरेण) पुनर्वर्णनं न विरु ध्यते । यत इयं महाकविशैलीसिद्धा रीतिः । यथाह माघः “ कपाट विस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य । आनन्दिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ” इति । अत्र प्रसाधितस्यास्येति पूर्वश्लोकार्थ एव भङ्ग्यन्तरेण पुनरुच्यते । अत्र मल्लिनाथः – “ प्राये णैकार्थमप्यनेकमुक्तिविशेषलाभाल्लिखन्ति कवयः । यथाहि नैषधे – आदावेव निपीयेत्यादिश्लोकद्वयम् , तथा स्वकेलिलेशेत्यादिश्लोकद्वयं च ” इति । एवमन्यत्राप्यूह्यम् ॥

ऋतुकालोचितवेषधारणं राजस्त्रीषु कथ्यते –

**तमहरन्नहरत्ययमालती**
**कुसुमदन्तुरकुन्तलकान्तयः ।**
**परिहितागरुधूपितवाससस**
**स्सुतनवो मृगनाभिसुगन्धयः ॥** ॥ ३५ ॥

**तमिति** ॥ शोभनाः सुन्दराः तनवः शरीराः यासां ताः सुतनवः । सुन्दराङ्ग्यः राजस्त्रियः । कर्त्र्यः । अहरत्ययः सायंकालः तस्मिन् मालतीकुसुमानि जातिकुसुमानि । ‘सुमना मालती जातिः’

इत्यमरः । तैः दन्तुराः उन्नताः विषमोन्नताः । 'दन्त उन्नत' इत्युरच् । कुन्तलानाम् शिरोरुहाणाम् कान्तयः प्रभाः यासाम् तथोक्ताः । कुन्तलाः दन्तुरा इति कृत्वा तत्कान्तीनां दन्तुरत्वमिति वेदितव्यम् । सायंकाले सद्योविकसितजातिकुसुमसमलङ्कृतकेशपाशैश्शोभायमानास्ता इति वाक्यार्थः । तथाभूताः । किञ्च । परिहिताः धृताः । परिपूर्वात् दधातेः क्तः । दधातेरिति हिरादेशः । अगरुभिः राजार्हैः । 'वंशकागरुराजार्हलोहक्रिमिजजोऽङ्गजम्' इत्यमरः । ( तैः ) धूपितानि संतापितानि । 'संतापितसंतप्तौ धूपायितधूपितौ च दूनश्च' इत्यमरः । तादृंशि वासांसि यासां ताः । तथाभूताः । अगरुधूपसंतपनेन दाहवन्ति वस्त्राणि ताभिर्धृतानीत्यर्थः । किञ्च । शोभना गन्धाः येषां सुगन्धयः । मृगनाभ्या कस्तूर्या सुगन्धय इति विग्रहः । स्तनादिषु कस्तूर्याद्यनुलेपनेन धृततद्गन्धा इति भावः । 'तदेकान्तग्रहण'मिति वार्तिकेन यद्यपीत्त्वमत्र न न्याय्यं तथापि बहु महाकविक्षुण्णोऽयं प्रयोगमार्ग इति न दोषाय । "कस्तूरिकामृगविमर्दसुगन्धिरेति । रागीव सक्तिमधिकां विषयेषु वायुः" इत्यादि । तथाविधाः । तम् कम्पराजम् अहरन् चित्तापहरणपूर्वकमनन्दयन् । चित्तपारवश्यमन्वभावयन्नित्यर्थः । अगरुधूपसंतापितवासोभिर्धृतकस्तूरीसुगन्धानुलेपनादिभिः ऋतुकालोचितनेपथ्यैस्तन्मानसं स्वायत्तं कृत्वा तमरञ्जयन्निति भावः । शृङ्गाराश्च चतुर्विधाः । चतुर्विधश्शृङ्गारोऽयमेव नेपथ्यशब्देन व्यवह्रियते । तत्रतावदाभारण शृङ्गारंविना वस्त्रमाल्यानुलेपनशृङ्गारास्त्रिविधा वर्णिता उपलक्षणविधया । यद्वा । मनसीत्याध्याहृत्य 'मनसि तम् अहरन्' इति समन्वयः । कम्पराजमनोहरणं कम्पराजपर्यन्तं गच्छतीति कम्पराजहरणमाञ्जसमिति तथा प्रयोगः । एतादृशप्रयोगाणां सहृदयरञ्जकत्वम्, महाकविसंप्रदायसिद्धत्वं च वेदितव्यम् – अतएव सौन्दर्यलहर्यां भगवत्पादा एवं प्रायुञ्जत - "मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं ललाटे भर्तारं चरणकमले ताडयति या' इति । अत्र



'अहरत्यये' त्यादीनि विशेषणगत्या कम्पराजरञ्जने हेतुभूतानीति काव्यलिङ्गमलङ्कारः ॥

**मणिमयानि गृहाणि समीरणाः**
**कुटजकैतकसौरभवाहिनः ।**
**मदकलाश्च गिरः प्रचलाकिनां**
**क्षितिपतेस्स्मरदीपकतां ययुः ॥ ॥ 36 ॥**

**मणिमयेति** ॥ मणिमयानि रत्नप्रचुराणि । प्राचुर्ये मयट् । तथाविधानि गृहाणि भवनानि । किञ्च । कुटजाः गिरिमल्लिकावृक्षाः 'कुटजश्शक्रो वत्सको गिरिमल्लिका' इत्यमरः । तेषां पुष्पाणि कुटजानि गिरिमल्लिकाकुसुमानि । कैतकानि केतकीपुष्पाणि । तेषाम् सौरभम् सुगन्धः तेन वस्तुं शीलमेषामिति णिनिः । तत्सौगन्ध्यसंबन्धबन्धुरा इत्यर्थः । तादृशः समीरणाः वायवः । किञ्च । प्रचलाकः बर्हः मयूरपुच्छः स एषामस्तीति प्रचलाकिनः मयूराः । तेषाम् । मदेन संतोषेण 'मदे रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' इति विश्वः । कलाः अव्यक्तमधुराः 'ध्वनौ तु मधुरास्फुटे कलः' इत्यमरः । तादृश्यः गिरः वाचः केका इत्यर्थः । च समुच्चये । समुच्चिता एतास्सर्वा इत्यर्थः । क्षितिपतेः राज्ञः । स्मरम् मन्मथम् दीपयन्ति प्रज्वलयन्तीति स्मरदीपकाः । तेषाम् भावः तत्ता । ताम् । ययुः प्रापुः । तस्य कामोद्दीपनं ते चक्रुरित्यर्थः । या प्रापणे – लिट् । स कम्पप्रभुर्मणिगृहेषु स्थित्वा केतक्यादिपुष्पसुगन्धयुतवायून् जिघ्रन् श्राव्याः केकाश्शृण्वन् प्रवृद्धमन्मथस्स्वकान्ताभिस्साकं विहर्तुमैच्छदिति तात्पर्यार्थः । वर्षावायूनां कामोद्दीपकत्वमन्यत्रापि वर्ण्यते – "कदम्बसर्जार्जुनकेतकीवनं विकम्पयंस्तत्कुसुमाधिवासितः । सशीकराम्भोधरसङ्गशीतलस्समीरणः कं न करोति सोत्सुकम्" इति ॥

**नववधूपरिरम्भणदोहला**
**न्यनुपदं निनदैः प्रतिपादयन् ।**
**अलभत क्षणदासु घनागमो**
**नरपतेः किल नर्मसुहृत्पदम् ॥** ॥ 37 ॥

**नववधूरिति ॥** घनागमः वर्षर्तुः । कर्ता । घनागमः मेघसमागमः (नूतनतया) अस्मिन्नस्तीति 'अर्शआ' द्यच् । सः निनदैः ध्वनिभिः (मेघ) गर्जितैः । चतुरवचोरूपैरिति गम्यते । अनुपदम् क्षणे क्षणे । पदे पदे इति वीप्सायामव्ययीभावः । प्रतिवाक्यमिति च गम्यते । 'पदं शब्दे च वाक्ये च व्यवसायापदेशयोः' इति विश्वः । नववध्वः नूतनप्रियाः तासाम् परिरम्भणम् गाढाश्लेषः तस्मिन् दोहलानि दोहदानि अभिलाषाः तद्विषयकाभिलाषाः नायकसम्बन्धिन इत्यर्थः । तानि । क्षणदासु रात्रिषु । उत्सवदायिनीषु स्थितिष्विति च गम्यते । क्षणम् उत्सवम् ददाति । क्तः । केवलयौगिकोऽयम् । प्रतिपादयन् वितरन् मनोरथसिद्धिं कुर्वन् । "वितरत्यर्पयति चणत्यतिसृजत्यपि । ददते राति शणति प्रतिपादयतीति च । दाने" इति भट्टमल्लः । किलेति संभावनायाम् । एवं संभाव्यत इत्यर्थः । वाचयन् अभिव्यञ्जयन् नायकाभिलाषान् नायिकासविधे विशदयन् तद्द्वारा मानं त्याजयन्निति च गम्यते । नरपतेः राज्ञः । नर्मसुहृत् नर्मसचिवः । नायिकासंघटने नायकस्य सहायभूतः । एष च चतुर्विध इत्यालङ्कारिकाः – "(तेषाम्) नर्मसचिवः पीठमर्दविटचेटविदूषकभेदाच्चतुर्विधः" इति । तत्रायं पीठमर्द इति ज्ञायते । 'कुपितस्त्रीप्रसादकः पीठमर्द' इति तल्लक्षणात् । वर्षासु मेघा गर्जन्ति । प्रणयकुपिता अपि तद्गर्जनैर्भीता नायिकाः नायकमुपसृत्य गाढमालिङ्गन्ति । एवमेतदृतौ कान्तास्वयंग्रहाश्लेषणसौख्यमनुभवन्ति नायकाः । इत्थंभूते वर्षर्तौ कम्पराजस्य नर्मसाचिव्यसंभावना क्रियते । नर्मसचिवो यथा



प्रणयकुपिताः नायिकास्स्वचतुरवचोरचनाभिः प्रसाद्य नायकस्याभिलाषसिद्धिं नायिकास्वयंग्रहाश्लेषेण सम्पादयति तद्वदयमपि । अतो नर्मसचिवतादात्म्यसंभावना वर्षर्ताविति द्रव्यस्वरूपोत्प्रेक्षेयम् ॥

शरदं वर्णयति —

**तदनु पद्मवनीपरिहासक**
**स्त्रिदशनाथशरासनतस्करः ।**
**भुजगभुङ्मुखमुद्रणभौरिक**
**स्समुदभूत्समयो जलदात्ययः ॥** ॥ 38 ॥

**तदन्विति ॥** तदनु तदनन्तरम् । वर्षर्तावपगते इत्यर्थः । पद्मवनीनाम् तामरषण्डानाम् परिहासकः विदूषकः 'हास्यप्रायो विदूषक' इत्युक्तेः । स इव संतोषजनक इत्यर्थः । शरदि पद्मानि कान्तिमन्ति वर्तन्त इत्येवमुच्यते । किञ्च । त्रिदशनाथः देवेन्द्रः तस्य शरासनम् धनुः इन्द्रधनुः तस्य तस्करः चोरः तदपहारक इत्यर्थः । वृष्टेरपगमेन तदानीमिन्द्रधनुषामदर्शनमित्यत एवमुक्तिः । किञ्च । भुजगभुजः मयूराः । 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्' इत्यमरः । तेषाम् मुखानाम् आननानाम् तज्जानां वाचामित्यर्थः । मुद्रणम् यन्त्रणम् (बन्धनम्) तत्र भौरिकः कनकाध्यक्षः । स यथा सुवर्णनिष्कादीन् वस्त्रादिषु बद्ध्वा मुद्रयति तद्वदित्यर्थः । "वर्षास्वेव मयूराणां रुतं नृत्यं च वर्णये" दिति नियमेन तदन्यत्र केकानामनुपलब्धेरेवमुक्तिः । एतादृशः । जलदात्ययः – जलदानाम् मेघानाम् अत्ययः अतिक्रमणम् दूरतो गमनम् वर्षुकाणां मेघानामदर्शनमिति यावत् । तदस्मिन्नस्तीति 'अर्शआ' द्यच् । तादृशः । समयः कालः शरदृतुरित्यर्थः । सः । उदभूत् उदियाय अवततारेत्यर्थः । शरदि पद्मानां कान्तिमत्त्वम्, इन्द्रधनुषामभावः, केकानामश्रवणं च संभवति ।

अतएव शरद्वर्णनेषु कवयः – " प्रबुद्धपद्मोत्पलमालिनीनां वाप्युत्तमाना मधिकाद्य लक्ष्मीः " इति । " नष्टं धनुर्बलभिदो जलदोदरेषु " इति, ' अतिप्रवृद्धानिलबर्हिणानां द्रुतं रवास्संप्रति संप्रणष्टाः " इत्याद्याच क्षते । अत्र शरदि परिहासकत्वादिरूपणम्, तच्चैकस्यानेकधेति रूपकमालालङ्कारः ॥

**विधुतकाशसटाभरभासुरः**
**प्रकटितोरुजपारुणलोचनः ।**
**व्यघटयद् घनदन्तिघटाः स्फुर**
**द्रविमुखश्शरदागमकेसरी ॥** ॥ 39 ॥

**विधुतेति** ॥ विधुतः अत्यन्तं चलितः काशः इक्षुगन्धा तृण विशेषः । ' अथो काशमस्त्रियाम् । इक्षुगन्धा पोटगलः ' इत्यमरः । स एव सटाभरः केसरसमूहः । विधूननादिसाम्येनैवमुक्तिः । 'सटा जटा केसरयोः ' इति मेदिनी । तेन भासुरः प्रकाशमानः । किञ्च । प्रक टिताः विकसिताः उर्व्यः विपुलाः जपायाः पुष्पाणि जपाः जपाकुसु मानि । तान्येव अरुणे लोहिते लोचने नेत्रे यस्य । वैपुल्यादारुण्या च्चैवमुक्तिः । रविः सूर्यः सूर्यबिम्बम् स एव मुखम् आननम् यस्य । दीप्तिमत्त्वाद्वर्तुलत्वाच्चैवमुच्यते । शरदः आगमः शरदागमः । शरदृतो रुपसर्पणम् । सोऽस्मिन्नस्तीति अर्शआदित्वादच् । शरदृतुः स एव केसरी सिंहः । कर्ता । घनाः मेघाः त एव दन्तिनः गजाः । नैल्यान्महत्त्वाच्चैवमुक्तिः । तेषाम् घटाः यूथाः । ताः कर्म । व्यघट यत् व्यदलयत् अदृश्यतामनयत् । सिंहदर्शनेन यूथाद् भ्रष्टाः प्राणभयेन यथेच्छं पलायन्ते गजाः इति शरदि समागते वार्षिकमेघा अदृ श्यतां गच्छन्तीति च वेदितव्यम् । सिंहो यथा सटाः विधून्वन् ( यूथदर्शनेन ) क्रोधारुणे लोचने बिभ्रत् दीप्तिमन्मुखं व्याददत् गज यूथान् विदलयति तथा शरदृतुरयमपि काशं चलयन् जपापुष्पाणि



विजृम्भयन् सूर्यस्य दीप्तिमापादयन् विराजत इति निर्गलितोऽर्थः । शरदि सूर्यस्य कान्तिमत्त्वं जपाकाशयोर्विकासः मेघानामदर्शनं च प्रसिद्धमित्येवं रूप्यते । अत्र सामस्त्येनावयवानामवयविनश्च रूपण मिति समस्तवस्तुविषयकं रूपकमलङ्कारः ॥

'शरदीन्दुरविपटुत्वं जलाच्छतागस्त्यहंसवृषदर्पा ' इति देवेशः । तत्र सूर्यचन्द्रयोर्दीप्तिमत्तां कीर्तयति –

**अवितथं रजनीदिवसाधिपौ**
**मधुरिपोर्नयने इति भाषितम् ।**
**स्फुटममुष्य यतस्स्वपनात्यया**
**दजनि तादृशमुन्मिषितं तयोः ॥** ॥ 40 ॥

**अवितथमिति** ॥ रजनी रात्रिः दिवसः दिनम् तयोः अधिपौ पती निशापतिः चन्द्रः दिनाधिपः सूर्यश्चेत्यर्थः । तौ । मधोः तन्नाम कस्य रक्षसः रिपुः शत्रुः तस्य हन्ता विष्णुः । तस्य । नयने नेत्र भूते । सूर्यो दक्षिणं नेत्रं चन्द्रश्च वामं नेत्रं विष्णोरित्यागमः । इति एवंविधम् भाषितम् वचनम् आगमानामित्यर्थः । 'व्याहार उक्तिर्लपितं भाषितं वचनं वचः ' इत्यमरः । वितथम् अनृतं वचः । ' वितथं त्वनृतं वचः ' इत्यमरः । तन्न भवतीत्यवितथम् असत्यं न सत्यमेवेत्यर्थः । तदेव समर्थयति – यतः यस्मात् येन कारणेनेत्यर्थः । हेतौ पञ्चमी । पञ्चम्यास्तसिः । अमुष्य प्रकृतस्य विष्णोः स्वपनम् स्वापः शयनम् । ञि ष्वप् शयने – भावे ल्युट् । तस्य अत्ययः परि समाप्तिः प्रबोध इति यावत् । तेन । तयोः चन्द्रसूर्ययोः । तादृशम् तथाविधम् अपरिमितम् । उन्मिषितम् उन्मेषः विकासः अतिशयितः प्रकाशः । स्फुटम् व्यक्तं सत् अजनि आसीत् । आषाढस्य शुक्लै कादश्यां निद्राति विष्णुः । शरदि कार्तिक्या शुक्लैकादश्यां प्रबुध्यति

स भगवान्। मेघावृतत्वेन न प्रकाशेते चन्द्रसूर्यावाषाढ्याम्। प्रकाशेते चातीव जलदापगमेन कार्तिक्याम्। इत्थं चन्द्रसूर्ययोरप्रकाशश्च प्रकाशश्च विष्णुनिद्राप्रबोधाभ्यां साकं भवतीति तयोः कार्यकारणभावमन्वयव्यतिरेकाभ्यां कल्पयति स्वप्रौढोक्तिं द्वारीकृत्य कवयित्री। विष्णोर्निद्राप्रबोधौ हरिवंशे वर्णितौ – "एकादश्यां शुक्लपक्षे ह्याषाढस्य सुरोत्तम। स्वमायया पवित्राङ्ग्या निद्रया वर्तते प्रभुः॥ प्रसन्नमूर्तिर्भगवान् कार्तिक्यां भवति प्रभुः। तस्य प्रसन्नदिवसमुत्थानाख्यं विदुर्बुधाः" इति। अत्र पूर्वार्धं प्रत्युत्तरार्धं हेतुभावमापन्नं सत्समर्थनीयमर्थं समर्थयतीति वाक्यार्थं प्रति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः॥

जलाच्छतामगस्त्योदयं च व्याचष्टे —

**कलशजस्य मुनेरुदयाज्जहुः**
**कलुषतां सलिलानि महौजसः।**
**सदुपदेशवशादिव शासितु**
**स्तनुभृतां हृदयानि दयानिधेः॥** ॥ 41 ॥

**कलशजस्येति**॥ महत् पृथु अलघु ओजः तेजः प्रभावः यस्य तस्य तेजस्विनः। वियति स्थित एव यतो जलमात्रस्य स्वदर्शनेन स्वच्छतां घटयत्यतोऽपीति भावः। कलशजस्य कुम्भसंभवस्य मुनेः ऋषेः अगस्त्यस्य नक्षत्राकारस्य। उदयात् प्रादुर्भावात् बहिस्स्वाकारदर्शनात्। दक्षिणस्यां दिशीत्यर्थः। अत्रागमः – "अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः। वरुणस्यात्मजो योगी विन्ध्यवातापिमर्दनः" इति। सलिलानि उदकानि। कर्तृभूतानि। दयानिधेः कृपाकरस्य। अव्याजकरुणामूर्तेरित्यर्थः। अनेन भक्तिरेकैव साधनमेनं प्रीणयितुमिति सूच्यते। शासितुः नियन्तुः इदं कुर्विदं माकुर्विति (धर्माधर्मबोधनेन) शिक्षयतः आचार्यस्येत्यर्थः। तस्य सदुपदेशः हितबोधः। ब्रह्मोपदेश इति च गम्यते। तस्य वशः अधीनता तदनुसरणम् यथोक्ताचरणमिति यावत्। 'त्रिष्वधीने वशो वाञ्छा प्रभुत्वाधीनतासु ना' इति नानार्थरत्नमाला। तस्मात्। तनुभृताम् देहधारिणाम् शिष्याणामित्यर्थः। हृदयानि मनांसीव। कलुषताम् पङ्कादिकृतं मालिन्यम्। रागादिसंभूतं चित्तदोषमिति च गम्यते। ताम्। कर्म। जहुः तत्यजुः अच्छान्यभवन्नित्यर्थः। शुद्धान्यासन्निति च गम्यते। आचार्यो यथा धर्मप्रबोधेन रागादिदोषदूषितान्तःकरणान् शिष्यानविद्यापगमनेन शुद्धचित्तान् करोति तद्वदयमपि मुनिस्स्वप्रादुर्भावेण पङ्कोद्भूतं मालिन्यमपनीय जलानि स्वच्छानि करोतीत्युपमार्थः। वाक्यार्थोपमेयम्। अगस्त्योदयमित्थं प्रशंसति वराहसंहिता - "उदये च मुनेरगस्त्यनाम्नः कुसुमायोगमलप्रदूषितानि। हृदयानि सतामिव स्वभावात्पुनरम्बूनि भवन्ति निर्मलानि" इति॥



शरन्मेघान् प्रस्तौति —

**विशदशारदनीरदशारितं**
**वियदलक्ष्यत वीततटिद्गणम्।**
**प्रकटफेनकदम्बककर्बुरं**
**जलमिवाम्बुनिधेर्गतविद्रुमम्॥** ॥ 42 ॥

**विशदेति**॥ विशदाः धवलाः। शरदि भवाः शारदाः शरत्संजाताः। 'सन्धिवेलाद्यृतुनक्षत्रेभ्य' इत्यण्। तथाविधाः नीरदाः जलदाः मेघाः। तैः शारितम् चित्रवर्णवत्कृतम्। स्वगतनीलिम्ना शरन्मेघगतधवलिम्ना चेति भावः। 'शारो वायौ स तु त्रिषु कर्बुरे' इत्यमरः। किञ्च। वीतः अपेतः अपसृतः तटिद्गणः विद्युत्समूहः यस्मात् तथोक्तम्। तथाविधम् विद्युद्विरहितधवलमेघयुतं सदित्यर्थः।

वियत् आकाशः । 'वियद्विष्णुपदं वापि पुंस्याकाशविहायसी' इत्यमरः । तत् कर्म । प्रकटाः स्फुटाः फेनकदम्बकाः डिण्डीरपिण्डाः तैः कर्बुरम् चित्रम् स्वगतनैल्येन फेनसंजातवैशद्येन चेत्यर्थः । 'चित्रं किर्मीर कल्माषशबलैताश्च कर्बुरे' इत्यमरः । गताः अपगताः परित्यक्ताः । गमेः कर्तरि क्तः । विद्रुमाः प्रवालाः यस्मात् । तथाविधम् । अम्बुनिधेः समुद्रस्य जलम् उदकमिव अलक्ष्यत अदर्शि अज्ञायि । लक्ष दर्शनाङ्कयोः – कर्मणि लङ् । अम्बुधौ विद्रुमा यदि न स्युस्तदानीं फेनराशिना धवलं स्वाकारेण नीलं च समुद्रजलं शरन्मेघखण्डैर्धवलं स्वनैल्येन नीलं च गगनमनुकुर्यादिति तात्पर्यार्थः । अत्र शारदमेघवति नभसि समुद्रजलतादात्म्यसंभावनेति द्रव्योत्प्रेक्षा ॥

सूर्याचन्द्रमसोर्दीप्तिमत्तां कीर्तयति —

**नियतमम्बुदशाणनिघर्षणा**
**दतिमहस्कमहस्करमण्डलम् ।**
**अजनि वर्षविधोरपि वार्षिकै**
**र्जलधरैः परिपीतमिवोज्ज्वलम् ॥** ॥ 43 ॥

**नियतमिति** ॥ अम्बुदाः नीलमेघाः त एव शाणाः उभयोरपि नीलत्वेन साम्यादेवमुक्तिः । 'शाणस्तु निकषः कषः' इत्यमरः । तत्र निघर्षणम् संघट्टनम् । तैः संघर्षणमिति च गम्यते । तस्मादिवेति गम्योत्प्रेक्षा । अहस्करमण्डलम् सूर्यबिम्बम् । 'भास्कराहस्करब्रध्नप्रभाकरविभाकराः' इति 'बिम्बोऽस्त्री मण्डलं त्रिषु' इति चामरः । तत् कर्तृ । अति अधिकम् महः तेजः यस्य तथोक्तम् । दीप्त्याऽतिशयितं सदित्यर्थः । 'शेषाद्विभा' षेति कप् । तथाविधम् । अजनि अभूत् । नियतम् ध्रुवमिति संभाव्यते । वर्षासु भवाः वार्षिकाः । 'वर्षाभ्यष्ठ' गिति ठक् । तादृशैः मेघैः वर्षाकालोदितमेघैरित्यर्थः । तैः कर्तृभिः । परिधौतम् सुष्ठु क्षालितम् नियतमिति संभावना । वर्षविधोः वर्षाकालिकचन्द्रस्य । वर्षशब्देन वर्षाकालो लक्ष्यते । अपिशब्देन समुच्चायकेन मण्डलमित्यध्याह्रियते । विधोर्मण्डलमपीत्यर्थः । उज्ज्वलम् दीप्तम् कान्तिमत् । 'उज्ज्वलस्तु विकासिनि शृङ्गारे विशदे दीप्तेऽपि' इति हैमः । अजनि । शरदि चन्द्रसूर्ययोर्दीप्तिमत्त्वे हेतुरुत्प्रेक्ष्यते । वर्षासमयेऽम्बुदैर्दिनदिनमाच्छादितत्वेन तत्संघर्षणं सूर्यस्य जातमिति शाणोल्लीढ इव दीप्तिमान् स असीदिति । एवमेव चन्द्रस्यापि तस्मिन् काले वर्षधाराभिस्सह संघर्षणमिति तद्धाराक्षालितमालिन्यवत्त्वेन तस्य दीप्तिमत्त्वमभवदिति । अत एवेदमुत्प्रेक्षाद्वयम् । परस्परनैरपेक्ष्यादनयोस्सजातीययोस्संसृष्टिः । शरदि चन्द्रसूर्ययोः कान्तिसमृद्धिमेवं कथयति भगवान् वाल्मीकिः "शाखासु सप्तच्छदपादपानां प्रभासु तारार्कनिशाकराणाम् । लीलासु चैवोत्तमवारणानां श्रियं विभज्याद्य शरत्प्रवृत्ता" इति ॥



नद्यो वर्ण्यन्ते द्वाभ्यां श्लोकाभ्याम् —

**जलदकालकलिस्फुरितां शनैः**
**कलुषतां प्रशमय्य कृशाः पुनः ।**
**घटयति स्म शरत्तटिनीसखी**
**रुपनतैः कलहंसविलासिभिः ॥** ॥ 44 ॥

**जलदेति** ॥ शरत् शरत्समयः । काचिच्चेटीति गम्यते । सा कर्त्री । जलदकालः वर्षाकालः तस्य कलिः कलनम् प्राप्तिः आगमः कलेर्भावे इन्नौणादिकः । स एव जलदकालकलिः नायिकान्तरासक्तस्य नायकस्य नायिकया सह कलहः । तेन स्फुरिताम् व्यक्ताम् संभूताम् कलुषताम् । एकत्र नायिकायाः मनःकालुष्यम्, अन्यत्र नद्याः पङ्किलताम् । शनैः मन्दमन्दम् क्रमेणेत्यर्थः । अपरुषैः वाक्यैरिति च ।

प्रशमय्य उपशमय्य कथं चिदनुनीयेत्यर्थः। अनेन मानवतीत्वेन नायिकायाः कोपातिशयः, नायकस्य गाढा चान्यासक्तिः, अनितरसाधारणं च दूतीचातुर्यं नायिकानुनयने स्फुरति। कृशाः क्षीणाः एकत्र दृष्टापराधं नायकं निरस्य तद्विरहेण। अन्यत्र वर्षाप्रवाहोल्बणस्य प्रशान्तत्वेन च। तटिन्यः नद्यः। 'तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी' इत्यमरः। ता एव सखीः प्रियवयस्याः नायिकाः। उपनतैः उपस्थितैः समीपं प्राप्तैः। नदीनामिदानीं स्वच्छजलत्वेन। अन्यत्र नायिकासमागमार्थमिति च। कलहंसाः राजहंसाः। राजान इति च। 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे' इति मेदिनी। त एव विलासिनः विलसनशीलाः शृङ्गारिणो नायकाः। 'विलासिन' इत्यनेन नायिकोपभोगे कृतप्रयत्ना इति सूच्यते। भोगरसिका एते गतभियो व्यक्तापराधा धृष्टा नायका इति गम्यत इति वा। तान्। पुनः भूयः। हंसा वर्षासु मानसं गताः पुनरायाता इत्येवमुच्यते। अन्यत्र च नायिकाभिस्संयुक्ता नायिकाः कलहेन वियुक्ताः पुनरायाता इत्यवगम्यते। घटयति स्म समघटयत् पुनस्संगतानकरोदित्यर्थः। 'लट् स्म' इति लिटोऽपवादो लट्। अत्रेदं तत्त्वम्। 'नद्यस्सर्वा वर्षासु पङ्किला वर्तन्ते। एतज्जलपानेन रुग्णता हंसानां संजायते। अतस्ते वर्षासु मानसं प्रयान्ति। तत्र तदानीं मानसजलस्य निर्मलत्वेन तदुपभोग्यं भवति। अन्यस्मिन् काले तत्र जलस्य घनीभूतहिमत्वादनुपभोग्यतेति पुनरायान्ति शरदि नदीः। तदानीमेतासामगस्त्योदयेन स्वच्छजलवत्त्वात्तेषामुपभोग्या एता नद्यो भवन्ति' इति। (यथाह नाथः – "ननु च हंसाः प्रियमानसाश्चेत्कुतो हेतोस्तद्विहाय देशान्तरे परिभ्रमन्ति। उच्यते – हिमालयैकदेशस्थं मानसं हिमदूषितसलिलादिकत्वादनुपभोग्यं भवति। ततस्तेषां देशान्तरगमनं भवति। वर्षसमये तु तस्य वर्षजलविरलितहिमत्वात्तस्य हंसनिवासयोग्यत्वमस्ति। नित्यप्रसन्नत्वाद्देशान्तरतटाकादिवत्कालुष्यं न भवतीत्युदीच्या उपदिशन्ति" इति।) कवि



रिममेवार्थं स्वप्रौढोक्त्या – नद्यो नायिका इति हंसा नायका इति, तेषां मानससरोगमनं नायिकाकलहेन नायकस्य देशान्तरप्रवास इति, मानससरोगमने हेतुभूतं नदीकालुष्यं नायकापराधजनितं नायिकाया मनःकालुष्यमिति, शरदागमने तत्कालुष्यमपगच्छतीति चेटचनुनयेन नायिकामनःकालुष्यप्रशमनं जातमिति, शरदि पुनरागत्य हंसास्सविलासगत्या नदीभिस्संगच्छन्त इति नायकास्सविलाससमागत्य नायिकाभिः पुनस्संयुञ्जन्तीति, शरच्च चेटीभूयैतानेतांश्च संघटयतीति सचमत्कारं वर्णयतीत्यवगन्तव्यम्। अत्र रूपकालङ्कृतिः। रूपकं चेदमेकदेशविवर्ति। 'तटिनीसखी' रित्यादिरूपणेन शरदि चेटीत्वारोपस्यार्थसिद्धत्वात्। इदं च रूपकं श्लेषमूलातिशयोक्त्या परिपुष्टमित्यङ्गाङ्गिभावेनैतयोस्सङ्करः॥

नदीषु हंसकूजितानि वर्ण्यन्ते –

**सरसिजाकरसञ्चरदिन्दिरा**
**चरणहंसकनिक्वणमन्थरः।**
**मदनमङ्गलतूर्यरवोऽभव**
**न्मदकलः कलहंसकुलध्वनिः॥** ॥ 45 ॥

**सरसिजेति**॥ मदः संतोषः उत्साहः तेन कलः अव्यक्तमधुरः। कलहंसानाम् कादम्बानाम् 'कादम्बः कलहंसस्स्या' दित्यमरः। राजहंसानां वा। 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे' इति मेदिनी। तेषाम् कुलम् समूहः श्रेणीभूताः कलहंसा इत्यर्थः। तस्य ध्वनिः नादः। कर्ता। सरसिजानि पद्मानि 'सप्तम्यां जने' रिति डः। 'तत्पुरुषे कृती' ति बहुलमलुक्। तेषाम् आकराः निलयाः पद्माकराः तडागाः 'पद्माकरस्तडागोऽस्त्री' इत्यमरः। यद्वा। सरसिजानाम् आकरः समूह इति वा। आकरशब्दस्समूहवाची। 'आकरो निकरे

खनौ’ इति सुधा। (अतएव “पद्माकरं दिनकरो विकचं करोति” इति प्रयुज्यते भर्तृहरिणा। अत्र ‘आकरः समूहः’ इति व्याख्यायते व्याख्यात्रा।) तत्र संचरन्ती सविलासं विहरन्ती। इन्दिरा लक्ष्मीः। पद्मालयत्वात्तस्या इति भावः। ‘इन्दिरा लोकमाता मा रमा मङ्गलदेवता’ इत्यमरः। तस्याः चरणौ पादौ तयोः हंसके पाद कटकौ। ‘हंसके पादकटकौ’ इत्यमरः। तयोः निक्वणः ध्वनिः। ‘निक्वाणो निक्वणः क्वाणः’ इत्यमरः। स इव मन्थरः मन्दं प्रवृत्तः अत्यन्तं श्राव्य इत्यर्थः। ‘मन्दगामी तु मन्थरः’ इत्यमरः। अतएव मदनः मन्मथः तस्य मङ्गलतूर्याणि मङ्गलवाद्यानि तेषाम् रवः ध्वनिः रागोद्दीपकश्शृङ्गारमयो मधुरध्वनिरित्यर्थः। तथाभूतः अभवत् आसीत्। शरदि हंसाश्श्रेणीभूतास्सोत्साहं सरस्सु कूजन्ति। तेषां नूपुरध्वनीनां च साम्यं कविसमयसिद्धम्। हंसकूजितानि तानि भृशं श्राव्याणि वर्तन्ते। लक्ष्मीश्च पद्मालया। अतस्तत्र सा विहरति सविलासम्। तदानीं तत्पादवलया मधुरं ध्वनन्ति। तद्ध्वनयः किमेत इति संभाव्यन्ते। हंसकूजितानि च तदानीं भृशं रागोद्दीपकानि भवन्ति। अतएव मन्मथमङ्गलवाद्यध्वनिरयमिति रूप्यते। उत्प्रेक्षा च पूर्वमुक्ता सम्मोहकत्वमेतेषु परिपोषयन्ती भवति रूपकस्याङ्गभूते त्येतयोस्संकरः। शरदि हंसरवाणां माधुर्यं नूपुरसाम्यं मन्मथोद्दीप कत्वं च कविलोके प्रसिद्धम्। “शरदि हंसरवाः परुषीकृतस्वरमयूर मयू रमणीयताम्” इति। “सोन्मादहंसरवनूपुरनादरम्या प्राप्ता शर न्नववधूरिव रूपरम्या” इति। “नृत्यप्रयोगरहितान् शिखिनो विहाय हंसानुपैति मदनो मधुरप्रगीतान्” इति च॥

**विकचपद्मविलोचनमात्मनो**
**मुखमवेक्षितुमात्तकुतूहला।**
**नियतमभ्रनिचोलकगर्भत**
**श्शरदकर्षदहर्पतिदर्पणम्॥** ॥ 46 ॥



**विकचेति**॥ शरत् शरत्समयः। सैव सुन्दरीति गम्यते। कर्त्री। विकचम् विकसितम् पद्मम् तदेव विलोचने नेत्रे यस्य तथोक्तम्। विकचपद्मवत् विलोचने यस्येति च गम्यते। तथाविधं भवति यथा तथा। आत्मनः स्वस्य। मुखम् आननम् अवेक्षितुम् आलोकयितुम् निजमुखसौन्दर्यमनितरसाधारणं कृत्वा द्रष्टुमित्यर्थः। आत्तम् गृहीतम् धृतमिति यावत्। तादृशम् कुतूहलम् कौतुकम् उत्कण्ठातिशयः यस्याः तथोक्ता। कदा द्रक्ष्यामीति सोत्कण्ठेवेति गम्योत्प्रेक्षा। अभ्रम् मेघः। ‘अभ्रं मेघो वारिवाह’ इत्यमरः। तदेव निचोलः प्रच्छदपटः दर्पणाद्यावरणवस्त्रम्। ‘निचोलः प्रच्छद पटः’ इत्यमरः। स एव निचोलकः। स्वार्थे कः। तस्य गर्भतः कुक्षितः अन्तर्भागादित्यर्थः। अहर्पतिः दिनपतिः सूर्यः स एव दर्पणः आदर्शः। ‘आदर्शो दर्पणः प्रोक्तः’ इत्यमरमाला। सूर्यबिम्बस्य वर्तुलत्वात्स्वच्छत्वात्प्रकाशवत्त्वाच्चैवमुक्तिः। तम्। अकर्षत् आचकर्ष। सवेगमगृह्णात्। नियतम् ध्रुवमिति संभावना। पद्मानां दीप्तिमत्ता सूर्यस्य कान्तिमत्ता च शरदि भवतीत्युक्तम्। पटसंवृतस्य वस्तुनो रजस्संस्पर्शादिरभावेन कान्तिमत्ता लोकसिद्धा। वर्षासु मेघावृतस्सूर्यः। शरदः (स्वस्य) मुखभूतानि पद्मानि सूर्यस्य तदानीं मेघावृतत्वेन मुकुलितानि भूत्वा स्वमुखसौन्दर्यमलोपयन्। तथाविधं निजमुख मिदानीं पद्मविकासेन तेजोविराजितं कृत्वा तद्द्रष्टुकामा, सूर्यस्य मेघावरणमपनीय तदावरणापगमेन दीप्तिमति सूर्ये पद्मदीप्त्या वर्चस्वि स्वमुखं सूर्यदर्पणे दृष्ट्वा परमानन्दमनुबभूव शरल्लक्ष्मीरिति तात्प र्यार्थः। मेघावरणापगमेन तेजोऽतिशयवता सूर्येण विकासातिशयं प्राप्य पद्मानि शरच्छोभामत्यन्तं पुपुषुरित्याकूतमत्र। अत्र चाहर्पतौ दर्पणत्वाद्यारोपश्शरदि सुन्दरीत्वरूपणमवगमयतीत्येकदेशविवर्तिरूपकम्। तच्च विकचपद्मवनमित्यत्रत्यश्श्लेषेणानुप्राणितम्। आत्तकुतूहलेवेति गम्यो त्प्रेक्षा रूपकमिदं च हेतुसंपादनेन स्वरूपसंपादनेन च ‘शरदहर्पति

दर्पणमकर्षदि ' वेति वाच्योत्प्रेक्षां परिपोषयत इत्यङ्गाङ्गिभावस्तया साक्रमेतयोः । अतस्संकरः । स चैकत्र सजातीयोऽन्यत्र विजातीय इत्यवगन्तव्यः ॥

शरद्रात्रयः प्रकथ्यन्ते —

**विलसदुत्पललोचनशालिनी**
**स्फुरितचन्द्रमुखीः कुमुदस्मिताः ।**
**नरपतिः स्फुटतारकहारिणी**
**र्निरविशद्दयिता इव यामिनीः ॥ ॥ 47 ॥**

**विलसदिति ॥** नरपतिः राजा कम्पनः । कर्ता । यामिनीः रात्रीः शारदरात्रीः दयिताः स्वप्रिया इव निरविशत् उपबुभुजे अनुबभूव । दयिता यथा स्वसौन्दर्यातिशयेनास्य चित्तमपाहरन् तथैवैता अपि तस्य हृदयरञ्जकास्सौख्यानुभूतिमापादयन्निति वाक्यार्थः । तदेवोपपादयति – विलसदुत्पलशालिनीः । शरत्पक्षे । विलसन्ति उत्पलानि नीलोत्पलानि तान्येव लोचनानि तैः शालन्त इति णिनिः । दयिता पक्षे – विलसदुत्पलानीव लोचनानि तैः शालन्त इति विशेषः । स्फुरितः प्रकाशमानः चन्द्रः स एव मुखम् यासां ताः । अन्यत्र स्फुरितचन्द्रवन्मुखं यासामिति विशेषः । कुमुदम् कैरवम् सितोत्पलम् विकसितमित्यर्थः । तदेव स्मितम् मन्दहासः यासां ताः । अन्यत्र कुमुदवत् स्मितम् यासामिति विशेषः । 'सिते कुमुदकैरवे' इत्यमरः । स्फुटानि प्रस्फुटानि विराजमानानि तारकाणि नक्षत्राणि तैः हारिणीः मनोज्ञाः । 'नक्षत्रे चाक्षिमध्ये च तारकं तारकापि च' इति शाश्वतः । अन्यत्र स्फुटतारकाणि अक्षिमध्यभागाः कनीनिकाः यासां ता इति विशेषः । (तादृशीः यामिनीः निरविशत्) अत्र दयिता इवेत्युपमा । केवलं श्लेषानुप्राणितेति श्लिष्टोपमेयम् ॥



इक्षुपरिणतिं शालिगोपिकागानं च प्रस्तौति —

**परिणतेक्षुपरिच्युतमौक्तिक**
**ग्रथितहारमनोहरमूर्तिभिः ।**
**विशदमस्य यशो नृपतेः कलं**
**कलमगोपवधूभिरगायत ॥ ॥ 48 ॥**

**परिणतेति ॥** अस्य नृपतेः कम्पराजस्य । विशदम् निर्मलम् यशः कीर्तिः । कर्म । परिणताः परिपक्वाः इक्षवः रसालाः । 'रसाल इक्षुः' इत्यमरः । तेभ्यः परिच्युतानि गलितानि इक्षुसमुद्भूतानीत्यर्थः । तादृशानि मौक्तिकानि मुक्ताफलानि । मौक्तिकानामुत्पत्तिश्च सर्वज्ञसोमेश्वरेणैवं कथिता – "गजकुम्भेषु वंशेषु फणासु जलदेषु च । शुक्तिकायामिक्षुदण्डे षोढा मौक्तिकसंभवः ॥ ... इक्षुदण्डे पीतवर्णा मणयो मौक्तिकास्स्मृताः" इति । तैः ग्रथिताः गुम्फिताः हाराः सराः तैः मनोहराः मनोज्ञाः मूर्तयः आकाराः यासां ताभिः । मुक्ताग्रथितहारालङ्कृतसुन्दराकाराभिरित्यर्थः । तादृशीभिः । कलमाः शालिविशेषाः तान् गोपायन्त इति कर्मण्यण् । 'टिड्ढाण' ञिति ङीप् । ताः वध्व इति कर्मधारयः । पुंवद्भावः । ताः सस्यपालिकास्त्रियः । ताभिः कर्त्रीभिः । कलम् मधुरं यथा तथा । अगीयत अगायि । गै शब्दे – कर्मणि लङ् । 'घुमा' स्थेतीत्त्वम् । कम्पराजयशश्चन्द्रिका आबालगोपालं व्याप्ता लोकमाह्लादयन्तीति परमार्थः । अत्र शालिगोप्यः पीतमुक्ताहारभूषिताः कम्पराजकीर्तिं मृदुमधुरं जगुरिति यथावद्वस्तुवर्णनं सहृदयहृदयाह्लादि संवृत्तमिति स्वभावोक्तिरलङ्कारः - 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णन' मिति तल्लक्षणात् । कालिदासोऽपि शरदं वर्णयति – "इक्षुच्छायानिषादिन्यस्तस्य गोप्तुर्गुणोदयम् । आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः" इति । कवयित्र्या तु चतुर्विधशृङ्गारेष्वेको भूषणशृङ्गारश्शालिगोपिकासु

गानाङ्गतया संघटित इति विशेषः ॥

सप्तवर्णवृक्षविकासः प्रकथ्यते —

**दलदयुग्मदलोदरसौरभ**
**प्रसरपक्ष्मलिता वनवायवः ।**
**मुहुरधःकृतयन्तृनिवारणा**
**नकृषत क्षितिभृन्मदवारणान् ॥** ॥ 49 ॥

**दलदिति** ॥ अयुग्मानि विषमाणि दलानि पर्णानि येषाम् अयुग्मदलाः सप्तपर्णाः वृक्षविशेषाः । 'सप्तपर्णो विशालत्वक्शारदो विषमच्छदः' इत्यमरः । तेषाम् प्रसवाः अयुग्मदलाः तत्पुष्पाणि । दलन्तः विकसन्तः अयुग्मदलाः दलदयुग्मदलाः । तेषाम् उदराणि मध्यप्रदेशाः तेषु सौरभम् तत्रत्यस्सुगन्धः तस्य प्रसरः व्याप्तिः तेन पक्ष्मलिताः अतिशयिताः तथोक्ताः । विकसितसप्तपर्णसौगन्ध्यसंभरिता इति यावत् । तादृशाः वायवः अरण्यवाताः । कर्तारः । क्षितिभृतः राज्ञः मदवारणान् मत्तगजान् । कर्म । मुहुः पुनः पुनः नैकवारमित्यर्थः । एतेन प्रीत्यतिशयस्तत्सौगन्ध्ये गजानामुक्तं भवति । अत एव अधःकृतानि तिरस्कृतानि अनाचरितानि यन्तॄणाम् हस्तिपकानाम् । 'यन्ता हस्तिपके' इत्यमरः । तेषाम् निवारणानि निरोधाः अपमार्गप्रवृत्त्यवरोधाः यैः तान् । तथाविधान् सतः । अकृषत आचकर्ष कृष विलेखने – लङ् । वस्तुस्थितेश्चारुत्वमिति स्वभावोक्तिरलङ्कारः । सप्तपर्णविकासेन साकं गजानां मदस्रावो भवति । सप्तपर्णसौरभं च गजमदसुगन्धेन तौल्यं वहति । गजानामतीव प्रीतिस्तस्मिन्निति विमार्गप्रस्थिता गजाः प्रयत्नेन वार्यमाणा अप्याधोरणैर्न निवर्तन्त – इति तात्पर्यार्थः । कालिदासोऽप्येवं प्रब्रूते – 'सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदीयम् । विलङ्घिताधोरणतीव्रयत्नास्सेनागजेन्द्रा



विमुखा बभूवुः" इति । सप्तच्छदगन्धेन साकं तेषां मदोदय इति च स एवेत्थमाह – "प्रसवैस्सप्तपर्णानां मदगन्धिभिराहताः । असूययेव तन्नागास्सप्तधैव प्रसुस्रुवुः" इति ॥

आरामभूमीर्वर्णयति —

**वनभुवः परितः पवनेरितै**
**र्नवजपाकुसुमैः कृतदीपिकाः ।**
**प्रथममेव नृपस्य निदेशतो**
**विजयिनस्तुरगान्निरराजयन् ॥** ॥ 50 ॥

**वनभुव इति** ॥ वनभुवः आरामप्रदेशाः । कर्त्र्यः । स्त्रिय इति च गम्यते । 'आरामस्स्यादुपवनं कृत्रिमं वनमेव तत्' इत्यमरः । पवनेन वायुना ईरितैः कम्पितैः । नवानि नूतनानि सद्यो विकसितानि । अनेनारुण्यातिशयस्तेषु ज्ञायते । तेन दीपसाम्यं च परिपुष्टं भवति । तादृशानि जपाकुसुमानि उड्पुष्पाणि 'उड्पुष्पं जपा' इत्यमरः । तैः कृताः परिकल्पिताः दीपिकाः दीपाः ज्वलन्तः अग्नयः यासां ताः तथभूतास्सन्तः । अरुणानि जपापुष्पाणि दीपवत्कृत्येत्यर्थः । नृपस्य राज्ञः निदेशतः निदेशे समीपे । 'निदेशश्शासनोपान्तकथनेषु प्रयुज्यते' इति विश्वः । प्रथमम् आदावेव स्वोपज्ञतयेत्यर्थः । विजयिनः जयिनः संप्राप्तविजयान् अनेकवारं शत्रून् जित्वा विजयं लब्धवत इत्यर्थः । वेगतो वायुं जितवत इति च गम्यते । विजय एषामस्तीति अत इनिः । तथाविधान् तुरगान् अश्वान् राज्ञा साकं स्वसमीपमागतानित्यर्थः । निरराजयन् नीराजयांचक्रुः । विजयारात्रिकप्रदानेन तान् संभावयामासुरित्यर्थः । औपवाह्यमारुह्य राजा वने विहरति । अतिवेगेन (वायुं जित्वा स्ववेगेन) धावति तत्र तुरगः । जपाकुसुमानि तदानीं तत्र विकसितानि वायुचलितानि भूत्वा तुरङ्गम

मभितो वलयाकारेण परिभ्रमन्ति। वस्तुस्थितिमिमां स्वप्रौढोक्त्या वनभूमयो वनिता इति वेगेन विजितवायुं तमुत्तमाश्वं राजानुग्रहार्थे नीराजयन्ति ताः किमिति संभावयन्ती तदनुगुणतया जपाकुसुमादिषु दीपादिसामग्रीं कल्पितवती। अत एवेयं क्रियोत्प्रेक्षा। वाचकाप्रयोगाद् गम्या। जपाकुसुमादिषु विजयारात्रिकत्वारोपस्समुज्जीवकोऽभवदस्या इति रूपकानुप्राणिता क्रियोत्प्रेक्षा। विजयिनः वनिताभिर्नीराज्यन्त इति प्रसिद्धम् – "नीराजयन्त्यन्भ्रपुरीरमण्यः प्रदीपजालैर्वरवीररुद्रम्। चन्द्रानना गोत्रपतिं रजन्यस्तारागणैर्मेरुमिव स्फुरद्भिः" इत्यादिना॥

हेमन्तर्तुं वर्णयति –

**अथ नृपस्य समुत्सुकचेतसो**
**मदनकेलिकलासु विलासिनः।**
**प्रियमिवाचरितुं समुपागम**
**[त्प्रगुणयन्] क्षणदास्तुहिनागमः॥ ॥ 51 ॥**

**अथेति॥** अथ अनन्तरम् शरदि गतायामित्यर्थः। तुहिनागमः हेमन्तः। कर्ता। मदनकेलिकलाः मन्मथक्रीडाविद्याः कामोपभोगफलकाः तासु। समुत्सुकम् उद्युक्तम् अतिशयितप्रयत्नम्। 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः। उत्सुकशब्दमेवं व्याचख्यौ भोजः - "उदित्युद्योगमाचष्टे स्वित्याधिक्यमभीप्सिते। तदस्यास्तीति मत्वर्थे कनिस्स्यादुत्सुको मतः" इति। तादृक् चेतः मनः यस्य तथोक्तः। कामोपभोगासक्तचित्त इत्यर्थः। अतएव विलासिनः विलसनशीलस्य शृङ्गारिणः। नृपस्य राज्ञः। प्रियम् प्रीतिम् आचरितुम् कर्तुमिव तं प्रीतिमन्तं विधाय तदनुग्रहं संपादयितुं किमिति संभावना। क्षणदाः रात्रीः। 'रात्रिस्त्रियामा क्षणदा क्षपा' इत्यमरः। ताः प्रगुणयम् प्रगुणवतीः आवृत्तिमतीः दैर्घ्यवतीरिति यावत्। तथाविधाः कुर्वन्। हेमन्ते रात्रीणां 'दीर्घत्वा



देवमुक्तिः। प्रकृष्टगुणवतीः कुर्वन्निति च। 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये। त्यागशौर्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु' इति मेदिनी। अत्र 'प्रणदय' न्नित्येव मातृकापाठः। अस्मिन् पाठे प्रणदयन् प्रध्वनयन् रतिकूजितैः रात्रीः प्रकृष्टध्वनिमतीः कुर्वन्नित्यर्थ इति प्रतिभाति। तादृशस्सन्। समुपागमत् समागच्छत् सन्निहितोऽभवदित्यर्थः। अत्र हेमन्तसमुपागमस्य राज्ञः प्रियाचरणं वस्तुतो न फलम्। तथापि फलत्ववर्णनं तस्येति फलोत्प्रेक्षेयम्॥

**हिमभरैर्विहतः कमलाकरो**
**मृदितकान्तिरभून्मृगलाञ्छनः।**
**वदनमेव नरेन्द्रनतभ्रुवा**
**मभजत श्रियमप्रतिशासनाम्॥ ॥ 52 ॥**

**हिमभरेति॥** कमलाकरः – कमलानाम् पद्मानाम् आकरः समूहः कमलवनम्। 'आकरो निकरे खनौ' इति सुधा। हिमभरैः तुषारातिशयैः अतिशयिततुषारैः हिमसंहत्येत्यर्थः। विहतः सुष्ठु हिंसितः हिमाच्छादितत्वेन विकासलवेनापि विरहितः। किञ्च। मृगलाञ्छनः हरिणाङ्कः चन्द्रः। मृदिता नष्टा कान्तिः (स्व) प्रकाशः यस्य तथोक्तः। अप्रकाशमान इत्यर्थः। तथाभूतः आसीत् बभूव। हेमन्ते प्रवृत्ते इत्यर्थः। नरेन्द्रस्य राज्ञः नते कुटिले वक्रे। 'नतम् आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः। तादृश्यौ भ्रुवौ नेत्रोपरिभागौ यासां तासाम् नतभ्रुवाम् सुभ्रुवाम् स्त्रियाम् राजदाराणामित्यर्थः। तासाम् वदनम् मुखमेव न त्वन्यत् यत्किमपि जगतीत्येवकारार्थः। अप्रतिशासनाम् – न विद्यते प्रतिशासनम् स्वस्मादन्यस्य आज्ञापनम् यस्याः ताम्। स्वाज्ञापनैकवशंवदाम् स्ववाञ्छानुसारिणीमिति यावत्। तादृशीम् श्रियम् लक्ष्मीम् शोभाम् अभजत असेवत प्रापेत्यर्थः। तस्मिन् हैमन्ते सर्वेषां कान्तिहैन्ये जातेऽपि राजदाराणां मुखानि पत्र

लेखाविरचनादिभिरनितरसाधारणीं शोभां प्राप्य व्यराजन्तेति भावः। पत्रलेखादिभिरलंक्रियन्ते स्त्रीणां मुखान्यस्मिन् ऋताविति कश्चन कविरेवं प्रब्रूते – "गात्राणि कालीयकचर्चितानि सपत्रलेखानि मुखाम्बुजानि। शिरांसि कालागुरुधूपितानि कुर्वन्ति नार्यस्सुरतोत्सवाय" इति। अप्रतिशासनां श्रियं राजदारा अभजन्नित्युक्त्या सर्वनियामकस्य कालस्याप्ययं नियन्तेति दण्डविजयो राज्ञि सूच्यते। उपमानभूताभ्यां पद्मचन्द्राभ्यामाधिक्यमुपमेयभूतानां वदनानां वर्ण्यत इति व्यतिरेकोऽलङ्कारः। "व्यतिरेको विशेषश्चेदुपमानोपमेययोः" इति तल्लक्षणात्॥

**पुलककञ्चुकितैः कुचमण्डलैः**
**स्फुरितसीत्कृतिभिश्च मुखेन्दुभिः।**
**अविरतं स्मरतन्त्रमिवान्वभू**
**दवनिपालविलासवतीजनः॥** ॥ 53 ॥

**पुलकेति**॥ अवनिपालः कम्पराजः तस्य विलासवत्यः सुन्दर्यः तासाम् जनः समूहः शुद्धान्तकान्ताजन इत्यर्थः। सः कर्तृभूतः। पुलकाः रोमाञ्चाः। 'पुलकः पुनः। रोमाञ्चकण्टकौ रोमविक्रिया रोमहर्षणम्। रोमोद्गम उद्धर्षणमुल्लासनकमित्यपि' इति हैमः। त एव कञ्चुकाः चोलकाः तद्वद्भिः कृतैः कुचमण्डलैः वर्तुलैः भृशं पुलकितकुचैरित्यर्थः। किञ्च। स्फुरिताः प्रकाशमानाः सीत्कृतयः सीत्काराः येषु तथोक्ताः। तैः शैत्योद्भूतसीत्कारयुतैरित्यर्थः। तादृशैः मुखेन्दुभिः निजैः चन्द्रसदृशमुखैः। करणभूतैः। मुखेन्दुरित्यनेन (मुख) चन्द्र इति च प्रतीयते। इन्दुरतीव शीतलः तस्यापि शैत्यबाधावशात्सीत्कारा इति शैत्योत्कर्ष उच्यते। अविरतम् अविश्रान्तं यथा तथा। सततमपीत्यर्थः। स्मरतन्त्रम् कामशास्त्रम् तद्विहिताः क्रीडा इत्यर्थः। तत् अन्वभूत् आस्वादयामासेवेत्युत्प्रेक्षा। शैत्येन शीतकाले पुलकास्संजायन्ते। क्रीडाकाले च नायककरस्पर्शादिभिश्च तथैव। बाह्यसुरते च कुचसम्मर्दादिना स्तनयोरेते पुलका विस्तृता भवन्तीति कुचमण्डलयोरित्युच्यते। अन्यत्रापि कुचानामत्युन्नतत्वेन शीतवायुसंचारस्य भृशं तत्रैवावकाश इति नितरां पुलकितत्वं तत्रैव संगच्छते। बाह्यसुरतक्रीडायां दन्तच्छदपीडनादिना सीत्काराः मुखेषु जायन्ते। शीतकाले शैत्यबाधातिशयवशात्सीत्कारोद्गमश्च मुख एव संभवति। अत एतास्स्मरतन्त्रमनुभवन्तीव संभाव्यन्त इति क्रियोत्प्रेक्षेयम्। उत्प्रेक्षायामस्यां 'पुलककञ्चुकितै' रित्यादीनि विशेषणगत्या हेतुभावं भजन्त इति समुत्थितं काव्यलिङ्गमुत्प्रेक्षया संकीर्यते। शीतवायुना सीत्कारपुलकाङ्कुरान् कान्तासु कवयो वर्णयन्ति – "केशानाकुलयन् दृशो मुकुलयन् वासो बलादाक्षिप। न्नातन्वन् पुलकोद्गमं प्रकटयन्नावेगकम्पं शनैः। वारं वारमुदारसीत्कृतकृतो दन्तच्छदान्पीडयन्। प्रायश्शैशिर एष संप्रति मरुत्कान्तासु कान्तायते॥" इति॥



**विकचकुन्दकलापपरिष्क्रिया**
**विरचितालकजालकविभ्रमम्।**
**असमयेऽपि समौक्तिकमण्डनं**
**प्रभुरमंस्त निजं प्रमदाजनम्॥** ॥ 54 ॥

**विकचेति**॥ प्रभुः स्वामी कम्पनः। कर्ता। विकचानि विकसितानि कुन्दानि माघ्यानि। 'माघ्यः कुन्दः कुरुण्टकः' इति रत्नकोषः। तेषाम् कलापः समूहः। 'कलापस्संहतौ बर्हे काञ्चयां भूषणतूणयोः' इत्यजयः। तस्य परिष्क्रिया अलङ्करणम् तेन विरचितम् ग्रथितम् संघटितम्। अलकेषु चूर्णकुन्तलेषु कुटिलकेशेषु। 'अलका कुबेरपुर्यामस्त्रियां चूर्णकुन्तलेषु' इति मेदिनी। तत्र जालमेव जालकम् तदाख्योऽलके धार्यमाणो मौक्तिकभूषाविशेषः। मुक्तामययष्टिजालग्रथितसरविशेषत्वा 'ज्जालक' मिति व्यवहार इव प्रति

भाति। जालकं प्रति कालिदासः – " उपचितावयवा शुचिभिः कणै
रलिकदम्बकयोगमुपेयुषी। सदृशकान्तिरलक्ष्यत मञ्जरी तिलकजालक
जालकमौक्तिकैः " इति। तस्य विभ्रमः विलासः। सः यस्मिन्
तथोक्तम्। अलकधृतविकसितकुन्दबृन्दस्तत्प्रमदाजनस्तदानीं जालकाल
ङ्कृतचूर्णकुन्तल इव विराजत इति भावः। अतएव तथाविधम्
प्रमदाजनम् स्त्रीसमूहम् स्वप्रियाः बह्वीरित्यर्थः। असमये अकाले
अनुचिते काले अप्रसक्तरतिक्रीडायां वेलायामपीत्यर्थः। जालकाख्यं
भूषणं प्रियकृतनखक्षतदशनच्छदादिपीडोपशमनार्थं रतिक्रीडाकाले धरन्ति
स्त्रिय इति प्रसिद्धिः। कटीभूषणतयाप्यस्य धारणं वर्ण्यते – " वाम
श्चास्याः कररुहपदैर्मुच्यमानो मदीयैर्मुक्ताजलं चिरविरचितं त्याजितो
दैवगत्या " इति मेघः। मेघसंदेशेऽस्मिन्नेव " या वः काले वहति
सलिलोद्गारमुच्चैर्विमानैर्मुक्ताजालग्रथितमलकं कामिनीवाभ्रबृन्दम् "
इति। अत्र कौटिल्यः – " हारयष्टिप्रभेदाधिकारे – " सुवर्णसूत्रान्तरं
सोपानकं मणिमध्यं वा मणिसोपानकम्। तेन शिरोहस्तपादकटीकलाप
जालकविकल्पा व्याख्याताः " इति। समौक्तिकमण्डनम् मौक्तिकमण्ड
नेन मुक्तामयजालकालङ्करणेन सहितं यथा भवति तथा। अमंस्त
अमन्यत। अत्र मौक्तिकजालकमण्डनालङ्कृतं स्वप्रियाजनममन्यतेति
वाक्यार्थस्य समर्थनीयस्य 'विकचकुन्दकलापे' त्यादिभिर्विशेषणगत्या
हेतुत्वेन समर्थनमभूदिति काव्यलिङ्गमलङ्कारः। अत्र 'माघ्यं कुन्द'
मिति शिशिरलिङ्गस्य कुन्दस्य हेमन्ते वर्णनमनुपपन्नमिति तु न। हेमन्त
शिशिरयोरुभयोरपि तल्लिङ्गत्वेनाभ्युपगमात्। अतएव कालिदासः –
" हस्ते लीलाकमलमलके बालकुन्दानुवेधो। नीता लोध्रप्रसवरजसा
पाण्डुतामनने श्रीः " इत्याह। अत्र नाथः – " कुन्देन हेमन्तसन्निधि
रुक्तः। ननु 'निषिञ्चन् माधवीवृत्ति कुन्दशेषं च वर्धयन्' इत्यत्र
वसन्तात्प्राचीनस्य शिशिरस्य लिङ्गं कुन्दमिति प्रतीयते। कथं हेम
न्तस्य लिङ्गमित्युक्तम्। उच्यते। हेमन्तशिशिरयोर्द्वयोरपि लिङ्गं



कुन्दम्। हेमन्ते प्रादुर्भवति। शिशिरे प्रौढीभवतीति विशेषः " इति ॥

हेमन्तोचितोपभोगं राज्ञि वर्णयन्ती हेमन्तमुपसंहरति —

**बहुलकुङ्कुमपङ्कविलेपन**
**प्रसृमरोष्मपयोधरमण्डलैः।**
**अरमताविरतं रमणीजनै**
**रगरुगन्धिषु गर्भगृहेषु सः॥** ॥ 55 ॥

**बहुलेति** ॥ सः कम्पराजः। कर्ता। अगरुगन्धिषु अगरुगन्ध
वत्सु। अगरुगन्धः एष्वस्तीति इनिः। अगरुधूपैर्धूपायितेष्वित्यर्थः। गर्भ
गृहेषु गृहान्तर्भागेषु। बहलः अधिकः। बहुलशब्दपर्यायो बहलशब्दः।
बर्हेः कलच्। कुङ्कुमपङ्कः कुङ्कुमपुष्पद्रवः। तस्य **विलेपनम्** अनुले
पनम् चर्चा तेन प्रसृमरम् व्याप्तम् ऊष्म औष्ण्यम् येषां तथोक्तानि।
तानि पयोधरमण्डलानि वर्तुलाः स्तनाः येषां तैः। 'कूपोदकं वट
च्छा' येति न्यायेन स्वतएवेदानीमुष्णं स्तनमण्डलं कुङ्कुमलेपनेनो
ष्णाधिक्यमभजतेति भावः। तादृशैः रमणीजनैः स्वसुन्दरीभिस्सह।
अविरतम् अनिशम् चिरकालमित्यर्थः। दीर्घयामत्वात्त्रियामाया अद्येति
भावः। अरमत अक्रीडत क्रीडासक्तोऽभवदित्यर्थः। शीतकाले स्त्रिय
स्स्वकुचतटीः कुङ्कुमपङ्केन लिम्पन्ति। अत्रागमः। "काश्मीरपङ्केन
कृतप्रलेपो हैमन्तिकानाशु निहन्ति दोषान् " इति ॥

शिशिरवर्णनायोपक्रमते —

**इति सुखान्युचितानि हिमागमे**
**समनुभूय मनोभवसन्निभः।**
**शिशिरयामवतीष्वपि रागवान्**
**रमयितुं रमणीरुदयुङ्क्त सः॥** ॥ 56 ॥

**इतीति** ।। इति इत्थम् उक्तप्रकारेण । हिमागमे हेमन्तर्तौ । उचितानि तदुचितानि सुखानि सौख्यानि तदृतूचितभोगानित्यर्थः । समनुभूय सुष्ठु उपभुज्य । मनोजसन्निभः मन्मथसदृशः मन्मथाकारः द्वितीयो मन्मथ इत्यर्थः । अतएव प्रियाणां रागोद्दीपकस्संवृत्त इति भावः । रागवान् रागी अनुरागवतीस्स्वप्रिया दृष्ट्वा संजातगाढानुराग इत्यर्थः । शिशिरस्य कामिनीजनप्रियत्वादेवमुक्तिः । रमणीः स्वसुन्दरीः । स्वानुरूपसौन्दर्ययुता इत्यर्थः । अनेन कम्पराजस्य रागोद्दीपकसामग्री सूचिता भवति । ताः रमयितुम् क्रीडयितुम् ताः रतिक्रीडाभिस्सुखयितुम् । उदयुङ्क्त प्रायतत प्रारभत । ताभिस्सह क्रीडितुं प्रवृत्त इत्यर्थः । उत्पूर्वात् युजिर् योगे इत्यस्माल्लङ् । शिशिरः कामिनीजनप्रियस्तासामतीव कामोद्दीपकश्च । अतएव 'प्रकामकामं प्रमदाजनप्रियं वरोरुकालं शिशिराह्वयं शृणु' इत्यादीनि काव्यसंसारे प्रथितानि । अत्र 'मनोजसन्निभः' 'रमणीः' इत्यादयस्साभिप्राया इति परिकरः परिकराङ्कुरश्च । परस्परसापेक्ष्यादेतयोस्सङ्करः ।।

**शबलितान्यलिकागरुबिन्दुभि**
**श्चलदृशां रतिविभ्रमसूचकैः ।**
**नवलवङ्गतरुप्रसवास्तृता**
**न्यभजतानुनिशं शयितानि सः ।।** ।। 57 ।।

**शबलितेति** ।। सः राजा । चलदृशाम् चञ्चलाक्षीणाम् । कर्तरि षष्ठी । तत्कर्तृका इत्यर्थः । रतिः रतिविशेषः उपरतिः पुरुषायितम् तस्य विभ्रमः विलासः तस्य सूचकैः व्यञ्जकैः । अलिकानि ललाटानि फालभागाः 'ललाटमलिकं गोधिः' इत्यमरः । तत्र अगरुबिन्दुभिः अगरुकणैः शैत्यदोषापनोदार्थं तिलकरूपेण धृतैरित्यर्थः । तैः शबलितानि चित्रवर्णवन्ति कृतानि । लवङ्गपुष्पशय्यासु पुरुषायितेन विहरन्तीनामासां तिलकसंपृक्ताश्शय्यास्तद्वर्णेनैतद्वर्णेन च चित्रवर्णा



आसन्निति भावः । नवानि सद्यो विकसितानि । अनेन गुणाधिक्यमेतेषूक्तं भवति । लवङ्गः तदाख्यः तरुः वृक्षः तस्य प्रसवानि देवकुसुमानि 'लवङ्गं देवकुसुमं श्रीसंज्ञम्' इत्यमरः । तैः आस्तृतानि आच्छादितानि निर्मितानि कल्पितानीत्यर्थः । स्तृञ् आच्छादने – कर्मणि क्तः । शयितानि शयनीयानि शय्याः । शेतेऽत्रेत्यधिकरणे क्तः । 'निष्ठा शीङ्' ति क्त्वाभावाद् गुणः । 'रामस्य शयितं भुक्तं जल्पितं हसितं स्थितम्' इति भट्टिः । तानि । कर्म । अनुनिशम् निशासु निशासु प्रतिरात्रम् । वीप्सायामव्ययीभावः । अभजत असेवत । क्रीडन् तेषु शयितोऽभवदित्यर्थः । शिशिरर्तोरुचिततया भोगाननुबभूव स इति भावः । लवङ्गपुष्पाणि समुचितौष्ण्यापादनेन शैत्यदोषान् शिशिरसंभवानपहरन्तीति तैश्शय्याः परिकल्प्य, कालागुरु च तादृशमिति तेन तिलकानि विरचय्य राज्ञा साकं तृतीयपुरुषार्थं कृतार्थयन्ति स्वरतिप्रसङ्गैरेता इति परमार्थः । लवङ्गपुष्पाणि शिशिरे विकसन्ति । तथा च माघः - "अधिलवङ्गममी रजसाधिकं मलिनितास्सुमनोदलतालिनः । स्फुटमिति प्रसवेन पुरोऽहसत्सपदि कुन्दलता दलतालिनः" इति ।।

कामिनीप्रियत्वमस्य ऋतोस्सूचयन्ती कामिनीरेव विशेषतो वर्णयति —

**परिलसन्नवलोध्रराजोभर**
**च्छुरणपाण्डरगण्डतलैर्मुखैः ।**
**मृगमदद्रवचारुविशेषकै**
**र्मृगदृशो नृपतेरहरन्मनः ।।** ।। 58 ।।

**परिलसदिति** ।। मृगदृशः हरिणाक्ष्यः सविलासदृष्टयः । एतेन रागोद्दीपकता तासां कथ्यते । ताः कर्त्र्यः । परिलसद्भिः प्रकाश

मानैः। स्वत एवेति भावः। नवम् नूतनम् नतु चिरकालोषितम्। तादृशम् लोध्ररजः श्वेतलोध्रपुष्पपरागः 'लोध्रस्तिरीटस्तिल्वमार्जनौ' इत्यमरः। तस्य भरः अतिशयः तस्य छुरणम् लेपनम् तेन पाण्डराणि विशदानि शुक्लवर्णानि 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इत्यमरः। तादृंशि गण्डतलानि कपोलभागाः प्रशस्ताः कपोला इति वा। ते येषु तैः। किञ्च। मृगमदद्रवः कस्तूरीपङ्कः तेन चारूणि सुन्दराणि विशेषकाणि तिलकानि येषु तैः। 'तमालपत्रतिलकचित्रकाणि विशेषकम्। द्वितीयं च तुरीयं च न स्त्रियाम्' इत्यमरः। फालविरचितकस्तूरीतिलकयुतैरित्यर्थः। तादृशैः मुखैः आननैः करणभूतैः। नृपतेः राज्ञः मनः चित्तम् अहरन् अपाहरन्। तदा तासां सविलासदृष्ट्यो लोध्रप्रसवविलेपनजनितापूर्वश्रीकसविशेषविरचितफालतलकस्तूरीतिलकानि मुखानि च कामोद्दीपकानि तस्याभवन्निति सारांशः। अत्र मृगदृश इति साभिप्रायं विशेष्यमिति परिकराङ्कुरः। मुखस्य विशेषणगत्या 'परिलस' दित्यादिविशेषणानि मनोहरणरूपं वाक्यार्थं समर्थयन्ति हेतुतयेति काव्यलिङ्गम्। एतस्य चाङ्गभूत एतदुपकारितया परिकराङ्कुर इत्येतयोस्संकरः॥

**अपदिशञ्छिशिरानिलमङ्गकैः**
**पुलकितैर्नृपतेस्सविधं गतः।**
**मदनसंभृतघर्मपयःकणै**
**र्भृशमलज्जत मुग्धवधूजनः॥** ॥ 59 ॥

**अपदिशन्निति**॥ मुग्धाः वध्वः मुग्धा नायिकाः। मुग्धा मध्या प्रौढा चेति दशाविशेषेण नायिकास्त्रिविधाः। तत्र नायिकाविशेषा मुग्धा इत्यर्थः। तल्लक्षणं त्वेवम् – "उदयद्यौवना मुग्धा लज्जाविजितमन्मथा" इति। तासां जनः समूहः बह्वचो मुग्धा इति यावत्। ताः कर्त्र्यः। पुलकितैः संजातरोमाञ्चैः। स्वनायकानुरागवशादिति भावः। तादृशैः अङ्गकैः अवयवैः तैस्सह। सहार्थे तृतीया। नृपतेः राज्ञः सविधम् समीपम् गतः यातः तत्सविधस्थस्सन्नित्यर्थः। शिशिरानिलम् शिशिरर्तुवायुम् अपदिशन् व्याजयन् तत्र कारणत्वेन निर्दिशन्। शीतवायोः अनुरागस्य च सममेव तज्जनकत्वादिति भावः। तथा कुर्वन् सन् (तदानीमेव) मदनात् मन्मथात् कामात् संभृताः सुष्ठु धृताः घर्मपयःकणाः स्वेदबिन्दवः तैः सात्त्विकरूपैरित्यर्थः। भृशम् अधिकम्। शिशिरे एतदसंभवादिति भावः। अलज्जत अत्रपत। स्वनिगुप्तस्यार्थस्य बहिरभिव्यक्तेर्मनस्संकोचरूपलज्जोदयस्तासामासीदित्यर्थः। ओ लस्जी व्रीडने - लङ्। स्वानुरागोदयमाच्छादयितुं प्रवृत्ता इति स्वानुरागाभिव्यक्तौ च भृशं लज्जन्त इति लज्जाविजितमन्मथत्वेन मुग्धात्वमासामवगम्यते। अत्र निजानुरागं गोपायितुं प्रवृत्तानां नायिकानां तदन्यथाकृतिस्संवृत्तेति विषमभेदोऽसङ्गतिभेदो वाऽलङ्कारः। सात्त्विकभावा अष्ट। 'स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू। अश्रुवैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः" इति। एषु स्वेदरोमोद्गमावपि द्वौ। तावत्र वर्णितौ॥

"बाह्यमाभ्यन्तरं चेति द्विविधं रतमुच्यते। तत्राद्यं चुम्बनाश्लेषनखदन्तक्षतादिभिः। द्वितीयं सुरतं साक्षान्नानाकरणकल्पितम्" इति कामशास्त्रम्। तत्र बाह्यं वर्ण्यते —

**द्विगुणयन्नधरव्रणवेदनां**
**कृतकचग्रहणैः परिचुम्बनैः।**
**कपटरोषकषायितलोचनं**
**निभृतहासमवैक्ष्यत यौवतैः॥** ॥ 60 ॥

**द्विगुणयन्निति**॥ स इति शेषः। सः कम्पराजः। कृतानि आचरितानि कचानाम् केशानाम् ग्रहणानि स्वीकरणानि केशपाशपरिग्रहणानि येषु तैः। तथाविधैः परिचुम्बनैः पुनः पुनश्चुम्बनैः

अधरपानैरित्यर्थः। अधरस्य व्रणानि क्षतानि पूर्वं कृतानीत्यर्थः। तेभ्यः वेदना बाधा तदुद्भूतव्यथा। ताम्। द्विगुणयन् द्विगुणवतीम् द्विरावृत्तिमतीम् अधिकामित्यर्थः। तथाविधां कुर्वन् पुनः पुनरधरपानेन दन्तक्षतवेदनामभिवर्धयन्नित्यर्थः। अत्रेदं तत्त्वम्। कामशास्त्रे पुरतो दन्तक्षतानि तदनन्तरम् परिचुम्बनानीति क्रमो दर्शितः। अतो यथाशास्त्रमितः पूर्वमेव कृतानि दन्तक्षतान्यधरेषु। इदानीमधरचुम्बनेन तद्वेदना द्विगुणीकृतेति। चुम्बनस्थानानि चैवमुक्तानि कामशास्त्रे – "मुखे स्तने ललाटे च कण्ठे च नेत्रयोरपि। गण्डे च कर्णयोश्चैव कक्षोरुभगमूर्धसु ॥ चुम्बनस्थानमित्युक्तं विज्ञेयं कामुकैरिह" इति। (तथा कुर्वन्) यौवतैः स्वयुवतिजनैः (कर्तृभिः) भिक्षादित्वात्सामूहिकोऽण्। निभृतः निगूढः बहिरनाविष्कृतः हासः यस्मिन् कर्मणि यथा तथा। सुखानुभूत्या संजायमानं स्मितं निगोपाय्येत्यर्थः। किञ्च। कपटरोषः कृत्रिमरुषा आरोपितः क्रोधः कोपाभिनय इति यावत्। 'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः। तेन कषायितानि संजातकषायाणि रक्तवर्णानि लोचनानि नेत्राणि यस्मिन् कर्मणि तथा। कोपसंरक्तलोचनाभिः भूत्वेत्यर्थः। अवैक्ष्यत अदर्शि। अवपूर्वात् 'ईक्ष दर्शने' इत्यस्माल्लङ्। सुरतक्रीडासु वस्तुतः प्रियकृतदन्तक्षतादिना सुखमनुभवन्त्योऽपि स्त्रियो दुःखमनुभवन्तीव क्रोधं प्रदर्शयन्ति प्रिये। सैषा काचित् शृङ्गारचेष्टा। तस्याः 'कुट्टमित' मिति नाम। तल्लक्षणं त्वेवम् – "केशाधरादिग्रहणे मोदमानापि मानसे। दुःखितेव बहिः कुप्येद्यत्र कुट्टमितं हि तत्" इति। तदत्र नाथिकासु वर्णितम् ॥

शिशिरमुपसंहरति –

**विकलकञ्चुकलक्ष्यनखव्रणं**
**विगतमौक्तिकहारमनोहरम् ।**



**तरुणिमोष्म नखम्पचमङ्गना**
**स्तनयुगं हिमहारि विभोरभूत् ॥** ॥ 61 ॥

**विकलेति** ॥ विकलम् शिथिलम् त्रुटितम्। रतिक्रीडाकृतसम्मर्देनेति भावः। तथाभूतम् कञ्चुकम् चोलकः तेन लक्ष्याः दर्शनीयाः। आत्मकृतत्वेनानन्दजनकत्वात्प्रियस्येति भावः। स्वकृतानि नखक्षतानि प्रियासु दृष्ट्वा प्रिया नन्दन्ति। तथा च कालिदासः – "स प्रजागरकषायलोचनं गाढदन्तपदताडिताधरम्। आकुलालकमरंस्त रागवान् प्रेक्ष्य भिन्नतिलकं प्रियामुखम्" इति। तादृशानि नखव्रणानि नखक्षतानि यस्मिन् तथोक्तम्। प्रियकृतस्तनसम्मर्दनादिना कञ्चुकानां शिथिलत्वाद् गतावरणतया स्वकृतनखक्षतानि कम्पराजस्य स्फुटं दर्शनीयान्यासन्निति संकलितोऽर्थः। अत्र 'नवव्रण' मिति मातृकापाठः। विकलकञ्चुकलक्ष्याणि नवानि सद्य एव कृतानि अम्लानानि। अत एव दर्शनीयानि वर्तन्त इति भावः। तादृशानि व्रणानि नखक्षतानि यस्मिन्निति पूर्ववत्। अस्मिन् पाठे व्रणशब्दो लक्षयति नखव्रणमित्यवगन्तव्यम्। किञ्च। विगताः अपगताः सम्मर्देन त्रुटिताः मौक्तिकहाराः तैः मनोहरम् मनोज्ञम्। कृत्रिमशोभाया अपि सहजरामणीयकस्य हृदयाह्लादकत्वादिति भावः। किञ्च। तरुणिमा तारुण्यम् यौवनम्। तरुणस्य भाव इत्यर्थे दृढादित्वादिमनच्। गणरत्नमहोदधौ दृढादिषु तरुणशब्दः पठितः। तस्मात् ऊष्म उष्णत्वम् तदुद्भूतमौष्ण्यम् तेन नखम्पचम् नखतापकम् नात्युष्णं नातिशीतं च। नखानि कररुहान् पचति तापयतीति तथा। 'मितनखे चे' ति खश्। मुम्। एतादृक्। अङ्गनाः सुन्दर्यः तासाम् कुचयुगम् स्तनद्वन्द्वम्। कर्तृ। विभोः प्रभोः कम्पनस्य। हिमम् शैत्यम् हरतीति णिनिः। शैत्यबाधापहारकमित्यर्थः। अभूत् आसीत्। तस्य दृष्टिं तत्परां कृत्वा समुचितोष्णस्पर्शेन तस्य सुखं संधाय चेति भावः। अत्र

हिमहरणरूपवाक्यार्थे स्तनद्वयविशेषणीभूततरुणिमोष्मेत्यादिपदार्थस्य हेतुत्वमिति काव्यलिङ्गमलङ्कारः ॥

वसन्ते " (सुरभौ) दोलाकोकिलमारुतसूर्यगतिभेदाः । जातीतरपुष्पचयाम्रमञ्जरीभ्रमरझङ्काराः " वर्ण्या इति देवेशः । तांस्तत्र तत्र प्रायेण वर्णयितुं प्रक्रमते —

**उपहरन् कुसुमानि महीरुहां**
**किसलयैः कलिताञ्जलिबन्धनः ।**
**मधुरकोकिलकूजितभाषितो**
**मधुरथैनमुपासितुमासदत् ॥** ॥ 62 ॥

**उपहरन्निति** ॥ अथ अनन्तरम् शिशिरर्तौ अतिक्रान्ते तदुत्तरम् । स्वसेवायास्समुचितं समयं दृष्ट्वेत्यर्थः । मधुः वसन्तः । भक्त इति च गम्यते । ' मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवकोशे मधुद्रुमे ' इति विश्वः । सः कर्ता । महीरुहाम् वृक्षाणाम् कुसुमानि पुष्पाणि । कर्म । उपहरन् समीपं प्रापयन् । पूजोपहारतया तान्यादाय समागच्छन्निति च । किसलयैः पल्लवैः कलितम् निर्मितम् आचरितम् अञ्जलेः हस्तसंपुटस्य बन्धनम् ग्रथनम् एकीकरणम् येन तथोक्तः । कृतप्रणामाञ्जलिरिति यावत् । तथाविधः । मधुराणि श्राव्याणि कोकिलकूजितानि पिकध्वनयः पञ्चमस्वराः तान्येव भाषितानि वचांसि यस्य तथोक्तः । मधुरगानैः स्तुवन्निति भावः । ' भाषितं वचनं वच ' इत्यमरः । (एवंविधस्सन्) एनम् पूर्वोक्तं कम्पराजम् । कर्म । ' द्वितीयाटौस्स्वेन ' इतीदमोऽन्वादेशे एनः । उपासितुम् सेवितुम् आराधयितुम् । उपास्यदैवतमिवेति भावः । " वरिवस्यति परिचरति पर्यङ्क्ते सेवते भजति । शुश्रूषते च भजते श्रयते चाराधयत्युपास्ते च " इति क्रियानिघण्टुः । आसदत् आगच्छत्



तम् उपससारेत्यर्थः । आङ्पूर्वात् षदेर्लुङ् । लृदित्त्वादङ् । देवतानुग्रहकाङ्क्षी कश्चन भक्तस्तं प्रसादयितुं स्वीयान्यमूल्यानि वस्तूनि ' पत्रं पुष्पं फल ' मिति न्यायेन तस्मै सादरं समर्पयति मधुरस्तवैस्तं गायति प्रणमंस्तद्वदयमपीति भावः । राज्ञो विष्णोर्मूर्त्यन्तरत्वेन तदुपासनाऽस्मिन् सुष्ठु युज्यते । वसन्ते पुष्पपल्लवैर्वृक्षा नितरां शोभन्ते । कोकिलाः पञ्चमस्वरालापैर्भृशं मोदन्ते । इममेवार्थं सचमत्कारं कम्पराजः कश्चन देवतेति तं सेवितुं भक्तो वसन्तः तरुपुष्पाण्यादाय सविनयं पल्लवैः कृतनमस्काराञ्जलिबन्धस्सन्नेतदनुग्रहाकाङ्क्षी समागत इति वर्ण्यते । अत्र कोकिलकूजितादिषु भाषितत्वाद्यारोपो गमयति वसन्तादिषु भक्तत्वाद्यारोपमित्येकदेशविवर्ति रूपकम् । महाकविः कालिदासो मधुमित्थं प्रशंसति — " अथ समाववृते कुसुमैर्नवैस्तमिव सेवितुमेकनराधिपम् । यमकुबेरजलेश्वरवज्रिणां समधुरं मधुरञ्चितविक्रमम् " इति ॥

**मधुसुगन्धि रजस्सहकारजं**
**मलयशैलसमीरणमान्त्रिकाः ।**
**प्रणयरोषपराङ्मुखमानिनी**
**हृदयसंवननार्थमिवाऽकिरन् ॥** ॥ 63 ॥

**मध्विति** ॥ मलयशैलः मलयाख्यः पर्वतः तस्य समीरणाः वायवः तदुद्भूता वाताः । जन्यजनकभावे षष्ठी । मलयानिलाः । त एव मान्त्रिकाः मन्त्रशास्त्रविदः । कर्तारः । मन्त्रविद्यां विदन्तीति ठक् । शोभनः गन्धः यस्य सुगन्धि आमोदवत् । मधुना पुष्परसेन सुगन्धि मधुसुगन्धि । मकरन्दसमुपलब्धसुगन्धयुतमित्यर्थः । ' मधु मद्ये पुष्परसे क्षौद्रेऽपि ' इत्यमरः । तादृशम् । सहकारः अतिसौरभः चूतविशेषः । ' सहकारोऽतिसौरभः ' इत्यमरः । तस्माज्जायत इति डः । तदुद्भूतम् रजः परागः । तदेव भस्मेति गम्यते । तत् कर्म ।

प्रणयरोषः प्रणयकोपः तेन पराङ्मुखाः भर्तुः अननुकूलाः। मानिन्यः मानवत्यः स्त्रियः तासाम् हृदयम् मनः। तदेव ग्रह इति गम्यते। तस्य संवननम् वशक्रिया। मन्त्रतन्त्रादिना ग्रहवशीकरणं वशक्रियेत्युच्यते। तस्मै तथोक्तम्। प्रियायत्तं कर्तुमिति च गम्यते। अवाकिरन् व्यक्षिपन्निवेति संभावना। अवपूर्वात् कृ विक्षेपे - लङ्। मलयमारुताः दिक्षु वान्ति। तेन च सहकाराणां सुगन्धि रजो दश दिशो व्याप्नोति। तेन सम्मिलिता वायवो नायकेन प्रणयकलहमनुभवन्तीनां नायिकानां तत्काले कामोद्दीपका भूत्वा परित्यक्तमानधनास्ता विधाय नायकवशं नयन्ति तद्धृदयवशीकरणेन। अत एवं संभाव्यते। लोके मान्त्रिका ग्रहग्रस्तस्योपरि मन्त्रितं भस्म विक्षिप्य ग्रहं वशीकुर्वन्ति। मोचयन्ति च तम्। तद्वदेतेऽपि मलयानिलास्सहकाररजो मानवतीषु विक्षिप्य तद्धृदयं वशं नयन्ति मोचयन्ति मानसर्वस्वं तासाम्। अत एतेऽपि किं मान्त्रिकास्स्युः। दिक्षु विक्षिप्तमेतैस्सहकाररजः किं भस्म स्यात्। तेन वशीकृतं तन्मनः किं ग्रहस्स्यात्। अन्यथा तत्स्पर्शमात्रेण तासां मानपरित्यागो हृदयसम्मोहनं च कथं संभवेदिति। अत्र समीरणेषु मान्त्रिकत्वारोपो रज आदिषु भस्मत्वाद्यारोपं गमयतीत्येकदेशविवर्तिरूपकम्। अवाकिरन्निवेति क्रियोत्प्रेक्षायास्समुज्जीवकं चैतदित्यनयोरङ्गाङ्गिभावेन संकरः। वसन्ते मलयानिलानां विशेषतः प्रचारः कविभिर्वर्ण्यते – "अल्पास्ते नवपाटलापरिमलप्राग्भारपाटच्चराः। वान्ति क्लान्तिवितानतानववृताश्श्रीखण्डशैलानिलाः" इति॥

**उपवनेष्वगमन्नुपमेयतां**
**स्फुटरुचो नवकिंशुककुट्मलाः।**
**मथितपान्थमृगक्षतजारुणै**
**र्मदनकेसरिणः कुटिलैर्नखैः॥ ॥ 64 ॥**



**उपवनेष्विति** ॥ उपवनेषु आरामेषु। स्फुटाः व्याप्ताः 'स्फुटो व्यक्तप्रफुल्लयोः। सिते व्याप्ते' इति हैमः। तथाविधाः रुचः कान्तयः येषां तथोक्ताः। 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः। तादृशः नवाः नूतनाः सद्योजाताः। आरुण्यपरिपोषार्थमेवमुक्तिः। किंशुकानाम् पलाशानाम् कुट्मलाः मुकुलाः अङ्गारकाः। सिंहनखसाम्यार्थमेवमुच्यते। 'कुट्मलो मुकुलोऽस्त्रियाम्' इत्यमरः। ते कर्तारः। मथिताः हिंसिताः पान्थाः अध्वगाः प्रवासिनः विरहिणः त एव मृगाः पशवः 'मृगः पशौ कुरङ्गे च' इति विश्वः। तेषाम् क्षतजम् रक्तम् 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इत्यमरः। तद्वत् अरुणैः लोहितैः कुटिलैः वक्रैः (नखानां विशेषणमिदम्) मदनः मन्मथः स एव केसरी सिंहः। मृगाणां सिंह इव वियोगिनां भयावहत्वादस्यैवमुच्यते। तस्य। नखैः कररुहैः उपमेयताम् सादृश्यम्। सिंहनखानां किंशुकानां च वक्रत्वादिति भावः। वक्रवस्तुप्रस्तावे देवेशः – "शुकास्यं किंशुकं विद्युत्कटाक्षेन्द्रधनुःफणाः। पुरोधःकरकोलेभदन्तसिंहनखादयः" इति। ताम् अगमन् अभजन् अलभन्त। वसन्तेऽर्धविकसितान्यत्यरुणानि पलाशपुष्पाणि विरहिणामत्यन्तं कामोद्दीपकानि वर्तन्ते। अतएव च मन्मथः केसरी तन्नखानीमानीति चोच्यते। यतोऽयं मृगानिव पान्थान् हिनस्ति। यतश्च हिंसासाधनानि (रक्तवर्णानि) नखानि तस्येवास्यापि किंशुकानि। अत्र 'मदनकेसरिण' इत्यादिरूपकेण लब्धसत्ताकेयमुपमोपक्रमोत्प्रेक्षा तेन साकं संकीर्यते॥

**चटुलषट्पदकज्जलपातिनी**
**विरुरुचे नवचम्पकमञ्जरी।**
**प्रकटितेव हिमापगमश्रिया**
**स्मरमहोत्सवदीपपरम्परा॥ ॥ 65 ॥**

**चटुलेति ॥** चटुलाः चञ्चलाः इतस्ततो भ्राम्यन्तः । अनेन भ्रमराणां स्वभावः कथ्यते । तथाविधाः षट्पदाः भ्रमराः त एव कज्जलानि दीपमष्यः । उभयोरपि विनीलत्वात् । तानि आभीक्ष्ण्येन पातयन्ती अधोगमयन्तीति तथा । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । चम्पक सौगन्ध्यं भ्रमराणां रामशापवशाद् दुस्सहं सत् मूर्छावहमिति भ्रमर पतनं चम्पकेभ्यः पुनः पुनर्भवति । इत्थमेव दीपेभ्यो मषीपतनमपि । अतएव षट्पदपातः मषीपात इति कथ्यते । नवानाम् नूतनानाम् अम्लानानाम् (अनेन सौगन्ध्यातिशयः तेन भ्रमराणां पुनः पुनः पतनं च संगच्छते ।) चम्पकानाम् चाम्पेयपुष्पाणाम् मञ्जरी गुच्छः लता वा । सा कर्त्री । हिमापगमः हिमापसरणम् अस्मिन्नस्तीति 'अर्शआदि' भ्योऽच् । वसन्तः स एव श्रीः लक्ष्मीः । लक्ष्मीशोभयोरैक्यं कवि समयसिद्धमिति वसन्तशोभैव वसन्तलक्ष्मीरित्युच्यते । तया । प्रक टिता प्रज्वलिता । स्मरमहोत्सवः मन्मथमहामहः । 'मह उद्धव उत्सवः' इत्यमरः । तस्य दीपपरम्परा तदर्था दीपिकाश्रेणिः । तादर्थ्ये षष्ठी । अश्वघासादिवत्समासः । सेवेति संभावना । विरुरुचे प्राकाशत । वसन्तलक्ष्मीः प्रभोर्मन्मथस्य महान्तमुत्सवमाचरितुकामा दीपपरम्परां पुरस्तात्तदर्थे प्रद्योतयामास । सैवेयं चम्पकमञ्जरी । तस्याः पतन्ति तत्सौगन्ध्यमसहमाना भ्रमरा इति दीपान्मषीपात इव तत्पातोऽस्तीति पिण्डीकृतोऽर्थः । चम्पकानि वसन्ते पुष्प्यन्ति । तेषां मञ्जर्यः कान्त्या विराजन्ते । तत्सौगन्ध्याय समागता द्विरेफाः पुनः पुनरधः पतन्ति । वसन्तेऽस्मिन् भृशं कामोद्दीपकानि वर्तन्ते चम्पकपुष्पाणीति सारांशः । अत्र चम्पकमञ्जर्यां दीपपरम्परात्वसंभाव नेति स्वरूपोत्प्रेक्षा । षट्पदादिषु कज्जलत्वाद्यारोपरूपरूपकं चास्या स्समुज्जीवकमित्येतयोरङ्गाङ्गिभावेन संकरः ॥

इत आरभ्य त्रिभिश्श्लोकैर्दोहदक्रियाः वर्ण्यन्ते —



**मधुनि मुग्धदृशां मुखसंस्तवा**
**त्तदनुषङ्गितया वकुलेषु च ।**
**मरुति चैतदनुक्षणसौहृदा**
**त्समुचितोऽजनि सौरभसंक्रमः ॥** ॥ 66 ॥

**मधुनीति ॥** मुग्धाः सुन्दराः दृशः यासां ताः मुग्धदृशः वामाक्ष्यः कम्पराजस्य प्रियाः । तासाम् मुखसंस्तवात् तन्मुखपरिचयात् तात्कालिक(स्थिति)संबन्धात् मधुनि मद्ये । तासां पद्मगन्धित्वेन ताभि स्तदास्वादात्पद्मसौगन्ध्यं तत्र संक्रान्तमिति भावः । तदनुषङ्गितया — तस्य मधुनः तत्प्रियाभिरुद्वान्तस्येत्यर्थः । तथाविधस्य तस्य अनुषङ्गिता अनुषङ्गः संबन्धः किञ्चिद्दूरतस्संसर्गः स्वाश्रयाश्रयितया संबन्धः । तेन वकुलेषु केसरेषु तत्पुष्पेषु । 'अथ केसरे वकुलः' इत्यमरः । च समुच्चये । मधुन्येव न एतेषु चेत्यर्थः । वकुलसुगन्धस्य पद्म सौगन्ध्येन तौल्यादेवमुक्तिः । वकुलस्य च दोहदक्रिया कामिनीनां मुखासव इति तत्संपर्कस्तस्मिन्नासीदिति भावः । दोहदक्रियाश्चेत्थमभि हिताः — "अशोकश्चरणाहत्या वकुलो मुखशीधुना । आलिङ्गनात्कुर वकस्तिलको वीक्षणेन च । करस्पर्शेन माकन्दो मुखरागेण चम्पकः । सल्लापतः कर्णिकारस्सिन्धुवारो मुखानिलात् । गीत्या प्रियालुर्नितरां नमेरुर्हसितेन च" इत्यागमः । अतएव महाकवय आहुः — "सुव दना वदनासवसंभृतस्तदनुवादिगुणः कुसुमोद्गमः । मधुकरैरकरोन्मधु लोलुपैर्वकुलमाकुलमायतपङ्क्तिभिः" इत्यादीनि । एतासाम् अनुक्षणम् क्षणक्षणम् सर्वदा (सुहृदयस्य भावः) सौहृदम् स्नेहः सहवासः ताभिस्साकं निश्वासरूपेण सहस्थितिः । तस्मात् तदीयनियतसंसर्गा दित्यर्थः । तत्सुन्दरीनिश्वासानां क्षणक्षणप्रसारित्वेन तासां पद्मसौगन्ध्य वत्त्वाच्चैवमुक्तिः । उत्तमस्त्रीणां निश्वासाः पद्मसौरभवन्त इति प्रसि द्धम् — "मधुकरमदिराक्ष्याश्शंस तस्याः प्रवृत्तिं वरतनुरथवासौ नैव दृष्टा त्वया मे । यदि सुरभिमवाप्स्यस्तन्मुखोच्छ्वासगन्धं तव रति

रभविष्यत्पुण्डरीके किमस्मिन् " इत्यादिना । ( एवं निश्वासरूपेण तासु निरन्तरस्थितेः ) मरुति वायौ वसन्तकालभवे इत्यर्थः । च समुच्चये पूर्ववत् । वसन्तस्य पुष्पसमयत्वेन तत्कालसंजातवातानामतिसुरभित्वादेवमुच्यते । जातिपुष्पाणि विना सर्वाण्यस्मिन् ऋतौ विकसन्तीति सर्वपुष्पसौगन्ध्यवत्त्वमस्मिन् संभाव्यते । तथापि पद्मसौगन्ध्यस्य बहुलतया लब्धिरेतस्मिन्निती त्थमुक्तिः । ( एवं ) सौरभसंक्रमः – सुरभिः सुगन्धिः तस्य भावः सौरभम् परिमलम् । युवादित्वादण् । तस्य संक्रमः संक्रमणम् क्रमादुत्तरोत्तरोपसर्पणम् । समुचितः यथोचितम् यत्र यावानुचितस्तत्र तावानेवेत्यर्थः । अजनि अभूदिवेति गम्योत्प्रेक्षा । मुखस्य मद्येन साकं साक्षात्संबन्धस्तात्कालिक इति सद्यस्कालसौगन्ध्यातिशय एव तत्र समभवत् । पर्युषिते मद्ये तदलाभात् । वकुलेषु – मुखेन मद्यस्य मद्येन वकुलस्येति साक्षान्मुखसंबन्धाभावात्तदुचिततयैव सौरभलाभस्तत्र । विमर्दनं विना तत्र सौगन्ध्यातिशयानुपलब्धेः । वायूनां निश्वासरूपेण मुखे नित्यसान्निध्यमविच्छिन्नमिति निरतिशाय्यविच्छिन्नं सौरभं तत्र । एवं मद्यादिसुगन्धानां सर्वेषां कम्पराजवधूमुखसौगन्ध्यसंजातत्वं कविप्रौढोक्त्या सिद्धमिति क्रियोत्प्रेक्षेयम् ॥

**क्वणितनूपुरकुन्तलकामिनी**
**चरणपङ्कजसङ्गवशादिव ।**
**मुखरभृङ्गमशोकमहीरुहै**
**स्तदनुरूपमधार्यत पल्लवम् ॥** ॥ 67 ॥

**क्वणितेति** ॥ अशोकमहीरुहैः । कर्तृभिः । क्वणितानि संजातकूजितानि ध्वनितानि नूपुराणि मञ्जीराणि येषु तानि तथोक्तानि । 'तुला कोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । तथाविधानि कुन्तलकामिनीनाम् कर्णाटवनितानाम् चरणपङ्कजानि पादपद्मानि तैः सङ्गः संबन्धः तत्संयुक्तता तस्य वशात् अधीनत्वादिवेति संभावना । 'त्रिष्वधीने वशो वाञ्छाप्रभुत्वाधीनतासु ना' इति नानार्थरत्नमाला । मुखराः शब्दायमानाः झङ्कुर्वाणाः भृङ्गाः भ्रमराः यस्मिन् तादृशम् भ्रमरझङ्कारसंयुतमित्यर्थः । अतएव तदनूरूपम् तस्य अनुगुणम् सर्वथा ( रक्तत्वमार्दवादिनापि ) तदनुवादि तत्सदृशम् तदाकारमधुरमिति यावत् । तादृशम् पल्लवम् किसलयम् । 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । दोहदसाधनस्य पादस्य वामस्यैकत्वात्पल्लवस्यैकत्वम् । तत् कर्म । अधार्यत अध्रियत । धृङ् अवस्थाने – ण्यन्तात्कर्मणि क्तः । तत्सुन्दरीभिर्नूपुरालङ्कृतवामचरणेनाहतेऽशोके 'कारणगुणाः कार्ये सङ्क्रामन्तीति न्यायेन तच्चरणवद्रक्तं मृदु, नूपुरवत् भ्रमरझङ्कृतिशिञ्जितं च किसलयमजायतेति भावः । "अशोकश्चरणाहत्या" इति स्त्रीणां नूपुरालङ्कृतवामपादताडनमशोकस्य दोहदक्रिया । सा च कर्णाटस्त्रीभिरस्मिन् काले निर्वर्तितेति तात्पर्यार्थः । अत्र चाशोकः पल्लवितः । मधुपानाय भ्रमरा आगत्य झङ्कुर्वन्ति च तत्किसलयेषु सोत्साहम् । एवंभूतानि किसलयानि क्वणन्नूपुरयुतसुन्दरीचरणैस्साम्यं वहन्ति । अतस्तादृशपल्लवोद्भूतौ तादृक्चरणसङ्गः कारणं किमिति संभाव्यते । तेन हेतूत्प्रेक्षेयम् । अशोकस्य दोहदनिर्वर्तने कवय एवं प्रब्रुवन्ति । "असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि । पादेन नापैक्षत सुन्दरीणां संपर्कमाशिञ्जितनूपुरेण" "किसलयमृदोर्विलासिनि कठिने निहितस्य पादपस्कन्धे चरणस्य न ते बाधा संप्रति ... वामस्य" इति ॥



**वरवधूपरिरम्भरसोल्लस**
**ल्ललितकुट्मलकण्टकिताकृतिः ।**
**कुरवकः कुसुमेषुमचेतने**
**ष्वपि विशृङ्खलवृत्तिमसूचयत् ॥** ॥ 68 ॥

**वरवधूरिति** ॥ कुरवकः तदाख्यो वृक्षः । नायक इति गम्यते ।

सः कर्ता। वरवध्वः उत्तमाङ्गनाः पद्मिनीजातिस्त्रिय इत्यर्थः। नायिका इति च गम्यते। तेषाम् परिरम्भः आलिङ्गनम् तस्मात् रसः आनन्दः तत्संजातं सुखम् 'स्यादानन्दथुरानन्दशर्मशातसुखानि च' इत्यमरः। तेन उल्लसन्तः प्रकाशमानाः आविर्भूताः ललिताः सुन्दराः कुट्मलाः मुकुलानि। तैः कण्टकिता कण्टकवती कृता आनन्दानुभूतेरनुरागादिवशात्संजनितरोमोद्गमरूपसात्त्विकभाववती कृता। तादृशी आकृतिः आकारः अवयवसंस्थानम् यस्य। तादृक् सन्। 'आलिङ्गनात्कुरवक' इति कुरवकस्य सुन्दर्यालिङ्गनमेव दोहदक्रियेति तथा सद्योधृतमुकुलस्य तस्य कामरसानुभूतिरसिकतैवं कविप्रौढोक्त्या रूप्यते। कुसुमेषुम् मन्मथम्। अचेतनेषु प्राणरहितेषु स्थावरेषु सुखदुःखाद्यनुभूतिज्ञानरहितेष्वपि। अचेतनस्याप्येवं किमुत चेतनावत्सु सुखदुःखाद्यनुभवरसिकेष्वित्यपिशब्दार्थः। विशृङ्खला निरर्गला अप्रतिरोधा सर्वत्र निर्निरोधा वृत्तिः प्रवर्तना यस्य तथोक्तम्। सिकतास्वपि तैलनिष्पादकमिति भावः। तम्। (तथाविधम्) असूचयत् अबोधयत् एवं लोकविदितमकरोदित्यर्थः। वसन्तेऽस्मिन्नुतमकान्तालिङ्गनेन रसज्ञः पुरुष इव कुरवको विकासभावमभजदिति तात्पर्यार्थः। अचेतनस्याप्येवं कामपारवश्ये तदन्येषां का गतिरित्याश्चर्यम्। अद्भुतरसश्चात्र मुख्यः। शृङ्गारस्तु तदङ्गम्। अतएवात्र रसवदलङ्कारः। रूपकं च शृङ्गारसमुज्जीवकतयाऽस्य प्रयोजकमित्येतयोरङ्गाङ्गिभावेन सङ्करः॥

**पथिकसार्थपराक्रमणोत्सुक**
**प्रसवकार्मुककाहलनिस्वनः।**
**मधुरपञ्चमरागरसाञ्चितो**
**जगदरञ्जयदन्यभृतध्वनिः॥** ॥ 69 ॥

**पथिकेति॥** मधुरः श्राव्यः पञ्चमः तदाख्यः रागः रागभेदः 'पञ्चमो रागभेदे स्यात्पञ्चानामपि पूरणे' इति विश्वः। तस्य प्रवाहः प्रवाहवदविच्छिन्ना प्रवृत्तिः तेन अञ्चितः महान् जगदाराध्य इत्यर्थः। अञ्चु गतिपूजनयोः क्तः। तादृशः अन्यभृताः परभृताः कोकिलाः। निजापत्यमेते परैः पोषयन्तीत्येवमुच्यन्ते। तेषाम् ध्वनिः पञ्चमाख्यः। अत्र नारदः। "षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम्। अजाविकौ च गान्धारं क्रौञ्चो नदति मध्यमम्॥ पुष्पसाधारणे काले कोकिलो रौति पञ्चमम्। अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः' इति। सः कर्ता। पथिकाः पान्थाः तेषाम् सार्थः समूहः प्रवासिन इत्यर्थः। तस्मिन् पराक्रमणम् विक्रमणम् स्वशौर्यप्रदर्शनम् तत्र उत्सुकः उद्युक्तः। 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः। वियोगिमारणे प्रवृत्त इत्यर्थः। तथाविधः प्रसवकार्मुकः पुष्पधन्वा मन्मथः तस्य काहलम् वाद्यविशेषः स्वजैत्रयात्रारम्भसूचक इति भावः। तस्य निस्वनः ध्वनिः स सन्निति रूप्यते। (तादृशस्सन्)। जगत् लोकम् सर्वान् जनान् 'स्याज्जगद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु' इति रुद्रः। तत् कर्म। अरञ्जयत् रञ्जयामास रागयुक्तमकरोत् सर्वेषां रागोद्दीपकोऽभूदिति यावत्। प्रियाः परित्यज्य देशान्तरं गच्छन्तीति क्रुधा प्रवासिषु स्वपराक्रमं दर्शयितुकामः कामो महता प्रयत्नेन तेषु सन्नद्धोऽभवत्। तदारम्भसूचकाः काहलरवा इव कोकिलालापा अत्यन्तं मोहोद्दीपका अत्रासन्निति तात्पर्यार्थः। 'जगदरञ्जय' दित्यनेन मन्मथसंरम्भं काहलध्वनिभिर्ज्ञात्वा भीताः प्रियाविरहमसहमानाः पान्थास्स्वगृहानागत्य प्राणेश्वरीभिस्संगतास्सुखमन्वभूवन्निति व्यज्यते। अत्र परभृतध्वनिषु मन्मथकाहलध्वनित्वरूपणमिति रूपकमलङ्कारः॥

**अधिगताभिनवार्तवसम्पद**
**स्तबकसंजनितस्तनविभ्रमाः।**
**भ्रमरकामुकसंवननक्षमा**
**वनलता ललितां दधिरे दशाम्॥** 70॥

**अधिगतेति ।।** वनलताः उद्यानवल्ल्यः ' वल्ली तु व्रततिर्लता ' इत्यमरः । कन्यका इति च गम्यते । अधिगता प्राप्ता अभिनवा नूत्ना अपूर्वा आर्तवसंपत् ( लतापक्षे ) ऋतुसंबन्धिमकरन्दादिसमृद्धिः । ( कन्यापक्षे ) स्त्रीकुसुमसौष्ठवम् । ' आर्तवं स्त्रीरजे पुष्पे क्लीबं स्यादृतुजे त्रिषु ' इति मेदिनी । किञ्च । स्तबकाः गुच्छकाः विकासोन्मुखकलिकाः तैः संजनिताः परिकल्पिताः संपादिताः स्तनविभ्रमाः कुचविलासाः यैः । तादृश्यो भूत्वा । भ्रमराः भृङ्गाः त एव कामुकाः कामिनः विटाः तेषाम् संवननम् वशीकरणम् स्वानुसरणव्यापारः तस्मिन् क्षमाः तद्विषयकसामर्थ्यवत्यः । ललिताम् मनोज्ञाम् दशाम् ( कन्यापक्षे ) यौवनवयः । ( लतापक्षे ) ऋतुकृतमवस्थाविशेषम् दधिरे अबिभ्रत अवहन् प्राप्ता इत्यर्थः । डु धाञ् धारणपोषणयोः — लिट् । वसन्ते लताः मार्दवादिगुणैर्नितरां दर्शनीया भान्ति । ताः पुष्पविकासं प्राप्य मकरन्दादिना समुल्लसन्ति । भ्रमराश्च मकरन्दमास्वदितुं तत्र परिभ्रमन्ति । इममर्थं स्वप्रौढोक्त्या लताः काश्चन कन्यका इति ताः ऋतुमत्यो भूत्वा स्तनस्तबकसौन्दर्यादिना भ्रमरानिव विटान् वशीकुर्वन्ति कमपि ( यौवन ) दशाविशेषं प्राप्येति वर्ण्यते । अत्र भ्रमरकामुकेत्यादिरूपणाद्वनलतादिषु कन्यात्वादिरूपणमर्थादापततीत्येकदेशविवर्तिरूपकमलङ्कारः । तच्च क्वचिच्छ्लिष्टम् ।।

वसन्तकाले राजस्त्रियस्तदुत्सवमाचरन्ति । स्वप्रियमनुकूलयितुं मन्मथपूजां च तत्र कुर्वन्ति । तदद्य कम्पराजप्रियासु वर्णयति कवयित्री —

**सुतनवः फलकेषु मधूत्सवे**
**रतिपतिं परिलेखितुमुद्यताः ।**



**हृदयगोचरतामनिशं गतं**
**हरिहरात्मजमेव समालिखन् ।। 71 ।।**

**सुतनव इति ।।** शोभनाः तनवः यासां ताः सुतनवः सुन्दर्यः कम्पनप्रिया इत्यर्थः । ताः कर्त्र्यः । मधूत्सवे वसन्तोत्सवे । फलकम् चर्म तेषु तद्वद्विशालेषु चित्रलेखनयोग्येषु शिलादिषु । रतिपतिम् मन्मथम् परिलेखितुम् आलेखितुम् तं चित्रयितुमित्यर्थः । उद्यताः सन्नद्धाः तदर्थं प्रयतमाना इति यावत् । तादृश्यः अनिशम् सदा हृदयगोचरताम् मनस्साक्षात्कृतिविषयताम् मनसा साक्षात्कृतताम् । यद्वा । हृदयम् गोचरम् निवासस्थानम् यस्य तथोक्तः । तत्ताम् । मनस्सान्निध्यमित्यर्थः । गोचरशब्दश्च स्थानवाची । ' पितृसद्मगोचर ' इत्यादौ तथा दर्शनात् । तां गतम् प्राप्तम् । मनसा सर्वदा साक्षात्क्रियमाणम् मनसि सदा सन्निधीयमानमित्यर्थः । ' गोचरसंचरे ' त्यादिना गोचरशब्दस्साधुः । तथाविधम् हरिहरात्मजम् - आत्मजः मनसिजः स इव हरिहरः कम्पराज इत्युपमितसमासः । अतएव मन्मथसममुं दृष्ट्वा स एवायमिति भ्रान्तिस्संजाता तासामिति भावः । अनेन कम्पराजस्य सौन्दर्यातिशयः प्रस्तूयते । हरिहर इति कम्पनस्यैव नामान्तरम् । द्वितीयहरिहरोऽयमेवेति चरित्रपरिशीलनेन ज्ञायते । निरूपितमेतदन्यत्र मदीयान्ध्रव्याख्यापीठिकायाम् । एवेत्यवधारणे । तमेव नतु मन्मथम् । तास्तु मन्मथमेव लिखितं तं मन्यन्त इति भावः । समालिखन् व्यरचयन् चित्रयामासुः । पतिदेवतास्ता मन्मथलेखनाय प्रवृत्तास्तदाकारं भावयन्तश्चिरपरिचितस्वभावनाबलेन मनसा सदा साक्षात्क्रियमाणं मन्मथाकारं स्वभर्तारं कम्पराजमेव मन्मथ इति भ्रान्त्या फलके लिलिखुरिति तात्पर्यार्थः । अत्रासंगतिभेदोऽलङ्कारः । - " अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा " इति तल्लक्षणात् ।।

**मदनबेरनिभं निभृतं पुरः**
**क्षितिपतिं कृतचन्दनचर्चिकाः ।**
**अधिकघर्मपयोभिरवागम**
**न्मृगदृशो विलसत्पुलकैः करैः ॥** ॥ 72 ॥

**मदनेति** ॥ मृगदृशः एणाक्ष्यः राजदाराः । पुरः अग्रभागे निभृतम् निश्चलम् । अतएव मदनबेरम् मन्मथप्रतिमा तेन सदृशः तथोक्तः । तम् भक्तिपारवश्याच्चेष्टादिराहित्येन द्वितीयमन्मथप्रतिमेव तत्र स्थितमिति भावः । '... निभा ' मिति मातृकापाठः । ' निभ ' मिति संस्कारः । क्षितिपतिम् राजानम् स्वभर्तारम् । एकापि द्वितीया विषयभेदाद्भिद्यते । कारकाणि च विवक्षातो भवन्तीत्यधिकरणार्थे द्वितीयात्र । उत्तरार्धे तु कर्मणि । क्षितिपतावित्यर्थः । चन्दनचर्चिकाः मलयजानुलेपाः कृताः याभिः ताः । मन्मथधियेति भावः । ' निष्ठे ' ति पूर्वनिपातः । (तथाविधा भूत्वा) अधिकम् बहुलम् घर्मपयः स्वेदजलम् येषु तथोक्तैः । अत्यन्तं स्विन्नैरित्यर्थः । अविदितोऽप्यग्निस्तत्स्पर्शेन दहत्येवेति न्यायादिति भावः । किञ्च । विलसन्तः द्योतमानाः बहिः स्फुटं दृश्यमानाः पुलकाः येषु तैः । कण्टकितैरित्यर्थः । करैः पाणिभिः । हेतुभूतैः । अवागमन् अबुध्यन्त । क्षितिपतिमिति कर्म । राजायमित्यजानन्नित्यर्थः । तदानीं राजपत्न्यश्चन्दनचर्चया मन्मथं परिचरितुं प्रवृत्तास्तत्र भक्त्यावेशितमनस्कतया नैश्चल्येन सर्वथा तमिव स्थितं कम्पराजं मन्मथं मत्वा चन्दनेन विलेप्य तत्स्पर्शेन सात्त्विकोदयात् स्वभर्तारं तमविदुरिति पिण्डीकृतोर्थः । ' क्षितिपतिमवागम ' न्निति वाक्यार्थे विशेषणगत्या विलसत्पुलकैरित्यादि विशेषणे हेतुतया समर्थनीयमर्थं समर्थयत इति काव्यलिङ्गमलङ्कारः । अत्र राजपत्नीषु शृङ्गाररसाङ्गतया प्रवृत्तौ रोमाञ्चस्वेदोद्गमौ मन्मथ



विषयाया रतेरङ्गत्वमापादयन्तौ शृङ्गाररसाङ्गतां नयत इति प्रेयोऽलङ्कारोऽपि । अस्य च काव्यलिङ्गमङ्गमित्यनयोस्संकरः । पतिदेवतास्वासु दैवविषयाया रतेरङ्गत्वमपि पातिव्रत्यपरिपोषणेनौचितीं सम्पादयतीत्यवगन्तव्यम् । ' कम्पराजमवागमन्निति ' कथनेन तासु लज्जोदयो ध्वन्यत इति भावध्वनिरपि । प्रेयोऽलङ्कारस्य लक्षणं तु - "भावस्य चापराङ्गत्वे प्रेयोऽलङ्कार ईरितः " इति ॥

वसन्तोत्सवाङ्गतया डोलाविहारो वर्ण्यते —

**मुखरकङ्कणमाकुलमेखलं**
**चलितहारलतं लुलितालकम् ।**
**अधिगतश्रममस्य वधूजनो**
**रतिविशेषमशिक्षत डोलया ॥** ॥ 73 ॥

**मुखरेति** ॥ अस्य कम्पराजस्य । वधूजनः प्रियासमूहः प्रियाः । कर्त्र्यः । डोला आन्दोलनम् उद्यानेषु क्रीडनार्थे स्थाप्यमानं क्रीडासाधनम् । तया करणभूतया । मुखराणि शब्दायमानानि कङ्कणानि वलयानि करभूषणानि यस्मिन् तम् कङ्कणझणझणत्कारयुतमित्यर्थः । किञ्च । आकुलाः व्याकुलाः भृशं चलन्त्यः मेखलाः काञ्च्यः यस्मिन् तम् । चलाचलकाञ्चीसहितमित्यर्थः । किञ्च । चलिताः विलोलाः लता इव दीर्घाः हाराः यस्मिन् तम् । आलोलितमुक्ताहारमित्यर्थः । ' हारो मुक्तावली ' इत्यमरः । लुलिताः विक्षिप्ताः अलकाः वक्रकेशाः चूर्णकुन्तलाः ' अलकाश्चूर्णकुन्तलाः ' इत्यमरः । लुड विलोडने – इत्यस्मात् क्तः । डलयोरैक्यम् । अधिगतः प्राप्तः श्रमः क्रीडाखेदः तज्जन्यः स्वेदः यस्य तम् । "श्रमः खेदो हि रत्यादेर्जातस्स्वेदादिभूमिकृत् " इति श्रमस्य लक्षणमुक्तम् । क्रीडापरिश्रमादुदितस्वेदमित्यर्थः । तथाविधम् रतिविशेषम् सुरतभेदम् पुरुषायितम् । कर्म । अशिक्षत अभ्यस्य

दिवेति गम्योत्प्रेक्षा। शिक्ष विद्योपादाने – लङ्। डोलामुखात् पुरुषायितशिक्षा सम्यग्गृहीता गुरुमुखादिवेति भावः। 'डोलया रतिविशेषम् अशिक्षत' इत्ययं प्रयोग आन्ध्रभाषासम्प्रदायसिद्धः प्रतिभाति। 'सान्दीपेन वेदान् रामकृष्णावपठताम्' इत्यादावाख्यातस्य तृतीयाप्यान्ध्रचां बहुलतया दृश्यते। तथैवान्ध्रमहिलयानया कवयित्र्या प्रायोजि किमित्यपि पर्यालोचनीयम्। पुरुषायितम् रतिविशेषः। अत्र रतिरहस्यम् "स्वेच्छया श्रमिणि वल्लभे तथा योषिदाचरति पुरुषायितम्" इति। पुरुषायिते च नायिकानामधोमुखत्वेन विक्षिप्तालकत्वं मुखे संभवति। तत्र पुनःपुनर्जघनचलनेन भृशं काञ्च्याश्चलनं भवति। कान्तोपरि नतमुख्या नायिकाया रतिराभस्यान्मुक्ताहाराणामतीव लौल्यं च सम्पद्यते। हस्तताडनचालनादिना कङ्कणक्वणनं च युज्यते। क्रीडाकरणेन स्त्रियां खेद इति जायते च स्वेदातिशयः। डोलाविहरणेऽप्येते समा इति डोलया रतिविशेषाभ्यासोऽभवत्किमित्युत्प्रेक्ष्यते। क्रियोत्प्रेक्षेयम्॥

वसन्तकालोचितं गानं मन्मथपूजाङ्गतया प्रस्तूयते —

**उचितरागविशेषमनोहरे**
**रतिपतेरुप गानविधौ स्त्रियः।**
**नृपतिगोत्रकृतस्खलना ययुः**
**प्रियसखीसविधेषु विलक्षताम्॥** ॥ 74 ॥

**उचितेति**॥ स्त्रियः राजकान्ताः। कर्त्र्यः। रतिपतेः उप मन्मथस्य समीपे तत्सन्निधावित्यर्थः। उचितः वसन्तोचितः रागविशेषः रागभेदः वसन्तरागः सप्तभिस्स्वरैस्संपूर्णत्वेन (महा) संपूर्णरागः। तथा चोच्यते "औडवः पञ्चभिः प्रोक्तस्स्वरैष्षड्भिस्तु षाडवः। संपूर्णस्सप्तभिर्ज्ञेय एवं रागास्त्रिधा मताः" इति। वसन्तरागश्च



वसन्तकाले गीयते। रागाश्च ऋत्वनुकूला एवमुक्तास्संगीतशास्त्रे – "श्रीरागोऽथ वसन्तश्च भैरवः पञ्चमस्तथा। मेघरागो बृहन्नादो षडेते पुरुषाह्वयाः॥ श्रीरागो रागिणीयुक्तश्शिशिरे गीयते बुधैः। वसन्तस्ससहायस्तु वसन्ततौ प्रगीयते॥ भैरवस्ससहायस्तु ऋतौ ग्रीष्मे प्रगीयते। पञ्चमस्तु तथा ज्ञेयो रागिण्या सह शारदे॥ मेघरागो रागिणीभिर्युक्तो वर्षासु गीयते। नादनारायणो रागो रागिण्या सह हैमके" इति। तेन मनोहरे हृदयरञ्जके गानविधौ गीतव्यापारे। गायन्तीषु तास्वित्यर्थः। नृपतेः राज्ञः गोत्रे नाम्नि कृतम् आचरितम् स्खलनम् चलनम् अन्यथा ग्रहणम् याभिस्ताः। मन्मथ इति वक्तव्ये कम्पन इत्युक्तवत्य इत्यर्थः। 'गोत्रे नाम्नि कुलाचल' इति यादवः। तथाविधाः प्रियाः इष्टाः आप्ताः सख्यः वयस्याः प्राणसख्य इत्यर्थः। 'आलिस्सखी वयस्या च' इत्यमरः। तासाम् सविधेषु समीपस्थलेषु। विलक्षताम् लज्जितत्वम् लज्जामित्यर्थः। ताम् ययुः प्रापुः। स्वानुरागपारवश्यस्य ताभिर्ज्ञातत्वादिति भावः। अनेन तासां कम्पराजे गाढानुरागो ज्ञायते। तेन देवताविषयाया रतेस्तदङ्गत्वम्, तेन च कम्पराजविषयरतेः परिपोषोऽभवदिति पराङ्गत्वात्तद्रतेः प्रेयोऽलङ्कारः॥

उत्सवाङ्गतया परस्परं कुङ्कुमविक्षेपो वर्ण्यते।

**क्षितिपतिं किल कुङ्कुममुष्टिना**
**समभिताडयितुं धियमादधौ।**
**सपदि घर्मपयःप्रसरेण तं**
**विगलितं न विवेद वधूजनः॥** ॥ 75 ॥

**क्षितिपतीति**॥ वधूजनः कम्पराजस्य प्रियाः। कर्ता। कुङ्कुमम् घुसृणम्। 'कुङ्कुमम्। काश्मीरजन्माग्निशिखम्' इत्यमरः। तस्य मुष्टिः तेन परिपूरितो मुष्टिरित्यर्थः। गूढं मुष्टिनिक्षिप्त

कुङ्कुमा इति यावत् । क्षितिपतिम् भूपतिम् समभिताडयितुम् संप्रहर्तुम् धियम् बुद्धिम् अहमस्योपरि कुङ्कुमं विक्षिपामीति मतिम् आदधौ चकार तादृशी बुद्धिः यदा जातेत्यर्थः । "कृतौ करोत्यावहति विदधात्यादधाति च" इति भट्टमल्लः । सपदि सद्यः तस्मिन्नेव काले । 'सद्यस्सपदि तत्क्षणे' इत्यमरः । घर्मपयः स्वेदजलम् तस्य प्रसरेण व्याप्त्या स्वप्रियस्मरणमात्रसंजातरागोद्भूतस्वेदोद्गमातिशयेन सात्त्विकभावेनेति यावत् । तम् स्वधृतकुङ्कुममुष्टिम् विगलितम् विस्रस्तम् विभ्रष्टम् न विवेद नावबुध्यत । आनन्दपारवश्येन मनोवृत्तीनां प्रतिबद्धत्वादिति भावः । अनेन प्रलयो नाम सात्त्विकभावस्सूचितः । "प्रलयस्सुखदुःखाद्यैर्गाढमिन्द्रियमूर्छनम्" इति तल्लक्षणात् । सपदीत्यनेन कार्यकारणयोः पौर्वापर्यविपर्यासरूपातिशयोक्तिरलङ्कारः ॥

ऋतूचितभोगोपवर्णनेन साकं सर्गमिममुपसंहरति कवयित्री —

**इति समुचिताभिश्चातुरीभिर्विशेषान्**
**ऋतुषु समुपलभ्यान्निर्विशन्निर्विशङ्कम् ।**
**सुतनुभिरवियोगोत्कण्ठिताभिस्तृतीयं**
**व्यतनुत पुरुषार्थं कम्पराजः कृतार्थम् ॥** ॥ 76 ॥

**इतीति** ॥ कम्पराजः । इति इत्थम् अनेन प्रकारेण पूर्वमुक्तेनेत्यर्थः । ऋतुषु ग्रीष्मादिषु षट्सु ऋतुषु । समुपलभ्यान् प्राप्तव्यान् सम्यगनुभोग्यान् । विशेषान् इतरव्यावर्तकान् विशिष्टानि तानि तानि ऋतुलिङ्गानीत्यर्थः । समुचिताभिः देशकालानुरूपाभिः । चातुरीभिः कौशलैः प्रयत्नमन्तरैव यथा स्वानुभवयोग्यानि भवन्ति तथाविधैरुपायविशेषैरित्यर्थः । निर्विशङ्कम् यथेच्छम् तत्परत्वेनेत्यर्थः । अन्यथा आभासत्वप्रसङ्गादिति भावः । निर्विशन् अनुभवन् । अवियोगः प्रियेण सह अपृथक्स्थितिः तेन सहस्थितिरिति यावत् । तत्र उत्क



ण्ठिताभिः संजातौत्सुक्याभिः । अनिशमपि तत्क्रीडानुभूतिमभिलषन्तीभिरिति भावः । अनेनैकत्वैवानुरागः परिहृतः । तादृशीभिः सुतनुभिः सुन्दराङ्गीभिः स्वप्रियाभिः । सहार्थे तृतीया । ताभिस्साकमित्यर्थः । तृतीयम् त्रिसंख्यापूरकम् धर्मार्थकाममोक्षेषु काममित्यर्थः । "त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गस्समोक्षकै" रिति पुरुषार्थविवरणम् । 'त्रेस्संप्रसारणं' चेति त्रयाणां पूरण इत्यर्थे डटोऽपवादस्तीयस्संप्रसारणं च । तम् । कृतकृत्यम् चरितार्थम् लब्धप्रयोजनम् । एतावत्कालस्य समुचितस्य स्वालम्बनस्य महापुरुषरूपस्य पुराकृतभाग्यविशेषैर्यथाकथमपि समुपलब्ध्या स्वनाम्नोऽर्थवत्तां सम्पाद्येति भावः । तथाविधम् व्यतनुत अकरोत् । विपूर्वात् तनु विस्तारे – इत्यस्माल्लङ् । ऋतुकालोचितान् भोगान् यथोचितं स्वप्रियाभिर्गाढानुरक्ताभिस्सह रसज्ञशिरोमणिस्सोऽन्वभूदिति संक्षेपः । वृत्तविपरिणामोऽयं सर्गान्तं सूचयति । वृत्तमिदं मालिनी । "ननमयययुतेयं मालिनी भोगलोकैः" इति तल्लक्षणात् ॥

इति
श्रीगङ्गादेव्या विरचिते
मधुराविजयनाम्नि वीरकम्परायचरिते
कम्परायराज्यपरिपालनऋतूपभोगवर्णनं नाम
पञ्चमसर्गः

* * * *

**इतीति** ॥ शेषं पूर्ववत् । कम्पराजस्य कम्पनप्रभोः । कर्तरि षष्ठी । तत्कृते इत्यर्थः । तथाभूते राज्यपरिपालनम् काञ्चीराज्यरक्षणम् ऋतूपभोगः – ऋतूनाम् ग्रीष्मादीनां षड्तूनाम् उपभोगः

**समुचिततया** तत्तदृतूत्पन्नानां तेषां तेषामनुभवः ते तथोक्ते। तयोः **वर्णनम्** प्राधान्येन कीर्तनम्। अन्यानि ऋत्वादिवर्णनान्येतत्प्रयोजन साधनायैव प्रवृत्तानीति न तेषां पृथक्त्वेन कथनम्, राज्यपालनं तु **व** तथेति तस्य भिन्नतया परिगणनं चेति भावः। नामेति प्रसिद्धौ। **ताभ्यां** सुविदित इत्यर्थः। तादृशः। पञ्चमः पञ्चानां पूरणः पञ्च **संख्यापूरकः**। पूरणे डट्। नान्तत्वेन मट्। (सर्गः इति समाप्तः।) **इति** तु विशेषः॥

इति

श्रीपरमेश्वरीकृपासमुपलब्धशास्त्रसाहितीवैदुष्य

'साहित्यालङ्कार' 'विद्वत्कवीशान'

**पोतुकुच्चि सुब्रह्मण्यशास्त्रिणा**

'काव्यकलानिधि' 'महीशूरमहाराजास्थानमहाविद्वत्कवि'

श्रीचिदम्बरशास्त्रिणां भागिनेयेन विरचितया

**भावप्रकाशिका**ख्यव्याख्यया समलङ्कृतायाम्

श्रीगङ्गादेव्याः कृतौ मधुराविजये महाकाव्ये

राज्यपरिपालनऋतूपभोगवर्णनं नाम

**पञ्चमसर्गः**

*  *  *  *

*

**श्रीः**

# मधुराविजयम्

**भावप्रकाशिकाख्यव्याख्यासमेतम्**

## षष्ठसर्गः

"नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम्। उद्यानसलिलक्रीडामधुपानरतोत्सवाः॥ ... एतानि यत्र वर्ण्यन्ते तन्महाकाव्यमुच्यते। एषामष्टादशानां यैः कैश्चिदूनमपीष्यते" इति लक्षणकर्तारः। एतावदवधि नगरकुमारोदयमन्त्रप्रयाणयुद्धर्तुरतोत्सववर्णनास्तत्र तत्र कीर्तिताः। इदानीमस्मिन् सर्गे वसन्तादिऋतुगुणप्रादुर्भावेन रमणीयान्यासन् प्रमदवनानीति तद्विहारस्सलिलक्रीडा च देवपूजाङ्गत्वेन वर्ण्यते। तत्र वनविहारः प्रकथ्यते —

**अथ वरतनुभिस्समं कदाचि**
**द्विरचयितुं कुसुमापचायलीलाम्।**
**प्रमदवनममर्त्यकामिनीभि**
**र्हरिरिव नन्दनमासदन्नरेन्द्रः॥** ॥ 1 ॥

**अथेति**॥ अथ अनन्तरम् वसन्तोत्सवकरणेन मन्मथानुग्रहसंपादनोत्तरकाले इत्यर्थः। नरेन्द्रः राजा कम्पनः। कदाचित् एकदा विहारस्य समुचिते समये संप्राप्ते इत्यर्थः। कुसुमानाम् पुष्पाणाम् अपचायः हस्तेन लवनम्। 'हस्तादाने चेरस्तेय' इति घञ्। अत्र "हस्तादानग्रहणेन प्रत्यासत्तिरादेयस्य लक्ष्यते" इति काशिका। तस्य लीलाम् व्यापारम्। विरचयितुम् आचरितुम् वरतनुभिः वराः अत्यन्तमुत्कृष्टाः तनवः शरीराणि यासाम् ताभिः। वरवर्णिनीभिरिति भावः।

वरवर्णिनीनां लक्षणमेवमुक्तं रुद्रटेन – "शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला । भर्तृभक्ता च या नारी सा भवेद्वरवर्णिनी " इति । तथाविधाभिस्स्वकान्ताभिः समम् । हरिः इन्द्रः अमर्त्यकामिनीभिः देवतायुवतिभिः अप्सरोभिस्सह । 'वृद्धो यूने' त्यादि निर्देशात्सहार्थयोगेऽपि तृतीया । नन्दनम् तन्नामकम् इन्द्रोद्यानम् । 'अथ नन्दनम् इन्द्रोद्याने । नन्दनस्तु तनये हर्षकारिणि ।' इति हैमः । तमिव । उपमयानया राज्ञः, तत्कान्तानां, तदुद्यानस्य च लोकातिशायि वैभवसौन्दर्यनित्यविकासितास्सूच्यन्ते । प्रमदवनम् अन्तःपुरोचितमुद्यानम् । 'स्यादेतदेव प्रमदवनमन्तःपुरोचितम्' इत्यमरः । राजा सस्त्रीको यत्र क्रीडति तस्य नामेदम् । अतएव 'ङ्यापोस्संज्ञे' ति प्रमदाशब्दस्य पाक्षिको ह्रस्वः । तत् कर्म । समासदत् प्राप । पुष्पापचयार्थे स्त्रीभिस्सह तत्र प्रविवेशेत्यर्थः । वाक्यार्थोपमेयम् । सर्गेऽस्मिन् पुष्पिताग्रा वृत्तम् । "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति तल्लक्षणात् । सर्गोऽयं नायकवनविहारेण समारब्धः परिसमाप्यते सस्त्रीको जलक्रीडाभिस्स्नातोऽयं राजा भक्त्या विरूपाक्षमानर्चेति मङ्गलाशंसनेन ॥

**मुखरितमणिमेखलाकलापाः**
**प्रचलितमन्वचलंस्तमायताक्ष्यः ।**
**उपवनलतिका इवोपगीत**
**भ्रमरकुला मलयाद्रिगन्धवाहम् ॥ ॥ 2 ॥**

**मुखरितेति॥** आयताक्ष्यः आकर्णमायतनेत्राः विशालाक्ष्यः स्त्रियः । कर्तृभूताः । मुखरितः शब्दायमानः मणिमेखलायाः अष्टयष्टिकायुतकटिबन्धभूषणविशेषस्य रत्नमयस्य कलापः भूषणम् । राहोश्शिर इति वद भेदे षष्ठी । सामान्यविशेषयोश्च तवृक्षादिवत्कर्मधारयो वा । कटिबन्ध



भूषणभेदाश्चेत्थमुदाहृताः–" एका यष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिकाः । रसना षोडश ज्ञेयाः कलापः पञ्चविंशकः " इति । अत्र कलापशब्दो भूषणवाची । विशेषाविवक्षया तु 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा' इत्यमरः । मेखलारूपं भूषणमित्यर्थः । यद्वा । मुखरितः वाचालितः भृशं शब्दायमान इत्यर्थः । मेखलायाः काञ्च्याः कटिबन्धभूषणसामान्यस्य तद्गतकिङ्किणीनामित्यर्थः । कलापः समूहः 'कलापस्संहतौ बर्हे काञ्च्यां भूषणतूणयोः' इत्यजयः । "अपगतमेखलाकलापमूको मध्यभाग " इति कादम्बरी–अत्र व्याख्या । 'मेखलाया एकत्वेऽपि किङ्किण्यपेक्षया कलाप इत्युक्तम्' इति । सः यासां तथोक्ताः । सविलासगमनेन प्रणादितमेखलाझणझणत्कारा इत्यर्थः । तथाविधास्सत्यः । प्रचलितम् प्रयातम् अग्रगामिनम् तम् राजानम् । कर्म । उपवनलतिकाः उद्यानलताः । उपगीतानि झङ्कारैस्समीपे गातुं प्रवृत्तानि । 'आदिकर्मणि क्तः कर्तरि' चेति क्तः । तथा च माघः – " या बिभर्ति कलवल्लकीगुणस्वानमानमतिकालिमाऽलया। नात्र कान्तमुपगीतया तया स्वानमानमतिकाऽलिमालया " इति । तथाविधानि भ्रमरकुलानि द्विरेफसङ्घाः यासु तथोक्ताः । तथाविधास्सत्यः । मलयाद्रिगन्धवाहम् मलयाचलपवनमिव । अन्वचलन् अनुसृत्य प्रययुः । स यथा गच्छति तथैवैता अगमंस्तन्मार्गानुयायिन्य इति भावः । भ्रमरझङ्कारैर्भृशं प्रणदन्त्यो वायुचलनेन तदभिमुखं सविलासं प्रयान्त्यः पुष्पलता इव मृदुमधुरकाञ्चीगुणझणझणत्कारैस्सविलासत्वरितगमनैः कम्पराजमनुसरन्त्यो दीर्घापाङ्गास्ता भृशं दर्शनीया अभवन्निति वाक्यार्थोपमेयम् ॥

**परिवहदनुरागपूरकल्पैः**
**पदगलितैरथ यावकैर्वधूनाम् ।**
**सरणिररुणतामतीव नीता**
**समजनि नूतनपल्लवास्तृतेव ॥ ॥ 3 ॥**

**परिवहदिति** ।। वधूनाम् राजदाराणाम् सरणिः मार्गः । कर्त्री । इदानीं गन्तव्योऽध्वेत्यर्थः । 'सरणिः पद्धतिः पद्या' इति मार्गपर्यायेष्वमरः । परिवहन् प्रवहन् अविच्छिन्नतया प्रसरन् यः अनुरागपूरः प्रेमप्रवाहः राज्ञि यो निरन्तरस्नेहः तस्य परम्परेति यावत् । तेन ईषदूनैः सदृशैः तथा संभाव्यमानैरित्यर्थः । तथोक्तैः । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति कल्पप् । अनुरागश्च कविसमयेऽरुणः । तथा च कविसमयप्रस्तावे साहित्यदर्पणकाराः – "मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्योः । रक्तौ च क्रोधरागौ सरिद्दधिगतं पङ्केजेन्दीवरादि । तोयाधारेऽखिलेऽपि प्रसरति मरालादिकः पक्षिसङ्घो । ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः" इति । तैः पदविगलितैः पादच्युतैः यावकैः अलक्तकैः । अरुणताम् रक्तिमानम् लौहित्यम् अतीव अत्यन्तम् भृशम् नीता प्रापिता । तासां प्रस्थाने तदीयः पन्थाः धृतालक्तकेभ्यस्तत्पादेभ्यस्संक्रामितलाक्षानुलेपस्सन्निति वाक्यार्थः । नूतनैः नवीनैः सद्य एवोत्पन्नैः आरुण्यातिशयार्थमेवमुक्तिः । पल्लवैः किसलयैः आस्तृता आच्छादितेव । **समजनि** अभूत् । संपूर्वकाज्जनेर्लुङ् । च्लेः पाक्षिकश्चिण् । 'चिणो लु' गिति तशब्दस्य लक् । मानसे स्थातुमलब्धावकाशा बहिरायाताः किमेते स्त्रीणां स्वप्रियानुरागा इति संभाव्यमानाः प्रयाणे गमनवेगवशाद्विच्युतास्तत्पादयावका मार्गं स्वरक्तिम्ना रञ्जयन्त इत्येवं संभाव्यते । सुकुमारपादतला राजदारा असूर्यंपश्यास्समागच्छन्तीति पल्लवैः परितो मार्गमाच्छादितवत्यः किं वनदेवता इति मार्गस्संभावनाविषयः । अत्रचानुरागपूरकल्पेत्युपमोपक्रमोत्प्रेक्षा "पल्लवास्तृतेवेति संभावनाया मारुण्यपरिपोषणेन तदङ्गतां गता तत्साङ्कर्यमनुभवति । अतो द्वयोस्सजातीययोस्सङ्कर" इत्यवगन्तुं शक्यते । इवादीनामिव कल्पबादीनामप्युत्प्रेक्षावाचकत्वं न विरुद्धम् ।।



**विविधविलसितैर्विलासिनीना**
**मसितसितारुणकान्तिभिः कटाक्षैः ।**
**कुवलयकुमुदारविन्दमाला**
**खचितमिवामलमम्बरं बभासे ।।** ।। 4 ।।

**विविधेति** ।। विलासिनीनाम् सुन्दरीणाम् ( प्रकृतानाम् ) विविधानि नैकविधानि विलसितानि विलासाः । "तात्कालिको विकारस्स्याद्विलासो दयितेक्षणे" इति लक्षणलक्षिताः । भावे क्तः । तानि येषु तैः । अतएव असिताः श्यामाः सिताः धवलाः अरुणाः रक्ताः कान्तयः येषु तैः । सुन्दरीणां दृष्टिषु नैल्यम्, धवलता, आरुण्यं च कविभिर्वर्ण्यते । कनीनिका नीलेति नैल्यम्, तत्प्रान्तप्रदेशो धवल इति धावल्यम् । पद्मिनीजातिस्त्रीणां नेत्रेष्वरुणरेखा वर्तन्त इत्यारुण्यं च तथा वर्णने हेतुः । पद्मिनीलक्षणं त्वेवमुक्तम् । "... चकितमृगदृगाभे प्रान्तरक्ते च नेत्रे ... धवलकुसुमवासोवल्लभा पद्मिनी स्यात्" इति । तादृशैः कटाक्षैः अपाङ्गवीक्षणैः 'कटाक्षोऽपाङ्गदर्शने' इत्यमरः । अम्बरम् आकाशः दिशाङ्गनायाः केशपाश इति गम्यते । कर्ता । कुवलयानि नीलोत्पलानि । अत एव 'श्यामं शितिकण्ठनीलं कुवलयमिन्दीवरं च नीलाब्जम्' इति नाममाला । कुमुदानि शुक्लोत्पलानि । 'सिते कुमुदकैरवे' इत्यमरः । अरविन्दानि रक्तपद्मानि 'सामान्यग्रहणे पद्मानां रक्त' तेति कविसमयः । अतएव "रक्तवर्णप्रस्तावे – 'कमलं दाडिमीपुष्पं ... बिम्ब' मित्याह देवेशः । तैः तेषाम् मालाः पुष्पमाल्यानि 'माल्यं मालास्रजे मूर्ध्नि' इत्यमरः । तैः । खचितम् ग्रथितम् । इवेति संभावनायाम् । बभासे रराज । भासृ दीप्तौ लिट् । राजदाराः कम्पराजमनुगतास्सानुरागाः कटाक्षवीक्षणैस्सविलासं तं यथा वा गच्छतीति इतस्ततः पश्यन्ति । चित्रवर्णास्तद्दृष्टयस्तदानीमाकाशमाच्छादयन्ति । तदाच्छादनेन चित्रवर्ण

नभो धृतकुवलयादिमाल्यालङ्कारो दिशाङ्गनाकेशपाश इव भातीत्युत्प्रेक्षार्थः। अत्र मालाखचितत्वमाकाशे संभाव्यत इति क्रियास्वरूपोत्प्रेक्षा। यथासंख्यं काव्यलिङ्गं च तस्याः पार्श्वचराविव पोषके संवृत्ते इति ताभ्यामियं संकीर्यते ॥

**अजनयदवनीश्वरस्य चेत**
**स्यसितदृशां मणिनूपुरप्रणादः।**
**सहपरिचलितप्रसूनकेतो**
**रवनमदैक्षवचापघोषशङ्काम् ॥** ॥ 5 ॥

**अजनयदिति** ॥ असितदृशाम् मेचकाक्षीणाम् राजदाराणामित्यर्थः। मणिनूपुराणि मणिमयानि पादाङ्गदानि। तेषाम् प्रणादः ध्वन्यतिशयः। कर्ता। अवनीश्वरस्य राज्ञः चेतसि चित्ते। सहपरिचलितः स्वमनुयातः प्रसूनकेतुः मन्मथः। प्रसूनस्य कुसुमस्य केतुम् व्यावर्तकमिति व्युत्पत्तिः। "(मनुष्यवाचा) मनुवंशकेतुम्" इत्यादाविव। तस्य। अवनमन् अधोमुखं नयन् ज्याकर्षणं कुर्वन् ऐक्षवः इक्षुविकारः इक्षुनिर्मित इत्यर्थः। तादृक् चापः धनुः पुण्ड्रेक्षुरूपम्। तस्य घोषः ध्वनिः स इति शङ्का भ्रान्तिः। ताम्। अजनयत् जनयामास। तादृशभ्रान्तिं कल्पयामासेत्यर्थः। कम्पराजमनुप्रयातास्स्त्रियस्सविलासं गच्छन्ति। तदानीं तासां पादाङ्गदानि मृदुमधुरं कूजन्ति। स च ध्वनिरत्यन्तं कामोद्दीपको वर्तते हंसकूजितमिव। तेन राज्ञो भ्रान्तिरेवं जायते। इदानीं स्त्रीभिस्सह विहारार्थं प्रस्थितं मामनुसरन् समयोऽयमिति विदित्वा मां प्रहर्तुकामः कामस्स्वमौर्वीं समाकृष्य धनुर्नमति स्वबाणप्रयोगाय। स एवायं ध्वनिरिति मन्मथस्य धनुर्मौर्वी भृङ्गमालिकेति तज्झङ्काराणां नूपुरझङ्काराणां च मृदुमधुरत्वेन भूयस्साम्यमिति तादृशी भ्रान्तिरस्य युज्यते। तासां नूपुरनादोऽयमत्यन्तं राज्ञः कामोद्दीपकोऽभवदिति परमार्थः। नूपुरनादे



मन्मथधनुर्ज्याघोषभ्रान्तिरिति भ्रान्तिमानलङ्कारः ॥

**अवनिपतिमनु प्रतस्थुषीणां**
**हरिणदृशामितरेतरप्रसक्ताः।**
**मधुरसमधुरा गिरस्तदानीं**
**बहुविधभङ्गितरङ्गिता बभूवुः ॥** ॥ 6 ॥

**अवनिपतिमिति** ॥ अवनिपतिम् अनु राजानम् कम्पनम् अनुसृत्य तस्य पश्चादित्यर्थः। 'पश्चात्सादृश्ययोरनु' इत्यमरः। प्रतस्थुषीणाम् प्रयातानाम्। स्थाधातोः 'लिटः क्वसुश्चे'ति क्वसुः। 'वसोस्संप्रसारणम्' इति संप्रसारणम्। अत्र 'छन्दसि लिट्' 'लिटः कानज्वा, क्वसुश्च' इति छन्दसि लिटः क्वसुर्विहितः। अतः क्वसुश्छान्दस एवेति मुनित्रयम्। कविप्रयोगास्तु बहुलाः। ते च "तं तस्थिवांसं नगरोपकण्ठे, श्रेयांसि सर्वाण्यधिजग्मुषस्ते" इत्यादयः। 'छान्दसा अपि क्वचिद्भाषयां भवन्ती'ति समाधेया एते। तथाविधानाम्। हरिणदृशाम् एणाक्षीणाम् सुन्दरीणाम्। इतरेतरप्रसक्ताः परस्परं प्रवृत्ताः ('कर्मव्यतीहारे सर्वनाम्नो द्वे वाच्ये' 'समासवच्च बहुलम्' इति द्वित्वम्। नित्यं समासवद्भावश्च। क्रमणः परस्परंकरणं कर्मव्यतीहारः।) मधुरसाः मकरन्दद्रवाः द्रवीभूताः पुष्परसाः मकरन्दप्रवाहा इति यावत्। 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः। त इव मधुराः रसवत्यः 'मधुरस्तु रसे विषे मधुरं रसवत्स्वादुप्रियेषु मधुरोऽन्यवत्' इति विश्वः। बहुविधाः नैकप्रकाराः भङ्ग्यः व्याजाः। 'व्याजश्छलनिभे भङ्गि'रिति रभसः। तैः तरङ्गिताः तरङ्गवत्यः कृताः अविच्छिन्नप्रसरवत्यः कृता इति यावत्। तादृश्यः गिरः वाचः बभूवुः अभवन्। सव्याजं ताः परस्परमनेकधा संभाषयांबभूवुरित्यर्थः। कम्पराजमनुप्रयातास्ता द्वाराः मयैवायं समुपलभ्यो मयैवायमिति धिया प्रयतमानाः परस्परं

वञ्चनायां कृतप्रयत्नाः (निगूढतया) सव्याजं श्रव्यैर्वचोभिस्तास्ता स्ताभिस्ताभिस्संभाषितुं प्रवृत्ता इति तात्पर्यार्थः ॥

सव्याजं तेषां भाषणप्रकारमेव कथयति —

**वरतनु परतः प्रयाहि मन्दं**
**हरिणदृशां पुरतः प्रयायिनीनाम् ।**
**पथि गतिरयशीर्णहारमुक्ता**
**मणिगणशर्करिले पदं न कुर्याः ॥** ॥ 7 ॥

**वरतन्विति** ॥ वरा श्रेष्ठा तनुः शरीरम् यस्याः तथोक्ता । तस्यास्संबुद्धिः । हेसुन्दराङ्गि इत्यर्थः । सौन्दर्यलुब्धो नायकः एतां पुरत स्संभावयेदिति तद्वञ्चनाप्रवृत्तिस्स्वस्येति सूचयत्येवंकथनेन । परतः अन्यमार्गात् नूतनमार्गमन्विष्य तत इत्यर्थः । प्रयाहि आगच्छ । अहं त्वनेनैव पथा प्रयामि । त्वमकुशला अहं तु कुशला गन्तुमेतादृशे मार्गे इति भावः । मन्दम् शनैः नतु त्वरया । मार्गं सम्यग्वीक्ष्ये त्यर्थः ।' अनेन मन्दगमनविधानेनैतां वञ्चयत्येषा । तत्र कारणं ब्रूते — पुरतः अग्रे त्वत्त इत्यर्थः। प्रयायिनीनाम् गच्छन्तीनाम् हरिण दृशाम् मृगाक्षीणाम् गतिरयः गमनवेगः प्रियसमागमसंभ्रमसंभूतः । तेन शीर्णाः शिथिलाः त्रुटिताः हाराः मुक्तासराः तेषाम् मुक्तागणः मौक्तिकजालम् । तेन शर्करिले – शर्कराः ( मुक्ता ) खण्डाः ' शर्करा खण्डविकृतावुपलाकर्करांशयोः । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि च ' इति मेदिनी । सोऽस्मिन्नस्तीति मत्वर्थे ' देशे लुबिलचौ चे'ति इलच् । तथाविधे मुक्ताखण्डसंकीर्णे इत्यर्थः । पथि मार्गे पदम् पादम् न कुर्याः न कुरु न निक्षिपेत्यर्थः । पदनिक्षेपे शिलाकुट्टनेन बाधा भवेदिति भावः । श्रेयस्कामेव स्वाभिलषितसिद्धिसाधनाय सव्याज मेवमियं भाषत इत्यवगन्तव्यम् । अत्रेदं तत्त्वम् । काचित्सुन्दराङ्गी



स्वनितम्बस्तनभारवशात्सहजमन्दगमनाच्च त्वरया कम्पराजमनुगन्तु मपारयन्ती मन्दं गच्छति । मुग्धामेतां काचिद्विदग्धा सौन्दर्यलोलुपः प्रियः पुरतस्संभावयेत्सुन्दरीमेनामिति तद्गमननिरोधाय तच्छ्रेयस्कामा हितमुपदिशन्तीव तद्वञ्चनायै कथयति- " प्रणयौत्सुक्यादतिवेगेन धावन्तीनां पुरतः प्रयातानां रमणीनां त्रुटितमुक्ताहारशकलजातैरभितो व्याप्तोऽयं मार्गः । मार्गान्तरमन्विष्य मन्दं गच्छ । नोचेद्विपदं लभेथाः " इति । एवं तस्याः भीतिमुत्पाद्य तद्गमननिरोधेन स्वाभिलाषं साधयितुमेषा प्रवृत्ता । इत्थमनयोक्ता च सा ' ताः कथं प्रयाताः ? त्वमनेन मार्गेण कथं यासी ' ति नैव पृच्छति । यथोदितमेव गृह्णाति । अतएवेयं मुग्धा । उत्पादयति चेत्थं नैपुणेन स्ववाक्येषु सत्यधियमित्येषा च क्रिया विदग्धा । अन्यदुद्दिश्य ततोऽन्यथा कथनमित्थमिति गूढोक्तिरलङ्कारः । " गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यत " इति तल्लक्षणात् ॥

**नलिनमुखि न बोधय प्रसुप्ता**
**निह मणिनूपुरशिञ्जितेन हंसान् ।**
**द्रुतगमनविघातमाचरेयु**
**र्नियतममी तव पादपद्मलग्नाः ॥** ॥ 8 ॥

**नलिनेति** ॥ नलिनम् पद्मम् (तदिव) मुखम् यस्याः । तस्यास्संबुद्धिः । हे पद्मानने इत्यर्थः । हंसानाम् पद्मवनविहारप्रीति रिति तैरनुगमनमवश्यंभावीति सूचयितुमेवमुक्तिः । इह अस्मिन् प्रदेशे क्रीडोद्याने । मणिनूपुराणि रत्नखचितानि पादाङ्गदानि तेषाम् शिञ्जि तम् अव्यक्तमधुरध्वनिः । अतएव हंसकूजितैरस्य साम्यम् । तेन च तेषां हंसभ्रान्तिस्संगच्छते । ' भूषणानां तु शिञ्जितम् ' इत्यमरः । प्रसुप्तान् गाढं निद्राणान् । अत्र ' प्रसुप्ता ' नित्यनेन गाढं शयि तानां प्रबोधनं प्रत्यवायायेति तत्र युक्तमिति सूच्यते च । तादृशान् हंसान् चक्राङ्गान् । ' हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ' इत्यमरः । न

बोधय न प्रबोधय नैव निद्रां त्याजय .तैरित्यर्थः। तत्र कारणं ब्रूते – अमी हंसाः। त्वया प्रबोधिता इति भावः। तव भवत्याः पादपद्मयोः चरणाम्बुजयोः लग्नाः सक्ताः तत्रैव सुस्थिरं स्थिता इति यावत्। पद्मवनविहारित्वाद्धंसानामित्थमुक्तिः। तथाविधाः ते द्रुतगमनम् औत्सुक्येन प्रियसमागमनाय शीघ्रगतिः सर्वाभ्यः पुरतो धावनम् तस्य विघातः विहननम् प्रतिरोधः तम्। आचरेयुः कुर्युः। नियतम् निश्चितम् इदमवश्यंभावि। न तत्र संशयितव्यं किञ्चिदपीति कर्तव्यताविधिं द्रढयति। हंसकूजितानाम् पादाङ्गदध्वनीनां च भूयस्साम्यं कविसमयसिद्धमिति तत्र तेषां हंसभ्रान्त्या त्वदनुगमनमवश्यं भविष्यति। अतो नूपुरपरित्यागो भवता कर्तव्य इति नियोगोऽत्र व्यज्यते। अयं भावः। हंसयानायाः कस्याश्चन नायिकायास्सविलासं गच्छन्त्या नूपुरध्वनिरामणीयकं सर्वजगद्रञ्जकं वर्तते। सा कम्पराजमवश्यं वशीकरिष्यत्यनेनेति मात्सर्येण तत्पादाङ्गदपरित्याजनाय काचिन्नायिकेत्थं प्रयततेतराम्। अत्र क्रीडासरस्तटे हंसाः प्रसुप्ता वर्तन्ते। त्वत्पादाङ्गदध्वनिभिरेते प्रबुद्धा भवेयुः। प्रबुद्धाश्च ते त्वच्चरणयोः पद्मभ्रान्त्या तुलाकोटौ हंसभ्रान्त्या च प्रियोपगमने त्वरितायास्तव पादसंसक्तास्त्वत्प्रस्थानविघ्नमाचरेयुः। अतस्त्वया नूपुरे एतेऽवश्यं परित्याज्ये इति। अत्र गूढोक्तिरलङ्कारः पूर्ववत्॥

**करनखरमरीचिमञ्जरीभि**
**र्हतहृदयो जलशङ्कया कुरङ्गः।**
**अनुपतति विलोकयैकवारं**
**सखि नियतं स निवर्तते विलक्षः॥** ॥ 9 ॥

**करेति**॥ सखी वयस्या। 'आलिस्सखी वयस्या च' इत्यमरः। तस्यास्सम्बुद्धिः। हे वयस्ये। वञ्चयितुमतिप्रियोक्तिरियम्। कुरङ्गः हरिणः 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इत्यमरः।



सः कर्ता। करनखराः हस्तनखाः 'पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः। तेषाम् मरीचयः कान्तयः तेषाम् मञ्जरीभिः गुच्छैः पुञ्जैरित्यर्थः। तैः तत्कृतेत्यर्थः। जलशङ्कया उदकभ्रान्त्या स्वकरनखेभ्यः प्रसृतासु धवलकान्तिषु कृतजलभ्रान्तिस्सन्नित्यर्थः। अतएव हतम् भग्नम् 'मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः' इत्यमरः। तादृक् हृदयम् यस्य। नष्टमनाः विवश इत्यर्थः। तृषार्तत्वादप्येवमुक्तिः। ('हृतहृदय' इति तु युक्तमिव प्रतिभाति। हृतहृदयः अपहृतमनाः आकृष्टचित्तः परायत्त इत्यर्थः।) अनुपतति त्वाम् अनुसरति अनुगच्छति। एकवारम् सकृत् विलोकय पश्य पश्चाद्दृष्टिं प्रसारयेत्यर्थः। एकवारमित्यनेन प्रियमुपगन्तुं सोत्कण्ठासेति सूच्यते। तथा चेत्किं भवतीत्यत आह – सः हरिणः विलक्षः लज्जितः। नेत्रसौन्दर्येणाहमेव गरीयानिति गर्वितो मृगस्त्वदालोकालोकनेन स्वगर्वं सर्वं त्यक्त्वा संजातलज्जो भवेदिति भावः। एणाक्षीति व्यवहारस्त्वस्यास्तदतिरिक्तोपमानस्य समुचितस्य लोके कुत्राप्यदर्शनादेवेत्यवगन्तव्यम्। तथाविधस्सन्। नियतम् अवश्यम्। निवर्तते परावर्तते। पराजयेन लज्जितस्य मनस्विनो विजेतुर्मुखं द्रष्टुं वा तस्य स्वमुखं दर्शयितुं वा नैवावकाश इति भावः। नियतमित्यनेन नायिकाया वञ्चनापाटवं व्यज्यते। अयं भावः। कम्पराजमुपगन्तुं सोत्सुके द्वे नायिके प्रस्थिते। तत्र चतुरैका नायिका मुग्धामन्यां तत्सौन्दर्यातिशयप्रस्तुत्या वशीकृत्य सव्याजमेवं पश्चादालोकनपरां तां कृत्वा स्वयं पुरतो धावनेन प्रियसमागममनुभवितुं यतते। अत्र नखमरीचिषु धावल्यस्य कविसमयसिद्धत्वेन 'मञ्जरीभि'रित्यतस्तावदेकत्र राशीकृतधवलकान्तिव्याप्तिं सम्पाद्य जलप्रवाहसादृश्यसाधनेन भूयस्साम्यकृता भ्रान्तिरत्रेति भ्रान्तिमानलङ्कारः। गूढोक्तावस्या अङ्गतेत्यनयोस्संकरः॥

अत्र प्रियवयस्ययोराप्तसख्योस्संभाषणं प्रस्तौति –

**शशिमुखि शशिकान्तकुट्टिमेषु**
**स्खलनभिया न पदात्पदं प्रयासि ।**
**इयमिह वदनानुबिम्बराजि**
**स्तव न पुनर्नवपङ्कजोपहारः ॥ ॥ 10 ॥**

**शशिमुखीति ॥** शशिकान्तकुट्टिमेषु चन्द्रकान्तमणिनिबद्धभूमिषु । स्खलनम् चलनम् । तस्माद्भीः तत्कृतं भयम् । स्वमुखचन्द्रेण चन्द्रकान्ताः जलं स्रवन्ति, तत्र पदस्खलनं स्वस्य स्यादिति त्रासेनेति भावः । पदात् पदादनन्तरम् पदं पादम् । निक्षिप्येत्यध्याहारः । भूमौ एकं पादम् निक्षिप्य गाढं तेन भूमिमवलम्ब्य शनैरन्यपादनिक्षेपणेनेत्यर्थः । तृणजलूकान्यायेनेति भावः । न प्रयासि न गच्छसीति काकुः । एवमेवायासीति भावः । शशिमुखि चन्द्रवदने चन्द्रसदृशमुखि न चन्द्ररूपमुखि (यतो भवती चन्द्रमुखी (चन्द्र इव मुखं यस्या इति विग्रहः) न चन्द्रमुखी ( चन्द्र एव मुखं यस्या इति विग्रहः ) (अतो न भेतव्यम् । चन्द्रकान्ताः चन्द्रकिरणप्रसरणेनैव द्रवन्ति । न तु चन्द्रसदृशेन तव मुखेनेति भावः । अत्र पूर्वं शशिमुखीति यदुक्तं सख्या तन्नायिकया प्रतिषिध्य पद्मान्यत्र दृश्यन्ते पूजाद्रव्याणि तानि मत्पादस्पृष्टानि भवेयुरिति धिया ममेदमलसगमनमिति प्रत्युत्तरिता सख्येवं संभाषते – इह अस्यां भूमौ । इयं दृश्यमाना पद्मराजिरित्यर्थः । तव भवत्याः वदनानाम् मुखानाम् अनुबिम्बानि प्रतिबिम्बाः तेषाम् राजिः श्रेणिः । पङ्कजोपहारः – पङ्कजानाम् पद्मानाम् उपहारः बलिः पूजाद्रव्यम् देवपूजार्थमानीतानि पद्मानि । पुनरितित्वर्थे । तादृशपद्मानि तु न नैव न भवन्त्येवेत्यर्थः । अयं भावः । त्वं पद्ममुखी । तव वक्त्रपद्मान्यत्र प्रतिफलितानि । तान्येव तव पद्मभ्रान्तिं जनयन्ति । नात्र पूजार्थमानीतानि पद्मानि वर्तन्ते इति समाधत्ते । भ्रान्तिवर्णनेनानेन मुखमस्याश्चन्द्रश्रियः पद्मश्रियश्च सामा



नाधिकरण्यमर्जयामासेति गम्यते । एषा वर्णना स्मारयति कालिदासीयं पद्यम् । "चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् । उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः" इति । अत्र 'शशिमुखी' ति विशेषणं नायिकायाश्चन्द्रभ्रान्तिं श्लेषभित्त्याऽभिव्यञ्जयन्ती तथा नेति सखीवचने हेतुतासमर्थनं करोतीति काव्यलिङ्गमलङ्कारः । स च वाच्यसिद्धयङ्गतया पद्ममुखी सेति गमयन् पद्माभेदं च वक्त्रे द्योतयन्नतिशयोक्तिं ध्वनयति भ्रान्तेः परिपोषकतया ॥

**किमिति मृदुपदं प्रयासि मुग्धे**
**ननु कितवस्सह याति कामिनीभिः ।**
**नवकुसुमरजोऽन्धकारबन्धै**
**रभिसरणार्हमिदं वनं दिवापि ॥ ॥ 11 ॥**

**किमितीति ॥** कां चिन्नायिकां मुग्धां प्रति काचिन्नायिका विदग्धा भाषते – हे मुग्धे मूढे । नायकस्य रहस्यवृत्तं किमपि न जानातीत्येवमुच्यते । कितवः धूर्तः शठः (गूढविप्रियकृन्नायकः) । कितवशब्दमस्मिन्नर्थे भगवान् व्यासः प्रायुङ्क्त । "पतिसुतान्वयभ्रातृबान्धवानविलङ्घ्य ते ह्यच्युता गताः । गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि" इति (अत्र 'हे कितव – शठ' इति श्रीधरस्वामी) । कामिनीभिः स्वकान्ताभिः कामुकीभिस्सहेत्यर्थः । अनेन स्मरार्तत्वं तेन तासामभिसरणं च द्योत्यते । याति गच्छतिखलु । इदं प्रमादस्थानमिति नावबुध्यसे त्वमिति भावः । किमिति किं भविष्यतीति मत्वेत्यर्थः । किमालोच्येति यावत् । मृदूनि मन्दानि पदानि यस्मिन् यानकर्मणि तथेत्यर्थः । अतिमन्दगमनेनेति यावत् । प्रयासि गच्छसि (इति पृच्छति) आपन्ने महत्युपद्रवेऽसंभ्रान्ता तिष्ठसि । इदं न युक्तमिति ब्रूते । अयं दिवाकालः, अभिसरणस्य नैवावकाशइति

मन्यसे वा तन्नेत्याचष्टे – नवानि सद्यो विकसितानि कुसुमानि पुष्पाणि तेषाम् रजांसि परागाः तान्येव अन्धकारबन्धाः गाढान्धकाराः तैः। कुसुमधूलयस्सर्वत्र व्याप्तास्सूर्यकिरणप्रसारमत्र प्रतिरुन्धन्ति। अतोऽन्धकारबन्धुरा दिशो दिनमपि रात्रिं कुर्वत्यः विजनतां कल्पयन्तीति भावः। अतएव इदम् वनम् अयम् आरामः कृत्रिमं क्रीडोद्यानम् प्रमदावनमिति यावत्। दिवापि अह्न्यपि 'अधिकरणार्थप्रधानकमव्ययमिदम्। अभिसरणस्य संकेतस्थानगमनस्य तत्र गत्वा क्रीडितुमित्यर्थः। अर्हम् योग्यम् उचितम्। अतो न प्रमादेन स्थातव्यं भवत्येति भावः। अभिसारिकाश्च त्रिधा विभक्ताः। दिवाभिसारिकाः ज्योत्स्नाभिसारिकाः तमिस्राभिसारिकाश्चेति। दिवाभिसरणप्रदेशाश्चेत्थं निर्दिष्टाः – "सरितः पुलिनं वेला कान्तारारामभूधराः। लतागृहाणि चित्राणि शय्या किसलयाञ्चिता। दिवाविहारदेशास्स्युः" इति। अभिसरणं कान्तायाः कान्तस्य च भवति – "कामार्ताभिसरेत्कान्तं सारयेद्वाभिसारिका" इति तल्लक्षणात्। शठोऽयं नायकः कान्ताभिस्सह प्रयात्यभिसरितुं निगूढम्। अतस्त्वया मया च मन्दगमनं विहाय सावधानचित्ताभ्यामतिवेगेन प्रयातव्यमित्यभिधीयतेऽनया ॥

द्रुतं गच्छन्तीं नायिकामन्या नायिका भर्तृसौन्दर्यपराधीना तस्याः द्रुतगमनं सचतुरं वारयति –

**अथ विदितमियं द्रुता गतिस्ते**
**मुखमवलोकयितुं निवृत्य भर्तुः।**
**न किमलमपराङ्मेव ताव**
**द्दयिततमस्य मृगीदृशां मनांसि ॥** ॥ 12 ॥

**अथेति** ॥ ते भवत्याः इयम् भवन्ती द्रुता शीघ्रा "द्रुतं शीघ्रविलीनयोः" इत्यमरः। गतिः गमनम् यानम्। भर्तुः पत्युः। निवृत्य अन्तर्धाय तिरोभूय अदर्शनं प्राप्य तस्य दृष्टिपथमप्राप्य तेन अनालोकितेति यावत्। मुखम् तदाननम् अवलोकयितुम् द्रष्टुम्। तदर्थैवेत्यर्थः। अथेति प्रश्ने। अथ विदितम् मया ज्ञातम् ननु इति पृच्छायाम्। 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः। प्रियादन्तर्हिता तन्मुखं पश्यतीत्युक्त्या 'लज्जाविजितमन्मथेय' मिति ज्ञायते। अत इयं मुग्धा। किमेतेन प्रयासेनेति तत्प्रयतनं वारयति सहेतुकम् – तावत् तादृशम् अनिर्वचनीयम् निरुपमानमित्यर्थः। दयिततमस्य प्रियतमस्य अपराङ्गम् अङ्गस्य शरीरस्य अपरः पश्चाद्भागः पृष्ठभाग इत्यर्थः। 'पूर्वापराधरोत्तर' मित्येकदेशिसमासः। तदेव। मृगीदृशाम् सुन्दरीणाम् मनांसि चित्तानि। अपहर्तुमिति शेषः। अलम् पर्याप्तम् न किम्? न भवति किमिति काकुः। सर्वथा पर्याप्तमेव वर्तत इति तव प्रयासोऽयं निरर्थक इति भावः। अनेन सर्वाङ्गसुन्दरः कम्पराजोऽयमिति नायकसौन्दर्यातिशयो व्यज्यते। मुखं यथा चारु तथा वर्ततेऽपराङ्गमिति तद्विहाय पुरतो गमनम्, आत्मानमन्तर्धाय तद्दर्शनमित्येतावान् प्रयासस्तव निरर्थक इति वारयितुमभिलषतीयं सचतुरमिमां मुग्धाम् ॥



सौन्दर्यगर्वेण वल्लभं स्वायत्तं मन्यमानां मन्दमन्दं गच्छन्तीं नायिकां सव्याजं निन्दन्ती प्रियसखी प्रेरयति काचन त्वरितगमनाय –

**स्तनजघनभरं तवालि जाने**
**तदपि गतिस्त्वरया त्वया विधेया।**
**न कलयसि निरन्तरं निषेव्या**
**युवतिजनैर्बहु [ वल्लभा नृपालाः ] ॥** ॥ 13 ॥

**स्तनेति** ॥ अलिः सखी तस्यास्सम्बुद्धिः। हे अलि प्रियसखि। तव भवत्याः स्तनजघनयोः कुचनितम्बयोः भरम् भारम् गुरुताम्

शीघ्रगमनप्रतिबन्धिकामित्यर्थः । ज्ञाने वेद्मि । तदपि तथाऽपि एवं विधप्रतिबन्धकसत्त्वेपीत्यर्थः । त्वरया संभ्रमेण 'संभ्रमस्त्वरा' इत्यमरः । गतिः गमनम् विधेया विधातुं योग्या । शीघ्रं त्वया गन्तव्यमित्यर्थः । तत्र हेतुं प्रदर्शयति - युवतिजनैः तरुणीभिः सौन्दर्यातिशय गर्विताभिरपीति भावः । ताभिः कर्त्रीभिः । बह्वयः बहुसंख्याकाः वल्लभाः प्रियाः येषाम् तथाविधाः । बहुभार्यका इत्यर्थः । तादृशाः नृपालाः राजानः निरन्तरम् सदा सर्वदापि क्षणमप्यविहायेत्यर्थः । तेषां नवनवप्रियत्वेन सर्वथाऽविश्वसनीयत्वादिति भावः । निषेव्याः सुष्ठु भजनीयाः । तेषां समीपएव नायिकाभिर्निर्निमेषं जागरूकाभिर्भूत्वा स्थातव्यमिति भावः । इति इत्थम् एवम् न कलयसि न जानासि । लोकवृत्तमजानाना प्रियं विश्वस्य वृथाभिमानं वहसीति भावः । अयं तु परमार्थः – मम सौन्दर्यातिशयेन मुग्धः प्रियो मामेवानुसरतीति वृथा गर्वसे त्वम् । पुरुषा न विश्वसनीयाः, तत्रापि राजानः । लोकवृत्तं न जानासि । वञ्चितासि नायकेन । मुञ्च गर्वम् । प्रयाहि शीघ्रमिदानीं वाऽपीति गर्वभङ्गोऽस्यास्सुष्ठु संजात इति मोदमाना हितमुपदिशतीव सव्याजं भणति, निन्दति गूढोक्त्या सचतुरं नायिका प्रगल्भेयम् ॥

त्रयोदशश्लोकमारभ्य ग्रन्थभ्रंशस्संजातः पञ्चाधिकपञ्चाशश्लोकपर्यन्तमत्रेत्यभ्यूह्यते । इत्थं संभाषमाणा स्त्रियो नायकमुपसृत्य तेन साकं क्रीडासरसि जलक्रीडासु प्रवृत्ताः । तद्वर्णनाद्य क्रियते —

[अविरतमवनीशहस्तमुक्त
प्रविततदीर्घपयांसि सं] पतन्ति ।
मदनसुभटवारुणास्त्रशङ्कां
मनसि चकार चकोरलोचनानाम् ॥ ॥ 55 ॥



**अविरतेति** ॥ अविरतम् अविश्रान्तम् यथा भवति तथा अविच्छिन्नमित्यर्थः । अवनीशः कम्पराजः तस्य हस्तौ करौ ताभ्याम् मुक्तानि त्यक्तानि क्षिप्तानीत्यर्थः । तथाविधानि प्रविततानि बहु विस्तृतानि अनन्तानि दीर्घाणि आयतानि पुङ्खानुपुङ्खन्यायेन सुदीर्घं यथा भवति तथा प्रवाहाकारेण प्रसृतानि । पयांसि जलानि । कर्तॄणि । चकोरलोचनानाम् चकोराक्षीणाम् राजस्त्रियाम् मनसि चित्तेषु । जातावेकवचनम् । मदनः मन्मथः स एव सुभटः शोभनो वीरः महावीरः लोकैकवीर इत्यर्थः । 'भटस्स्यात्पुंसि वीरे च विशेषे पामरस्य च' इति मेदिनी । तस्य वारुणानि वरुणदेवताकानि । सास्य देवतेत्यण् । तानि अस्त्राणि मन्त्रविशेषाभिमन्त्रिताः बाणाः तेषाम् शङ्काम् त इति भ्रान्तिम् चकार अकरोत् उत्पादयामासेत्यर्थः । वारुणास्त्रं प्रयुक्तं सद्वीरेण जलप्रवाहानविच्छिन्नान् निष्पाद्य जलमयानि जगन्ति करोति । तद्वदेव कम्पराजप्रविमुक्तानि जलान्यविश्रान्ततया प्रसृतानि भूत्वा ताः स्त्रीः निमज्जयन्ति स्वप्रवाहेषु । अतस्तासां वारुणास्त्रभ्रान्तिस्संजाता । स्वाकारेण मन्मथसदृशः कम्पन इति स इव लोकैकवीर इति मन्मथबाणा इवैतत्प्रयुक्तजलानि रागोद्दीपकानि भवन्तीति मदनसुभटभ्रान्तिर्बभूवास्मिन्नित्यलङ्कारो भ्रान्तिमान् ॥

जलक्रीडासु प्लवनं वर्णयति —

**करयुगकलितप्लवः प्रियाणां**
**परिचलितोरुनितम्बमण्डलानाम् ।**
**[ प्लवजलगम ] नच्छलादकार्षी**
**त्सुरतगुरुः पुरुषायितोपदेशम् ॥ ॥ 56 ॥**

**करयुगेति** ॥ करयुगम् हस्तद्वन्द्वम् तेन कलितः परिकल्पितः

प्लवः उडुपम् । 'उडुपं तु प्लवः कोलः' इत्यमरः । सः येन । तथोक्तः । प्लववत् स्वहस्तद्वन्द्वं संस्थाप्य तत्र प्रियाः शाययित्वेत्यर्थः । परिचलिते - सर्वतश्चलनं प्राप्तौ ऊरू सक्थिनी जानूपरिभागौ नितम्ब मण्डलम् चक्राकारः स्त्रीकटयाः पश्चाद्भागः (तादृशे) ते यासु तासाम् । ऊरू नितम्बमण्डलं च सुष्ठु कम्पयन्तीनामित्यर्थः । प्लवनस्य तदा वारत्वादिति भावः । प्रियाणाम् स्ववल्लभानाम् । प्लवः उडुपम् जलतरणसाधनविशेषः । तेन साधनभूतेन जलगमनम् उदकप्लवनम् । तदेव छलम् व्याजः वस्तुतो न तथेत्यर्थः । तस्मात् । तद्व्यपदेशे नेत्यर्थः । सुरतगुरुः रतिक्रीडोपदेशे आचार्यभूतस्सन् । पुरुषायितम् पुरुषवदाचरणं स्त्रियाः अस्मिन्निति पुरुषशब्दात् कर्तृक्यङ्ङन्ताद्भावे क्ते आर्शआद्यच् । उपरतिः तस्य उपदेशः बोधनम् । तम् अकार्षीत् अकरोत् तमुपदिदेशेवेति संभावना । पुरुषायितेऽपि वल्लभोपरि स्थित्वा क्रीडन्तीषु स्त्रीषु नितम्बमण्डलस्य तदूर्वोश्च संचालनं दृश्यत इत्येवं संभावना । वाचकाप्रयोगाच्च गम्योत्प्रेक्षेयम् । छलशब्देन जलगमनस्य मिथ्यात्वप्रतिपादनम् । तेन च तस्मिन् पुरुषायितत्वसंभावनार्हतासंपादनं च जातमिति कैतवापह्नुत्या संकरोऽस्याः ॥

नायकस्य जलोत्क्षेपणं कथ्यते —

**अवनिपतिरसिक्त दीर्घिकायां**
**मुखकमलं सलिलेन साभिलाषम् ।**
**किमपि समधिकार्द्रपक्ष्मलेखं**
**वदनमभूदरुणेक्षणं परस्याः ॥** ॥ 57 ॥

**अवनिपतिरिति ॥** दीर्घिकायाम् क्रीडासरसि । अवनिपतिः राजा कम्पनः । सलिलेन जलेन स्वहस्तधृतेनेत्यर्थः । अभिलाषेण इच्छया सहितम् साभिलाषम् सानुरागमित्यर्थः । मुखकमलम् मुखपद्मम् कस्याश्चिदित्यर्थः ।



मुखस्य तत्रत्यपद्मेषु पद्मायमानत्वात्प्रियस्य रागोद्दीप्तिर्जातेति सूच्यते । असिक्त असिञ्चत् स्नपयामासेत्यर्थः । षिच क्षरणे – लुङ् । 'आत्मनेपदेष्वन्यतरस्या' मित्यङ् वा । 'झलो झली' ति सिचो लोपो वा । 'असिञ्च दीर्घिकायाम्' इति मातृकापाठस्तु प्रमादयुत इति परिष्कर्तृभिः 'असिक्ते' ति संस्कृतः । युक्तं चैतदिति तदेवानुसृतमस्माभिः । परस्याः इतरस्त्रियाः । वदनम् मुखम् असिच्यमानमपीत्यर्थः । तत् अरुणे रक्ते ईक्षणे नयने यस्मिन् तथाभूतम् । किञ्च । समधिकम् अत्यन्तम् आर्द्रा क्लिन्ना पक्ष्मलेखा नेत्रलोम्नां राजिः । 'पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणीयसि' इत्यमरः । 'लेखास्तु राजय इत्यपि' । सा यस्मिन् । तथाभूतं च सत् । किमपि यत्किमपि अन्यदिवेत्यर्थः । अभूत् आसीत् साभिलाषं स्वनायकस्तया क्रीडतीतीर्ष्यया क्रोधेनैतस्या रक्ते नेत्रे अभूताम् । स्वावमानभावनासंजातशोकबाष्पपरिप्लुतत्वान्नेत्रयोस्तल्लोम्नां सार्द्रतापि समभवत् । जलक्रीडायां जलक्लिन्नवदनानामपि रक्तनेत्रत्वं सार्द्रपक्ष्मलत्वं च समानमित्यसिक्तमपि वदनं तथाऽभूदितीर्ष्याकृतकोपकार्याणि सचमत्कारमस्यां प्रतिपाद्यन्ते । अत्र जलसेचनरूपकारणं विनापि तत्कार्यसंभवः कारणान्तरेणेति विभावनालङ्कारः । विरोधाभासेऽस्मिन्नपि विरोधस्समानस्तथापि विरोधाभासे विरोधोक्त्या चमत्कारः । अत्र तु कारणान्तराच्चमत्कार इति विशेषः । विभावनायाः लक्षणं तु "विभावना विनापि स्यात्कारणं कार्यजन्म चेत्" इति । अनेन नायिकायाः किलकिञ्चितमिति शृङ्गारचेष्टा च प्रतिपादिता । शोकरोषाश्रुहर्षादिस्संकरः किलकिञ्चितम्' इति तल्लक्षणात् । एवं वर्णनायामस्यां माघकविर्मार्गोपदेशक इव प्रतिभाति । "आनन्दं दधति मुखे करोदकेन श्यामाया दयिततमेन सिच्यमाने । ईर्ष्यन्त्या वदनमसिक्तमप्यनल्पस्वेदाम्बुस्नपितमजायतेतरस्याः" इति ॥

**प्रणयिनि सलिलापवारितेन**
**स्पृशति करेण सलीलमूरुमूलम् ।**

**प्रकटितशफ़राभिघातभीतं**
**मिषति जनेऽप्यमुमालिलिङ्ग काचित् ॥ ॥ 58 ॥**

**प्रणयिनीति ॥** काचित् तासु एका अङ्गना । कर्त्री । प्रणयिनि प्रिये । सलिलेन जलेन अपवारितः आच्छादितः अन्तर्धापितः अदृश्यतां नीतः । तेन करेण हस्तेन । ऊर्वोः सक्थिनोः मूलम् अन्तिकम् समीपस्थम् रहस्याङ्गमित्यर्थः । सलीलम् सविलासम् स्पृशति आमृशति सति । प्रकटितम् बहिः प्रकाशितम् । शफराभिघातः मत्स्यविशेषाहृतिः तस्मात् भीतम् भीतिः ( भावे क्तः ) यस्मिन् कर्मणि तथा । मत्स्याहत्या हिंसितेव भयातिशयं प्रणटय्येत्यर्थः । 'अवर्ज्यो बहुव्रीहिर्जन्माद्युत्तरपद' इति वामनः । अत्र "प्रकटित ... भीतिः" इति परिष्कर्तृभिस्संस्कृतः पाठः । संस्कारापेक्षा नास्त्यत्रेति स न गृहीतः । जने कान्ताजनेऽन्यस्मिन्नित्यर्थः । तस्मिन् मिषति उन्मिषति प्रबुध्यति दृष्टिं निक्षिप्य सावधानं पश्यत्यपीत्यर्थः । "उन्मीलत्युन्मिषति ह्युच्छ्वसिति मीलयति मिषति हसति" इति क्रियानिघण्टुः । अमुम् कम्पराजम् आलिलिङ्ग समाश्लिष्यत् । नायिका च नायकश्च गाढमनुरक्तौ सोत्सुकौ स्तः । कान्ताजनश्च समीपवर्ती । तं वञ्चयित्वा स्वाभिलाषसिद्धिः प्राप्तव्या । शृङ्गारकुशलो नायकोऽयं तमपवार्य स्वचेष्टितेनैतां संज्ञापयामास । क्रियाविदग्धेयं नायिका शफराहृतिभयमभिनीय वाञ्छितार्थसाधने कृतकृत्यासीदिति तात्पर्यार्थः । भयानकाभासोऽयं शृङ्गारस्याङ्गतामभजदत्रेत्यूर्जस्वि नामालङ्कारः । "आभासस्याङ्गता यत्र तत्रोर्जस्वि मतं बुधैः" इति तल्लक्षणात् । एवं कल्पनायां दोहदं ददातीव भारविकविचन्द्रोऽपि स्वकृतावेवमाचष्टे —
"भयादिवाश्लिष्य झषाहतेऽम्भसि प्रियं मुदा नन्दयति स्म मानिनी ।
अकृत्रिमप्रेमरसाहितैर्मनो हरन्ति रामाः कृतकैरपीहितैः" इति ॥



**सलिलहतिभियापवृत्तगात्र्याः**
**प्रचलितवेण्यपराङ्गकं परस्याः ।**
**धरणिपतिरमंस्त मीनकेतोः**
**फ़लकमुपाहितखङ्गवल्लरीकम् ॥ ॥ 59 ॥**

**सलिलेति ॥** धरणिपतिः कम्पराजः । सलिलहतिः जलाभिघातः तस्मात् भीः तज्जनितभयम् । तेन । अपवृत्तम् परावृत्तम् पश्चाद्विनिवृत्तम् गात्रम् शरीरम् यस्याः तस्याः । उद्वेलं प्रवृत्तं जलसेचनमसहमाना पश्चाद्विनिवृत्ता सतीत्यर्थः । 'अङ्गगात्रकण्ठेभ्यो वक्तव्य' मिति ङीष् । तस्याः । परस्या अन्यस्याः प्रचलिता अत्यन्तं कम्पमाना शिरोविधूननादिनेत्यर्थः । वेणी प्रवेणी केशबन्धः यस्मिन् । 'वेणी सेतुप्रवाहयोः ॥ देवताडे केशबन्धे' इति हैमः । तादृशम् अपराङ्गकम् अपराङ्गमेव अपराङ्गकम् । स्वार्थे कः । शरीरस्य पश्चाद्भागम् । कर्म । उपाहिता निक्षिप्ता खङ्गवल्लरी असिलता यस्मिन् 'शेषाद्विभाषे' ति कप् । 'न कपि' इति न ह्रस्वः । मीनकेतोः मन्मथस्य फलकम् खेटकम् चर्म बाणादिनिवारणसाधनम् तदिवेत्युत्प्रेक्षा । तथा अमंस्त अबुध्यत । अत्यन्तं रागोद्दीपकं तस्यैतदभूदित्यर्थः । नायकाभिमुखं काचिन्नागिका जलसेचनेन क्रीडन्ती । जवेन जलमुपरि क्षिपति प्रिये तद्वेगं सोढुमशक्नुवती पश्चाद्विवर्तितायां तस्यां तस्याः पृष्ठभागः तस्मिन् लम्बमाना दीर्घा नीलवर्णा वेणी च नायकस्यात्यन्तं मोहं जनयामासतुः । अतस्तादृक्पृष्ठभागे सन्निहितखङ्गवल्लरीकमन्मथफलकतादात्म्यसंभावनेति द्रव्योत्प्रेक्षेयम् सा च वाचकाप्रयोगाद् गम्या ॥

नायिकानां जलप्रवेशो वर्ण्यते — अत एवायं श्लोको जलक्रीडोपक्रमावसरे स्थातव्यः । अत्र तु लेखकप्रमादादिव प्रतिभाति —

**चरणविलुठितो विलङ्घितोरुः**
**परिगतनीविरवाप्तनाभिचक्रः ।**

**स्तनतटलुलितः क्रमेण तासां**
**मुखशशिबिम्बमचुम्बदम्बुपूरः ॥ ॥ 60 ॥**

**चरणेति** ॥ अम्बुपूरः जलप्रवाहः । कर्ता । कश्चिन्नायक इति गम्यते । चरणयोः पादयोः । कुपिताया नायिकाया इति गम्यते । विलुठितः संश्लिष्टः परिवेष्टितः चरणपर्यन्तं संक्रान्त इति यावत् । तत्र संसक्तः प्रणतः कृतपादचुम्बन इति गम्यते । विलङ्घिते उल्लङ्घिते अतिक्रान्ते उपरि गते ऊरुदघ्नं व्याप्ते इत्यर्थः । लघिर्गत्यर्थोऽपि । विशेषेण लङ्घिते अत्यन्तं प्राप्ते गाढं संस्पृष्टे । अनेनोरुसंवाहनं गम्यते । तादृशौ ऊरू येन तथोक्तः । किञ्च । परिगता प्राप्ता । शिथिलितेति गम्यते । नीविः स्त्रीकटीवस्त्रबन्धः येन । 'कृदिकारे' ति वा ङीष् । अवाप्तम् संप्राप्तम् तत्र संप्रविष्टमित्यर्थः । समुपलब्धमिति गम्यते । नाभिचक्रम् चक्राकारा नाभिः येन । नीविं शिथिलीकृत्य चुम्बितनाभिप्रदेशः इति गम्यते । स्तनतटयोः कुचप्रदेशयोः लुलितः क्षुभितः संचलितः स्खलितः । अन्यत्र प्रतिहतः अवरुद्धः तत्रैव भ्रान्तः पुनः पुनराचरितस्तनचुम्बन इति च गम्यते । क्रमेण क्रमतः यथाक्रममित्यर्थः । अवयवानां स्थितिक्रममनुल्लङ्घ्येत्यर्थः । तासाम् जलक्रीडासक्तानां स्त्रीणाम् शशिबिम्बमिव मुखम् तथोक्तम् । चन्द्रसदृशं मुखमित्यर्थः । अचुम्बत् अस्पृशत् । मुखचुम्बनमाचरदिति गम्यते । अत्र सरस्सु जलक्रीडार्थमवतरन्तीनां स्त्रीणां प्रथमतः पाददघ्नं तत ऊरुप्रमाणमनन्तरं स्तनद्वयसं ततो मुखमात्रमभवज्जलप्रवाह इत्युच्यते । 'अचुम्ब' दित्यनेन 'विलुठिते' त्यादि विशेषणसाम्यादप्रस्तुतनायकव्यवहारसमारोप इति समासोक्तिरलङ्कारः । यथा कश्चन नायकः विदितान्यासङ्गतया कुपिताः नायिकाः प्रसादयति । तद्वदयमपि चरणचुम्बनादि करोतीति प्रतीयते । अत्र नायिका गुरुमाना । नायकश्च शठः । "चरणपातभूषणाद्यपनेयो गुरुः" इति तस्याः "कामिनीविषयककपटपटु" रिति तस्य च लक्षणे । नायिकायाः रागोद्दीपकतया पादचुम्बनादयश्च नैषाधादिषु वर्ण्यन्ते । यथाह श्रीहर्षः – "स्वेन भावभजने स तु प्रियां बाहुमूलकुचनाभिचुम्बनैः । निर्ममे रतरहस्समापनाशर्मसारसमसंविभागिनीम" "लाक्षयाऽऽत्मचरणस्य चुम्बनाच्चारुफालमवलोक्य तन्मुखम्" इति । अत्रत्यविशेषणादिसाम्येन काचिदप्रकृतार्थान्तरप्रतीतिरप्येवं संभवति । 'अम्बुपूर' शब्देन 'अम्बुराशेः' समुद्रस्य प्रतीतिः । मुखशशिबिम्बमिति च रूपकमिति शशिनः स्फूर्तिः । चन्द्रस्य समुद्रोत्पन्नत्वेन तत्सुतत्वं प्रसिद्धमिति तं शिशुमयं मातेव पादयोः लालयति । अङ्के करोति । स्तन्यं पाययति तस्य कपोले चुम्बतीति लोके मातृव्यवहारोऽप्यत्र प्रतीयते इति ॥



**विशदनखपदं वपुस्सपत्न्या**
**[ श्चिरमिव ] पश्यति निर्निमेषमस्मिन् ।**
**व्यधित विहृतिकैतवेन काचि**
**त्प्रहितजला परिमीलिताक्षमेनम् ॥ ॥ 61 ॥**

**विशदेति** ॥ अस्मिन् राज्ञि । विशदानि व्यक्तानि नखपदानि नखक्षतानि यस्मिन् तथोक्तम् । जलविहारेण स्तनाद्यनुलिप्तचन्दनादेरपगतत्वेनेति भावः । तथाविधम् । समानः पतिः यस्याः । कृतसपत्निकायाः सहप्रियायाः । 'नित्यं सपत्न्यादिषु' इति निपातनात्सभावः नकारादेशो ङीप्च । तस्याः वपुः शरीरम् । कर्म । चिरम् चिरात् बहुकालम् । निर्गताः निमेषाः नेत्रनिमीलनानि यस्मिन् कर्मणि तथेवेति संभावना । पश्यति आलोकयति पश्यन्तीः प्रिया अनादृत्य प्रत्यक्षयति सतीत्यर्थः । 'षष्ठी चानादर' इति षष्ठी । काचित् तासु काचन नायिका । विहृतिः विहारः क्रीडोपक्रमः । 'विहारस्तु परिक्रमः' इत्यमरः । स एव कैतवम् व्याजः वस्तुतो न तथा । अन्योद्देशेन प्रवृत्तत्वादिति भावः । तेन । प्रहितम् निक्षिप्तम् अञ्जलिना परिक्षिप्तम् जलम् यया सा । सुष्ठु जलप्रक्षेपणं कृतवतीत्यर्थः ।

एनम् इमम्। 'द्वितीया टौस्स्वेन' इत्येनादेशः। परिमीलिते गाढम् निमीलिते अक्षिणी नेत्रे यस्य। तादृशम्। निमीलितनेत्रद्वन्द्वम्। 'बहुव्रीहौ सक्थ्यक्ष्णो' रिति षच्। व्यधित व्यतनुत अकरोत्। विपूर्वात् धाञो लुङ्। 'स्थाघ्वोरिच्चे' तीत्त्वम्। 'ह्रस्वादङ्गा'' दिति सिचो लोपः। "कृतौ करोत्यावहति विदधात्यादधाति च। वितनोत्यात्मने पञ्च" इति भट्टमल्लः। नायकाः नायिकासु स्वकृत नखक्षतानि दृष्ट्वा तदानींतनमानन्दं स्मरन्त इव मोदन्ते। कम्प राजोऽपि तथैवैकस्यां नायिकायां स्वकृतनखक्षतानि दृष्ट्वा भृश मानन्दपारवश्यमनुभवति। सपत्नीमात्सर्येण तदसहमाना चापरा नायिका जलक्लिन्ननेत्रं तं कृत्वा तद्व्यापारनिरोधनेन वैरनिर्यातनं करोतीति तात्पर्यार्थः। एषा नायिका मानवती क्रियाविदग्धा च। अत्र कैतव शब्देन विहृतेरसत्यत्वप्रतिपादनं कृतमिति कैतवापह्नुतिरलङ्कारः॥

**विशदमधरमक्ष्यनञ्जनाभं**
**विगतललाम वितन्वती ललाटम्।**
**रतिरिव जलकेलिरङ्गनाना**
**मवनिपतेः स्पृहणीयतामयासीत्॥ ॥ 62 ॥**

**विशदमिति॥** अङ्गनानाम् (स्व) वधूनाम्। जलकेलिः जलक्रीडा। कर्त्री। अधरम् अनूर्ध्वमोष्ठम् विशदम् लाक्षाद्यपनयनेन स्वच्छं यथा तथा। किञ्च। अक्षि नेत्रे। जातावेकवचनम्। अञ्ज नस्य कज्जलस्य आभा कान्तिः अञ्जनाभा, अविद्यमाना अञ्जनाभा यस्मिन्निति विग्रहः। 'नञोऽस्त्यर्थानां' मित्युत्तरपदलोपः। तथा विधं च। ललाटम् फालम् विगतम् अपगतम् ललामम् तिलकम् यस्मिन् तथोक्तम्। "प्रधानध्वजशृङ्गेषु पुण्ड्रवालाधिलक्ष्मसु। भूषा वाजिप्रभावेषु ललामं स्याल्ललाम च" इति रुद्रटः। तथाविधं च वितन्वती कुर्वती आचरन्ती। अवनिपतेः राज्ञः रतिः सुरतक्रीडेव



क्रियातौल्यादिति भावः। स्पृहणीयताम् अभिलषणीयताम् स्वकर्तृकत्वेन नन्दनीयताम् स्वस्य आनन्दहेतुताम् अयासीत् अगमत् (तादृश) माकारं साभिलाषं स ददर्शेत्यर्थः। या प्रापणे लुङ्। 'यमरम नमाता' मिति सगिटौ। जलेन क्रीडन्तीषु तास्त्वधरराग: प्रणष्टः। कज्जलनीलिमा चापगतः। तिलकं च प्रमृष्टम्। अधरनेत्रमुख चुम्बनैरधररागादिप्रणाशस्सुरतसम्मर्देऽपि भवति। एतादृशाः कान्ता दृष्ट्वा रतिकेलिषु महान्तमानन्दं नायका अनुभवन्ति। जलक्रीडा स्वपि तथैवैता दृष्ट्वा प्रकृतिसौन्दर्यसम्मोहितः कम्पराजोऽभ्यनन्ददिति तात्पर्यार्थः। उपमालङ्कारः। सुरतसम्मर्दने भ्रष्टतिलकादीनि नायिका वदनानि दृष्ट्वा नायकास्संतुष्यन्तीत्येवमाचष्टे कालिदासः – "स प्रजागरकषायलोचनं गाढदन्तपरिपीडिताधरम्। आकुलालकमरंस्त राग वान् प्रेक्ष्य भिन्नतिलकं प्रियामुखम्" इति। जलक्रीडा वर्णयन् भारविरप्येवमाह – "विपत्रलेखा निरलक्तकाधरा निरञ्जनाक्षीरपि बिभ्रतीश्श्रियम्। निरीक्ष्य रामा बुबुधे नभश्चरैरलङ्कृतं तद्वपुषैव मण्डनम्" इति॥

**परिमुषितपटीरलेपनेष्व**
**(प्य) विरललग्नसरोजकेसरेषु।**
**कुचकलशतटेषु कुन्तलीनां**
**नखरपदानि न लक्षितान्यभूवन्॥ ॥ 63 ॥**

**परिमुषितेति॥** परिमुषितानि अपहृतानि पटीरलेपनानि चन्दन स्थासकानि गन्धसारचर्चाः येषु तथोक्तानि। तेषु। जलविहरणेन दूरीकृतचन्दनलेपनेष्वित्यर्थः। तथाभूतेषु सत्स्वपि। अविरलम् सान्द्रं यथा तथा लग्नानि सक्तानि तत्र आस्थितानि सरोजकेसराणि पद्मकिंजल्काः येषु। तेषु। पद्मकिंजल्कैस्सम्यगाच्छादितेष्वित्यर्थः। कुन्तली नाम् कर्णाटस्त्रीणाम् कुचकलशाः स्तनकुम्भाः। प्रशस्ताः कुचकलशाः

कुचकलशतटाः। तेषु अत्यन्तं दर्शनीयेषु कुचकुम्भेषु। 'प्रशंसावचनैश्चे' ति
समासः। तटशब्दश्च गणव्याख्यायां मतल्लिकादिगणे पठितः – "मतल्लि
कोद्घमिश्रास्स्युः प्रकाण्डस्थलभित्तयः। हस्तपाशतटाः पादः पाली
मर्चिकादयः" इति। नखरपदानि नखव्रणानि नखक्षतानि अलक्षि
तानि अदृष्टानि। अभूवन् आसन्। नखक्षतानां केसराणां चाप्यरुण
तया तत्रैक्यं गतानि तानि दृष्टिगोचराणि नासन्निति भावः। शोण
वस्तुप्रस्तावे देवेशः "...त्रेता नखक्षतं क्षत्रधर्मरौद्ररसादयः" इति।
पीतवस्तुप्रस्तावे "किञ्जल्कवल्कले शालिहरितालमनश्शिलाः" इति।
स एव पीतलोहितयोरैक्यमित्यप्याह। जलसेचनादिभिः प्रक्षालितेषु
कुचचन्दनादिषु तत्र प्रियैर्निक्षिप्तानि नखक्षतानि यद्यपि विस्पष्टं
द्रष्टव्यानि, तथापि किञ्जल्केषु विलीनानि तानि किञ्जल्कतयैव दर्श
नीयान्यासन्निति निर्गलितोऽर्थः। अतएव मीलनमलङ्कारः – "मीलनं
वस्तुना यत्र वस्त्वन्तरनिगूहनम्" इति तल्लक्षणात्। अस्याः कल्प
नाया हस्तावलम्बनं प्रयच्छतीव भारविकृतेयं वर्णना – तिरोहिता
न्तानि नितान्तमाकुलैरपां विगाहादलकैः प्रसारिभिः। ययुर्वधूनां वद
नानि तुल्यतां द्विरेफबृन्दान्तरितैस्सरोरुहैः" इति ॥

**विहृतिरयपरिच्युतान् वतंसा**
**नसितदृशामनुदद् बहिः प्रवाहः।**
**नहि जडिमसमन्वितोऽपि कोऽपि**
**श्रुतिविषयात्पतितैः करोति मैत्त्रीम् ॥ ॥ 64 ॥**

**विहृतीति** ॥ प्रवाहः स्रोतः अम्बुवेगः। कर्ता। विहृतिरयः
जलविहरणत्वरा तदुत्सुकतेत्यर्थः। तस्मात् परिच्युतान् भ्रष्टान् असित
दृशाम् (असिताः मेचकाः नीलाः दृशः नेत्राणि यासाम् तासाम्)
मेचकाक्षीणामित्यर्थः। तासाम् वतंसान् अवतंसान् कर्णपूरान्। 'वष्टि
भागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यल्लोपो भागुरमतेन। तान्।



बहिः बाह्याय अनुदत् प्रैषयत् निरकासयत्। णुद प्रेरणे लुङ्।
"प्रेष्यति प्रचोदयति क्षिप्यति शवति क्षिपति व्यापारयतीह नुदति
नुदते च" इति भट्टमल्लः। तत्तथैवेत्युच्यते - जडिमा अज्ञता अवि
वेकः। डलयोरैक्याज्जलिमेत्यपि। तेन समन्वितः युतोऽपि अविवे
क्यपि। किमुत विवेकीति भावः। जलमपीति च। कोऽपि यः
कश्चिदपि यादृशोऽपि। श्रुतिविषयात् – श्रुतिविषयः वेदगोचरः तद्वि
हितो धर्म इत्यर्थः। अन्यत्र श्रुती कर्णौ तयोर्विषयः तदाश्रयः
प्रदेशः। कर्णमूलमित्यर्थः। 'विषयो यस्य यो ज्ञातस्तत्र गोचर
देशयोः। शब्दादौ जनपदे च' इति हैमः। तस्मात् पतितैः च्युतैः
अधोगतैः। अन्यत्र पतितैः बहिष्कृतैः वेदबाह्यैः पातकिभिरिति च।
मैत्त्रीम् सहवासम् सहस्थितिम्। अन्यत्र मैत्त्रीम् स्नेहम् संसर्गम्
न करोति नाचरति नाङ्गीकरोतीत्यर्थः। पतितसंसर्गादपि पातित्य
संभवादिति भावः। यथाहापस्तम्बः – "न पतितैस्संव्यवहारो विद्यते"
इति। अयं भावः। जलक्रीडासंरम्भे स्त्रीणां कर्णपूराः प्रवाहे पतन्ति।
पतिताः प्रवाहवेगाद् बहिर्गच्छन्ति। तदेतदित्थं प्रौढोक्त्या कथ्यते।
जडा अपि ये केऽपि श्रुतिधर्माद् भ्रष्टैर्महापातकिभिर्न संसर्गमङ्गीकुर्वन्ति
लोके। तत्संसर्गेण स्वस्यापि महापातकित्वसंभव इति भिया। अय
मपि जडिम (जलिम) युतो जडः प्रवाहश्श्रुतिविषयभ्रष्टाः (कर्ण
मूलच्युताः) इति कर्णपूरैस्सहवासं नाङ्गीकरोतीति। अत्र चोत्तरार्ध
गतसामान्येन प्रकृतविषयः पूर्वार्धगतस्समर्थ्यत इत्यर्थान्तरन्यासोऽल
ङ्कारः। अयं च समर्थनवाक्यगतश्लेषमूलातिशयोक्त्या संकीर्यते। एत
त्साम्यं वहतीव कश्चन श्लोकश्शिशुपालवधे प्रतिभाति। – "आरूढः
पतित इति स्वसंभवोऽपि स्वच्छानां परिहरणीयतामुपैति। कर्णेभ्यश्च्युत
मसितोत्पलं वधूनां वीचीभिस्तटमनु यन्निरासुः" इति ॥

**अपि दयिततमेन वारिताभि**
**र्गृहसरसो विजहे न वारि ताभिः।**

**परिलुलितललामचर्चिकाभि**
**र्विहृतिरसान्महिलामर्चचिकाभिः ॥** ॥ 65 ॥

**अपीति** ॥ परिलुलिते आकुले विलुप्ते । ललाम तिलकम् चर्चैव चर्चिका चन्दनानुलेपश्च । 'चर्चा तु चार्चिक्यं स्थासकः' इत्यमरः । ते यासां ताभिः । अत्यन्तं कृतजलक्रीडाविहरणाभिरपीति भावः । महिलामर्चचिकाभिः प्रशस्ताभिः स्त्रीभिः । 'मतल्लिका मर्चचिका प्रकाण्डमुद्घतल्लजौ' इत्यमरः । ताभिः कर्त्रीभिः । दयिततमेन अत्यन्तं प्रीतिपात्रेण भर्त्रा । वारिताभिः निवारिताभिः प्रतिषिद्धाभिरपि । प्रियप्रीतिमप्यतिक्रम्य प्रवृत्ता क्रीडालोलता तासामिति भावः । ताभिः गृहसरसः क्रीडावाप्याः कृत्रिमजलाशयस्य 'कासारस्सरसी सरः' इत्यमरः । तस्य वारि जलम् । कर्म । विहृतिरसात् क्रीडानुरागात् मुग्धात्वेनेत्यर्थः । न विजहे नात्याजि । जलक्रीडाभिरता न तृप्ता भूयोऽपि क्रीडितुमैच्छन्निति भावः । अव्यसनी कम्पराजस्समयौचितीं विज्ञाय जलक्रीडाभ्यः प्रिया न्यषेधत् । मुग्धास्तास्तु क्रीडालौल्येन तास्वतिप्रसक्ता अभूवन्निति तात्पर्यार्थः । अत्र प्रतिपादद्वयं पादान्तयमकम् । यमकस्य तु लक्षणमित्थमुक्तम् - "तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् । वर्णानां यः पुनर्वादो यमकं तन्निरूप्यते" इति ॥

जलक्रीडा उपसंहरति –

**अथ विहरणखेदमन्थराभि**
**स्सह निरगात्सरसो नृपः प्रियाभिः ।**
**कलशजलनिधेरिवाप्सरोभि**
**र्विबुधतरुर्मथनश्रमालसाभिः ॥** ॥ 66 ॥



**अथेति** ॥ नृपः राजा । कर्ता । अथ अनन्तरम् प्रियाभिलाषमनुसृत्य ताभिस्सह कञ्चित्कालं जलेषु क्रीडित्वा तदुपरीत्यर्थः । विहरणखेदः जलविहारात् संभूतः श्रमः । तेन मन्थराभिः तत्कृतमन्दगमनाभिः । 'मन्दगामी तु मन्थरः' इत्यमरः । (ताभिः) प्रियाभिः स्ववल्लभाभिस्साकम् । सरसः क्रीडादीर्घिकायाः । विबुधतरुः देवतावृक्षः पारिजातः । मथनम् मन्थनम् (समुद्र) क्षोभणम् तेन अलसाभिः मान्द्यं वहन्तीभिः मन्दरकृतसमुद्रक्षोभेण भृशं खिद्यन्तीभिरित्यर्थः । अप्सरोभिः सुरकन्याभिः । सहार्थे तृतीया । 'वृद्धो यूना' इति निर्देशेन सहार्थयोगेऽपि तृतीयेति ज्ञापनात् । ताभिस्सह । कलशजलनिधेः क्षीराब्धेरिव निरगात् आयात् बहिर्निर्जगाम । पुरा दुर्वाससश्शापात्स्वर्गलक्ष्मीस्समुद्रे पतिता । तामुद्धर्तुकामा असुरा देवाश्च क्षीराब्धिं ममन्थुः । तस्मात्सुरद्रुमा अप्सरसश्च समं समुद्रादुत्थिताः । तथैव कम्पराजोऽपि स्वप्रियाभिस्सह सरसस्समागच्छदित्युपमार्थः । इयमुपमा राजस्त्रीणां लोकातिशायि सौन्दर्यम्, कम्पराजस्य दानवीरत्वं च द्योतयति । वाक्यार्थोपमेयम् । उपमानं तु पुराणप्रसिद्धम् । कालिदासीयं पद्यमेकमेतेन साम्यं वहतीव दृश्यते – "तस्मात्समुद्रादिव मथ्यमानादुद्वृत्तनक्रात्सहसोन्ममज्ज । लक्ष्म्येव सार्धं सुरराजवृक्षः कन्यां पुरस्कृत्य भुजङ्गराजः" इति ॥

**स्फुटनखरदनाङ्कमङ्गनानां**
**परिलगदार्द्रदुकूलदर्शितोरु ।**
**वपुरनुकलमैक्षत क्षितीशो**
**जलकणदन्तुरदीर्घकुन्तलाग्रम् ॥** ॥ 67 ॥

**स्फुटेति** ॥ क्षितीशः भूपतिः कम्पनः । कर्ता । स्फुटानि व्यक्तानि चन्दनानुलेपनादीनामपगतत्वेन भृशं प्रकाशमानानि । नखानाम् कर

रुहाणाम् रदनानाम् दन्तानाम् अङ्काः रेखाः नखक्षतानि दन्तक्षतानि चेत्यर्थः । 'अङ्को रूपकभेदाङ्कचिह्ने रेखाजिभूषणे' इति मेदिनी । ते यस्मिन् तथोक्तम् । अनाच्छादितत्वेन तत्तदवयवस्थानेषु स्फुटं प्रकाशमानदन्तक्षतनखक्षतैश्शोभायमानमित्यर्थः । "नखरदनाङ्क' मिति पूर्वः पाठः । अस्मिन् पाठे नखरदनशब्दौ लक्षणया नखक्षतदन्तक्षत परौ । तानि अङ्गेषु यस्येति बहुव्रीहिः । तदित्यर्थः । अङ्गनाना मित्यनुप्रासोऽप्यस्मिन्ननुकूलः । लक्षणाव्यधिकरणबहुव्रीह्याश्रयणक्लेशोऽ त्रेत्यङ्कमिति परिगृहीतमस्माभिः । किञ्च परिगलन्ति मिलन्ति अवयवैर्गाढं संश्लिष्यन्ति आर्द्राणि विलग्नानि दुकूलानि सूक्ष्म वस्त्राणि । तैः दर्शिताः साक्षात्कारिताः दर्शनपथमारूढा इत्यर्थः । तादृशाः ऊरवः उत्सङ्गाः यस्य तत् । जलक्लिन्नात्मावयव लग्नप्रतनुवासोभिर्दर्शितोरुसौभाग्या इत्यर्थः । किञ्च । जलकणैः उदकबिन्दुभिः दन्तुराः उन्नतनताः दीर्घकुन्तलानाम् आयतशिरोरुहाणाम् अग्राः अग्रभागाः यस्मिन् तत् । जलबिन्दुभिराक्रान्तत्वेन दन्तुरित केशाग्रभागयुतमित्यर्थः । तादृशम् वपुः शरीरम् । कर्म । अनुकलम् – कलायाम् कलायाम् प्रतिक्षणम् । वीप्सायामव्ययीभावः । अष्टादश निमेषपरिमितः कालः कलेत्युच्यते । 'कलांशमात्रे शिल्पादौ कलना कालभेदयोः' इत्यमरः । ऐक्षत अपश्यत् । सहजसौन्दर्यस्य कृत्रिम सौन्दर्यादतिचारुत्वमिति तदालोकनपरः कम्पराजस्तद्दर्शनेनैव तृप्तिं प्रापेति तात्पर्यार्थः । प्रकृतिसौन्दर्यस्य दर्शनीयतां वर्णयन्ति महा कवयः – "आमृष्टास्तिलकरुचस्स्रजो निरस्ताः नीरक्तं वसनमपाकृतो ऽङ्गरागः । कामस्त्रीरनुशयवानिव स्वपक्षव्याघातादिति सुतरां चकार चारूः" इति ॥

**चिकुरनियमनेषु कामिनीना**
**मभिनववस्त्रपरिग्रहान्तरेषु ।**



**अभिमतपददर्शनैरयत्नै**
**रतिमदनं स्वममंस्त कम्पराजः ॥ ॥ 68 ॥**

**चिकुरेति** ॥ कम्पराजः । कर्ता । कामिन्यः स्वसुन्दर्यः तासाम् । चिकुराणाम् केशानाम् । कर्मणि षष्ठी । नियमनेषु नियन्त्रणेषु बन्ध नेषु तत्केशसंयमनावसरेष्वित्यर्थः । किञ्च । अभिनववस्त्राणि नूतन वासांसि वस्त्रान्तराणीति यावत् । तेषाम् परिग्रहः स्वीकारः धार णमित्यर्थः । तदन्तरेषु तदवकाशेषु जलस्विन्नवस्त्रापनयनेन पुनर्वस्त्रा न्तरधारणसमयेष्वित्यर्थः । अयत्नैः अविद्यमानस्वप्रयत्नैः यत्नं विनैव हठाल्लब्धैः । अभिमतानि स्वस्य अत्यन्तं प्रियाणि पदानि नख पदानि नखक्षतानि ऊरुमूलादिषु कृतानीत्यर्थः । तेषाम् दर्शनानि विलोकनानि तैः । करणभूतैः । नखक्षतदर्शने नायिकानामत्युत्सुकता भवति । अतएव कालिदासः परमेश्वरमेवं वर्णयति – "ऊरुमूलनख मार्गराजिभिस्तत्क्षणं हृतविलोचनो हरः । वाससः प्रशिथिलस्य संयमं कुर्वतीं प्रियतमामवारयत्" इति । नखपदान्येव 'नामैकदेशे नामग्रहण' मिति न्ययेन पदशब्दव्यवहृतान्यत्रेत्यवगन्तव्यम् । यद्वा - अभिमतपदानि स्वाभिलषितानि तत्तदवयवस्थानानि तेषाम् दर्शनानि विलोकनानी त्यादि पूर्ववत् । तैः । स्वम् आत्मानम् अतिमन्मथम् मन्मथमति क्रान्तम् मन्मथस्यापि नियन्तारम् स्वस्य भृत्यभावमापन्नं काममिति यावत् । तथाविधम् । अमंस्त अबुध्यत । यथाविधि तृतीयपुरुषार्थस्य सिद्ध्या स्वस्य कृतार्थता संवृत्तेति परं मुमुदे कम्पराज इति वक्यार्थः । अयं भावः । 'नायकैः प्रार्थ्यमाना अपि शृङ्गारसर्वस्व भूतानि स्वावयवस्थानानि न दर्शयन्ति तेभ्यो लज्जया मन्मथवशा अपि नार्यः । इदानीं मन्मथः प्रयत्नमन्तरैव ताभिस्तानि दर्शयतीति राजायं स्वानुकूलत्वेन स्वभृत्यभावमापन्नं कामं मत्वा परं तुतोष – इति ॥

स्वेष्टदेवतासमाराधनाप्रस्तावेन मङ्गलान्ततया सर्गमिमं परिसमापयति —

**ततस्सैरन्ध्रीभिः कृतसमुचिताकल्परचनः**
**पुरन्ध्रीभिस्सार्धं समधिगतशुद्धान्तवसतिः ।**
**त्रयीगीतं तेजस्त्रिपुरहरमाराध्य विधिव**
**द्यथार्हैर्व्यापारैर्नरपतिरहश्शेषमनयत् ॥** ॥ 69 ॥

**तत इति ॥** नरपतिः राजा । पुरन्ध्रीभिः सार्धम् स्त्रीभिः स्वमहिषीभिस्साकम् । समधिगता लब्धा संप्राप्ता शुद्धान्तवसतिः अन्तःपुरनिवासः येन तथाभूतस्सन् । ततः अनन्तरम् अन्तःपुरप्रवेशनोत्तरकाल इत्यर्थः । सैरन्ध्रीभिः शिल्पकारिकाभिः स्त्रीभिः । ' सैरन्ध्री शिल्पकारिका ' इत्यमरः । ताभिः कृता विरचिता समुचिता अर्हा देवपूजायाः योग्या आकल्परचना अलङ्कृतिकरणम् यस्मिन् तथोक्तः । परिचारिकाकृतदेवपूजासमुचितवेषयुतस्सन्नित्यर्थः । विधिवत् यथाविधि शास्त्रमनुसृत्येत्यर्थः । ' ये शास्त्रविधिमुत्सृज्य वर्तन्ते कामचारतः ' इत्यादिस्मृतिवचनतोऽन्यथाकरणे प्रत्यवायश्रवणादिति भावः । ( एवंभूतस्सन् ) त्रयी त्रयो वेदाः ऋग्यजुस्सामानि यस्यास्संहतेरिति विग्रहः । ' इति वेदास्त्रयस्त्रयी ' इत्यमरः । ' द्वित्रिभ्या ' मिति तयपोऽयच् । ' टिड्ढे ' ति ङीप् । तया गीतम् अभिष्टुतम् त्रिपुराणि लोहनिर्मितानि त्रीणि पुराणि । अत्र भारतम् – " असुराणां पुराण्यासन् त्रीणि वीर्यवतां दिवि । आयसं राजतं चैव सौवर्णं परमं महत् " इति । तेषाम् हरम् नाशकम् । त्रिपुरासुरदाहकमित्यर्थः । तादृशम् तेजः प्रकाशः स्वयंप्रकाशमानम् ब्रह्मेत्यर्थः । तथाविधम् विरूपाक्षदेवमिति यावत् । तत् । आराध्य संपूज्य । यथार्हैः यथोचितैः व्यापारैः तत्तत्क्रियाभिः अहश्शेषम् शिष्टं दिनभागम् अनयत् यापयामास । जलक्रीडाव्याजेन स्नात्वा माध्याह्निकपूजां विरूपाक्षदेवस्य यथाविधि



निर्वर्त्य राजोचितव्यापारेषु संसक्तो दिनं निनायेति पिण्डीकृतोऽर्थः । एवं तृतीयपुरुषार्थस्य धर्माङ्गतामापादयन्ती सर्गमिममुपसंहरति कवयित्री । अतएव च वृत्तभेदः । वृत्तं च शिखरिणी । लक्षणं तु " रसैरुद्रैश्छिन्ना यमनसभलागश्शिखरिणी " इति तल्लक्षणात् ॥

इति
श्रीगङ्गादेव्या विरचिते
मधुराविजयनाम्नि वीरकम्परायचरिते
वनविहारजलक्रीडावर्णनं नाम
षष्ठसर्गः

**इतीति ॥** सर्वं पूर्ववत् । वनविहारः उद्यानक्रीडा जलक्रीडा सलिलविहारः तयोः वर्णनम् प्रकथनम् । नामेति प्रसिद्धौ । विरूपाक्षदेवताराधनाङ्गतया प्रवृत्तवनविहारसलिलक्रीडाभ्यां सुविदित इत्यर्थः । षष्ठः षट्संख्यापूरकः । ' षट्कतिपयचतुरा ' मिति डटि थुक् । अतएव ज्ञापकाड्डट् । (सर्गः काव्यभागः । इति समाप्तः) इति तु विशेषः ।

इति
श्रीपरमेश्वरीकृपासमुपलब्धशास्त्रसाहितीवैदुष्य
' साहित्यालङ्कार ' ' विद्वत्कवीशान '
**पोतुकुच्चि सुब्रह्मण्यशास्त्रिणा**
' काव्यकलानिधि ' ' महीशूरमहाराजास्थानमहाविद्वत्कवि '
श्रीचिदम्बरशास्त्रिणां भागिनेयेन विरचितया
**भावप्रकाशिका**ख्यव्याख्यया समलङ्कृतायाम्
श्रीगङ्गादेव्याः कृतौ मधुराविजये महाकाव्ये
जलक्रीडावनविहारप्रशंसा नाम
**षष्ठसर्गः**

* * * *

श्रीः

# मधुराविजयम्

## भावप्रकाशिकाख्यव्याख्यासमेतम्

## सप्तमसर्गः

एतन्नायकस्य संभोगशृङ्गारस्याङ्गतया तदुद्दीपकं चन्द्रोदयं वर्णयितुकामा क्रमानुसरणाय सूर्यास्तमयादि प्रकथयति । तत्र चाष्टाभि श्लोकैरित आरभ्य सूर्यास्तमयो वर्ण्यते —

**अथ कम्पनरेन्द्रसुभ्रुवां**
**मुखपद्मान्यनुहार्य पङ्कजैः ।**
**अपराधभियेव भानुमा**
**नपरक्ष्माधरकन्दरामगात् ॥** ॥ 1 ॥

**अथेति ॥** अथ अनन्तरम् स्वेष्टदेवतामाराध्य समुचितकृत्येषु राज्ञः प्रवृत्तेः समनन्तरमित्यर्थः । भानुमान् सूर्यः प्रशंसायां मतुप् । प्रशस्तकिरणवान् । दीप्तिमानिति गम्यते । अतएव पद्मानाम् दीप्ति दायकतास्योपपद्यते । 'भानूरश्मिदिवाकरौ' इत्यमरः । सः कर्ता । कम्पनरेन्द्रस्य कम्पनप्रभोः सुभ्रुवाम् सौन्दर्यवतीनाम् राजदाराणामित्यर्थः । अनेन तासां मुखानाम् सौन्दर्यातिशयो गम्यते । (तासाम्) मुखानि आननानि तान्येव पद्मानि तामरसानि पद्मायाः (लक्ष्म्याः) आश्रयभूतानि शोभायमानानि कृतसुकृतानि महान्ति इति गम्यते । तानि कर्म । पङ्के कर्दमे जायन्त इति पङ्कजानि (तामरसानि) मलिनानि कान्तिशून्यानि पापजन्मानि निकृष्टानीति गम्यते । 'पङ्कोऽघे



कर्दमे' इति हैमः । तैः प्रयोज्यकर्त्रीभिः । अनुहार्य अनुकार्य दीप्तिदानेन तैस्सदृशान्येतानि यथा भवन्ति तथा कृत्वेत्यर्थः । राजस्त्रीणां मुखपद्मैश्शोभायमानैर्महद्भिः कृतसुकृतैः लक्ष्मीसमाश्रयैः कान्तिविहीनानि निकृष्टानि पापजन्मान्यत्यन्तं विसदृशानि, सदृशानि केवलमसूययैव श्वानं मृगेन्द्रमिव विधायेति भावः । (एवं कृत्वा) अपराधः स्वकृतराजद्रोहः तस्माद्भीः तज्जन्यं भयम् तयेवेत्युत्प्रेक्षा । द्रोहिणं मामवश्यं राजायं दण्डयिष्यतीति धिया जातभयस्सन्नित्यर्थः । (एवंभूतस्सन्) अपरः पश्चिमः क्ष्माधरः पर्वतः अस्ताद्रिरित्यर्थः । तस्य कन्दरा गुहा गृहाकारयुतं कृत्रिमं गिरिविवरम् 'दरी तु कन्दरो वा स्त्री' इत्यमरः । ताम् । अगात् अगमत् । अस्ताचलगुहायामात्मत्राणाय प्रविवेशेत्यर्थः । लोके यथा कश्चिद्राज्ञे द्रुह्यति तद्भयाच्च देशान्तरं गच्छति आत्मानमविज्ञातं कृत्वा यत्र कुत्रापि कोणे निलीय कालं नयति तद्वदिति भावः । अत्र 'नरेन्द्रसुभ्रुवाम्' पङ्कजैः 'पद्मानि' इत्यादीनि साभिप्रायाणि भूत्वा 'अपराधभिये' वेति हेतूत्प्रेक्षायास्समुज्जीवकान्यभूवन्निति परिकराङ्कुरोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः । अस्मिन् सर्गे वियोगिनीवृत्तम् । "विषमे ससजा गुरुस्समे सभरा लोऽथ गुरुर्वियोगिनी" इति तल्लक्षणात् ।

सूर्यास्तमयवर्णनेन समुपक्रान्तस्सर्गोऽयं भर्त्राज्ञावशंवदया कवयित्र्या क्रियमाणे चन्द्रोदये स्वयमपरिसमाप्त एव समाप्तः । तत्प्रस्तावे ग्रन्थपातोऽशनिपात इव क्रिमिदोषेण समभवदत्रेति न ज्ञायते किमासीत्तदुपरीति । तथापि नैषधे नलाज्ञप्तदमयन्तीकृतचन्द्रोदयवर्णनं तयोश्शृङ्गारानुभूतेस्समुद्दीपकं भूत्वा तद्रतिं परिपुपोषेत्येतयोरपि तथैवेदं भवितुमर्हतीत्यभ्यूह्यते ॥

**परिचूषितदीप्तिरम्बुजैः**
**पुनरूष्माणमिवाप्तुमौर्वतः ।**

**रयवल्गितवाहनो रविः**
**पयसां राशिमवाप पश्चिमम् ॥** ॥ 2 ॥

**परिचूषितेति ॥** रविः सूर्यः । अम्बुजैः सरसिजैः पद्मैः । अम्बुजशब्देन शैत्यातिशयस्तस्मिन् द्योत्यत इति सूर्यतेजोधारण सामर्थ्यं तस्मिन्नवगम्यते । तैः कर्तृभिः । परिचूषिता निश्शेषं पीता स्वस्मिन् संक्रमिता दीप्तिः कान्तिः तेजो वा यस्य तादृशः । यथा कश्चिन्नायकः कया चिन्नायिकया संगतस्तयापहृततेजाः पुनः प्रयतते तदधिगमाय तद्वदयमपि पद्मिनीपतिरिति भावः । यद्वा । परोपकृतये कृतावतारोऽयं लोकबान्धवस्स्वसर्वस्वार्पणेन पद्मानामुपकुर्वन् पुनर्लोकोप काराय दीप्तिसंपादने प्रयतत इति वावगन्तव्यम् । चूषितशब्दस्वारस्येन प्रथम एवार्थस्समुचित इति प्रतिभाति । तादृशस्सन् । उर्वस्य अपत्यं पुमान् और्वः अग्निज्वालामयः पुरुषः बडबाग्निः । 'और्वस्तु बडवा नलः' इत्यमरः । ऋष्यण् ("उर्वेण किल अयोनिजपुत्रार्थिना ऊरुर्मथितः । तत्र ज्वालामयः पुरुषो जातः । तस्य समुद्र आधार आसी" दिति श्रुतिः । उर्वस्य जातोऽग्निमयः पुरुषस्स्वाहाराय सर्व लोकान् दग्धुं प्रवृत्तः, तदानीं लोकपितामहो ब्रह्मा बडबामुखाकृत्या समुद्रेऽस्य निवासम्, आहारश्चास्य समुद्रजलं ददामीति तथा कृत्वा पित्रा तं न्यवारयदिति हरिवंशगाथा।) तस्मात् और्वतः । पञ्चम्या स्तसिः । ऊष्माणम् त्विषम् दीप्तिम् । 'ऊष्मो घर्मेऽश्रुणि तथा ज्येष्ठे । 'ऊष्मा स्त्रियां त्विषि' इति वोपालितः । 'मन' इति न ङीप् । 'डाबुभाभ्या' मिति वैकल्पिकत्वान्न च टाप् । पुनः भूयः अवाप्तुम् प्राप्तुमिवेति संभावना । वल्गितम् धाराविशेषः । 'वल्गितं पुनः' अग्रकायसमुल्लासात्कुञ्चितास्यं नतत्रिकम्' इति नाममाला । धारास्तु पञ्च । "आस्कन्दितं धोरितकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्चधाराः" इति । तदेषामस्तीति वल्गिताः । अर्श आद्यच् ।



रयेण जवेन वल्गिताः रयवल्गिताः । तथाविधाः वाहाः अश्वाः यस्य तथोक्तः । महता रयेण प्रयातस्सन्निति भावः । अनेन परोपकृतिव्यग्रतास्य सूच्यते । पश्चिमम् प्रतीचीदिशि स्थितम् पयसां राशिम् अम्बुराशिम् समुद्रम् पश्चिमसमुद्रमित्यर्थः । तम् अवाप प्राप । अस्ताचलसमीपस्थे पश्चिमाम्भोधौ निममज्जेत्यर्थः । महान्तः परोपकृतये प्राणोपद्रवकराण्यपि कार्याणि कुर्वन्तीति भावः । अत्र पश्चिमसमुद्र प्रवेशे सूर्यस्य ऊष्मप्राप्तिर्वस्तुतो न फलम् । तस्य फलत्वसंभावना त्वेति फलोत्प्रेक्षेयम् ॥

**अपसर्पणसंभ्रमच्युतं**
**दिनलक्ष्म्यास्तपनीयकुण्डलम् ।**
**रविमण्डलमाशशङ्किरे**
**वरुणान्तःपुरवामलोचनाः ॥** ॥ 3 ॥

**अपसर्पणेति ॥** वरुणस्य वरुणदेवस्य जलाधिष्ठानदेवतात्मनः । अन्तःपुराणि स्त्र्यगाराणि । 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च' इत्यमरः । तस्य वामलोचनाः । वनिताः तस्थाः कान्ताः । आधाराधेयभाव एव संबन्धत्वेन षष्ठचर्थः । वरुणराजान्तःपुर कान्ता इत्यर्थः। रविमण्डलम् सूर्यबिम्बम् समुद्रप्रविष्टमित्यर्थः। दिनम् अहः तदेव लक्ष्मीः रमा । लक्ष्मीशोभयोरैक्यादेवमुक्तिः । तस्याः अपसर्प णम् निवर्तनम् तस्मिन् संभ्रमः त्वरा 'संभ्रमो वेगहर्षयोः' इत्य मरः । तस्मात् च्युतम् स्रस्तम् । तपनीयकुण्डलम् काञ्चनमयताटङ्कः । वर्तुलत्वादरुणत्वाच्चैवमुक्तिः । उत्तमसुवर्णस्यारुणत्वमिति कविसमयः । तत् आशशङ्किरे संभावयामासुः । स्त्रीणां भूषणप्रियत्वादेवं संभावना तास्वौचित्यं पोषयति । दिवसलक्ष्मीधृतः कनकताटङ्कस्स्वनिवासाय वेगेन धावन्त्यास्तस्याः कर्णाद् भ्रष्टोऽभूत्तदेवेदं सूर्यमण्डलमिति स्वरूपो त्प्रेक्षा । अत्र बाणः – "गगनतलादवतरन्त्या दिवसश्रियः पद्म

रागनूपुरमिव स्वप्रभापिहितरन्ध्रं रविमण्डलमुन्मुक्तपादं पपात ” इति ॥

**तरणेररुणीकृताः करै**
**र्वरुणस्त्रैणकपोलभित्तयः ।**
**मदलोहिनिकामुपावह**
**न्मदिरास्वादनमन्तराप्यहो ॥** ॥ 4 ॥

**तरणेरिति** ॥ वरुणस्य प्रचेतसः । ‘ प्रचेता वरुणः पाशी ’ इत्यमरः । स्त्रीणां समूहः स्त्रैणम् । स्त्रीजनता शुद्धान्तस्त्रिय इत्यर्थः । ‘ स्त्रीपुंसाभ्यां नञ्स्नञौ भवना ’ दिति नञ् । तस्य कपोलभित्तयः प्रशस्ताः कपोलाः गण्डा इति विग्रहः । ‘ गण्डौ कपोलौ ’ इत्यमरः । ‘ प्रशंसावचनै ’ श्चेति समासः । “ मतल्लिकोद्घमिश्रास्स्युः प्रकाण्डस्थल भित्तयः । हस्तपाशतटाः पादः पालीमर्चर्चिकादयः ” इति गणपाठे भित्तिशब्दस्य प्रशंसावचनत्वेन पाठात् । ताः कर्त्र्यः । तरणेः सूर्यस्य ‘ तरणिस्तरणेऽर्केंऽशौ कुमार्योषधिनौकयोः ’ इत्यमरः । ( तस्य ) करैः किरणैः । ‘ करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः ’ इति मेदिनी । अनरुणाः अरुणाः संपद्यमानाः कृताः अरुणीकृताः रक्ती कृताः । आपादितशोणवर्णा इत्यर्थः । अभूततद्भावे च्विः । ‘ अस्य च्वा ’ वितीत्वम् । तादृशास्सत्यः मदिरायाः मद्यस्य ‘ मदिरा कश्य मद्येऽपि ’ इत्यमरः । कर्मणि षष्ठी । आस्वादनम् रासनम् पानम् मद्यपानमित्यर्थः । तत् अन्तरा तेन विना । मद्यपानमकृत्वा ऽपीत्यर्थः । ( ‘ अन्तरान्तरेणे ’ ति द्वितीया । अन्तराशब्दो मध्यार्थक इति काशिकावृत्तिः । यथाह वृत्तिकारः — “ तत्रान्तराशब्दो मध्यमाधेयप्रधानमाचष्टे । अन्तरेणशब्दस्तु तच्च विनार्थं च । अन्तरा त्वां च मां च कमण्डलुः । अन्तरेण त्वां च मां च कमण्डलुः । अन्तरेण पुरुषकारं न किञ्चिल्लभ्यत ” इति । अमरसिंहस्तु ‘ अथान्त रेऽन्तरा । अन्तरेण च मध्ये स्युः ’ इति मध्यार्थकावेव द्वावुदाजहार ।



अन्तराशब्दस्य विनार्थकत्वमपि सुप्रसिद्धम् — ‘ अन्तरः परिधानीयस्वीय बाह्येषु वाक्यवत् । अन्तरात्मनि पुंस्येष विनार्थेऽव्ययमन्तरा ’ इति नानार्थरत्नमाला । मदः मद्यम् तेन लोहिनिका तदास्वादकृतं लौहित्यम् । ताम् मद्यपानसंजातरक्तवर्णवत्तामित्यर्थः । लोहितशब्दात् ‘ वर्णे चानित्य ’ इति कन् । ‘ वर्णादनुदात्ता ’ दिति पक्षे ङीप् । तत्सन्नियोगेन तकारस्य नकारादेशश्च । (ताम्) उपावहन् अबिभ्रत अलभन्तेत्यर्थः । अहो इत्याश्चर्ये । मद्यपानाद्यादृशी रक्तता तादृश्येव तद्विनापि सूर्यकिरणसंपर्केण संजातेदानीमिति विस्मय इति भावः । अत एव कारणं विनापि कार्योत्पत्तिरिति विभावनालङ्कारः । “ विभावना विनापि स्यात्कारणं कार्यजन्म चे ” दिति तल्लक्षणात् । मद्यपानेन रक्तवर्णता शरीरस्य । तत्रापि विशेषतः कपोलयोर्जायत इति महाकवयो वर्णयन्ति — “ गण्डभित्तिषु पुरा सदृशीषु व्याञ्जि नाञ्चितदृशां प्रतिमेन्दुः । पानपाटलितकान्तिषु पश्चाल्लोध्रचूर्णतिलकाकृतिरासीत् ” “ रागकान्तनयनेषु नितान्तं विद्रुमारुणकपोलतलेषु । सर्वगापि ददृशे वनितानां दर्पणेष्विव मुखेषु मदश्रीः ” इत्यादिना ॥

**कमलोदरसंभृतं करै**
**र्मधु पीत्वा रविरुज्झिताम्बरः ।**
**स्पृशति स्म दिशं प्रचेतसो**
**न मदः कस्य विकारकारणम् ॥** ॥ 5 ॥

**कमलेति** ॥ रविः सूर्यः । कर्ता । कमलस्य पद्मस्य उदरम् कुक्षिः अन्तर्भागः । तदेव भाजनमिति गम्यते । तस्मिन् संभृतम् सुष्ठु धृतम् परिपूर्णमित्यर्थः । कराः किरणाः त एव हस्ताः । ‘ बलिहस्तांशवः कराः ’ इत्यमरः । तैः करणभूतैः । मधु पुष्परसः स एव मधु मद्यम् । ‘ मकरन्दस्य मद्यस्य माक्षिकस्य च वाचकः । अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधुः ’ इति विश्वः । तम् पीत्वा निपीय ।

उज्झितम् परित्यक्तम् अम्बरम् आकाशः तदेव अम्बरम् वस्त्रम् परिधानं येन तथोक्तः। 'अम्बरं व्योम्नि वाससि' इत्यमरः। तथाविश्रस्तन्। प्रचेता वरुणः। स एव प्रकृष्टहृदयः महात्मा इति च गम्यते। 'प्रचेताः पाशिनि मुनौ ना प्रकृष्टहृदि त्रिषु' इति सुधा। तस्य दिशम् आशाम् पश्चिमदिशमित्यर्थः। तामेव वनितामिति गम्यते। स्पृशति स्म अवममर्श स्पृष्टवान्। मदः मद्यम् मद्यपानमित्यर्थः। कस्य कस्य वा जनस्य। विकारः कामोदयादिरूपा मनोविक्रिया तस्य कारणम् हेतुः न न भवति। सर्वस्यापि जनस्य भवत्येवेति भावः। अत्र पद्मोदरभागो मद्यभाजनमिति तत्र स्थितं मधु मद्यमिति तत्र सूर्यकिरणप्रसारः हस्तप्रसार इति तेन च मकरन्दशोषः सूर्यकृतमद्यपानमिति अस्तमये सूर्यस्य नभः परित्यज्य गमनं सूर्यस्य मुक्तवस्त्रतेति सूर्यकिरणानां तत्समये पश्चिमदिशा व्यापनं वरुणकान्तास्पर्श इति कविप्रौढोक्तिः। मधुपानप्रमत्तता लोके मधुपायिनमकृत्येषु प्रवर्तयति। तस्यायं प्रकृतिसिद्धो गुण इति कस्यापि तस्य दुर्निवारत्वात्सूर्ये भगवत्यप्येवं संभाव्यत इति भावः। अत्र दिशमित्यादौ वनितात्वारोप आर्थिक इत्येकदेशविवर्तिरूपकम्। श्लिष्टरूपकं च करैरित्यादौ। 'न मदः कस्य विकारकारण' मित्यर्थान्तरन्यासो भगवति सूर्येऽप्येवं संभवत्येवेत्युत्प्रेक्षाजीवातुरभवत्सामान्यविशेषभावेन। अत एवानयोरङ्गाङ्गिभावेन संकरः। भारविरप्येतादृशे प्रस्तावे "अंशुपाणिभिरतीव पिपासुः पद्मजं मधु भृशं रसयित्वा। क्षीबतामिव गतः क्षितिमेष्यन् लोहितं वपुरुवाह पतङ्गः" इत्याचष्ट ॥

**प्रथमां हरितं प्रभाकरो**
**विरहय्यात्मनि तापमाप यम्।**
**अपरामुपगम्य तं जहौ**
**हृदयं कः खलु वेत्ति रागिणाम् ॥ ॥ 6 ॥**



**प्रथमामिति** ॥ प्रभाकरः सूर्यः। रागीति गम्यते। 'भास्कराहस्करब्रध्नप्रभाकरविभाकराः' इति सूर्यपर्यायेष्वमरः। प्रथमाम् पूर्वाम् हरितम् दिशम् प्राचीं दिशम्। नायिकामिति गम्यते। 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः। ताम् विरहय्य परित्यज्य। विपूर्वात् रह त्यागे – इत्यस्माण्ण्यन्तात्क्त्वोल्यपि 'ल्यपि लघुपूर्वा' दिति णेरयादेशः। आत्मनि स्वस्मिन् यम् तापम् यादृशम् विरहसंतापम्। दीप्तिमिति च गम्यते। आप प्राप। तम् तादृशं तापम् तादृशीं दीप्तिमिति च। कर्म। अपराम् पश्चिमां दिशमित्यर्थः। उपगम्य उपेत्य संगम्येति च। जहौ तत्याज परित्यक्तवान्। ओ हाक् त्यागे - लिट्। प्राचीदिश्युदयं प्राप्य। तेजस्वी सूर्यः पश्चिमदिश्यस्तं गच्छन् निस्तेजस्को भवतीत्येवमुच्यते। इदं युक्तं किमित्यत आह – रागिणाम् अनुरागवताम्। रागः रक्तिमा तद्वतामिति च गम्यते। हृदयं मनः कः खलु कोवा। खल्विति वार्थे। वेद जानीते इति काकुः। तदीदृशमिति वेत्तुं न कोऽपि प्रभवतीत्यर्थः। विद ज्ञाने लट्। 'विदो लटो वा' इति पक्षे णल्। रागिणो नूतनप्रिया इति तेषु प्रणयनैश्चल्यस्य नैवावकाशः, ते अव्यवस्थितचित्ता इति वाक्यार्थः। प्राचीं नायिकां रागी (नायकः) सूर्यः प्रथमतः परिगृह्य प्रतीचीं नायिकां दृष्ट्वा तत्सौन्दर्यसम्मूढः प्रथमां परित्यज्य द्वितीयामेतां संजग्राह। "कामातुराणां न भयं न लज्जे" ति न्यायेन नवनवप्रियाणां रागिणां नास्ति पापशङ्का नैव लोकापवादभयमिति तात्पर्यार्थः। ग्रहेषु लोहितवर्णस्सूर्यस्तथोदयास्तमयेषु च तादृशरागेण साकमनुरागस्याभेदाध्यवसाय इति रागी सूर्यस्संवृत्तः। एवमन्यत्रापि। अत्र पूर्वनायिकापरित्यागस्य नूतननायिकास्वीकारस्य च हेतुतासमर्थकोऽयं 'हृदयं कः खलु वेत्ति रागिणा' मिति वाक्यार्थ इति वाक्यार्थं प्रति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। श्लेषमूलातिशयोक्तिस्तत्र सहकारिणीति तेन साकं

संकरश्चास्य ॥

**परलोकपथं प्रपेदुषः**
**पुनरावृत्तिमपेक्ष्य भास्वतः ।**
**मुकुलीभवदम्बुजच्छला**
**दकरोदञ्जलिबन्धमब्जिनी ॥** ॥ 7 ॥

**परलोकेति** ॥ अब्जिनी पद्मिनी । सैव पद्मिनीजातिस्त्री । ‚ पद्मिनी योषिदन्तरे । अब्जेऽब्जिन्या ’ मिति हैमः । अब्जिनी पद्मिनी शब्दौ पर्यायौ । सा कर्त्री । परलोकः लोकान्तरम् । स एव पर देश इति गम्यते । तस्य पन्थाः मार्गः । ‘ऋक्पूरब्धूः पथा’ मित्यच् । तम् प्रपेदुषः उपेयुषः प्राप्तवतः । प्रपूर्वात् पदेः लिटः क्वसुः । ‚ वसोस्संप्रसारण ’ मिति संप्रसारणम् । लोकान्तरं प्रयातुं प्रयतमानस्येत्यर्थः । भास्वतः सूर्यस्य वल्लभस्येत्यर्थः । तस्य पद्मिनीपतित्वादेवमुक्तिः । पुनः भूयः आवृत्तिः आवर्तनम् पुनश्शीघ्रमेव निवर्तनमित्यर्थः । अपेक्ष्य अभिलष्य प्रियविरहस्य दुस्सहत्वेन शीघ्रमेव तदागमनमाकाङ्क्षन्तीति भावः । अमुकुलम् मुकुलं संपद्यमानं भवत् मुकुलीभवत् कुट्मलीभवत् कुट्मलावस्थां धरत् संकुचदिति यावत् । अभूततद्भावे च्विः । दीर्घः । तादृशम् अम्बुजम् पद्मम् तदेव छलम् व्याजः । वस्तुतो न तथेति भावः । सूर्यास्तमये पद्मानि संकुचन्तीत्येवमुक्तिः । तस्मात् । अञ्जलिबन्धः अञ्जलेः हस्तसंपुटस्य बन्धः बन्धनम् निर्माणनम् संघटनम् । बन्ध बन्धने – भावे घञ् । नमस्काराञ्जलिसंघटनमिति यावत् । तम् अकरोत् व्यधात् कृतवती नमस्कुर्वती स्थितेत्यर्थः । ईप्सितमर्थं वक्तुं न शशाक लज्जयेति भावः । अत्र व्रीडाख्यभावस्योदयः स च श्रृङ्गारस्याङ्गमिति भावोदयालङ्कारः । कैतवापह्नुतिश्चैतस्याः प्रयोजकमिति तेन साकमस्य संकरः । लक्षणं तु – “भावोत्पत्तेः पराङ्गत्वे भावोदय इतीरित” इति । नायिका च



लज्जाप्रधानेति मुग्धा ॥

**प्रतिबिम्बपरम्पराऽम्बुधौ**
**पवनोद्भूततरङ्गसङ्गिनी ।**
**नभसोऽवतरिष्यतो रवे**
**र्मणिसोपानधियं व्यभावयत् ॥** ॥ 8 ॥

**प्रतिबिम्बेति** ॥ अम्बुधौ समुद्रे पश्चिमसमुद्र इत्यर्थः । प्रतिबिम्बानि प्रतिकृतयः सूर्यस्य प्रतिच्छायाः । ‘ प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना । प्रतिच्छाया प्रतिकृतिरर्चा पुंसि प्रतिनिधिः ’ इत्यमरः । तेषाम् परम्परा श्रेणिः श्रेण्याकारं धृताः प्रतिच्छाया इत्यर्थः । सा । पवनः वायुः तस्मात् उद्भूताः जाताः तरङ्गाः वीचयः तेषां सङ्गः संगमः मेलनम् संकलनम् सोऽस्यास्तीति सर्वधनादित्वादिनिः । ङीप् । तादृशी सती । नभसः आकाशात् अवतरिष्यतः समुद्रे प्रवेक्ष्यतः रवेः सूर्यस्य । तदर्थे षष्ठी । तदर्थे मणिसोपानानि पद्मरागरत्नखचितानि आरोहणानि । ‘ सामान्यवर्णने ... ‘ रक्तत्वं रत्नबन्धूकबिम्बाम्भोजविवस्वताम् ’ इति देवेशः । तानि इति धीः ज्ञानविशेषः भ्रान्तिः ‘ धीर्ज्ञाने ज्ञानभेदेऽपि ’ इति सुधा । ताम् व्यभावयत् प्रापयत् आपादयामास । पद्मरागमणिसोपानभ्रान्तिं जनयामासेत्यर्थः । विपूर्वाद्भवतेर्हेतुमण्ण्यन्ताल्लङ् । “ शक्तिप्राप्त्योर्विभवति प्राकट्ये व्युद्भवत्यपि ” इति भट्टमल्लः । सूर्यास्तमयसमये पश्चिमसमुद्रप्रतिफलितसूर्यप्रतिबिम्बितानि नभोमार्गादवतीर्य समुद्रे प्रविशतस्सूर्यस्य तस्मिन्नवरोहणार्थे निर्मितानि पद्मरागमणिसोपानानीति भ्रान्तिं जनयन्तीति वर्णनात् भ्रान्तिमानलङ्कारः ॥

पूर्ववर्ण्यमेव भङ्ग्यन्तरेण वर्णयति –

**चरमाम्बुधिवीचिचुम्बित**
**प्रतिबिम्बाश्रयि मण्डलं रवेः ।**

**दिवसान्तनटस्य धूर्जटे**
**र्विदधे काञ्चनतालविभ्रमम् ॥** ॥ 9 ॥

**चरमेति ॥** चरमाम्बुधिः पश्चिमसमुद्रः तस्य वीचयः तरङ्गाः तैः चुम्बितानि स्पृष्टानि प्रतिबिम्बानि प्रतिच्छायाः तानि आश्रयितुं शीलमस्येति णिनिः। पश्चिमसमुद्रतरङ्गप्रतिबिम्बितमिति यावत्। तादृशम् रवेः मण्डलम् सूर्यबिम्बम् 'मण्डलं देशबिम्बयोः' इति सुधा। तरङ्गाः हस्ता इव भान्तीति तत्संस्पर्शो मण्डलस्य हस्तधृतत्वं संपादयतीति ज्ञायते। तत् कर्तृ। दिवसान्तः सायंकालः तस्मिन् नटस्य नाटचमाचरितुः धूर्जटेः शिवस्य। 'कृशानुरेतास्सर्वज्ञो धूर्जटिर्नीललोहितः' इत्यमरः। तस्य काञ्चनतालः सुवर्णनिर्मितो वाद्यविशेषः (तालखण्डः) स इति विभ्रमः भ्रान्तिः। सूर्यबिम्बस्य वर्तुलत्वाल्लोहितत्वाच्चैवमुक्तिः। 'विभ्रमो भ्रान्तिहावयोः' इति सुधा। विदधे वितेने अकरोत् जनयामास पश्यतां जनानामित्यर्थः। उद्धतं परिभ्रमति समुद्रे तस्मिन् प्रतिबिम्बितं तरङ्गसम्मिलितमरुणं सूर्यमण्डलम् दृष्ट्वा प्रदोषे ताण्डवमाचरतो धूर्जटेर्हस्तसंपृक्तं सुवर्णतालखण्डमिदमिति प्रजा बभ्रमुरिति भ्रान्तिमानलङ्कारः॥

संध्याकालो वर्ण्यते —

**चलचञ्चुपतद्बिसाङ्कुरै**
**र्दिननाथार्पितदीनदृष्टिभिः।**
**रजनीविरहव्यथातुरै**
**रथ चक्राह्वयुगैरभूयत ॥** ॥ 10 ॥

**चलदिति ॥** अथ अनन्तरम् अस्तमिते सूर्ये इत्यर्थः। चक्राह्वयुगैः चक्रवाकमिथुनैः। कर्तृभिः। रजनी रात्रिः तस्यां विरहः



परस्परं वियोगः तस्मात् व्यथा तज्जनितं दुःखम् तेन आतुरैः पीडितैः। वियोगसंभावनया भृशं दुःखितैरिति भावः। अतएव चलत इति चलौ कम्पमानौ भयादित्यर्थः। सर्वाङ्गवेपथुश्चानेन द्योत्यते। तादृशौ चञ्चू त्रोटी नासापुटाविस्यर्थः। ताभ्याम् पतन्तः गलन्तः अधो गच्छन्तः बिसाङ्कुराः मृणालनवोद्गमाः येषु तैः। भक्षणार्थं मुखेन नवमृणालानि परिगृह्य हठाज्जातसंभ्रमेण वैवश्यमापन्नेषु तेषु तन्मुखेभ्यः पतन्ति तानि स्वयमेवेति भावः। अनेन सर्वाङ्गवेपथुर्वैचित्यमित्यनुभावौ स्तम्भाख्यस्सात्त्विकभावस्त्रासावेगसम्मोहसंभ्रमजाड्यादयस्संचारिणश्च सूच्यन्ते। किञ्च दिननाथः सूर्यः तस्मिन् अर्पिताः निक्षिप्ताः दीनाः अनुद्धताः दयनीयाः कृपणाः दृष्टयः वीक्षणानि यैः तैः। सूर्योऽस्तमेति रात्रिरायाति रात्रौ च विरह इति संभवदरिष्टागमशङ्कया विगतहर्षाः भवत्पुनरागमः कदा पुनरस्माकं समागमः कदा भोरिति शोचन्तस्तं पश्यन्तीति वैवर्ण्यमनुभावः। दैन्यं ग्लानि धृतिरुन्माद इत्येवं संचारिणश्च सूच्यन्ते। एतादृग्विधैः अभूयत अभावि अजनि। भूधातोः भावे लङ्। अत्र भयानको रसः। तस्य च स्थायी भयम्। स च पूर्वोक्तैस्त्रासदैन्योन्मादसंभ्रमादिभिस्संचारिभिः स्तम्भवैवर्ण्यादिसात्त्विकैस्सर्वाङ्गवेपथुदैन्याद्यैरनुभावैः रसपरिपोषकसाधनैस्समुल्लासितस्स्वादुतां भजन् रसतामायाति। भयानकस्य लक्षणं त्वेवमुक्तम् — "विकृतस्वरसत्त्वादेर्भयभावो भयानकः। सर्वाङ्गवेपथुस्वेदशोकवैवर्ण्यलक्षणः। दैन्यसंभ्रमसम्मोहत्रासादिस्तत्सहोदरः" इति। तिर्यगादेः रसानुभूतिर्नास्तीति रसस्य तिर्यगालम्बनं रसाभासं मन्यन्ते केचित्। अत्र विद्याधरः "विभावादिसंभवो हि रसं प्रति प्रयोजको न विभावदिज्ञानम्। ततश्च तिरश्चामप्यस्त्येव रस" इति॥

**उदधौ पतितस्य भास्वतः**
**कतिभिश्चित्किरणैः खर्वातिभिः।**

**उदपाद्यत कालकुञ्जरो**
**द्दलिताहर्द्रुमशाखिकाभ्रमः ॥** ॥ 11 ॥

**उदधाविति ॥** उदधौ समुद्रे पतितस्य निपतितस्य तत्र प्रविष्टस्येत्यर्थः । 'उदन्वानुदधिस्सिन्धुः' इत्यमरः । तथाविधस्य भास्वतः सूर्यस्य । खे आकाशे वर्तितुम् स्थातुम् शीलमेषामिति णिनिः । आकाशव्यापिभिरित्यर्थः । कतिभिः परिच्छेदस्वभावसंख्यावद्भिः गणयितुं शक्यैः । 'किमस्संख्यापरिमाणे डति च' इति डतिः । चिदित्यसाकल्ये । असमग्रैः 'असाकल्ये तु चिच्चन' इत्यमरः । तादृशैः किरणैः मयूखैः कैश्चन किरणैरिति यावत् । तैः प्रयोजककर्तृभिः । कालः समयः 'कालो दिष्टोऽप्यनेहापि समयः' इत्यमरः । स एव कुञ्जरः गजः दुर्निवारप्रवृत्तिमत्त्वादुभयोरेवमुच्यते । तेन उद्दलितः विदारितः भेदितः । अहः दिनम् तदेव द्रुमः वृक्षः तस्य शाखिकाः (शाखा एव शाखिकाः । स्वार्थे कः) वृक्षांशाः 'शखा द्रुमांशे वेदांशे भुजे पक्षान्तरेऽन्तिके' इति हैमः । ता इति भ्रमः भ्रान्तिः उदपाद्यत समुदपादि उत्पादितेत्यर्थः । उत्पूर्वात् पद गतौ – इत्यस्माण्ण्यन्तात्कर्मणि लङ् । अस्तं गच्छन् सूर्यः पश्चिमसमुद्रे प्रविशति तदानीं केचन किरणास्तस्य व्योम्नि प्रसरन्ति । परमेश्वरस्वरूपिणः कालस्य नियोगेन दिवसो नष्टः । तस्मिन्नष्टेऽपि तदीयाः किरणाः केचन तत्र भान्ति । कालनियोगस्य दुर्निवारप्रसरत्वेन स गज इति इदानीं भग्नो दिवसः पूर्वमनन्तैः कान्तिकिरणैर्नभो व्याप्य स्थित इति शाखोपशाखाभिर्युतो वृक्षस्त इति कालनियोगेन च तदपगम इति कुञ्जरदलितवृक्षस्स इति शिष्टास्तदंशभूताः कान्तयस्तादृग्वृक्षांशाश्शाखा इति सुष्ठु युज्यते भ्रान्तिरत्रेति भ्रान्तिमानलङ्कारः । कालकुञ्जरेत्यादि रूपणं च भ्रान्तिप्रयोजकमिति रूपकभ्रान्तिमतोरङ्गाङ्गिभावेन सङ्करः ॥



**पतयालुपतङ्गमण्डल**
**क्षरदंशूत्करराञ्जिताकृतिः ।**
**मधुकैटभरक्तलोहिता**
**मुदधिः प्राप पुरातनीं दशाम् ॥** ॥ 12 ॥

**पतयाल्विति ॥** उदधिः समुद्रः । कर्ता । पतयालु पातुकम् पतनशीलम् दिने दिने ( स्वस्मिन् ) पतदित्यर्थः । 'पतयालुस्तु पातुके' इत्यमरः । 'स्पृहिगृहिपतिदयानिद्रातन्द्राश्रद्धाभ्य' इत्यालुच् । पतङ्गस्य सूर्यस्य 'पतङ्गश्शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते' इति मेदिनी । तस्य मण्डलम् बिम्बम् सूर्यबिम्बमित्यर्थः । तस्मात् क्षरन् प्रवहन् अविच्छिन्नतया बहिर्निर्गच्छन् अंशूत्करः किरणपुञ्जः 'पुञ्जराशी तूत्करः कूटमस्त्रियाम्' इत्यमरः । तेन रञ्जिता आरुण्यं प्रापिता । रञ्ज रागे – ण्यन्तात्कर्मणि क्तः । "रज्यति त्रीणि रजति लोहितायति चात्मने । शोणतीति च रञ्जिम्नि" इति भट्टमल्लः । तादृशी आकृतिः आकारः ( निज ) रूपम् यस्य तथाभूतस्सन् । स्वस्मिन् प्रविष्टाभिस्सूर्यकान्तिभिर्लोहितमूर्तिर्भूत्वेत्यर्थः । मधुकैटभयोः तदाख्ययोः राक्षसयोः रक्तम् रुधिरम् 'रुधिरेऽसृग्लोहिताम्ररक्तक्षतजशोणितम्' इत्यमरः । तेन लोहिताम् रक्तवर्णाम् । पुरातनीम् पूर्वकालभवाम् पूर्वं संप्राप्ताम् । ('सायंचिरमिति ट्युः । ताम्ङीप्') दशाम् अवस्थाम् स्थितिम् तादृशीं स्थितिमित्यर्थः । प्राप अलभत । तादृश्या दशायाः इदानीं प्राप्तुमशक्यत्वात्सादृश्याक्षेपोऽत्रेति पदार्थनिदर्शनालङ्कारः । सूर्यस्य समुद्रप्रवेशादभितो व्याप्तास्सूर्यकान्तयो रक्तमयमिव समुद्रमकुर्वन् । अतोऽयं समुद्रः पुरा विष्णुसंहृतमधुकैटभरक्तरञ्जिततदानीन्तनसमुद्र इव स्थित इदानीमिति पिण्डीकृतोऽर्थः । 'पतयाल्वि' त्यादिपदार्था विशेषणगत्या हेतुताभाजोऽत्रेति लब्धसत्ताकं काव्यलिङ्गं परिपोषकमस्याः । अतस्तेन साकमियं संकी

र्यते । मधुः कैटभश्चेत्युभौ राक्षसौ श्रीमहाविष्णोर्लब्धजन्मानौ ब्रह्माणं पीडयतः । ब्रह्मणा प्रार्थितो जलशायी श्रीमहाविष्णुः पितामहरक्षणाय ताभ्यां वरमादाय तौ संहृतवान् । तन्मेदसा च जलमयी भूमिर्मेदिनी बभूवेति पौराणिकी गाथात्रानुसंधेया ॥

क्रमतो जहत्कान्तिरभूत्सूर्य इति तत्सूक्ष्मदशा एवाद्यापि प्रस्तूयन्ते —

**गतदीप्तिगभस्तिमालिनो**
**विलुठद्वीचिषु बिम्बमम्बुधेः ।**
**शफराः पलखण्डशङ्कया**
**रसनाभिर्लिलिहुर्मुहुर्मुहुः ॥** ॥ 13 ॥

**गतेति** ॥ शफराः प्रोष्ठाः मत्स्यविशेषाः 'प्रोष्ठी तु शफरी द्वयोः' इत्यमरः । अम्बुधेः समुद्रस्य । विलुठन्तः भृशं चलन्तः वीचयः तरङ्गाः तेषु । गभस्तिमालिनः अंशुमालिनः सूर्यस्य गता नष्टा दीप्तिः कान्तिः यस्मिन् तथोक्तम् । निस्तेजस्कम् कान्तिविहीनमित्यर्थः । अनेन मांसखण्डवर्णनसाम्यं सुष्ठु संपादितं भवति । तस्य बिम्बम् तदाश्रयं (बिम्बाकारं) सूर्यम् । अनेन बिम्बस्य खण्डभूतत्वमुक्तं भवति । पलस्य आमिषस्य मांसस्य खण्डः शकलम् 'पलमुन्मानमांसयो' रिति विश्वः । स इति शङ्कया । 'पलशङ्कये' ति मातृकापाठस्तु लेखकप्रमादमूलक इति संभाव्यते । रसनाभिः जिह्वाभिः । मुहुः पुनःपुनः । अनेन भ्रान्त्यतिशयस्तेषु गम्यते । लिलिहुः आस्वादयामासुः । लिह आस्वादने - लिट् । तरङ्गचलनैः खण्डशस्थितमरुणं सूर्यबिम्बं शफराणां मांसखण्डभ्रान्तिं जनयामासेति सारांशः । पलखण्डशङ्कायां हेतुत्वसमर्थनं 'गतदीप्ती' त्यादिभिर्विशेषणगत्या क्रियत इति काव्यलिङ्गं भ्रान्तिमता संकीर्यते ॥

तमसः प्रारम्भं प्रशंसति —



**स्खलितातपलेशमायतै**
**र्विटपिच्छायशतैर्वृतं जगत् ।**
**भयविद्रवदर्कसैनिकं**
**तिमिरैः क्रान्तमिवैक्ष्यत क्षणम् ॥** ॥ 14 ॥

**स्खलितेति** ॥ स्खलिताः संचलिताः आतपलेशाः अल्पप्रकाशाः यस्मिन् तथोक्तम् । 'प्रकाशो द्योत आतप' इत्यमरः । यत्र कुत्रचित् स्थितं वा नवेति संदिह्यमानया सूर्यकान्त्या युतमित्यर्थः । अतएव आयतैः दीर्घैः । विटपिनाम् वृक्षाणाम् छाया अनातपः विटपिच्छायम् । 'छाया बाहुल्ये' इति नपुंसकता । तेषाम् शतानि अनन्तानि असंख्याका वृक्षच्छाया इत्यर्थः । तैः वृतम् आवृतम् आक्रान्तम् जगत् भूतलम् । 'एकं महाभूतं पृथिवी । पञ्च महाभूतेन्द्रियविषयात्मकं तु जगत्' इति विवेकः । कर्म । क्षणम् अल्पकाले इत्यर्थः । 'कालाध्वनो' रिति द्वितीया । भयं भीतिः प्राणांस्त्यक्ष्याम इति मानस आवेगः । तेन विद्रवन्तः शीघ्रं गच्छन्तः धावन्त इति यावत् । तथाविधाः अर्कसैनिकाः सूर्यसैन्याः । 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इत्यमरः । ते यस्मिन् तथोक्तम् । तथाविधं सत् । तिमिरैः अन्धकारैः । परराजैरिति गम्यते । कर्तृभिः । क्रान्तम् आक्रान्तम् । वशीकृतमिति गम्यते । इवेति संभावनायाम् । तद्वत् स्थितमित्यर्थः । यथा कश्चन शात्रवो राजा सम्राजं कंचन प्रवासिनं विदित्वा तद्राज्याक्रमणाय सैनिकानसंख्याकान् प्रेषयति । ते च तद्रक्षकान् परसैनिकान् विद्राव्य तद्राष्ट्रमाक्रमन्ते परसैन्यानि च स्वप्राणरक्षणाय तत्र तत्र निलीय द्रुततरमन्तर्दधति तद्वदिति भावः । अत्र च स्वरूपोत्प्रेक्षायां पूर्ववाक्यार्थो हेतुभावमापन्नस्समर्थनीयमर्थं समर्थयतीति वाक्यार्थं प्रति वाक्यार्थहेतुकं काव्यलिङ्गम् । एतच्चोत्प्रेक्षया साकं संकीर्यते ॥

**प्रवसन् दिवसात्यये न्यधा**
**दुभयेषूभयमुष्णदीधितिः ।**
**हृदयेषु वियोगियोषितां**
**परितापं त्विषमोषधीषु च ॥** ॥ 15 ॥

**प्रवसन्निति** ॥ दिवसात्यये सायंकाले । उष्णदीधितिः चण्डांशुः सूर्यः प्रवसन् अस्तमयन् लोकान्तरं गच्छन् । वियोगियोषिताम् विरहिणीनाम् हृदयेषु मनस्सु । ओषधीषु तृणज्योतिष्षु । ‘ ओषध्यः फलपाकान्ता ’ इत्यमरः । ‘ कृदिकारादक्तिन ’ इति ङीष् । उभयेषु एतद्द्वये परितापम् संतापम् विरहतापम् त्विषम् कान्ति च उभयम् एतद्द्वयम् । ‘ उभयोऽन्यत्रे ’ ति उभशब्दात् संख्यावाचिनस्स्वार्थेऽयच् । न्यधात् न्यक्षिपत् न्यासतया चिक्षेप । निपूर्वाद्धाञो लुङ् । रात्रावोषध्यः कान्तिमत्यो वर्तन्ते । विरहिण्यश्च चन्द्राद्युद्दीपकसामग्र्याः पुष्कलत्वेन प्रियविरहेण खिद्यन्ते । सूर्यस्य च गुणौ द्वौ । प्रकाशः तापश्चेति । अस्तमयन् स पुनरागत्य ग्रहीष्यामीति तौ न्यासौ कृत्वा ताभ्यामदादिति प्रौढोक्तिः । “ महौषधिं नक्तमिवात्मभास ” इत्योषधीनां रात्रिप्रकाशः प्रसिद्धः । “ अग्नावोषधीषु च तेजो निधाय रविरस्तं याति ” इत्यागमः । वियोगिनां रात्रौ संतापातिशयः प्रत्यक्षदृष्टो बहुधा कविभिर्वर्णितश्च । एवं वर्णने कालिदासोऽस्या मार्गदर्शीव भाति – “ पुनर्ग्रहीतुं नियमस्थया तया द्वयेऽपि निक्षेप इवार्पितं द्वयम् । लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टिं हरिणाङ्गनासु च ” इति । अत्र देशान्तरं गच्छन् प्रवासी यथा वा स्वीयान्यनर्घाणि वस्तूनि रक्षितुकामो विश्वासपात्रेषु जनेषु न्यासतया तानि निक्षिप्य निर्विचारं गच्छति तद्वदयमित्यत्र लौकिकव्यवहारस्य समारोपात्ससोमाक्तिः ॥



**खगमेकमवेक्ष्य तादृशं**
**पतितं विष्णुपदातिलङ्घनात् ।**
**निभृतं चकिता इवाखिला**
**स्तरुनीडेषु विलिल्यिरे खगाः ॥** ॥ 16 ॥

**खगमिति** ॥ अखिलाः सर्वे । खगाः पक्षिणः । कर्तारः । एकत्र आकाशगामित्वेन अन्यत्र सजातीयत्वेन साम्यादेवमुक्तिः । तादृशम् अनन्यादृशम् निरुपमम् एकत्र तेजस्वित्वेन अन्यत्र बलवत्त्वेन च । एकम् प्रधानम् । ‘ एके मुख्यान्यकेवलाः ’ इत्यमरः । खगम् ग्रहम् ग्रहराजम् सूर्यम् । अन्यत्र तादृशम् खगम् पक्षिणम् पक्षिराजम् गरुत्मन्तम् । ‘ खगस्सूर्ये ग्रहे देवे मार्गणे च विहङ्गमे ’ इति मेदिनी । तम् । कर्म । विष्णुपदातिलङ्घनात् – विष्णुपदम् आकाशः । अन्यत्र श्रीमहाविष्णोर्वचनम् तदाज्ञारूपम् । ‘ वियद्विष्णुपदं वापि पुंस्याकाशविहायसी ’ इत्यमरः । ‘ पदं शब्दे च वाक्ये च व्यवसायापदेशयोः ’ इति विश्वः । एकत्र तस्मिन् अतिलङ्घनम् अत्यन्तं गमनं निरन्तरप्रस्थानम् । अन्यत्र तस्य अतिलङ्घनम् अतिक्रमणम् उल्लङ्घनम् निराकरणम् अकरणमिति यावत् । तस्मात् । पतितम् ( एकत्र ) अधोगतम् पश्चिमसमुद्रान्तःप्रविष्टम् । अन्यत्र धर्माद् भ्रष्टम् पातकिनम् । अवेक्ष्य ( एकत्र ) दृष्ट्वा, अन्यत्र आलोच्य ज्ञात्वा । चकिताः भीता इव । तादृशयोस्तयोरेव विष्णुपदातिलङ्घनेन पतितत्वं समभूत्किमुतास्माकमिति भयं प्राप्ता इवेति भावः । निभृतम् निश्चलं यथा तथा । तरुनीडेषु वृक्षस्थस्वकुलायेषु ‘ कुलायो नीडमस्त्रियाम् ’ इत्यमरः । न्यलीयन्त अन्तर्दधिरे आत्मानमदर्शनमनयन् । सूर्योऽत्यन्तं स्वव्योमगमनेन दिनं करोति । तदनन्तरं च पश्चिमसमुद्रे पतितोऽस्तं याति । एतदेवात्र सूर्यस्य व्योमातिलङ्घनेन पतितत्वम् । गरुत्मांश्च विष्णवाज्ञाधिक्कारेण धर्मबाह्यः पतितोऽभवत्पुरा । एतदेवात्र गरुत्मतः

पतितत्वम् । एतयोरेको ग्रहराट् । अपरः पक्षिराडिति द्वावप्येतौ खगराजौ । एतत्खगपतनं खगानामेतेषामतिभयसंधायकमभवत् । अत इमे ह्यात्मत्राणाय तत्पतनहेतुभूतं विष्णुपदातिलङ्घनं विहाय स्वनिवासेषु प्रविश्य निश्शब्दं स्थिता इति श्लोकार्थः। आहाराय दिवा तत्र तत्र परिभ्रम्य सूर्यास्तमये स्वकुलायप्रवेशः, तत्र निश्शब्दस्थितिश्च पक्षिणां स्वभावः। स एवेत्थं वर्ण्यते कविना स्वप्रौढोक्त्या । अत्र पक्षिणां कुलायप्रवेशे निश्शब्दस्थितौ वा भीतिर्न हेतुः । तथापि हेतुत्वसंभावना तस्या इति गुणस्वरूपोत्प्रेक्षेयम् । एषा च श्लेषमूलातिशयोक्तिसमुज्जीवितेति तया साकं संकीर्यते । पुरा कदाचिद् गरुत्मान् मणिनाग इति नागकुमारं शेषतनयं भक्षितुं प्रवृत्तः । स च शिवभक्त इति शिवसंदिष्टो हरिर्न तं भक्षयेति गरुडमनुशशास । एवमनुशिष्टोऽपि भगवता वैनतेयस्तदाज्ञां तृणाय मत्वा भक्षयामास तं नागकुमारम् । तेन कुपितेन त्रिष्णुना शप्तः पतितो भूत्वायं सत्त्वहीनतामवाप । ततश्शिवानुग्रहेण गौतम्यां स्नात्वा निजपापाद्विमुक्तः पुनस्सत्त्वमवापेति ब्रह्मपुराणगाथात्रानुसंधेया ॥

अस्तमिते सूर्ये पद्मसंकोचं वर्णयति —

**घटमानदलाररीपुटं**
**नलिनं मन्दिरमिन्दिरास्पदम् ।**
**परिपालयति स्म निक्वणन्**
**परितो यामिकवन्मधुव्रतः ॥** ॥ 17 ॥

**घटमानेति** ॥ मधु व्रतं भक्ष्यणीयं यस्य । मधुव्रतः भृङ्गः। मधुपायीति च गम्यते । 'मधुव्रतो मधुकरो मधुलिण्मधुपालिनः' इत्यमरः। सः कर्ता। यामेषु भवः यामिकः। प्रहरचारी आरक्षकः। तेन तुल्यम् यामिकवत् । यामिको यथा धनागारं परिपालयति



तद्वदित्यर्थः। 'तेन तुल्यं क्रिया चे' दिति वतिः। घटमानानि परस्परं संयुज्यमानानि संकोचन्तीति यावत् । तथाविधानि दलानि (पद्म) पत्राणि । तान्येव अरयौ कवाटौ । 'अथ त्रिषु कपाटमररं तुल्ये' इत्यमरः। इदन्तोऽप्ययम् । 'अररम् पुनः । कपाटोऽररिः कवाटः' इति हैमः। अतएव "प्रेर्यन्तेऽमी परमररयो हर्म्यवाताय नाना' मिति कप्पणाभ्युदयकारः। ऋ गतौ – 'सर्वधातुभ्य' इत्यौणादिक इन् । अतएव 'कृदिकारादक्तिन' इति पक्षे ङीष् च। तयोः पुटम् आच्छादनम् बन्धनम् यस्मिन् तथोक्तम्। तथाविधम् नलिनम् पद्मम् । कर्म । 'वा पुंसि पद्मं नलिन' मित्यमरः। तदेव इन्दिरा लक्ष्मीः (लक्ष्मीसंपदोरैक्यम्) संपत् 'इन्दिरा लोकमाता मा रमा मङ्गलदेवता' इत्यमरः। तस्याः आस्पदम् स्थानम् तदाश्रय इत्यर्थः। 'आस्पदं प्रतिष्ठाया' मिति साधुः। मन्दिरम् गृहम् लक्ष्मीनिवासभवनम् (राज्ञः) कोशागारमिति यावत् । लक्ष्म्याः पद्मालयत्वाल्लक्ष्मीशोभयोरैक्यस्य कविसमयसिद्धत्वाच्चैवमुक्तिः। तम् परितः तस्य समन्तात् । 'अभितः परित' इति द्वितीया। तमभिव्याप्य । तस्य सर्वतो भ्राम्यन्निति भावः। निक्वणन् भृशं कूजन् । अन्यत्र उच्चैराक्रोशन् । परिपालयति स्म अरक्षत् । 'लट् स्म' इति लिटोऽपवादो लट् । संकुचन्ति सरोजानि । तत्र मधु पातुमलब्धावकाशाः मण्डलीकरणेन तदभितो झंकुर्वन्तो भ्रमन्ति भ्रमराः। यथा यामिकाश्चण्डालादयः प्रतियामं बद्धकवाटं धनागारं रक्षन्तः प्रहरेषूच्चैराक्रोशन्तस्तदभितश्चरन्तीत्युपमार्थः। अत्र दलेषु कपाटत्वाद्यारोपस्साम्यसंपादनेन चरितार्थस्सन्नुपमामुपबृंहयतीति रूपकानुप्राणितोपमालङ्कारः॥

**अधिपङ्कजकोशमादधे**
**बहिरालीनमधुव्रतच्छलात् ।**
**मधुसौरभरक्षणोत्सुका**
**दिनलक्ष्मीरिव लक्ष्म जातुषम् ॥** ॥ 18 ॥

**अधिपङ्क्वेति** ।। दिनलक्ष्मीः दिवसशोभा सैव लक्ष्मीः ( लक्ष्मी शोभयोरैक्यात् । ) सा कर्त्री । मधुनः मकरन्दस्य सौरभम् सुगन्धः तस्य रक्षणम् अन्यहस्तगतं यथा न भवति तथा परिपालनम् । तत्सौगन्ध्यसौष्ठवस्य यथावदवस्थापनं च । तत्र उत्सुका सोत्कण्ठा इष्टार्थप्राप्तौ सप्रयत्ना । पङ्कजकोशः पद्ममुकुलम् तदेव पात्रमिति गम्यते । रक्षणीयस्य वस्तुनः पात्रादिषु निक्षिप्य मुद्राप्रक्षेपणस्य लोक दृष्टत्वादेवमुच्यते । 'कोषोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके जातिकोशेऽर्थसंघाते पेश्यां शब्दादिसंग्रहे" इति मेदिनी । तस्मिन् अधिपङ्कजकोशम् । विभक्त्यर्थेऽव्ययीभावः । बहिः बाह्यप्रदेशे अर्था त्तस्यैवेत्यर्थः । आलीनाः गाढं संपृक्ताः मधुव्रताः भृङ्गाः त एव छलम् व्याजः । वस्तुतो न तथेति भावः । तस्मात् । जतुनो विकारः जातुषम् लाक्षामयम् 'राक्षा लाक्षा जतु क्लीबे यावोऽलक्तो द्रुमा मयः' इत्यमरः । 'त्रपुजतुनोः' षुगित्यण्षुकौ । लक्ष्म चिह्नम् मुद्रणा तत् आदधे प्रचिक्षेपेव निक्षिप्तमकरोदिवेत्यर्थः । आङ्पूर्वात् धात्रो लिट् । अस्तमिते सूर्ये पद्मसंकोचो जातः । मुकुलीभूतानि तान्याच्छाद्य ( गाढमाश्लिष्य ) परितस्तदुपरि तिष्ठन्ति विनीला मधुकराः । तदेवं संभाव्यते । दिनलक्ष्मीः स्वसौभाग्यभूतं पद्मसौगन्ध्यं परापहृतं यथा न स्यात् तत्सौभाग्यं च न लुप्तं यथा स्यात्तथा तस्मिन् लाक्षया मुद्रां निक्षिप्य तद्रक्षणं करोति किमिति । अत्र मधुव्रता न मधुव्रताः इति छलशब्देन तेष्वसत्यत्वप्रतिपादनं कृतमिति कैतवाप ह्नुतिः । एवमसत्यत्वप्रतिपादनं द्वारीकृत्य दिनलक्ष्मीनिहितलाक्षामुद्रि कात्वसंभावना तेषु प्रवृत्तेत्येषापह्नुतिरनया ( स्वरूपोत्प्रेक्षया ) संकी र्यते । वसन्तर्तुप्रस्तावे कविरनन्तभट्टोऽपि स्वचम्पूभारते प्रकथयत्येव मेव । "कुरुकेलिवनेषु मल्लिकाकुसुमेषु भ्रमरावली बभौ । ऋतुना मधुगन्धगुप्तये जतुनाग्रे निहितेव मुद्रणा" इति ।।



**दिनवेषमपास्य यामिनी**
**वपुषा कालनटस्य नृत्यतः ।**
**ददृशे जगता पितृप्रसू**
**र्दिवि नेपथ्यपटीव पाटला ।।** ।। 19 ।।

**दिनेति** ।। जगता चरात्मकेन विष्टपेन तत्स्थैः जनैरित्यर्थः । 'जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु' इति मेदिनी । पितृप्रसूः संध्या सायंसंध्येत्यर्थः । 'संध्या पितृप्रसूस्सन्धा' इति शब्दा र्णवः । पितॄन् प्रसूते इति क्विप् । अत्र भविष्यपुराणम् । "पिता महः पितॄन् सृष्ट्वा मूर्तिं तामुत्ससर्ज ह । सा प्रातस्सायमागत्य संध्यारूपेण पूज्यते ।। एतां संध्यां यतात्मानो ये तु दर्घमुपासते । दीर्घायुषो भविष्यन्ति नीरुजः पाण्डुनन्दन" इति । दिनम् दिवसम् तदेव वेषः भूमिकाधारणम् नाटयनियुक्तपुरुषादिरूपपरिग्रहः । तम् अपास्य परित्यज्य । तद्वेषधारणेन कर्तव्यार्थस्य निर्वर्तितत्वादिति भावः । यामिनी रात्रिः सैव वपुः प्रशस्ताकृतिः स्त्रीवेषधारणमिति द्योत्यते । 'वपुः क्लीबं तनौ शस्ताकृतावपि' इति मेदिनी । तेन । कालः समयः परमेश्वररूपी "कालोऽयं भगवान्विष्णुरनन्तः परमेश्वरः । तद्वेत्ता पूज्यते सम्यक् पूज्यः कोऽन्यस्ततो मतः" इति । तस्य च वस्तुतो नीरूपत्वेन तस्य वेषधारणं नटनं चौचित्यं पोषयति । स एव नटः शैलूषः प्रपञ्चगतसुखदुःखादीनामाधारभूत इव दृश्यमानत्वा देवमुक्तिः । 'रङ्गावतारी शैलूषो नटो भरतभारतौ' इति वाचस्पतिः । तस्य । नृत्यतः नाटयतः सुरुचिरवेषधारणेन नर्तितुमारभमाणस्य सत इत्यर्थः । दिवि आकाशे । रङ्गस्थल इति गम्यते । पाटला रक्तवर्णा नेपथ्यम् वेषभेदः तद्धारणमित्यर्थः । 'नेपथ्यं तु प्रसाधने । रङ्गभूमौ वेषभेदे' इति हैमः । तदर्थं पटी सुरुचिरं वस्त्रम् तिरस्क रणी जवनिकेति यावत् । 'सुचेलकः पटोऽस्त्री' इत्यादिभिरमर

सिंहादयः। पटशब्दो न स्त्रीति वदन्ति। 'स्त्रियां काचिन्मृणालादि' रितिरीत्याऽयं साधुः। श्रीहर्षः कर्पटशब्दस्य 'पटः पटी' इति रूप द्वयमुदाजहार। स्वकोशे 'कर्पटश्च पटश्चापि पटी चापि प्रकीर्तिता' इति। सेव ददृशे आलोकि तथा विज्ञातेत्यर्थः। सायंसंध्या रक्त वर्णा भाति। इयं सन्ध्या, दिवसश्च रात्रेश्च मध्ये तत्संघटनात्मिका विराजते। दिवसरात्री च कालपुरुषस्य द्वे मूर्ती। तयोर्व्यवधानं च संध्यया क्रियते। जवनिका च नटसामाजिकयोर्मध्ये स्थित्वा वेषा न्तरधारिणं नटमन्तर्धापयति। अतो भगवान् कालपुरुषो विनोदाय रङ्गतले व्योम्नि स्वनाट्यं प्रदर्शयन् दिवसवेषं धृत्वा समुचितमभि नीय तं परित्यज्य पुनर्यामिनीवेषं धरति। तदन्तरा निक्षिप्ता तिर स्करणी किमेषेति स्वरूपोत्प्रेक्षा। तस्याश्च समुज्जीवकं कालनटस्ये त्यादि रूपकमित्येतयोस्सङ्करः॥

**रविरथ्यखुरोत्थितापर**
**क्षितिभृद्गैरिकरेणुशोणया।**
**क्षणमेकमकारि सन्ध्यया**
**वरुणाशारुणकञ्चुकभ्रमः॥** ॥ 20 ॥

**रविरथ्येति ॥** रवेः सूर्यस्य रथ्याः अश्वाः सप्तेत्यर्थः। 'तद्वहती' ति यत्। तेषाम् खुराः शफाः तेभ्यः उत्थितः उद्गतः। अपरक्षितिभृतः अस्ताचलस्य गैरिकाः धातुविशेषाः लोहितवर्णाः 'गैरिकं धातुरुक्मयोः' इति सुधा। तेषाम् रेणुः परागः तेन शोणया रक्तवर्णया भृशं रक्तयेत्यर्थः। सन्ध्यया सायंसन्ध्यासमयेन एकम् एक संख्यायुतम् क्षणम् कालविशेषः मुहूर्तकालम् मुहूर्तकालं सर्वमभि व्याप्येत्यर्थः। अन्यन्तसंयोगे द्वितीया। 'क्षणो व्यापारशून्यत्वमुहूर्तो त्सवपर्वसु' इति रुद्रः। वरुणाशा पश्चिमा दिक्। सैव सुन्दरीति गम्यते। तस्याः अरुणः रक्तवर्णः कञ्चुकः चोलकः स्तनावरणम् स



इति भ्रमः भ्रान्तिः। सः कर्म। अकारि अकृत व्यतनुत तादृश भ्रान्ति जनयामासेत्यर्थः। डु कृञ् – कर्मणि लुङ्। अत्र पश्चिम दिशि संजातोऽरुणिमा अस्तमयमानस्तां दिशं प्रत्यस्ताद्रौ प्रस्थितस्य सूर्यस्य रथ्यखुरघट्टनैः चूर्णीकृतानां गैरिकधातूनां परागैरुच्चालितै र्जातं किमित्युत्प्रेक्षा। एवंविधारुणिम्नालङ्कृता सायंसन्ध्या पश्चिम दिक्सतीमणिधृतारुणकञ्चुक इति धियं जनयति। अतएव भ्रान्ति मान्। गम्योत्प्रेक्षा चैतस्मिन्नरुणपाटवं संपादयन्ती कञ्चुकैर्भूयस्साम्यं संघटय्य पोषयत्यमुमित्यङ्गाङ्गिभावेनैतयोस्संकरः। अत्र दिगङ्गना स्वप्रियश्चन्द्रस्समागच्छत्यचिरादेवेत्यात्मानं वासोलङ्कारेण भूषयित्वा तदागमनं प्रतीक्षत इति वासकसज्जिका। अस्याः लक्षणमित्थमुक्तं दशरूपके – "मुदा वासकसज्जा स्वं मण्डयत्येष्यति प्रिये" इति। 'क्षणमकारि' इत्यनेन सन्निहितरात्रिसमागमा संध्यात्र वर्णितेति सा चात्यन्तमारुण्यवतीति च ज्ञायते॥

सान्ध्यमेघान्वर्णयति —

**वियति व्यरुचन् पयोधराः**
**स्फुटसन्ध्यापरिपाटलत्विषः।**
**अचिरावतरद्विभावरी** ॥ 21 ॥
**पदलाक्षापटलानुकारिणः॥**

**वियतीति ॥** स्फुटा अभिव्यक्ता विस्पष्टं प्रकाशमाना सन्ध्या सन्धा सन्ध्याकालः। 'सन्ध्या पितृप्रसूस्सन्धा' इति शब्दार्णवः। तया परितः सर्वतः पाटलाः रक्तवर्णाः त्विषः कान्तयः येषु ते तथोक्ताः। तथाविधाः पयोधराः मेघाः सान्ध्यमेघाः। कर्तारः। सन्ध्यायाः रक्तवर्णत्वात्तदानींतना मेघा अपि रक्तवर्णास्संपद्यन्त इत्येवमुच्यते। अतएव 'सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः' इति मेघः। अचिरात् अविलम्बितम् शीघ्रमेवेत्यर्थः। अवतरन्ती प्रादुर्भवन्ती समा

गच्छन्ती । स्वप्रियं निशाकरं सेवितुमिति भावः । विभावरी रात्रिः प्रियेति गम्यते । 'विभावरी तमस्विन्यौ रजनी यामिनी तमी' इति रात्रिपर्यायेष्वमरः । 'पुंवत्कर्मधारये' ति पुंवद्भावः । तस्याः पदयोः पादयोः लाक्षापटलम् अलक्तकसमूहः अलङ्करणार्थं धृतः पादौ तिरोधाय स्थित इत्यर्थः । तम् अनुकुर्वन्ती अनुसरन्ती तेन सदृशी भवन्तीति णिनिः । तादृशास्सन्तः वियति आकाशे 'वियद्विष्णुपदं वापि पुंस्याकाशविहायसी' इत्यमरः । व्यरुचन् प्राकाशन् । विपूर्वात् रुच दीप्तावित्यस्माल्लुङ् । चन्द्रप्रिया रात्रिनायिका प्रियसमागमार्थं निज पादौ लाक्षया रञ्जितौ कृत्वा समायातीति त(त्पद) ललाक्षारसकान्तयो मेघोपरि पतत्यः तान् रक्तवर्णानकरोतिकमित्युपमोपक्रमस्वरूपोत्प्रेक्षेयम् ॥

**नवपल्लवकोमलच्छवि**
**र्दिवि सान्ध्यो ददृशे महोभरः ।**
**रविपातरयात्समुत्थित**
**श्वरमाब्धेरिव विद्रुमोत्करः ॥** ॥ 22 ॥

**नवेति** ॥ दिवि आकाशे । नवपल्लवाः सद्यो जाताः किस लयाः । अनेन सौकुमार्यातिशयः आरुण्यातिशयश्च तेषु कथ्यते । तद्व त्कोमलाः मनोहराः छवयः कान्तयः पल्लवारुणाः पल्लवमनोज्ञा स्तत्कान्तय इत्यर्थः । तथाविधाः यस्मिन् तथोक्तः । तादृशः सान्ध्यः सन्ध्यायास्संबन्धी । अण् । महोभरः तेजोऽतिशयः । कर्म । रवेः सूर्यस्य पातः पतनम् पश्चिमसमुद्रे निपतनम् तस्य रयः वेगः सवेगं पश्चिमसमुद्रनिपतनमित्यर्थः । तस्मात् समुत्थितः समुद्गतः समुच्च लितः । समुद्रादाकाशं प्राप्त इति भावः । तथाविधः विद्रुमोत्करः प्रवालसमूहः स इवेत्युत्प्रेक्षा । समुद्रस्य रत्नाकरत्वादेवं संभाव्यते । तथा ददृशे अदर्शि अज्ञायि । जनैरिति शेषः । दृशिर् कर्मणि — लिट् । सूर्यो महता वेगेन समुद्रे पतितः इति तद्वेगातिशयेन समु



त्क्षिप्ता आकाशे विराजमानाः प्रवाला इव सान्ध्यतेजांसि सुप्रसन्ना न्यरुणानि च भूत्वा नभसि व्याप्तानीति सारांशः । अत्र सान्ध्य तेजस्सु समुद्रोत्थितप्रवालत्वसंभावनेति द्रव्योत्प्रेक्षा । नवपल्लवकोमलेत्यु पमा चास्यां साम्यसंपादनेन चरितार्थेति सङ्कीर्यतेऽनया ॥

अन्धकारं वर्णयति —

**उदियाय ततो दिगङ्गना**
**श्रवणाकल्पतमालपल्लवः ।**
**रजनीमुखपत्रलेखिका**
**रचनारङ्कुमदस्तमोऽङ्कुरः ॥** ॥ 23 ॥

**उदियायेति** ॥ ततः अनन्तरम् सन्ध्याकाले समतिक्रान्ते इत्यर्थः । तमोऽङ्कुरः — अङ्कुरम् अभिनवोद्गमः तद्वत्तमः अन्धकार इत्युपमितसमासः । अतिकोमलम् सूक्ष्मम् तिमिरमित्यर्थः । सः कर्ता । दिशः आशाः ता एव अङ्गनाः स्त्रियः । तासाम् श्रवणयोः कर्णयोः आकल्पः भूषणम् श्रवणावतंसः कर्णपूर इत्यर्थः । तथाविधः तमाल पल्लवः तापिञ्छकिसलयः । 'कालस्कन्धस्तमालस्स्यात्तापिञ्छोऽपि' इत्यमरः । तथाभूतः दिशायुवतिकर्णभूषायितनीलतमालपल्लववद्विराज मान इत्यर्थः । किञ्च । रजनी रात्रिः सैव नायिका तस्याः मुखम् आननम् तदेकदेशभूतं कपोलादि । लेखैव लेखिका । स्वार्थे कः । पत्राकारा लेखिका पत्रलेखिका पत्राङ्गुलिः कपोलादौ विरचितानि मकरिकापत्राणीति यावत् । 'पत्रलेखा पत्राङ्गुलिरिमे' इत्यमरः । तस्य रचना विन्यासः लेखनम् तदर्थे रङ्कुमदः मृगमदः कस्तूरी स इव स्थित इत्यर्थः । रात्रिरागमिष्यति । सा च चन्द्रप्रिया नायिका । अय तदागमनं सूचयन् सूक्ष्मः कोमलोऽन्धकारः प्रथमतस्समुत्पन्नः । अय मन्धकारश्च रात्रिनायिकया कर्णपूरतया धारणार्थं कल्पितो नवतमाल

पल्लव इव स्थित इति तात्पर्यार्थः । रूपकमलङ्कारः ॥

**किमु धूमभरः प्रशाम्यतो**
**द्युमणिग्रावगतस्य तेजसः ।**
**प्रससार दिशस्तमोमिषा**
**त्किमु मीलत्कमलालिसंचयः ॥** ॥ 24 ॥

**किम्विति** ॥ प्रशाम्यतः उपरमतः निर्वाणं प्राप्नुवतः । द्युमणिग्रावाणः सूर्यपाषाणाः सूर्यकान्तमणयः तान् गतम् प्राप्तम् तस्मिन् विद्यमानम् । 'द्वितीया श्रिते' ति समासः । तेजः दाहात्मिका दीप्तिः । सूर्यकान्ताश्च सौरतेजस्संपर्केण दाहात्मकं स्वतेजो वमन्ति । अस्तमिते तु सूर्ये (सूर्यकान्तौ प्रणष्टायाम्) ते स्वतेज उपसंहरन्तीत्येवमुच्यते । "निर्वाति निर्वायति विध्यायत्युद्रायतीति च । उद्राति शाम्यतीत्येते तेजसो विरतौ तु षट्" इति भट्टमल्लः । तस्य तत्सम्बन्धी तदीयः धूमभरः धूमातिशयः धूमपङ्क्तिः किमु तदीया धूमपरम्परा वेत्यर्थः । किम्विति (एवं वा एवं वेति) विकल्पे । अग्निनिर्वाणे सति धूमोद्गारस्य लोकदृष्टत्वादेवं संदिह्यत इति भावः । किञ्च । मीलन्ति संकुचन्ति कमलानि पद्मानि तथोक्तानि । तेषाम् अलयः भृङ्गाः । आधाराधेयभावे षष्ठी । तदाश्रिता भ्रमरा इत्यर्थः । तेषां संचयः समूहः । कर्ता । तमः अन्धकारः स इति मिषम् व्याजः वस्तुतो न तथेति निह्नवः । 'मिषं तु स्पर्धने व्याजे' इत्यमरः । दिशः आशाः प्रससार प्राप । किमु । प्रपूर्वात् सृ गतौ इत्यस्माल्लिट् । प्रपूर्वकसृधातोर्व्याप्त्यर्थता यद्यपि प्रसिद्धा तथापि प्राप्त्यर्थकता न विरुद्धा । यद्वा । सर्वत्र सर्वकारकशक्तिसंभवात् 'दिश' इत्याधारस्यापि कर्मत्वविवक्षायां द्वितीया । दिक्षु व्यापदित्यर्थः । यथाह हरिः — "अनेकशक्तियुक्तस्य विश्वस्यानेककर्मणः । सर्वस्य सर्वथाभावात्क्वचित्किञ्चिद्विवक्ष्यते" इति । अस्तमिते सूर्ये पद्मानि संकुचन्तीति



तत्रत्यो भृङ्गनिवहो दिक्षु संचरति । स एव वा, सूर्योपला अपि तदानीं स्वतेज उपसंहरन्तीति तदुत्थितो धूमश्रेणिर्वा स्यात् । तम इति व्यवहारस्तु वस्तुस्वभावापरिशीलनमूलक इति तात्पर्यार्थः । अत्र तमसि मिथ्यात्वं मिषशब्देन प्रतिपाद्य तत्र धूमभरो वालिसंचयो वेति निर्णयो नास्ति संदेहद्वयमस्तीति कथनात् कैतवापह्नुतिमूलशुद्धसंदेहाऽलङ्कारः ॥

**हलिहेतिदलत्कलिन्दजा**
**लहरीकन्दलकालिमद्रुहः ।**
**परितस्तरुरम्बरस्थलीं**
**परित स्थूलतमास्तमाभराः ॥** ॥ 25 ॥

**हलीति** ॥ हलम् लाङ्गलम् आयुधरूपम् अस्त्यस्येतीनिः । हली बलरामः । 'नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली' इत्यमरः । तस्य हेतिः शस्त्रम् आयुधम् । 'रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः' इत्यमरः । तया दलन्ती भिन्दती बहुधा विक्षिप्यन्ती । कलिन्दात् तदाख्यपर्वतात् जाता । 'अन्येष्वपी' ति डः । कलिन्दजा कालिन्दी यमुना तस्याः लहर्यः प्रवाहाः बहुधा प्रवृत्ताः । ताः कन्दलाः अङ्कुरा इवेत्युपमितसमासः । नीलिमातिशयत्वकथनायैवमुक्तिः । तेषाम् कालिमा नीलिमा तस्मै द्रुह्यन्तीति क्विप् । 'वा द्रुहमुहे' ति पक्षे घत्वाभावः । तदपराधिनः तत्स्पर्धिनः तत्सदृशा इति यावत् । यथा वा बलरामहलप्रभिन्ना यमुना बहुमुखं प्रवृत्ता स्वनैल्यं सर्वासु दिक्षु प्रासारयत्तथायमपि तमस्संघात इत्युपमार्थः । अतएव स्थूलतमाः अत्यन्तं स्थूलाः अतिसान्द्रा इत्यर्थः । तादृशाः तमोभराः अतिशयितानि तमांसि । अम्बरस्थलीम् परितः आकाशस्थलस्य सर्वतः आकाशवीथ्यां सर्वत्रेत्यर्थः । 'अभितः परित' इति कर्मणि द्वितीया । परितस्तरुः आच्छादयामासुः । स्तृञ् आच्छा

दने – लिट् । अन्धकाराः क्रमतः प्रवृद्धा आकाशमावृण्वन् । आकाशे तत्र तत्र दीर्घाकारा स्थूलाश्च तमःपुञ्जास्ते, तत्र तत्र खण्डशः स्थौल्येन च बहुधा स्थिताः प्रवाहा इव दृश्यन्ते । नीलवर्णास्तेऽति प्रवृत्तायाः कालिन्द्याः बलरामलाङ्गलाकृष्टायाश्शतधा प्रवृत्ताः कृष्ण वर्णाः प्रवाहा इव स्थिता इत्युच्यन्ते । अलङ्कारश्चात्रोपमा । (कालिम) 'द्रुह' इत्युपमावाचकश्शब्दः । अतएव – "स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति" इत्युपमावाचकेषु दण्डी । उपमानं च पुराण प्रसिद्धम् । अत्र भागवतम् – "स आजुहाव यमुनां जलक्रीडार्थ मीश्वरः । निजवाक्यमनादृत्य मत्त इत्यापगां बलः । अनागतां हला ग्रेण कुपितो विचकर्ष ह । पापे त्वं मामवज्ञाय यन्नायासि मयाऽ हुता ॥ नेष्ये त्वां लाङ्गलाग्रेण शतधा कामचारिणीम् । एवं निर्भ र्त्सिता भीमा यमुना यदुनन्दनम् ॥ उवाच ..." इत्यादि ॥

**नयनानि जनस्य तत्क्षणा**
**न्निरुणद्धि स्म निरन्तरं तमः ।**
**रविदीपभृताभ्रकर्पर**
**च्युतकालाञ्जनपुञ्जमेचकम् ॥** ॥ 26 ॥

**नयनानीत्यादि ॥** रविः सूर्यः स एव दीपः प्रदीपः गृह मणिः । 'दीपः प्रदीपः' इत्यमरः । तेन भृतः धृतः । पोषित इति च गम्यते । भृञ् धारणपोषणयोः – कर्मणि क्तः । तथाविधः अभ्रम् आकाश एव कर्परः कटाहः विशालं पात्रम् । 'कर्परस्तु कटाहे स्याच्छस्त्रभेदकपालयोः' इति हैमः । तस्मात् च्युतम् गलितम् काला ञ्जनम् कृष्णवर्णमषीरूपं कज्जलम् कालाञ्जनं नाम चक्षुषोः कान्तिप्रदं मङ्गलार्थं स्त्रीभिर्ध्रियमाणं कृष्णवर्णमञ्जनविशेषभूतम् । 'अञ्जनं कज्जले चाक्तौ सौवीरे च रसाञ्जने' इति सुधा । तस्य पुञ्जः समूहः राशिः तद्वत् मेचकम् विनीलम् । 'कृष्णे नीलासित



श्यामकालश्यामलमेचकाः' इत्यमरः । शब्दार्णवे तु – 'मेचकः कृष्ण नीलस्स्यादतसीपुष्पसंनिभः' इत्युक्तम् । लोके कांस्यपात्रं चन्दनेन विलिप्य दीपोपरि निक्षिप्यते । दीपाग्निना शुष्कं सत्तच्चन्दनं मषीरूपतामेत्य तत्पात्रात्स्रंसते । तदेव कज्जलम् । तद्वदिदानीं दीपकान्त्येव सूर्य कान्त्या परितप्तं सत् चन्दनलिप्तं पात्रमिव शरन्मेघादिभिर्धवलं विशालं चाम्बरं मषीरूपेण तमःपुञ्जं कज्जलमिव विगलयतीत्यव गन्तव्यम् । तथाविधम् । निरन्तरम् निरवकाशम् निबिडम् सान्द्रम् तमः अन्धकारः । कर्तृ । जनस्य प्रजायाः । जातावेकवचनम् । जना नामित्यर्थः । तेषाम् नयनानि नेत्राणि । कर्म । तत्क्षणात् सद्यः अल्पकाल एवेत्यर्थः । निरुणद्धि स्म अवरुरोध प्रतिबबन्ध । दृष्टि निरोधं जनानामकल्पयदित्यर्थः । रुधिर् आवरणे – 'लट् स्म' इति लट् । अत्र तमःकर्तृकजनदृष्टिनिरोधजननरूपवाक्यार्थे रविदीपेत्यादि पदार्थो विशेषणगत्या हेतुतामापन्नस्समर्थनीयमर्थं समर्थयतीति काव्य लिङ्गमलङ्कारः । अस्य च 'रविदीपे' त्यादिरूपकमुपमाङ्गतया समु पकरोतीत्यनयोस्संकरः ॥

नक्षत्रोदयः प्रस्तूयते —

**तदमंसत मांसलं तम**
**स्तनुतारागणबिन्दुजालकम् ।**
**दिवसात्ययचण्डताण्डव**
**च्युतमीशस्य गजाजिनं जनाः ॥** ॥ 27 ॥

**तदिति ॥** तत् तदा । जनाः प्रजाः । कर्तारः । तनवः सूक्ष्माः विरलाः । 'तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे' इति मेदिनी । ताराः नक्षत्राणि । तेषाम् गणः समूहः । तद्वत् तारागणः बिन्दुजालकम् पद्मकम् गजमुखादिस्थबिन्दुसमूहः । तद्वत्

नक्षत्रसमूहः यस्मिस् तथोक्तम्। 'तारो वानरभिन्मुक्ताविशुद्धचोश्शुद्ध मौक्तिके। ना नक्षत्रेऽक्षिमध्ये च न ना रूप्ये नपुंसकम्। स्त्रीबुद्ध देवताभेदे वालिगीर्पतिभार्ययोः। त्रिलिङ्गोऽप्युच्चशब्दे च' इति सुधा। 'पद्मकं बिन्दुजालकम्' इत्यमरः। किञ्च। मांसलम् बलवत् पीवरम् अतिसान्द्रमित्यर्थः। 'बलवान्मांसलोंऽसलः' इत्यमरः। मांसमस्यास्तीति लच्। तथाविधम् तमः अन्धकारः। तत् कर्म। दिवसात्ययः सायंसमयः तत्र चण्डम् तीक्ष्णम् उद्धतम् भयंकरम्। ताण्डवम् नृत्यम्। 'ताण्डवं नटनं नृत्यम्' इत्यमरः। सुकुमारं नृत्तं। उद्धतं ताण्डवमिति विवेकः। तेन च्युतम् गलितम्। नृत्यसंरम्भातिशयेनेति भावः। ईशस्य शिवस्य। गजाजिनम् गजचर्म गजासुरकृत्तिः आर्द्रगजाजिनम्। उत्तरीयतया समाच्छादितमित्यर्थः। तदिव अमंसत अबुध्यत। आवरणकत्वसाम्यात्तमोऽजिनमित्युच्यते। तमसि तत्र तत्र विराजमानस्सूक्ष्मो नक्षत्रगणोऽयं गजचर्मस्थबिन्दुगण इव भाति। अतएव गजाजिनमिदमिति जनानां भ्रमः। बिन्दुजालकमित्याद्युपमाभूयस्साम्यसंपादनेन भ्रान्तावस्यामुपकरोतीति भ्रान्तिमानलङ्कारः। अत एवोपमयाङ्गभूतया संकरोऽस्य ॥

**तिमि[रेभजशीक]रोपमै-**
**स्तरलाभैरुदभावि तारकैः।**
**परुषातपतापितात्मनो**
**गगनस्येव निदाघबिन्दुभिः॥ ॥ 28 ॥**

**तिमिरेति** ॥ तिमिरम् अन्धकारः स एव इभः गजः। उभयोरपि नीलत्वात् स्थूलत्वादप्रतिहतप्रसरत्वादेवमुक्तिः। तस्माज्जाता इति जनेर्डः। तज्जाः तदुद्भूताः तत्कराग्रविनिर्मुक्ता इति यावत्। तथाविधाः शीकराः अम्बुकणाः त एव उपमा उपमानम् येषां तैः। तत्सदृशैरित्यर्थः। किञ्च। तरलाः चञ्चलाः (आभान्तीति आभाः। 'आतश्चोपसर्गे' इति कः।) आभाः कान्तयः येषु तैः। क्षणक्षणप्रचलद्विद्योतमानकान्तिप्रसरैरिति भावः। तादृशैः तारकैः नक्षत्रैः। कर्तृभिः। परुषः प्रचण्डः दुस्सहः आतपः सूर्यकान्तिः तेन तापितः संतापितः भृशं ग्लापितः। तप संतापे - ण्यन्तात्कर्मणि क्तः। तादृक् आत्मा शरीरम् यस्य तथोक्तः। 'आत्मा कलेबरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च' इति धरणिः। तस्य गगनस्य आकाशस्य। आकाशस्य मूर्तत्वममूर्तत्वं च कविभिर्वर्ण्यते। 'गगनं सुरवर्त्म खम्' इत्याकाशपर्यायेष्वमरः। निदाघः स्वेदजलम् 'निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि' इति सुधा। तस्य बिन्दवः कणाः स्वेदजललवा इत्यर्थः। तैरिव स्थितैरिति संभावना। आतपसंतापेन स्वेदोद्गमश्शरीरे लोकदृष्ट इति मूर्तिमत्याकाशेऽपि तथा वर्ण्यते। वर्तुलत्वादिना तारकासाम्यं च स्वेदबिन्दूनां युज्यत इतीत्थं संभाव्यते। तादृशैः तारकैः नक्षत्रैः उदभावि उदय्यत। नक्षत्रोदयोऽभूदित्यर्थः। उत्पूर्वकाद्भवतेर्भावे लुङ्। आकाशे तावदस्तमिते सूर्ये संध्या, तदनन्तरं तिमिरम्, तदुपरि नक्षत्रोदय इति क्रमो दर्शितः। अत्र वर्तुलानि धवलानि सूक्ष्माणि नक्षत्राणि तमः प्रादुर्भावानन्तरं समुद्भूतानि। जलकणा अप्यतथाविधाः। अतस्तिमिरकरी क्रीडन् स्वशुण्डाग्रेण शीकरानुद्वमति। तथा समुत्पन्नानि तानीति कविप्रौढोक्तिः। स्वेदकणा अपि वर्तुलाः धवलाः क्षणिकस्थितयो नक्षत्राणीवेति प्रचण्डातपपरितापितायां आकाशमूर्तेस्स्वेदकणत्वेन नक्षत्राणि संभाव्यन्ते। एवं स्वरूपोत्प्रेक्षाद्वयमत्र। एतयोः प्रथमा 'तिमिरेभे' ति रूपके णाङ्गभावमनुभवन्ती द्वितीयायां साम्यसम्पादनेन कृतार्थेति सजातीयसंकर एतयोः। अत्र प्रथमेयमुपमाशब्देनोपमाबुद्धिं प्रथमतो जनयतीत्युपमोपक्रमोत्प्रेक्षेति संक्षेपः॥

**अवपत्किमु कालकर्षक**
**स्तिमिराम्भःकलुषे नभस्तले ।**
**विमलामुडुबीजमण्डलीं**
**नवचन्द्रातपसस्यसिद्धये ॥** ॥ 29 ॥

**अवपदिति** ॥ कालः समयः स एव कर्षकः कृषीवलः । कर्ता । 'क्षेत्राजीवः कर्षकश्च कृषकश्च कृषीवलः' इत्यमरः । सः । नवः नूत्नः अपूर्वः । अजरामरताप्रदायिसुधामयसस्यत्वेनास्यैवमुक्तिः । तादृक् चन्द्रातपः चन्द्रकान्तिः चन्द्रिका स एव सस्यम् धान्यविशेषः तस्य सिद्धिः निष्पत्तिः । 'सिद्धि स्त्री योगनिष्पत्तिपादुकान्तर्धिवृद्धिषु' इत्यमरः । तस्यै तन्निष्पादनाय तादृशं सस्यं निष्पादयितुमित्यर्थः । 'क्रियार्थोपपद' स्येति चतुर्थी । विमलाम् निर्दोषाम् सारवतीम् । अन्यत्र विमलाम् विशदाम् धवलाम् । उडूनि नक्षत्राणि 'नक्षत्र मृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्' इत्यमरः । तान्येव बीजानि अङ्कुरकारणानि । 'बीजं तु रेतसि स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे' इति हैमः । तेषाम् मण्डलीम् संततिम् समूहम् । कर्म । गौरादित्वात् ङीष् । तिमिरम् अन्धकारः । 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' इत्यमरः । तदेव अम्भः जलम् । उपाधिवशाज्जलस्य नैल्यं न विरुद्धमिति तदादायैवमुक्तिः । 'अम्भोर्णस्तोयपानीयनीरक्षीराम्बु शम्बरम्' इत्यमरः । तेन कलुषे आविले पङ्किले । अन्यत्र कृष्णे नीलवर्णे । नभस्तले आकाशे । सुक्षेत्रे इति गम्यते । अवपत् अवाकिरत् । न्यक्षिपत् कल्पयामासेति च गम्यते । किम्विति संभावनायाम् । अन्यथा कथं वा संभवेदन्धकारकलुषिते नभसि ज्योतिर्दर्शनमिति भावः । यथा लोके कृषीवलः कश्चिद्भूमिं जलेनार्द्रां ( पङ्किलां ) कृत्वा सारवन्ति च बीजानि सम्पाद्य तत्र तानि किरति । तत्पोषणे च नित्यं जागर्ति । कालक्रमेण प्रवृ-



द्धानि तानि स्तम्बकरयो भूत्वा फलन्ति । तेन धान्यं लभते तथाऽयमपि कालश्चन्द्रिकासंपादने कृतप्रयत्नस्तिमिरं दिक्षु व्यापयत् । आकाशं सर्वं तेन कलुषितं चाकरोत् । तथा कृत्वा तत्र समुदपादयन्नक्षत्राणि । उत्पन्नानि चैतानि रक्षयंस्तदभिवृद्ध्या चन्द्रिकामितः परमचिरादेव संपादयिष्यतीति परमार्थः । अत्र कालकृतनक्षत्रोदयने कर्षककृतबीजवपनं संभाव्यत इति क्रियोत्प्रेक्षा । कालादिषु कर्षकत्वादि रूपणं चास्यास्स्वरूपाधायकमिति रूपकेण साकं संकरोऽस्याः ॥

**अहरत्ययरागपल्लव**
**स्तमसा कन्दलितो नभस्तरुः ।**
**सृजति स्म निरन्तरं हरि**
**द्विटपैस्तारककोरकावलिम् ॥** ॥ 30 ॥

**अहरिति** ॥ नभः आकाशः स एव तरुः वृक्षः । कर्ता । तमसा अन्धकारेण सूर्यास्तमयानन्तरभाविना । कन्दलितः संजातकन्दलः अङ्कुरितः । तथाभूतस्सन् । किञ्च । अहरत्ययः सायंकालः सायं सन्ध्या तस्य रागाः रक्तिमानः त एव पल्लवाः किसलयानि यस्मिन् स तथोक्तः । पल्लवित इत्यर्थः । तथाविधस्सन् । हरितः दिशः । 'आशाश्च हरितश्च ताः' इत्यमरः । ता एव विटपाः वृक्षावयवाः शाखाः तैः । निरन्तरम् निरवकाशं यथा तथा । शाखासु सर्वत्रेत्यर्थः । तारका नक्षत्राणि ता एव कोरकाः मुकुलानि तेषाम् आवलिम् पङ्क्तिम् समूहम् सृजति स्म उत्पादयति स्म बहिःप्रकाशयामास कोरकितोऽभवदित्यर्थः । "सृजत्युत्पादयत्यपि" इति भट्टमल्लः । 'लट् स्म' इति लट् । 'हरिद्विटपै' रित्यनेन नक्षत्राणां दिक्षु सर्वासु सर्वतोमुखव्याप्तिः कथिता । वृक्षो यथा पुष्पितुं प्रथमतोऽङ्कुरान् तदनन्तरं पल्लवान् ततः कलिकाः स्वस्मिन् धत्ते तथाऽकाशोऽपि पुरस्तात्तमः ततस्सन्ध्यारागः ततो नक्षत्राणि वहतीत्यङ्कु-

रितपल्लवितकोरकितावस्था अत्रापि संभवन्ति । अतएव नभः तरुरिति रूप्यते । रूपकमलङ्कारः ॥

**अगमन्नभिसारिकाः प्रिया**
**ननुरागाञ्जनरञ्जितेक्षणाः ।**
**अभिनत्तिमिरेऽपि ताः पुन**
**श्श्वसितेनैव सुगन्धिना जनः ॥** ॥ 31 ॥

**अगमन्निति** ॥ अभिसारिकाः रमणवसतिं प्रति गच्छन्त्यः स्त्रियः शृङ्गारनायिकाविशेषाः । 'कान्तार्थिनी तु या याति संकेतं साऽभिसारिका' इत्यमरः । कान्तमभिसरति, अभिसारयति वा कान्तम् अभिसारिका । सरतेः सारयतेर्वा ण्वुल् । अतएव धनिकः 'कामार्ताभिसरेत्कान्तं सारयेद्वाभिसारिका' इत्याह । अभिसरणमेवात्र वर्ण्यते, नत्वभिसारणम् । ताः कर्त्र्यः । अनुरागः प्रिये स्नेहः प्रेम तदेव अञ्जनम् कालाञ्जनमित्यर्थः । तेन रञ्जितानि स्वसावर्ण्यमापादितानि । अन्यत्र विकासितानि । उत्कटानुरागेण नेत्रयोर्विकासो भवतीति कवयो वर्णयन्ति — "नाम्बुजैर्न कुमुदैरुपमेयं स्वैरिणीजनविलोचनयुग्मम् । नोदये दिनकरस्य नवेन्दोः केवले तमसि तस्य विकासः" इत्यादिना । तथाविधानि ईक्षणानि नयनानि यासाम् तथोक्ताः । धवलाक्षीणामेतासां निजनयनेभ्यो धवलकान्तिप्रसारेण विदिता भविष्यन्तीति कालाञ्जनधारणेन नैल्यमापादितानि तन्नेत्राणि ताभिः । कान्तिविशेषलाभस्तु तेन तयोरानुषङ्गिक इति भावः । तथाविधास्सत्यः । प्रियान् स्वभर्तॄन् अगमन् प्रापन् अभ्यसरन् । (तथा तास्वभिसरन्तीषु) जनः मार्गस्थाः प्रजाः । सः कर्ता । तिमिरे अन्धकारेऽपि । तादृशप्रतिबन्धकसत्त्वेऽपीत्यर्थः । सुगन्धिना सुष्ठुगन्धवता । स्वपद्मपरीमलं दिक्षु विकिरतेति भावः । श्वसितेन श्वासेन निश्वासैरित्यर्थः । जातावेकवचनम् । एवकारास्तु न त्वन्यैरिति वेषधारणादीन् निषेधति । ताः



स्त्रियः । आत्मगोपनायात्यन्तं प्रयतमाना इत्यर्थः । अभिनत् पृथक्चकार तमन्यः पृथक्त्वेन तानग्रहीत् प्रत्यभिजज्ञे । अभिसारिका एता इति विदितवन्त इति यावत् । अनेनैतासां पद्मिनीजातिस्त्रीत्वं तेन च स्वीयात्वं गम्यते । पद्मिनीनां निश्वासाः पद्मगन्धिनः । अत एव बिल्हणः - "मधुकरमदिराक्ष्याश्शंस तस्याः प्रवृत्तिं वरतनुरथवासौ नैव दृष्टा त्वया मे । यदि सुरभिमवाप्स्यस्तन्मुखोच्छ्वासगन्धं तव रतिरभविष्यत्पुण्डरीके किमस्मिन्" इत्याह । अभिसारिकाश्च त्रिविधाः । तमिस्राभिसारिकाः, ज्योत्स्नाभिसारिकाः, दिवाभिसारिकाश्चेति । एतास्तमिस्राभिसारिकाः कुलजाः । कुलजाभिसरणं चैवमुक्तम् — "संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा । अवगुण्ठनसंवीता कुलजाभिसरेद्यदि" इति । लज्जाविभूषणास्स्वीया इति तमिस्राभिसरणमेतासामेव प्रायशस्संभवतीति संक्षेपः । अत्र स्वगोपनाय प्रयतमाना स्त्रियस्स्वविमोचितैश्श्वासानिलैरेव विज्ञता इति अन्यत्कर्तुं प्रवृत्तानां तद्विरुद्धकृतिस्संजातेत्यसंगतिभेदोऽलङ्कारः ॥

गृहदीपा वर्ण्यन्ते —

**जननीमुपलभ्य यामिनी**
**मधिकस्नेहदशाभिवर्धिताः ।**
**दिवसस्य लयं प्रपेदुषो**
**गृहदीपा मुहुरर्भका इव ॥** ॥ 32 ॥

**जननीमिति** ॥ गृहदीपाः भवनस्थाः प्रदीपाः । दिवसस्य दिनस्य । पितुरिति गम्यते । लयम् नाशम् प्रपेदुषः प्राप्तस्य सतः । दिने पितृभूते नष्टे सतीत्यर्थः । प्रपूर्वात्पदेर्लिटः क्वसुः । संप्रसारणादि । साधुत्वं चैतादृशानां पूर्वमुपपादितम् । अर्भकाः पितृहीनाः शिशव इव । यामिनीम् रात्रिम् तामेव जननीम् मातरम् मतृभूतां

रात्रिमित्यर्थः। ताम् उपलभ्य तत्समीपं प्राप्य तत्सविध एव स्थित्वेत्यर्थः। मुहुः पुनः पुनः बहुवारम्। दीपभाजने तैले क्षीणे दीपवृद्ध्यर्थं तत्प्रक्षेपः पुनः पुनः क्रियत इति, लोके माता च पितृहीनानर्भकान् सादरमतिस्नेहं वारं वारं प्रदर्श्य समभिवर्धयतीति च भावः। तदेवोच्यते – अधिकस्नेहः अतिप्रियता स एव अधिकस्नेहः अतिशयितं तैलम्। 'स्नेहः प्रेम्णि घृतादिके' इत्यमरः। तस्य दशा अवस्थानम् (स्थितिः) सैव दशा (दीप) वर्तिः तया अभिवर्धिताः पोषिताः। (अभिवर्धिताः) वृद्धिं नीता इति च। रात्रिरागता। गृहेषु दीपाः प्रज्वलिताः। ते च तैलप्रक्षेपणेन वर्तिभिर्वर्ध्यन्ते। इममेवार्थं कविः प्रौढोक्त्या दिवसनाशः पितृनाश इति तदानीं दीपानां रात्रिसमुपागमस्तावन्नष्टे पितरि मात्रा साकमर्भकसमागम इति तैलनिक्षेपणेन दशाभिवृद्ध्या दीपाभिवृद्धिर्मातृकृतस्नेहपूर्वकसमभिवर्धनमिति च वर्ण्यते। अत्र श्लिष्टाश्लिष्टरूपकसमनुप्राणितेयमुपमा। अर्भका इवेत्युपमा यामिनीं जननीमिति रूपकेण 'स्नेहदशाभिवर्धिते' ति श्लिष्टरूपकेण च लब्धसत्ताकेति रूपकानुप्राणितेयम्॥

**उडुपुष्पकरम्बितं तमः**
**कचभारं दधती निशीथिनी।**
**अचिरादियमन्वपालय**
**त्कुमुदस्मेरमुखी निशाकरम्॥** ॥ 33 ॥

**उडिवति॥** इयम् प्रकृतत्वेन सन्निकृष्टा। निशीथिनी रात्रिः सैव नायिका चन्द्रप्रिया। उडूनि नक्षत्राणि तान्येव पुष्पाणि कुसुमानि तैः करम्बितम् मिश्रितम् दधिमिश्रितसक्तुपिष्टवत्कृतम् अतिधवलितमिति वा। 'करम्भो दधिसक्तवः' इत्यत्र 'करम्ब' इत्यपि पाठमङ्गीकृत्य व्याकुर्वन्ति प्रामाणिका व्याख्यातारः। बाणस्तु 'साम्भःकुम्भकरम्भ' मित्यनुप्रासे लगयत्यमुम्'। मिश्रवाचिनं 'करम्ब'



शब्दं विदग्धमुखमण्डनकाराः – 'करेटुकोककुररिकलहंसकरम्बित' इति प्रायुञ्जत। तादृशम्। तमः कचभारम् – तमः अन्धकार एव कचभारः केशपाशः तम्। दधती बिभ्रती। 'नाभ्यस्ताच्छतु' रिति नुम्। किञ्च। कुमुदम् कैरवम् श्वेतोत्पलम्। ईषद्विकसितमित्यर्थः। 'सिते कुमुदकैरवे' इत्यमरः। तदेव स्मेरम् स्मयमानम् ईषद्धसत् मुखम् यस्या इति 'स्वाङ्गा' च्चेति ङीष्। स्मितयुतमुखपद्मेत्यर्थः। स्मितस्य तु लक्षणमेवमुक्तम् – "ईषद्विकसितैर्दन्तैः कटाक्षैस्सौष्ठवान्वितैः। अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेत्" इति। एवंविधा सती। निशाकरम् चन्द्रम् तमेव स्वप्रियम् अचिरात् अविलम्बितम् शीघ्रम्। सोत्कण्ठेति भावः। अन्वपालयत् प्रतीक्षांचक्रे। "प्रतीक्षते प्रतीक्षायां स्युरागमयते तथा। अनुपालयतीत्येते प्रतिपालयतीति च" इति भट्टमल्लः। काचिन्नायिका पुष्पैस्स्वकेशपाशमलंकृत्य मन्दस्मितवदनारविन्दा स्वनायकं यथा सोत्सुका निरीक्षते तद्वदेवेयं निशेति भावः। नक्षत्राणि बहुसंख्याकानि विशदानि भूत्वा तिमिरमाच्छाद्य नभसि भ्राजन्ते। अतएव च कुमुदानीषद्विकसितानि वर्तन्ते। रात्रिः कान्तिमती शोभायमाना वर्तते। अचिराच्चन्द्रोदयो भविष्यतीति सारांशः। स्मेरमुखत्वादय इमे नायिकागतमनुरागं बहिः प्रकाशयन्तोऽनुभावा भूत्वा नायके निश्चलां रतिं सम्पादयिष्यन्त एतदीयशृङ्गाराङ्गतां भजन्त इत्यवगम्यते। अत्र तमसि कचभारत्वाद्यारोपोऽयं निशीथिन्यादिषु नायिकात्वाद्यारोपमवगमयतीत्येकदेशविवर्तिरूपकमलङ्कारः। नायिकाचेयं वासकसज्जिका। "मुदा वासकसज्जा स्वं मण्डयत्येष्यति प्रिये" इति तल्लक्षणात्॥

चन्द्रोदयं वर्णयितुं प्रक्रमते –

**तदनु क्षणदागमोल्लस**
**त्कलशाम्भोनिधिवीचिरोचिषः।**

**व्यरुचन् कतिचित्कराङ्कुरा
श्शशिनश्शातमुखे दिशामुखे ॥ ॥ 34 ॥**

**तदन्विति** ॥ तदनु ततः पश्चात् । रात्रौ समागतायाम् गृह दीपेषु प्रज्वलत्स्वित्यर्थः । तत्, अनु – इति निपातद्वयमिदम् । 'तद्वायुः तच्चन्द्रमाः' इत्यादौ तच्छब्दस्य निपातस्य विभक्तिप्रतिरूपकस्य दृष्ट त्वात् । शशिनः चन्द्रस्य कतिचित् केचन । कराङ्कुराः कोमलाः किरणाः । कर्तारः । शतं मखाः क्रतवः यस्य शतमखः इन्द्रः । तस्येदम् शातमखम् इन्द्रसंबन्धि । 'तस्येद' मित्यण् । तस्मिन् दिशा मुखे दिशायाः अग्रभागे । वृक्षः प्रचलन् सावयवैः प्रचलतीति न्यायेन 'शातमुख' मिति विशेषणं विशिष्टेनान्वयमनुभवन् तदेकदेशेनाप्यर्था त्संबध्यते । इन्द्रसंबन्धिन्याः दिशायाः प्राग्दिशायाः अग्रभागे इति यावत् । क्षणदा रात्रिः तस्याः आगमः समागमः तत्सम्मेलनम् तेन उल्लसन्तः विराजमानाः भृशं कान्तिमन्तः । कलशाम्भोनिधिः क्षीर समुद्रः तस्य वीचयः कल्लोलाः तरङ्गाः रोचींषि कान्तयः तत्सदृश कान्तयः अतिधवला इत्यर्थः । तानि येषु तथोक्ताः । कलशाम्भो निधिग्रहणं धावल्यातिशयसंपादनार्थमित्यवगन्तव्यम् । 'भाश्छविद्युति दीप्तयः । रोचिश्शोचिरुभे क्लीबे' इत्यमरः । तथाविधास्सन्तः । व्यरुचन् प्राकाशन्त । रुच दीप्तौ – लुङ् । द्युतादित्वादङ् । प्राच्यां दिशि चन्द्रोदयप्राग्भाविनोऽतिशुभ्रा इन्दुकिरणा उदीयुरिति निर्गलितोऽर्थः ॥

तदानींतना प्राची प्रकथ्यते —

**तरलालसतारकं मुखं
कलयन्ती शरकाण्डपाण्डरम् ।
विगलत्तिमिराम्बरा बभौ
हरिदन्द्री हरिणाङ्कगर्भिणी ॥ ॥ 35 ॥**



**तरलेति** ॥ हरिणाङ्कः मृगाङ्कः चन्द्रः तद्रूपः गर्भः गर्भस्थ शिशुः । 'कुक्षिभ्रूणार्भका गर्भाः' इत्यमरः । सोऽस्यामस्तीति सर्व धनादित्वादिनिः । ङीप् । स्वकुक्षौ चन्द्रं वहन्तीत्यर्थः । ऐन्द्री इन्द्र देवताका । 'सास्य देवते' त्यण् । 'टिड्ढाणञि'ति ङीप् । तादृशी हरित् दिक् । प्राग्दिशा अङ्गनेति गम्यते । सा कर्त्री । तरलानि भास्वराणि अत्यन्तं दीप्तिमन्ति अन्यत्र तरले चञ्चले स्वभावत एव चञ्चले इदानीं गर्भभारवशादतिचञ्चले मुग्धे सुन्दरे इति यावत् । अलसानि मन्दानि मन्दप्रसरणानि शनैराविर्भवन्ति, अन्यत्र अलसे मान्द्यं वहन्ती च । तारकानि नक्षत्राणि तान्येव तारके नेत्रे यस्मिन् तथोक्तम् । 'तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि । कनीनिकाया मृक्षे च न पुमांस्त्रातरि त्रिषु' इति सुधा । किञ्च । शरः तृण विशेषः काशः 'शरं दध्नि शरो बाणे तृणभेदेऽपि कथ्यते' इति विश्वः । तस्य स्तम्बः काण्डः गुल्मः तद्वत् पाण्डरम् धवलम् एकत्र चन्द्रकिरणसंपर्कात् । अन्यत्र गर्भिणीनां मुखे पाण्डिमोपलब्धेश्च । 'श्वेतविशदश्येतपाण्डराः' इत्यमरः । तादृशम् मुखम् अग्रभागः तदेव आननम् । तत् कलयन्ती दधती । विगलत् भ्रश्यत् स्रंसमा नम् । एकत्र चन्द्रोदयवशात् अन्यत्र गर्भाभिवृद्ध्या च । तथाविधम् तिमिरम् अन्धकारः तदेव अम्बरम् वस्त्रम् नभ इति च गम्यते । अस्मिन्नर्थे 'विगलत्तिमिर' मिति बहुव्रीहिः । तत् यस्याः तादृशी सती । बभौ रराज । भा दीप्तौ - लिट् । अयं भावः । प्राच्या अन्तश्चन्द्रो वर्तते । नक्षत्राणि च कान्तिमन्ति भूत्वा शनैस्तस्यामुद्यन्ति । चन्द्रकान्तिप्रसारेण च तदग्रभागे धवलिमा दृश्यते । आकाशे सर्वत्र व्याप्तोऽन्धकारः क्रमशश्चन्द्रकिरणव्याप्त्या शनैश्शनैरपयाति । अत एवं रूप्यते कविप्रौढोक्त्या । प्राचीदिगङ्गना चन्द्रेणान्तर्वत्नी बभूव । अतस्तर गर्भभारवशान्नेत्रयोर्मान्द्यं चाञ्चल्यं च गर्भिणीनां भवति । गर्भिण्याश्च गर्भगौरववशात्स्रंसते लालसतारका सा । इयमपि तथा ।

परिधानम् । अस्या अपि तथा । ( अम्बरे तिमिरभ्रंशोऽस्या वस्त्रभ्रंशः ) गर्भिणीनां मुखे पाण्डिमा संभवति । अस्या अपि तथा । ( अस्या अग्रभागश्चन्द्रकान्त्या धवलो वर्तते । स एव मुखमस्याः ) तारकादिषु तारकादित्वरूपणं, हरिदादिष्वङ्गनादित्वरूपणमवगमयतीत्येकदेशविवर्ति रूपकम् । इदं च रूपकमेकत्र श्लिष्टम् अन्यत्र केवलमिति विवेकः । 'शरकाण्डपाण्डर' मित्युपमा च रूपके तत्परिपोषणे नोपकरोतीत्यनयोरङ्गाङ्गिभावेन संकरः ॥

उद्यन्तं चन्द्रमित आरभ्य प्रस्तौति त्रिभिश्श्लोकैः —

**अथ किञ्चिददृश्यतैन्दवं**
**वपुरार्द्रोदयरागलोहितम् ।**
**बलशासनदिग्विलासिनी**
**मुखसिन्दूरललाम कोमलम् ॥** ॥ 36 ॥

**अथेति** ॥ अथ अनन्तरम् प्राग्दिशामुखे धवलकान्तिदर्शनोत्तरकाल इत्यर्थः । आर्द्रः नूतनः उदयरागः उदयकालिकरक्तिमा तेन लोहितम् रक्तवर्णम् । अतएव । बलशासनः इन्द्रः तस्य दिक् आशा प्राचीदिगित्यर्थः । सैव विलासिनी विलसनशीला विलासवती नायिका तस्याः मुखम् अग्रभागः तदेव आननम् तस्मिन् सिन्दूरम् रक्तचूर्णकम् कुङ्कुमम् -'सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तचूर्णके' इति मेदिनी । तेन ललाम तत्कृतं तिलकम् । 'प्रधानध्वजश्रृङ्गेषु पुण्ड्रवालधिलक्ष्मसु । भूषावाजिप्रभावेषु ललामं स्याल्ललाम च' इति रुद्रः । तथाभूतम् । किञ्च । कोमलम् मनोहरम् सुप्रसन्नम् ऐन्दवम् इन्दोः चन्द्रस्य संबन्धि । 'तस्येद' मित्यण् । वपुः प्रशस्ताकृतिः 'वपुः क्लीबं तनौ शस्ताकृतावपि' इति मेदिनी । अदृश्यत ऐक्ष्यत जनैरिति शेषः । दृशेः कर्मणि लङ् । प्राच्यां चन्द्र उदेति । उदय



रागश्च भृशं बभूव । तेन साकं दर्शयति स्वाकारं सर्वजनाह्लादकं सुप्रसन्नं किञ्चिच्चन्द्रमाः । उदयरागयुतोऽयं चन्द्रः ( बिम्बः ) पूर्वदिगग्रभागे दृश्यमानो विराजते प्राचीनायिकाधृतललाटकुङ्कुमचित्रकमिवेति तात्पर्यार्थः । अत्र वपुष्यैन्दवे प्राचीदिगङ्गनाललाटचित्रत्वं प्राचीमुखे तन्मुखत्वमित्याद्यारोप इति रूपकमलङ्कारः । सिन्दूरललामत्वं च वपुषो विशेषणगत्या 'आर्द्रोदयरागलोहित' पदार्थेन समर्थ्यत इति काव्यलिङ्गमस्य जीवातुः । अत एवानयोस्संकरः ॥

प्रवृद्धोदयरागं चन्द्रबिम्बं वर्णयति —

**परिपिण्डितयावकारुणं**
**प्रचकाशे हिमरश्मिमण्डलम् ।**
**रचितं नवरक्तसन्ध्यकै**
**र्विजयच्छत्रमिवात्मजन्मनः ॥** ॥ 37 ॥

**परीति** ॥ परिपिण्डितः सुष्ठु कबलितः सम्यक्कृतकबल इत्यर्थः । तादृशः यावकः लाक्षा तद्वत् अरुणम् रक्तवर्णम् लाक्षाकबलवद्वर्तुलं रक्तवर्णं चेत्यर्थः । हिमरश्मिमण्डलम् बिम्बाकारश्चन्द्रः । इवे 'प्रतिकृतौ' । नवानि सद्यो विकसितानि रक्तसन्ध्येव रक्तसन्ध्यकानि । 'हल्लकं रक्तसन्ध्यक' मित्यमरः । 'कृता' विति कन् । तानि हल्लकानि रक्तवर्णसौगन्धिकानि । तैः विरचितम् निर्मितम् । आत्मनि मनसि जन्म जननम् उदयः यस्य तस्य आत्मजन्मनः मनोजस्य मन्मथस्य विजयच्छत्त्रम् विजयातपत्रम् सार्वभौमचिह्नम् तदिवेति संभावना । प्रचकाशे अधिकं भ्राजते स्म । प्रपूर्वात् कासृ दीप्तौ इत्यस्माल्लिट् । तदानींतनं उद्दीपनविभावश्चतुर्धा । तत्र चन्द्रोऽपि परिगणितः । सर्वलोकविजयिनं करोति । चन्द्रबिम्बं सुष्ठु रागोद्दीपकं सत् मन्मथं सर्वलोकविजयिनं करोति । तदेवमुच्यते सचमत्कारम् । उदयरागरूषितं चन्द्रबिम्बं सर्वलोकविज

यिने मन्मथसार्वभौमाय रक्तसौगन्धिकपरिकल्पितं विजयावेदकमातपत्र मिदं स्यात्किमिति । अतएव चन्द्रबिम्बे विजयातपत्रत्वसंभावनेति द्रव्योत्प्रेक्षेयम् । 'परिपिण्डितयावकारुण' मित्युपमा च साम्यसंपाद नेन संभावनायामुपकरोतीति तया संकीर्यते ॥

**परुषेऽपि तथा प्रभानिधौ**
**विधुरं लोकमिने परेयुषि ।**
**उदशिश्वसदादृतैः करै**
**रथ राजा मृदुभिर्नवोदयः ॥** ॥ 38 ॥

**परुष इति** ॥ परुषे तीक्ष्णांशौ । तीक्ष्णे तीक्ष्णदण्डे दण्डेन दुर्भरकरग्राहिणीति च गम्यते । अपि विरोधे । तादृशेऽपि । तथा तेन प्रकारेण । तच्छब्दः पूर्वानुभूतिं परामृशत्युभयत्रापि । प्रभानिधौ प्रभाकरे तेजोनिधौ । तेजस्विनि परबाधानिवारके इति गम्यते । तादृशे इनौ सूर्ये । प्रभाविति गम्यते । 'इनस्सूर्ये प्रभौ राजा मृगाङ्के क्षत्त्रियेऽपि च' इत्यमरः । तस्मिन् परेयुषि लोकान्तर यायिनि । परेते मृत इति गम्यते । 'उपेयिवाननाश्वा' नेति साधुः । 'नचात्रोपसर्गस्तन्त्रम् । अन्योपसर्गान्निरुपसर्गाच्च भवत्येव' इति काशिका । तस्मिन् तथाविधे सति । विधुरम् विश्लिष्टम् वियुक्तम् । लोक बान्धवं तं विहाय वियोगदुःखमनुभवन्तमित्यर्थः । विक्लवम् विह्वलम् परराजाः पीडयिष्यन्तीति विवशमिति च गम्यते । 'वैफल्येऽपि च विश्लेषे विधुरं विक्लबे त्रिषु' इति त्रिकाण्डशेषः । तादृशम् लोकम् जनम् भुवनं वा । 'लोकस्तु भुवने जने' इत्यमरः । राष्ट्रप्रजा इति गम्यते । अथ कार्त्स्न्यार्थकः । कृत्स्नं लोकमित्यर्थः । सर्वाः राष्ट्र प्रजा इति च । क्रमं । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । नवोदयः नवावतारः नूतनागमः अचिरादेवागतः । नवाभ्यु दय इति च गम्यते । राजा चन्द्रः । प्रभुश्चेति गम्यते । 'राजा



प्रभौ च नृपतौ क्षत्त्रिये रजनीपतौ' इति मेदिनी । आदृतैः आद्रियमाणैः सर्वजनैः पूज्यमानैः । अर्थ्यमानैरिति च गम्यते । मृदुभिः कोमलैः प्रसन्नैः आह्लादकैः । अतीक्ष्णैः अबाधाजनकैरिति च गम्यते । 'मृदू चातीक्ष्णकोमले' इत्यमरः । करैः किरणैः । बलिभिः राज ग्राह्यभागैरिति च गम्यते । 'बलिहस्तांशवः कराः' इत्यमरः । तैः करणभूतैः । तान् द्वारीकृत्येत्यर्थः । उदशिश्वसत् समतोषयत् सूर्यकिरण संतप्तं लोकं शीतलस्वकिरणप्रसारेण महान्तमानन्दमनुभावयामासेत्यर्थः । अभिवर्धयामासेति च गम्यते । दुर्भरैः करैः पीडयमानान् निस्स्वान् राष्ट्रजनान् समुचितकरग्रहणेन परबाधापनयनेन च स्वयमभिवर्धया मासेत्यर्थः । टु ओ श्वि गतिवृद्धयोः ण्यन्ताल्लुङ् । अत्र स्वतीक्ष्ण करैः प्रजास्संताप्य सूर्येऽस्तमिते स्वशीतलकिरणैस्तत्परितापं त्याजयं श्चन्द्रोऽयं लोकरञ्जकस्सन्नुदियायेति प्रकृतार्थः । कश्चिद्राजा तेजस्वी परेभ्यः प्रजा रक्षन्नपि दुर्भरकरग्रहणेन संपीडयन् निर्धनाः कृत्वा बाधते ताः । स कालवशमापन्नो गतोऽस्तम् । प्रजाश्च परराजाक्रमणादिना भीता दुःखायमाना वर्तन्ते । तदा कश्चिद्राजा नवोदयं प्राप्य तासां राजा सन् समुचितकरग्रहणेन भृशमानन्दयंस्ताः अभिवर्धयामासेत्य प्रकृतोऽर्थः । अत्र प्राकरणिकार्थपर्यवसिताभिधा न शक्नोत्यप्राकरणि कार्थप्रतिपत्तिं कर्तुमिति 'राजवदयं राजेति शब्दशक्तिमूलो ध्वनिः । न च श्लेषः । उभयश्लेषे विशेष्यश्लेषायोगात् । न च समासोक्तिः व्यवहारमात्रसमारोप एव तदुत्थानात् ॥

अथ कवयित्री चन्द्रोदयमिमं स्वशृङ्गारस्याङ्गतां नेतुकमा तदर्थ उपक्रमते —

**अथ कम्पनृपोऽपि कृत्यवि**
**त्कृतसन्ध्यासमयोचितक्रियः ।**

**अवदत्सविधे स्थितां प्रियां**
**भुवि गङ्गेत्यभिनन्दिताह्वयाम् ॥** ॥ 39 ॥

**अथेति** ॥ अथ अनन्तरम् उदयरागं विहाय प्रकृतिं गते
चन्द्रे इत्यर्थः । कृत्यानि कर्तव्यानि वित्तवान् कृत्यवित् । यस्मिन्
काले यत्कर्तव्यं तस्य सम्यग् ज्ञातेत्यर्थः । कम्पनृपः कम्पनप्रभुरपि ।
संध्यासमयः संध्याकालः तस्मिन् समुचिताः आचरितुं योग्याः क्रियाः
( सावित्री ) जपाद्याः कृताः अनुष्ठिताः तादृक्क्रियाः येनेति तथोक्तः ।
चन्द्रोदयात्पूर्वमेव समापितसायंसंध्याभिवन्दनक्रिय इत्यर्थः । सायं
संध्याया अनुष्ठानकालश्चैवं विहितः – " अर्धास्तमितकालाद्यस्सन्धि
रा तारकोदयात् । तत्र सन्ध्यामुपासीत सायंकाले समाहितः " इति ।
अतएव छान्दोग्ये – " सन्धौ संध्यामुपसीत । ज्योतिषा ज्योतिषा दर्शना
त्सन्धिरिति । तथाविधस्सन् । सविधे स्वसमीपे स्थिताम् सहधर्मचरीत्वेन
विद्यमानामित्यर्थः । अनेन देवीत्वमस्या अभिहितं च भवति । तादृ
शीम् । किञ्च । भुवि भूमौ अस्मिन् लोके । गङ्गा इति गङ्गा
इत्येवंरूपेण अभिनन्दितः प्रशंसितः सर्वजानादृतः जनैस्सर्वैरेवं व्यव
हृत इत्यर्थः । " आत्मनाम गुरोर्नामे " ति स्वनामकथने प्रत्यवाय
श्रवणादेवमुच्यते । एवं कथनं महतामनूचान आचारः । अभिनन्दित
शब्दोऽयं नाम्नोऽस्य स्मरणमात्रेणैव सर्वपापपहारकत्वात्परमपवित्रत्वं
द्योतयन् " गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि । मुच्यते सर्व
पापेभ्यो विष्णुलोकं स गच्छ " तीति स्मृतिं स्मारयति । तादृशीम्
प्रियाम् रूपेण शीलेन च स्वाभिमतां सतीम् । प्रियशब्दः पत्यौ
यथा योगरूढस्तथा प्रियाशब्दोऽपि वल्लभायाम् । ताम् तामुद्दिश्ये
त्यर्थः । अवदत् उवाच उक्तवान् । चन्द्रोदयसमये तस्मिन् स्वप्रेमा
स्पदभूतां गङ्गादेवीं कवयित्रीं दृष्ट्वा समुद्दीपितरागस्तां वक्ष्यमाण
प्रकारेण बभाषे कम्पराज इति श्लोकार्थः ॥



तदुक्तिप्रकारमेव कथयति –

**कमलाक्षि कटाक्ष्यतामयं**
**समयो वर्णनया रसार्द्रया ।**
**जन एष वचस्तवामृतं**
**श्रवसा पाययितुं कुतूहली ॥** ॥ 40 ॥

**कमलाक्षीति** ॥ कमले पद्मे इव अक्षिणी नेत्रे यस्याः ।
तस्यास्संबुद्धिः । पद्मनयने इत्यर्थः । कमले पद्मे त एव अक्षिणी
यस्या इति विग्रहेण गङ्गेयमिति च सूच्यते । अयम् समयः इदानीं
तनः कालः चन्द्रोदय इत्यर्थः । सः रसः शृङ्गाररसः तत्स्थायी
रतिः अनुरागः तेन आर्द्रया सिक्तया रसभरितया अनुरागपरिपूर्ण
येत्यर्थः । तादृश्या वर्णनया प्रकथनेन कटाक्ष्यताम् अनुग्राह्यताम् ।
त्वया सर्वमहत्यास्य वर्णनं लोकविदितममुं कृत्वा चरितार्थं करिष्यतीति
भावः । अनेन कवयित्र्यामस्यामादरातिशयो वर्णनातीतः कम्पराजस्येति
ज्ञायते । कटाक्षशब्दा 'त्तत्करोती' ति ण्यन्तात्कर्मणि क्तः । एष
जनः त्वद्वशंवदः अयमित्यर्थः । आत्मनामग्रहणे प्रत्यवायश्रवणादेवमुच्यते ।
रसज्ञः कलावेत्ता इत्यादीनां संग्रहार्थं चैवमुक्तिः । तव भवत्याः
वचः वाक् तदेव सुधाम् वाक्सुधाम् कवितामृतम् । श्रवसा कर्णा
भ्याम् । ज्ञातावेकवचनम् , ताभ्याम् प्रयोज्यकर्तृभ्याम् । पाययितुम्
आस्वादयितुम् ताभ्यां महान्तमानन्दमनुभावयितुं कुतूहली कौतुकवान् ।
तत्र सोत्सुको वर्तत इत्यर्थः । तस्मात् विलम्बं माकार्षीरिति त्वरयति
प्रियां कम्पराजः । मन्मथोद्दीपकतया कान्ताकटाक्षादीनभिलषति साधा
रणो जनः । अयं तु महाराजस्तदुद्दीपकतया स्वप्रेयसीप्रियकवितामृत
मभिलषतीति तु विशेषः । नैषधीयचरिते नलोऽप्येवमेव चन्द्रोदय
वर्णनाय स्वप्रियां प्रबोधय्य तत्कृतवर्णनया समभिवर्धितप्रणयोद्दीपन
स्तया सह विजहार । तथा च नैषधे - " इत्युक्तिशेषे स वधू

बभाषे सूक्तिश्रुतासक्तिनिबद्धभावाम् । मुखाभ्यसूयानुशयादिवेन्दौ केयं तव प्रेयसि मूकमुद्रा । अत्रैव वाणीमधुना तवापि श्रोतुं समीहे मधुनस्सनाभिम् । इति प्रियप्रेरितया तयाथ प्रस्तोतुमारम्भि शशिप्रशस्तिः" इत्यादि । एष प्रस्तावस्तमनुकरोति सर्वथा । नलोऽपि सन्ध्याद्यनुष्ठाय धर्मबद्धं काममेवाभिललाष कम्पराज इव । अस्याश्चन्द्रोदयप्रशस्त्यवसरे त्रुटितास्तत्प्रणयसौरभं विश्लथयन्तः कतिचन श्लोकाः । अनुमीयते नलप्रस्तावर्णनासाम्येन तत्रेवात्रापि गङ्गाकम्पनयोश्शृङ्गारस्तेषु वर्णितस्स्यादिति ॥

**इति सा दयितेन भाषिता**
**दरनम्रं दधती मुखाम्बुजम् ।**
**वदति स्म शनैश्शुचिस्मिता**
**सरसोदारपदां सरस्वतीम् ॥** ॥ 41 ॥

**इतीति** ॥ इति एवम् उक्तप्रकारेण । दयितेन प्रियेण भर्त्रा भाषिता अभिहिता आज्ञापिता । दरनम्रम् ईषदवनतम् । लज्जयेति भावः । मुखाम्बुजम् मुखपद्मम् दधती बिभ्रती । किञ्च । शुचि परिशुद्धम् शुभ्रम् धवलम् । 'पावके शुचिः । मास्यमात्ये चाप्युपधे पुंसि मेध्ये सिते त्रिषु' इत्यमरः । तादृशम् स्मितम् ईषद्धसनम् हासविशेषः । नयनविकासश्चानेनोक्तः । 'स्मितमिह विकासि नयन' मिति तल्लक्षणात् । तत् यस्यां । तथोक्ता । तथाविधा सती । शनैः अद्रुतम् शीघ्रगमनं यथा न भवति तथा । 'अद्रुते शनैः' इत्यमरः । प्रिये स्वानुरागं व्यञ्जयन्ती सतीति भावः । अनेन क्षामक्षामाक्षरभणनलक्षणं प्रमदादिजं गद्गदभाषित्वं नाम व्यभिचारिभावस्सूच्यते । तथाविधा सती । सरसानि रसवृत्तीनि रसवन्ति अनुरागपरिपूर्णानीति च गम्यते । उदाराणि महान्ति अर्थगम्भीराणि पदानि शब्दाः



वाक्यानि च यस्यां तथोक्ता । 'पदं शब्दे च वाक्ये च व्यवसायापदेशयोः' इत्यमरः । 'सरसोदारपदा' मित्यनेन कवयित्र्या स्वकाव्यगुणाश्च सूचिताः – तथाहि – 'सरसे' त्यनेन प्रसादगुणसाहित्यं कथ्यते – "शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैव यः । व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः" इत्येतस्य लक्षणमुक्तम् । अस्याङ्गानि – सम्मितत्वगाम्भीर्यरीतिमाधुर्याणीति संक्षेपः । उदारेत्यनेन औदार्यगुणवत्त्वं च सूच्यते । तस्य च लक्षणमेवमुक्तम् – "औदार्यं नाम विकटाक्षरबन्धत्वम् । तच्च नर्तनबुद्ध्युत्पादकपदविन्यासः । तदुक्तम् – "विकटत्वं च बन्धस्य कथयन्ति ह्युदारताम् । वैचित्र्यं न प्रपद्यन्ते यया शून्याः पदक्रमाः" इति । अस्य विवरणं तु मदीयायामान्ध्रव्याख्याभूमिकायां द्रष्टव्यम् । तादृशीम् सरस्वतीम् भारतीम् साक्षाद्वाग्रूपधरां वाणीम् मूर्तिमतीं शारदामिव भासमानां स्ववाचमिति यावत् । 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः । ताम् वदति स्म अवोचत् अवतारयामास । 'लट् स्म' इति वदेर्लट् । अत्र मुखाम्बुजमित्यनेन मुखविकासस्सूच्यते । तेन 'विलासो' नाम शृङ्गारचेष्टाऽभिव्यज्यते । 'तात्कालिको विकारस्स्याद्विलासो दयितेक्षणे' इति च तल्लक्षणम् । 'शुचिस्मिता' इत्यनेन हासो नाम शृङ्गारभावजा चेष्टा सूचिता । "आकस्मिकं तु हसितं यौवनादिविकारजम्" इति तल्लक्षणम् । 'दरनम्रं मुखं दधतीत्यनेन लज्जोदयः, स्वाकारगुप्तिश्च कथिता । तेन 'अवहित्था' नाम संचारिभावो व्यज्यते । लक्षणं तु तस्यैवम् – "अवहित्था तु लज्जादेर्हर्षादाकारगोपनम्" इति । 'शनैः' इत्यनेन 'आलस्यं' नाम संचारिभावोऽपरो व्यज्यते – "मन्दोद्यमत्वमालस्यं कर्तव्येषु प्रकीर्त्यते" इति च तल्लक्षणम् । एवं बहूनां भावानां शृङ्गाराङ्गतात्र संजातेति भावशबलता नामालङ्कारः । "तद्भावशबलत्वं स्याद्बहूनां चेत्पराङ्गता" इति तल्लक्षणात् ॥

वर्णनाप्रकारः कथ्यते —

**स्वदमानसुगन्धिमारुतः**
**प्रसरत्कोमलचन्द्रिकोदयः ।**
**नृपचन्द्र निरीक्ष्यतामयं**
**समयः पोषितपुष्पसायकः ॥** ॥ 42 ॥

**स्वदमानेति ॥** नृपचन्द्रः राजश्रेष्ठः तस्य सम्बुद्धिः । हे नृपचन्द्र । स्वदमानाः रोचमानाः । " स्वदते स्वादते क्षीरं स्वर्दते रोचते नृणाम् " इति क्रियानिघण्टुः । ष्वद आस्वादे - कर्तरि शानच् । सुगन्धिनः आमोदयुताः मारुताः वायवः यस्मिन् तथोक्तः । अस्य पुष्पसमयत्वादनुभूयमानसुगन्धवद्वायुप्रसर इति भावः । प्रसरन्ती व्याप्नुवती कोमला सुकुमारा मनोहरा चन्द्रिका चन्द्रकान्तिः ज्योत्स्ना ' चन्द्रिका कौमुदी ज्योत्स्ने ' त्यमरः । तस्याः उदयः अभिवृद्धिः यस्मिन् तथोक्तः । सर्वतो व्याप्तसुकुमारचन्द्रिकोदय इत्यर्थः । अतएव पोषितः वर्ध्यमानः वृद्धिं प्राप्यमाणः पुष्पसायकः मन्मथः येन तथोक्तः । अत्यन्तं मन्मथोद्दीपक इत्यर्थः । अयम् समयः इदानींतनः कालः वसन्तकाल इति भावः । निरीक्ष्यताम् दृश्यताम् । त्वयेति शेषः । भवान् पश्यत्वित्यर्थः । अत्यन्तं दर्शनीयो वर्ततेऽयं कालस्सर्वजनाह्लादक इति भावः । इदानीं चन्द्रिकातीव हृदयानि रञ्जयति । पुष्पविकासेन सुरभिला वायवस्सर्वत्र प्रचलन्ति । कामश्च कामं प्रवर्तते हृदीति तात्पर्यार्थः । ' निरीक्ष्यतामयं समय ' इत्यनेन निगूढं स्वानुरागं सूचयन्ती शृङ्गारस्य समुचितोऽयं काल इति कामोपभोगाय राजानं प्रबोधयतीव कवयित्री ॥

रसमय्या वाचा चन्द्रं वर्णयतीत आरभ्य यावत्सर्गं कवयित्री —



**परिरभ्य दृढं चिरागतः**
**प्रथमाशासुदृशां निशापतिः ।**
**श्लथयत्ययमंशुभिर्नखै**
**स्तिमिरश्रेणिमयीं प्रवेणिकाम् ॥** ॥ 43 ॥

**परिरभ्येति ॥** अयम् पुरोवर्ती निशापतिः चन्द्रः प्रियः प्रवासीति गम्यते । चिरम् आगतः चिरागतः बहोः कालस्य समागतः । दीर्घप्रवासमेत्येदानीमेव समायातस्सन्नित्यर्थः । तथाविधः । शोभनाः दृशः यस्याः सुदृशा सुन्दरी । ' वष्टि भागुरिः ... आपं चैव हलन्तानां ' मिति पाक्षिकष्टाप् । प्रथमाशा पूर्वदिशा सैव सुदृशा ताम् । परिरभ्य कटाक्षैः प्रियं साभिलाषं पश्यन्तीं प्रियामिति च गम्यते । परिरभ्य तैः आश्लिष्य स्वाङ्कपाल्यां संस्थाप्येति गम्यते । अंशुभिः स्वकिरणैः तैरेव नखैः करजैः । करणभूतैः । तिमिरम् अन्धकारः तस्य श्रेणिः परम्परा दीर्घीभूता तमःपङ्क्तिरित्यर्थः । सैव प्रवेणिका (प्रवेण्येव प्रवेणिका) वेणिः केशबन्धः एकवेणी त्रिधा विभागं विना बद्धः प्रोषितभर्तृकादिधार्यः केशरचनाविशेषः । प्रवेणीत्यत्र प्रेत्युपसर्गग्रहणमुपसर्गान्तरनिवृत्त्यर्थम् । ' वेणिप्रवेणी ' इत्यमरः । ताम् श्लथयति शिथिलयति विगलयति स्वयं विमोचयतीत्यर्थः । श्लथतेर्णिचि लट् । घटादित्वेन मित्त्वात् ' णौ मिता ' मिति ह्रस्वः । नायिका चेयं प्रोषितभर्तृका । " देशान्तरगते कान्ते खिन्ना प्रोषितभर्तृका " इति तल्लक्षणात् । प्रवासादुपावृत्तैः प्रियैस्स्वयं वेणीमोचनमेतासां क्रियत इति प्रसिद्धम् — अतएव (मेघे) कालिदास इत्थमाह — " आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा शापस्यान्ते विगलितशुचा तां मयोद्वेष्टनीयाम् । स्पर्शक्लिष्टामयमितनखेनाऽसकृत्सारयन्तीं गण्डाभोगात्कठिनविषमामेकवेणीं करेण " इति । प्रोषितभर्तृकानियमाश्च याज्ञवल्क्येनैवं प्रदर्शिताः । " क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।

हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका" इति। चन्द्रकिरणाः प्राच्यां गाढं प्रसरन्ति। तत्रत्या घनीभूता च तदन्धकारपरम्परा सुष्ठु तत्किरणसंपृक्ता पृथक् पृथक् दूरतोऽपसरति। अमुमेवार्थं स्वप्रौढोक्त्या – प्रवासी नायक इव बहुतिथे काले समागतश्चन्द्रस्तिमिरपरम्परयैक वेणीधारा प्रोषितभर्तृका नायिकेव स्थितां प्राचीं स्वोदयेन (समागमेनेव) समाश्लिष्य नखैरिव स्वकिरणैः वेणीमोचनमिव तमोमोचनं कुर्वन् नायिकामिव प्राचीमनुगृह्णातीति वर्णयति कवयित्री। अवयवावयविनोस्सामस्त्येन रूपणमत्रेति समस्तवस्तुविषयकं रूपकमलङ्कारः॥

**प्रथमाचलमौलिमुच्चकै**
**रधिरुह्याम्बरपात्रसंभृतम्।**
**अयमंशुमृणालिकामुखै**
**स्तिमिरं चूषयतीव चन्द्रमाः॥** ॥ 44 ॥

**प्रथमेति॥** अयम् पुरतो दृश्यमानः। चन्द्रमाः चन्द्रः। कर्ता। प्रथमः पूर्वः अचलः अद्रिः पूर्वाचलः उदयपर्वतः तस्य मौलिः शिखा तदाधारः अग्रभागः शिखरम्। तत् नायिकामिति च गम्यते। अतएव 'मौलि' शब्दनिर्देशः। मौलिशब्द स्त्रीलिङ्गोऽपि। "मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम्' इति मेदिनी। उच्चकैः उच्चैः अधिकम्। बाढम् सम्यक् ऊर्ध्वभागे इति च गम्यते। अधिरुह्य आरुह्य अवलम्ब्येति गम्यते। सकचग्रहणं कृत्वेत्यर्थः। पर्वतोपरिभागं सम्यगारुह्येति प्रकृतार्थः। अम्बरम् आकाशः तदेव पात्रम् भाजनम् इन्द्रनीलमाणिक्यनिर्मितं मद्यकलशमित्यर्थः। तत्र संभृतम् निश्चलम् परिपूर्णम्। तिमिरम् अन्धकारः तदेव मद्यमिति गम्यते। तत् कर्म। अंशव एव मृणालिकाः बिसाङ्कुराः। अल्पा मृणालाः मृणाल्यः। अल्पार्थे ङीष्। ता एव मृणालिकाः। स्वार्थे कः। ह्रस्वः। तेषाम् मुखानि अग्रभागाः तान्येव मुखानि वक्त्राणि। तैः करण



भूतैः। चूषयति पाययति। इवेति संभावनायाम्। स इव स्थित इत्यर्थः। चूष पाने – हेतुमण्ण्यन्ताल्लट्। "पिबत्याचामति धयत्यपि चूषति पीयते। पाने" इति भट्टमल्लः। उदयपर्वताग्रावलम्बी चन्द्रस्स्वकिरणान् दीर्घान् प्रसार्य नभोगतं सर्वमन्धकारमन्तर्धापयति। एवमुत्प्रेक्ष्यतेऽयमेवार्थः। यथा नायकः कश्चन स्वनायिकां शिरसि गृहीत्वा मुखेन मद्यं पाययति तद्वदयं चन्द्रोऽप्युदयाचलमौलिं नायिकां कृत्वा तत्रोच्चैस्स्वकरप्रसरणेन तस्या अग्रभागमेव तन्मुखं परिकल्प्य सर्वत्राकाशे व्याप्तं नीलं तम एव मद्यं च विधाय तदाश्रयं नभ एव नीलमणिमयं मद्यभाजनं निर्माय चन्द्रकिरणैस्तिमिरान्तर्धापनमेव मद्यपानं कृत्वा नायिकां मद्यपानेनायं संभावयतीति वर्ण्यते। अत्र तिमिरापसरणे मद्यपानसंभावनेति क्रियोत्प्रेक्षा। साचाम्बरादिषु मद्यपात्रत्वादिसमारोपमूलेति रूपकेण साकं संकीर्यते। प्रकृत्या लज्जावतीनां स्त्रीणां संभोगकाले तदपनोदनाय मद्यपानं नायकाः कारयन्ति ताः। अतएव पार्वतीपरमेश्वरश्शृङ्गारवर्णनावसरे कालिदासः "इत्युदारमभिधाय शङ्करस्तामपाययत पानमम्बिकाम्" इत्याचष्टे॥

**अलिनीलमयस्तमोमयं**
**प्रविलाप्योदयरागवह्निना।**
**कलयत्ययमोषधीश्वरः**
**कलधौतं शुचि कौमुदीमिषात्॥** ॥ 45 ॥

**अलीति॥** अयम् निर्देशवाची। नेत्रगोचरः। ओषधीश्वरः ओषधिपतिः तन्नायकः चन्द्रः। ओषधिसिद्ध इति च गम्यते। अत एव लोहात् कलधौतसंपादनं संघटतेऽस्मिन्। सः कर्ता। तमोमयम् तमः अन्धकारः। 'चिन्मय' मित्यादाविव स्वार्थे मयट्। तदेव। अलिः भृङ्गः तद्वत् नीलम् अतिमलिनम् अयः लोहम् किट्टितमय इति यावत्। 'लोहोऽस्त्री शस्तकं तीक्ष्णं पिण्डं कालायसायसी'

इत्यमरः। तत् उदयरागः (अस्य) उदयकालिको रक्तिमा स एव वह्निः अग्निः तेन। उभयोरप्यरुणत्वात्कान्तिमत्त्वाच्चैवमुक्तिः। प्रविलाप्य विद्राव्य। तदनन्तरमोषधिसंपर्केणेत्यर्थः। 'अर्तिह्री' ति पुक्। कौमुदी चन्द्रिका सैव मिषः व्याजः वस्तुतो न तथेत्यर्थः। तस्मात् शुचि परिशुद्धम् अमलिनम् अतिधवलम् कलधौतम् रजतम्। 'कलधौतं सुवर्णे स्याद्रजते च नपुंसकम्' इति मेदिनी। कलयति प्राप्नोति अर्जयतीत्यर्थः। कल संख्याने गतौ च ण्यन्ताल्लट्। लोके रससिद्धाः केचन सिद्धरससंपर्काल्लोहानां सुवर्णतां संपादयन्ति। अयं तु चन्द्र ओषधिसिद्ध इति सिद्धौषधिसंपर्काल्लोहस्य शुद्धरजतभावं संघटयति। सैव कौमुदीति जनैर्व्यवह्रियत इति तात्पर्यार्थः। अत्र चोदयरागे वह्नित्वाद्यारोपाद्रूपकमलङ्कारः। एतच्च रूपकं कलधौतत्वसाधनाय प्रवृत्तमिति कौमुदी न कौमुदी कलधौतमेवेति मिषशब्देन प्रतिपाद्य लब्धसत्ताकया कैतवापह्नुत्या संकीर्यते ॥

**शशिमण्डलशङ्खपेटका**
**दवकृष्य क्षपया समर्पितम्।**
**कुमुदच्छविकौमुदीमयं**
**दधती क्षौममभाद्दिगङ्गना ॥** ॥ 46 ॥

**शशीति** ॥ दिगङ्गना दिशाकान्ता। महाराज्ञीत्यर्थः। सा कर्त्री। क्षपया रात्र्या। स्वसख्येति गम्यते। शशिमण्डलम् चन्द्रबिम्बः स एव शङ्खपेटकः शङ्खानाम् कम्बूनाम् पेटकः पेटिका मञ्जूषा। शङ्खनिर्मितवस्त्रादिस्थापनोपयोगिपेटीत्यर्थः। 'पिटकः पेटकः पेटी मञ्जूषा' इत्यमरः। तस्मात् अवकृष्य आकृष्य समुद्धृत्य समर्पितम् आदरेण दत्तम्। किञ्च। कुमुदवत् सितोत्पलवत् छविः कान्तिः यस्य तथोक्तम्। धवलकान्तीत्यर्थः। कुमुदानां छविः यस्येति च गम्यते। चन्द्रोदये कुमुदानां विकसनशीलत्वात्। किञ्च।



कौमुद्येव कौमुदीमयम्। स्वार्थे मयट्। ज्योत्स्नारूपम् क्षौमम् दुकूलम् धवलपट्टवसनम्। 'क्षौमं दुकूलं स्यात्' इत्यमरः। तत्। दधती धरन्ती तेन वसनालङ्कारेण समलङ्कृतेत्यर्थः। अभात् व्यराजत। भा दीप्तौ – लङ्। प्राग्दिशा महाराज्ञीव स्वसख्येव रात्र्या शङ्खपेटकादिव चन्द्रादुद्धृत्य दत्तं क्षौमदुकूलमिव कौमुदीं कुमुदच्छविं वहतीति वर्ण्यते। तत्र दिशादिष्वङ्गनात्वादिरूपणं क्षपया सख्येत्यर्थादाक्षिपतीत्येकदेशविवर्तिरूपकमलङ्कारः ॥

**हरितं परिरभ्य वासवीं**
**हरिणाङ्कः करपातलीलया।**
**स्पृशति प्रणयात्कुमुद्वतीं**
**बत विश्वासपदं न कामिनः ॥** ॥ 47 ॥

**हरितमिति** ॥ हरिणाङ्कः मृगाङ्कः चन्द्रः। कलङ्कीति गम्यते। सः कर्ता। करपातः स्वकिरणप्रसारः तस्य लीला व्यापारः स्वकिरणव्याप्तिरित्यर्थः। तेन। सविलासस्वहस्तप्रसारेणेति च गम्यते। वासवीम् हरितम् ऐन्द्रीम् दिशम् प्राचीमित्यर्थः। 'साऽस्य देवते' त्यण्। अणन्तत्वात् ङीप्। इन्द्रप्रियामिति च गम्यते। 'पुंयोगादाख्याया' मिति ङीष्। परिरभ्य आश्लिष्य आच्छाद्य। परिष्वज्येति गम्यते। प्रणयात् कुमुद्वतीम् कुमुदिनीम्। अपरां नायिकामिति च गम्यते। 'प्रणयास्त्वमी विस्रम्भयाच्ञाप्रेमाणः' इत्यमरः। अनुरागात् याच्ञादैन्यमवलम्ब्येति च गम्यते। करपातलीलयेत्यत्रापि संबध्यते। स्पृशति स्म पस्पर्श स्वकिरणान् तत्रापि प्रासारयदित्यर्थः। स्वकरप्रसारं तत्रापि प्रावर्तयदिति च गम्यते। अतएव कामिनः कामुकाः कामवशंवदाः पुरुषाः। विश्वासपदम् विस्रम्भस्थानम् स्त्रियां ममायमिति विश्वसनीया न भवन्ति। 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ती' ति महाभाष्यकाराः। बतेति खेदे। तेषु प्रणयनैश्चल्यं मृग्यमिति भावः।

एतादृशी कामलोलता तेषां शोच्येत्यर्थः । अत्र 'विश्वासपदं न कामिन' इति·· लोकसामान्येन चन्द्रगतकामुकत्वविशेषस्य श्लेषचमत्कृत्या कविप्रौढोक्तिसिद्धस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः । "सामान्यं वा विशेषेण विशेषो वा तदन्यतः । समर्थ्यते यत्र तत्रार्थान्तरन्यास ईरितः" इति तल्लक्षणात् ॥

**मुहुरामृशदेव पद्मिनी**
**मपि रागी क्षणदाकरः करैः ।**
**यदमुं प्रति नेयमुन्मुखी**
**प्रभवत्यत्र पतिव्रतागुणः ॥** ॥ 48 ॥

**मुहुरिति** ॥ रागी अनुरागवान् गाढमनुरक्तः । कामुक इति यावत् । रक्तवर्णवान् सुन्दर इति च गम्यते । तथाविधः क्षणदाकरः निशाकरः चन्द्रः । कर्ता । रात्रिवल्लभ इति च गम्यते । करैः स्वीयैः किरणैः स्वहस्ताभ्यामिति च गम्यते । पद्मिनीम् नलिनीम् पद्ममपि । तामप्यविहायेत्यर्थः । चन्द्रकिरणानां सर्वत्र प्रसारस्तुल्य इत्येवमुच्यते । पद्मिनीजातिस्त्रियं पतिदेवतामपीति च गम्यते । मुहुः पुनः पुनः बहुवारम् । सर्वरात्रिषु चन्द्रकिरणप्रसारः प्रायशो भवतीत्येवमुच्यते । स्वपराङ्मुखीं तां बहुवारमभ्यर्थयते प्रणयभिक्षामिति च गम्यते । आमृशत् संस्पृशदेव स्वकिरणप्रसरणेनाविकासिनीमपीत्यर्थः । पर्जन्यवृष्टिवत्प्रयोजनानपेक्षित्वादस्येति भावः । अननुरक्तामपि तां कामोन्मादेन स्पृशन्नेव स्थित इति च गम्यते । एवमपि यस्मात् येन कारणेनेत्यर्थः । इयम् प्रकृता पद्मिनी पद्मम् पद्मिनी स्त्रीति च गम्यते । 'पद्मिनी योषिदन्तरे । अब्जेऽब्जिन्याम्' इति हैमः । अमुम् आकाशस्थितं चन्द्रं प्रति । एनं रागिणमुद्दिश्येति च गम्यते । उन्मुखी विकसिता उन्नमितमुखीति च गम्यते ।



कोपभराक्रान्तहृदयत्वेन मुखमुन्नम्य द्रष्टुमप्येनं नेच्छतीति भावः । तदित्यध्याहारः । यत्तदोर्नित्यसंबन्धात् । तत् तस्मादेव कारणात् । अत्र अस्यां पद्मिन्याम् । पतिव्रतागुणः पातिव्रत्यम् एकपत्यैव मोदमानत्वम् सूर्यादन्यस्य संपर्केणाविकासित्वमिति यावत् । पद्मिनीजातिस्त्रियश्चारुशीलाः पतिदेवता भवन्तीति तथात्वमिति च । प्रभवति कल्पते सुष्ठु युज्यते समुचितः प्रतिभातीत्यर्थः । रात्रौ चन्द्रकिरणाः पद्मानि स्पृशन्ति । सूर्यापगमनेन मुकुलितानां पद्मानामधोनमनमेव भवति नतून्नमनम् । चन्द्रकिरणगाढस्पर्शेनापि तेषां न विकासः नचोन्नमनम् । अमुमेवार्थं स्वप्रौढोक्त्या रागी चन्द्रः पद्मिनीमिमां स्पृशति मुहुर्मुहुस्तत्समागमाभिलाषी । सा च पद्मिनी पतिदेवतेत्यमुं मुखमुन्नमय्यापि नोद्वीक्षते । अहो उचिता प्रोषितभर्तृकाणां शीलधनानां पतिदेवतानामियं स्थितिरिति प्रशंसति । नायिकाचेयं स्वीया । स्वीयायाश्च लक्षणमेवम्–" स्वामिन्येवानुरक्ता स्वीया । .... अस्याश्चेष्टाः भर्तृशुश्रूषा शीलसंरक्षणमार्जवं क्षमा च" इति । अत्र वाक्यार्थं प्रति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । तच्च श्लेषमूलम् ॥

**अनुदर्शमनुप्रवेशत**
**स्तपनाच्छक्तिमवाप तापिनीम् ।**
**नियतं हिमदीधितिर्यतः** ॥ 49 ॥
**क्षमते तापयितुं वियोगिनीः ॥**

**अनुदर्शमिति** ॥ यतः यस्मात् येन कारणेन । हेतौ पञ्चमी । पञ्चम्यास्तसिः । हिमदीधितिः शीतरश्मिः चन्द्रः । कर्ता । वियोगिनीः विरहिणीः तापयितुम् संतापयितुम् पीडयितुम् । क्षमते प्रभवति प्रगल्भते । तत इत्यर्थः । दर्शे दर्शे अनुदर्शम् प्रत्यमायाम् । 'अमावास्या त्वमावस्या दर्शस्सूर्येन्दुसंगमः' इत्यमरः । वीप्सायामव्ययीभावः । अनुप्रवेशतः (सूर्येण) सहप्रवेशात् सहस्थित्येत्यर्थः । 'अनु हीने सहार्थे च पश्चा

त्सादृश्ययोरपि' इत्यमरः। पञ्चम्यास्तसिः। चन्द्रस्य सूर्येण सह दर्शे स्थितिं देवीपुराणमित्थं वर्णयति – "कलाष्षोडश सोमस्य शुक्ले वर्धयते रविः। अमृतेनामृतं कृष्णे पीयते दैवतैः क्रमात्॥ कलाव शिष्टो निष्पीतः प्रविष्टस्सूर्यमण्डलम्। अमायां विशते रश्मौ अमा वासी ततस्स्मृता" इति। तपनात् सूर्यात् तपतीति ल्युः। तपिर न्तर्भावितण्यर्थः। अतएव 'तपनस्तापनो रविः' इति संसारार्णवः। तापजनकात् सूर्यादिति यावत्। तापिनीम् तापयतीति कर्तरि ल्युट्। टित्वान्ङीप्। संतापकारिणीमित्यर्थः। तादृशीम् शक्तिम् सामर्थ्यम् 'कासूसामर्थ्ययोश्शक्तिः' इत्यमरः। ताम् अवाप प्राप। नियतम् ध्रुवमित्युत्प्रेक्षावाची। चन्द्रोऽयं शीतांशुरपि वियोगभाजः स्त्रियस्ताप वतीः करोतीति सूर्येण सहस्थितिवेलायामनेन तपनस्य तस्य दाहकता प्रयत्नेन समुपलब्धा। नोचेदस्य सुधामूर्तेः कथं वा विरहिषु ताप कारित्वमिति तात्पर्यार्थः। विरहिजनमारकोऽयं वर्तत इति रागोद्दीप कतास्य दुर्भरेति परमार्थः। अत्र वियोगिनीबाधकतायास्स्वतस्सिद्धाया स्तपनसहस्थितिसमुपलब्धशक्तिकत्वेन संभवनं संभाव्यत इति क्रियो त्प्रेक्षेयम्। काव्यलिङ्गं च तदुज्जीवकमित्येतयोस्संकरः। नैषधे श्री हर्षोऽपि चन्द्रमेवं वर्णयति – "प्रतिमासमसौ निशाकरः खग संयच्छति वह्निनाधिपम्। किमु तीव्रतरैस्ततः करैर्मम दाहाय स धैर्यतस्करैः" इति॥

चन्द्रकलङ्कोऽद्य त्रिभिश्श्लोकैरित आरभ्य प्रस्तूयते –

**अलिविभ्रममन्तरेति य**
**न्नविधोस्तन्मृगलक्ष्म किन्त्वयम्।**
**पुरजिद्रथचक्रतार्जितो**
**बहलः कज्जललेपकालिमा॥** ॥ 50 ॥

**अलीति**॥ विधोः चन्द्रस्य चन्द्रबिम्बस्येत्यर्थः। अन्तरा मध्य



भागे। अलेः भृङ्गस्य विभ्रमः शोभा तत्सदृशी शोभेत्यर्थः। 'अथ विभ्रमः। शोभायां संशये हावे' इति हैमः। (सः) इति यत्। तत्। मृगलक्ष्म हरिणरूपं चिह्नम् न नैव। मगाङ्क इति व्यव हारोऽस्मिन् गतानुगतिकन्यायेन क्रियते परिशीलनेन तु न तथेति भावः। किन्तु किमितिचेत् परिशील्य किमित्युच्यत इति चेदित्यर्थः। अयम् दृश्यमानः अङ्क इत्यर्थः। पुराणि जितवान् पुरजित्। क्विप्। त्रिपुरजेता शिवः। तस्य रथः स्यन्दनम् भूरूपम्। तस्य चक्रः रथावयवः रथाङ्गम् तस्य भावः तत्ता। तद्रथचक्राकारेण स्थिति रित्यर्थः। तेन अर्जितः सम्पादितः समुपलब्धः संप्राप्तः। बहुलः अधिकः। कज्जलम् अञ्जनम् (अक्षे चक्रभ्रमणाय निक्षिप्यमाणम्) तस्य लेपः अनुलेपनम् तस्मात् कालिमा कृष्णवर्णः। तदुद्भूतनीलिमेत्यर्थः। त्रिपुरासुरसंहारसमये भगवान् महेश्वरो धन्वी भूत्वा मेरुं धनुः, श्रीमहा विष्णुं बाणम्, ब्रह्माणं सारथिम्, वेदानश्वान्, भूमिं रथम् चन्द्र सूर्यौ रथाङ्गे च कृत्वा महासुरांस्तानजयत्। तदानीं रथाक्षे निक्षिप्तं सदस्मिन् लग्नं कज्जलं नीलिमानं सृजत्येतदन्तरा। न तु मृगो वर्ततेऽस्मिन्निति प्रकथ्यते। अत्र पुरजिद्रथकालिम्नोऽप्रकृतस्यारोपार्थो मृगलक्ष्मेदं नेत्यपह्नवः क्रियत इति स च निह्नुतस्य परस्मिन्नारोपार्थो न भवतीति शुद्धापह्नुतिरलङ्कारः – "शुद्धापह्नुतिरन्यस्यारोपार्थो धर्म निह्नवः" इति तल्लक्षणात्॥

**मघवन्मणिभङ्गमेचक**
**शशिनि श्यामलिमा चकास्ति यः।**
**जनयत्ययमङ्कपालिका**
**प्रणयालीननिशीथिनीधियम्॥** ॥ 51 ॥

**मघवदिति**॥ शशिनि शशधरे चन्द्रे। शशोऽस्यास्तीतीनिः। मघवन्मणिः इन्द्रनीलमाणिक्यम् तस्य भङ्गः खण्डः। नीलिमातिशय

संपादनार्थमेवमुक्तिः । 'भङ्गः खण्डे पराजये' इति नानार्थरत्नमाला । स इव मेचकः नीलः । 'कृष्णे नीलासितश्यामकालश्यामलमेचकाः' इत्यमरः । तादृशः । यः योऽयम् श्यामलिमा नीलिमा नैल्यम् 'वर्ण दृढादिभ्य' इतीमनिच् । चकास्ति प्रकाशते । अयम् सोऽयं नीलिमा । कर्ता । अङ्कपाल्येव अङ्कपालिका आश्लेषः परिरम्भणम् । तथा च भवभूतिर्मालतीमाधवे – "तावद् गाढं वितर सकृदप्यङ्कपालीं प्रसीद" इति । तत्र प्रणयेन प्रेम्णा आलीना प्रश्लिष्टा एकतां प्राप्ता । आङ् पूर्वात् ली श्लेषणे – इत्यस्मात् क्तः । 'ल्वादिभ्य' इति निष्ठातो नः । तथाविधा निशीथिनी रात्रिः सा इति धीः बुद्धिः ताम् । जनयति उत्पादयति । निशानाथश्चन्द्रः । तस्य च प्रिया रात्रिः । निशा च नीलमणिरिव भृशं श्यामला । सा च स्वनाथं गाढमाश्लिष्टा प्रणयपारवश्येन तस्मिन् विलीना । एवं विलीनायास्तस्या नीलवर्ण श्चन्द्रे दृश्यत इत्यभ्यूहितुं शक्यत इत्यर्थः । अत्र चन्द्रगतनीलिम्नि चन्द्रविलीननिशीथिनीनीलिमासंभावनेति स्वरूपोत्प्रेक्षेयम् । 'मणि वन्मणिभङ्ग' इत्युपमा च साम्यसंपादनेन चरितार्था संभावनामिमां पोषयतीत्युपमया संकीर्णेयम् । रात्रिश्चन्द्रप्रियेति कवयो वर्णयन्ति । तथा च श्रीहर्षः – "गौरे प्रिये भातितमां तमिस्रा ज्योत्स्नी च नीले दयिता यदस्मिन् । शोभाप्तिलोभादुभयोस्तयोर्वा सितासितां मूर्तिमयं बिभर्ति" इति ॥

**कलयामि कलङ्ककैतवा**
**न्नियतं धारयते †[ कलानिधिः ।**
**भवदीयमुखाम्बुजश्रिया**
**विजितोऽस्मीति हृदि व्यथां ह्रिया ] ॥ ॥ 52 ॥**

† इतः परमुपत्रिंशत्पद्यलेखनपर्याप्तोऽवकाशश्शून्येषु तालपत्रेषु मातृकासंबन्धिषु दृश्यते । 'व्याघ्रपुरी' इत्याद्यारभ्यमाणं पद्यं वृत्तविपरिणामेन संभाव्यतेऽष्टमसर्गान्तर्भाव्येवेति ।



**कलयामीति** ॥ कलानिधिः चन्द्रः । विद्वान् विवेकीति च गम्यते । भवदीयम् त्वदीयम् कम्पराजीयमित्यर्थः । मुखमेव अम्बुजम् आननपद्मम् तस्य श्रीः शोभा स्त्रीति गम्यते । तया । अस्मीत्यह मर्थेऽव्ययम् । अहमित्यर्थः । विजितः पराजितः । सहजवैरिणा तत्रापि स्त्रियेति भावः । पद्मानां च चन्द्रस्य च प्रकृतिसिद्धो वैरः । तं जेतुकामा पद्मिनी तपस्तप्त्वा दैवतानुग्रहसंपादनेन कम्पराजमुखतया परिणता । मुखपद्मस्य शोभा चन्द्रं तृणीकरोति स्वसौभाग्येन । चन्द्रगुणाः प्रसन्नतादयः पद्मगुणास्सौरभादयश्चास्मिन् वर्तन्त इति पद्मसौरभादिहीनश्चन्द्रोऽनया मुखपद्मश्रिया विजितः । राजखमुपद्मा इति एतस्माद्धेतोः च्छोभया निकृष्टो जातः पराजित इति परमार्थः । व्यथाम् बाधाम् वैरिपराभवजनि ह्रिया मनस्संकोचरूपया व्रीडया । हृदि हृदये तत्वेन दुर्भराम् । मनस्वित्वात्कलानिधित्वाच्चेति भावः । कलङ्कः लाञ्छनम् स्वप्रख्यापकं चिह्नम् अन्तः अन्तरा चेति गम्यते । दुःखमेवेत्यर्थः । ताम् । इति कैतवः व्याजः वस्तुतस्तु न तथा । कलयामि इति जानामि । धारयते धरति वहति । नियतम् ध्रुवम् । स्वप्रियस्य श्रिया चन्द्रश्रिया च विराजमानं सदप्रतिद्वन्द्वं भ्राजते मुखमिति स्वानुरागं तस्मिन् प्रकाशयति कवयित्रीयम् । अत्र कैतवापह्नुत्या कलङ्कोऽस्मिन् कलङ्कत्वापह्नुतिमूला द्रव्योत्प्रेक्षाऽलङ्कारः । अत्र वृत्तं न विपरिणमितमिति सर्गस्य परिव्यथात्वसंभावनात् । शिष्टता ज्ञायते ॥

इति
श्रीगङ्गादेव्या विरचिते
मधुराविजयनाम्नि वीरकम्परायचरिते
चन्द्रोदयकीर्तनं नाम
सप्तमसर्गः

* * * *

**इतीति** ।। शेषं सर्वं पूर्ववत् । इति अपरिसमाप्तस्यापि **सर्गस्य** परिसमाप्तिं बुद्धचा संभाव्य 'इति परिसमाप्तः' इत्युच्यत इतीदानीं वेदितव्यम् । चन्द्रोदयः चन्द्रस्य उदयनम् आविर्भावः प्रकाशः तस्य कीर्तनम् प्रशंसा वर्णनम् "ईट्टे वर्णयति स्तौति स्तुते नौति प्रशंसति । वन्दते कीर्तयति च श्लाघते चाभिनन्दति" इति क्रियानिघण्टुः । अन्धकारनक्षत्रोदयप्रशंसात्वेतदङ्गतयैव प्रवृत्तेति नात्र तयोः पृथक्कीर्तनम् । नामेति प्रसिद्धौ । उदितचन्द्रप्रस्तुत्या सुविदितः इत्यर्थः । सप्तमः सप्तसंख्यापूरकः । पूरणे डट् मट् च । (सर्गः इति) इति तु विशेषः ।।

इति
श्रीपरमेश्वरीकृपासमुपलब्धशास्त्रसाहितीवैदुष्य
'साहित्यालङ्कार' 'विद्वत्कवीशान'
**पोतुकुच्चि सुब्रह्मण्यशास्त्रिणा**
'काव्यकलानिधि' 'महीशूरमहाराजास्थानमहाविद्वत्कवि'
श्रीचिदम्बरशास्त्रिणां भागिनेयेन विरचितया
**भावप्रकाशिका**ख्यव्याख्यया समलङ्कृतायाम्
श्रीगङ्गादेव्याः कृतौ मधुराविजये महाकाव्ये
चन्द्रोदयवर्णनं नाम
**सप्तमसर्गः**

* * * *

*

श्रीः

# मधुराविजयम्

## भावप्रकाशिकाख्यव्याख्यासमेतम्

## अष्टमसर्गः

अस्मिन् काव्ये प्रधानतया वर्ण्यमानस्य वीरस्य करुणरसमङ्गभावं प्रापयन्ती मधुरापुराधिदेवतां तदालम्बनं विरचय्य तद्विलापदीनवचनादिभिर्वीररसस्थायिनमुत्साहं कम्पराजे परिपोषयितुं सर्गमिममुपक्रमते कवयित्री । ( अत्र सर्गप्रारम्भ एव त्रिंशश्लोकाः प्रायेण लुप्ता इत्यभ्यूहितुं शक्यते । पूर्वकथासंगतिस्त्वेवम् ।) [गङ्गादेव्याश्चन्द्रोदयवर्णनेन समुद्दीपितरागो रसज्ञशेखरस्स्वप्रियां तां गाढपरिरम्भणादिभिस्संभाव्य तया सह क्रीडन् कुसुमतल्पे सुष्वाप । ततो निशीथ्यां निरलङ्कारापि स्वतेजसा दीपयन्ती शुद्धान्तगृहान्, बाष्पपर्याकुलनयना विलुलितालका मलिनवसनं वसाना मूर्तिमान् करुण इव विद्रावयन्ती पश्यतां हृदयानि, निजनिश्वासैरुपदिशतीव स्तनतटयुगस्य नर्तनक्रीडां, दृष्टिदोषशङ्कयेव निजमुखचन्द्रमकलङ्कमधो नमयन्ती, धूर्तचेष्टितैर्भृशमुद्विग्ना धर्मदेवतेव, प्राणेश्वरप्रवासमनुभवन्ती पतिदेवतेव, ग्रीष्मवाताभिहता प्रशुष्यन्ती लतेव प्रत्यक्षयांबभूव काचिदङ्गनामतल्लीकम्पराजमभि । हठात्प्रबुद्धस्स च राजा किमिदमिति विस्मयमानस्तामालोकयन्नेवमवादीत् – 'आर्ये! नूनमिदम्, दिव्यवनिता भवती । किमुद्दिश्य कुतो वा निशीथेऽस्मिन् मद्भवनमुपगताऽसि भवति ? किमनाथेव विलपन्ती दैन्यमवलम्बसि । कुतः किमागतं भयं भवत्याः । मत्तः किमभिलषसि? शीघ्रमाज्ञापय मामिमम् । सत्यं प्रतिश्रृणोमि त्वदभिलषितं भवतु यत्किमपि तदवश्यं साधयामि सद्यः । विश्वसिहि

माम्, मा कुरु भयम्' – इत्येवं जलदगम्भीरया गिरा वदत्यार्तत्राणपरायणे राजशेखरे तस्मिन् सिद्धार्थेव प्रमुदितहृदया न्यवेदयदित्थं स्वागमनवृत्तान्तम् – 'अयि वीरप्रवर कार्यान्तरमनुष्याकृते किं न विदितमिव प्रक्ष्यसि मद्वृत्तम्, विदितमपि मन्मुखादेव श्रोतुकामोऽस्ति भवान्। वक्ष्ये, शृणु साम्प्रतं सावधानचेताः। अहमस्मि देवता मधुरापुराधिराजस्य। समागताऽस्मि त्वां प्रपद्य त्वदालम्बनेन दुःखार्णवमुत्तरीतुकामा। त्वामन्तरा न मे गतिरन्या। उद्धरोद्धर मां त्वदेकशरणाम्। यवनराक्षसैरधिगताष्टकष्टा स्वास्थ्यं न लभते दक्षिणभूमिः। घातुको यवनराण्मामतीव बाधते। विदितमेत्र खलु भवता। तथापि त्वां स्मारये निरन्तरप्रवृत्तान्यनन्तानि दुरन्तानि तेषाम्' इति वक्तुमुपचक्रमे] –

"अनेन देशानधिकृत्य दक्षिणान् वितन्यते राक्षसराजदुर्नयः" इति बुक्कराजेन यदुक्तं तन्निरूपणायेव यवनकृतदुरन्तानि कथयितुं प्रक्रमते मधुरापुराधिदेवता –

**[मधुराकृतिभावभावितात्मा**
**मधुरेति प्रथिताह्वया पुरी या।**
**नगरी व्यथिताधुना गतश्रीः**
**प्रथते] व्याघ्रपुरीति सा यथार्थम्॥** ॥ 1 ॥

**मधुरेति**॥ या नगरी यत् पुरम्। मधुरा दर्शनीया आकृतिः रूपसौष्ठवम् भावः विलासः 'भावस्सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु। क्रियालीलापदार्थेषु' इति मेदिनी। ताभ्याम् भावितः प्राप्तः आत्मा आकारः स्वमूर्तिः यस्याः तस्याः सौन्दर्यविलासाभ्यां मूर्तिमतीत्यर्थः। 'लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च' इत्यमरः। अतएव पुरा पूर्वम् गतकाले इत्यर्थः। मधुरा इति



'मधुरा' इत्येवं शब्देन प्रथितः प्रसिद्धिं गतः आह्वयः नाम यस्याः सा। तथाभूता। अन्वर्थनामेत्यर्थः। 'मधुरा शतपुष्पायां मिश्रेयानगरीभिदोः' इति मेदिनी। सा तत् पत्तनम्। अधुना इदानीम् अस्मिन् समये। त्वयि राजन्यपीति भावः! व्यथिता संजातपीडा तुरुष्कैर्बाधितेत्यर्थः। अतएव गता नष्टा श्रीः लक्ष्मीः स्वशोभा यस्याः तथाभूता कान्तिहीना दैन्यवती। व्याघ्रवत् भयजनिका पुरी तथा। तुरुष्कराजधानीत्वेन उपस्थितानां प्राणोपद्रवकरी। यद्वा व्याघ्रयुता पुरी। नृशंसास्तुरुष्का एव व्याघ्रसाम्याद्व्याघ्रा इत्युच्यन्ते। तैः संभरिता पुरी व्याघ्रपुरीति वा। यद्वा – वक्ष्यमाणरीत्या शूलप्रोतनरकपालादिविकृतभावैर्भयजननी तथेति वा। व्याघ्रपुरी इति 'व्याघ्रपुरी' इत्येवं शब्देन अर्थमनतिक्रम्य यथार्थम् अर्थवत् समुपलब्धार्था प्रथते प्रख्याति लोके विदिता भवति। इदानीं मधुरा पुरी स्वरामणीयकं सर्वं परित्यज्य तुरुष्ककृतहेयकृत्यैर्बीभत्सालवाला भयं जनयतीति सारांशः। पुरानुभूतदशाया इदानीमनुभूयमानदुर्दशायाश्च नैव साम्यं किञ्चिदपीति परमार्थः। अस्मिन् सर्गे वृत्तमौपच्छन्दसिकम् – "पर्यन्ते यौ तथैव शेषं चौपच्छन्दसिकं सुधीभिरुक्तम्" इति स्मरणात्। सर्गोऽयं मधुरापुरदेवतायास्स्वप्नदर्शनेनोपक्रान्तः परिसमाप्यते तुरुष्कवधाय दिव्यखड्गमस्मै प्रदाय तन्निष्क्रमणेन॥

तुरुष्ककृतं देवतालयोपद्रवं कथयति –

**अधिरङ्गमवाप्तयोगनिद्रं**
**हरिमुद्वेजयतीति जातभीतिः।**
**पतितं मुहुरिष्टकानिकायं**
**फणचक्रेण निवारयत्यहीन्द्रः॥** ॥ 2 ॥

**अधीति**॥ अहीन्द्रः सर्पराजः शेषः। कर्ता। अधिरङ्गम्

श्रीरङ्गे । विभक्त्यर्थेऽव्ययीभावः । अवाप्ता संप्राप्ता योगनिद्रा योगः ध्यानम् चित्तवृत्तिनिरोधः । " योगश्चित्तवृत्तिनिरोध " इति पतञ्जलिः । ' योगसंहननोपायध्यानसंगतियुक्तिषु ' इत्यमरः । स एव निद्रा बाह्ये न्द्रियनिमीलनम् सा येन तथोक्तम् । हरिम् विष्णुम् श्रीरङ्गनाथ स्वामिनमित्यर्थः । उद्वेजयति भृशमाकुलयति चित्तक्षोभं जनयति इति एतस्माद्धेतोः ' इति प्रकरणे हेतौ प्रकाशादिसमाप्तिषु । निदर्शने प्रकारे स्यादनुकर्षेच संमतम् ' इति विश्वः । जाता संजाता समुत्पन्ना भीतिः भयम् यस्य तथाविधः । पतितम् भ्रंशमानम् देवगर्भगृहा दित्यर्थः । 'आदिकर्मणि क्तः कर्तरि च ' इति क्तः । तथाविधम् इष्टकानिकायम् – इष्टाः मृण्मयपाषाणविशेषाः । त एव इष्टकाः । स्वार्थे कः । तेषाम् निकायः समूहः । ' निकायस्तु पुमान् लक्ष्ये सधर्मिप्राणिसंहतौ । समुच्चये संहतानां निलये परमात्मनि ' इति मेदिनी । तम् । कर्म । फणानाम् स्वीयस्फटानाम् । ' स्फटायां तु फणा द्वयोः ' इत्यमरः । चक्रेण समूहेन स्वीयसहस्रफणैरित्यर्थः । 'चक्रः कोके पुमान् क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः । जलावर्तेऽपि ' इति मेदिनी । तेन करण भूतेन । इष्टकाः स्वफणैः बिभ्रन्निति यावत् । निवारयति निरुणद्धि अपसारयति दूरीकरोति । संस्कारराहित्येन देवागारगर्भगृहम् प्रशिथिलं सत् इष्टका अधः पातयति । श्रीमहाविष्णोरेकान्तभक्तश्शेषस्स्वाम्युपरि ताः पतेयुर्योगनिद्राभङ्गं जनयेयुरिति स्वफणैस्ता अवरुध्य स्वस्मिन् शयानं श्रीरङ्गनाथं सर्वजगद्रक्षकं रक्षति । "कावेरी विरजा सेयं वैकुण्ठं रङ्गमन्दिरम् । परवासुदेवो रङ्गेशः प्रत्यक्षं परमं पदम्" इत्यागमैर्बहुधा वर्णितस्य साक्षाद्भूलोकवैकुण्ठस्य श्रीरङ्गक्षेत्रस्य तुरुष्का क्रान्ततया संवृत्तेदानीमीदृशी दुर्दशेति यवनराजवधाय कम्पराजं चोदयति मधुरापुराधिदेवता ॥

देवालयानां दुर्दशामेव प्रकथयति —



**[ तततन्त्व ] नुघूर्णदूर्णनाभं**
**वनवेदण्डविमर्दिनीमवस्थाम् ।**
**विरतान्यपरिच्छदप्रपञ्चो**
**भजते हन्त गजप्रमाथिनाथः ॥** ॥ 3 ॥

**ततेति** ॥ गजम् गजासुरम् प्रमथति नाशयतीति गजप्रमाथी गजासुरसंहारकः । सुपीति णिनिः । सचासौ नाथः ईश्वरः । नाथृ याच्ञोपतापैश्वर्याशीष्षु – अच् । शिवः श्रीकालहस्तीश्वरो वा जम्बु केश्वरो वा , अन्यो गजासुरक्षेत्रेश्वरो वा । तताः विस्तृताः ओतप्रोतभावेन ऊताः तन्तवः सूक्ष्माणि सूत्राणि । तान् अनु अनु सृत्य तदाश्रयेणेत्यर्थः । घूर्णन्तः भ्रमन्तः ऊर्णनाभाः लूताः ' लूता स्त्री तन्तुवायोर्णनाभमर्कटकास्समाः ' इत्यमरः । ऊर्णेव कदलीसूत्रमिव तन्तुः नाभावस्येति विग्रहः । ' अच् ' इति योगविभागात्समासान्तोऽच् । ' वनवेतण्ड ' इति ते यस्मिन् कर्मणि तथा, वनवेदण्डाः वनगजाः । ' वनवेतण्ड ' इति मातृकापाठः । वेदण्डशब्द एव युक्त इति पूर्वमुक्तम् । तेषाम् विमर्दः संघर्षः तत्कृता वप्रक्रीडेति यावत् । सोऽस्यामस्तीति मतुप् । ङीप् । तादृशीम् अवस्थाम् अवस्थाविशेषम् दुःस्थितिमित्यर्थः । ताम् कर्म । विरतः स्वसेवायाः विश्रान्तः आत्मानं परित्यज्य तुरुष्कभयाद्यत्र कुत्रापि देशान्तरे विलीन इत्यर्थः । तादृशः अन्यः इतरः लूता वेदण्डेभ्यो भिन्न इत्यर्थः । तादृक् परिच्छदः परिवारः सहायजनः यस्य तादृशः । लूतावेदण्डमात्रपरिजनस्सन्निति यावत् । परिच्छाद्यते ऽनेनेति परिच्छदः । ' पुंसि संज्ञायामिति घः । ' चादेर्घेऽद्व्युपसर्ग स्ये ' ति ह्रस्वः । भजते सेवते प्राप्नोति । तादृशीं दुस्थितिमनुभवन् स्थितः एकाकी सन् परमेश्वर इदानीमिति भावः । हन्तेति खेदे । सर्वजगन्नियामकस्य परमेश्वरस्याऽपि नियन्ता संवृत्तो यवनकीट इदानीमिति खिद्यते । हन्तेति विस्मये वा । अहो परमेश्वरस्य

सर्वशक्तिसंपन्नस्य सहनमिति । महाक्षेत्रमीश्वरक्षेत्रमिदं परित्यज्य तुरुष्क संप्राप्तमहाभयेन गते देवपूजकादौ स्वपरिचारकवर्गे लूताभिस्स्वोपरि कृतवयनेन वेदण्डैस्स्वस्मिन् कृतवप्रक्रीडया च सर्वशून्यां निस्सहाय स्थितिं परमेश्वरोऽपि प्राकृतवदनुभवतीति परमार्थः ।।

**घुणजग्धकवाटसम्पुटानि**
**स्फुटदूर्वाङ्कुरसन्धिमण्डपानि ।**
**श्लथगर्भगृहाणि वीक्ष्य दूये**
**भृशमन्यान्यपि देवताकुलानि ।।** ।। 4 ।।

**घुणेति** ।। घुणाः काष्टवेधकाः कीटाः तैः जग्धानि भक्षितानि । अद भक्षणे – क्तः । ' अदो जग्धिर्ल्यप्तिकि ' तीति जग्धिः । कवाटानाम् कपाटानाम् अररीणाम् (द्वाराच्छादकानाम्) 'अररः पुनः । कपाटोऽररिः कवाटः' इति हैमः । तेषाम् सम्पुटानि मुकुलनानि येषु तानि घुणभक्षितवद्धकवाटानीत्यर्थः । किञ्च । स्फुटाः दूर्वाङ्कुराः शतपर्विकानूतनोद्भिदाः ' दूर्वा तु शतपर्विका सहस्रवीर्याभार्गव्यौ रुहानन्ता ' इत्यमरः । तेषाम् संधिः संश्लेषः । 'संधिश्श्लेषे ' इत्यमरः । तद्युतमण्डपाः उत्सवादिषु देवताविग्रहनिक्षेपाय विरचिता स्तम्भमात्राश्रयाः देवालयपुरोभागाः येषु तानि । किञ्च । गृहाणाम् देवभवनानाम् गर्भाः अन्तःप्रदेशाः देवतास्थानानि गर्भगृहाणि । एकदेशिसमासः । श्लथाः विश्लथाः जीर्णाः गर्भगृहाः येषु तानि । अन्यानि पूर्वोक्तेभ्यः भिन्नानि । देवतानाम् कुलानि गृहाणि । देवालयान् । 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबं कण्टकार्योषधौ कुली ' इति मेदिनी । तानि कर्म । वीक्ष्य अवलोक्य भृशम् अधिकम् दूये व्यथे दुःखयामि । तुरुष्कराक्षसेभ्य इदानीमितर देवालयानामपि संप्राप्ता जीर्णावस्था संस्कारहीनता च मां नित्यं



खेदयतः । एतादृशी शोच्या दशा त्वयि स्थिते नार्हा हैन्दवजीवित सर्वस्वानां तेषाम् । अतोऽवश्यं प्रतिकर्तव्योऽयं दुर्विधिरिति तात्पर्यार्थः ।।

**मुखराणि पुरा मृदङ्गघोषै**
**रभितो देवकुलानि यान्यभूवन् ।**
**तुमुलानि भवन्ति फेरवाणां**
**निनदैस्तानि भयङ्करैरिदानीम् ।।** ।। 5 ।।

**मुखराणीति** ।। पुरा गते काले यवनाक्रमणात् पूर्वस्मिन् समये इत्यर्थः । अभितः सर्वाणि ' समीपोभयतश्शीघ्रसाकल्याभिमुखेऽभितः ' इत्यमरः । यानि ये देवकुलानि देवालयाः मृदङ्गघोषैः मुरजध्वनिभिः सन्ध्याकाले देवदासीनृत्यादिभिस्सह प्रवृत्तैरित्यर्थः । मुखराणि वाचालानि भृशं शब्दायमानानि श्राव्यतयेत्यर्थः । अभूवन् आसन् । तादृशवैभवं यान्यन्वभूवन् । तानि त एव इदानीम् अस्मिन् काले । त्वयि देशरक्षणे जागरूके सत्येवेति भावः । भयंकरैः भयजनकैः अरिष्टदायित्वेन विकृतस्वरत्वेन चेत्यर्थः । फेरवाणाम् ( 'फे' इति रवः येषाम्) जम्बुकानाम् । ' स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः । सृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ' इत्यमरः । ( तेषाम् ) निनदैः ध्वनिभिः । तुमुलानि संकुलानि सर्वत्र संपूरितानीत्यर्थः । तथाविधानि भवन्ति वर्तन्ते । संपद्यन्ते । पुरा बलिप्रदानादिसमये देवदासीनृत्यादिभिर्महावैभवमनुभवन्तो देवगृहाः लोकमाह्लादयामासुः । त इदानीं तुरुष्कभयात्तत्समीपमागन्तुमपि भीतैर्जनैर्विजना भूत्वा प्रेतभूमय इव मांसलुब्धाभिश्शिवाभिरावृतास्त द्रुतैर्महाभयं जनयन्ति । पवित्राणां देवालयानां कारणजन्मनि त्वयि स्थिते युक्ता नन्वीदृशी दुस्थितिरिति कम्पनं कर्तव्यकरणे प्रेरयति मधुराधिदेवता । देवतानां बलिप्रदानसमये नृत्यादि विहितम् । अत एव – " अप्यन्यस्मिन् जलधर महाकालमासाद्य काले स्थातव्यं

ते नयनविषयं यावदत्येति भानुः। कुर्वन् सन्ध्याबलिपटहतां शूलिन श्लाघनीयामामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम्" अत्र नाथ व्याख्या - 'सन्ध्याबलिपटहतां सन्ध्यासमयभूतबलिप्रदानार्थः पटहः' इत्याह। उत्तरश्लोकेऽपि अयंभावः। "महाकालं सेवित्वा सेवोपकरणानि तान्येव चामराणि धारयन्त्यः क्लान्तहस्ता देवदास्यस्तत्र बलिप्रदानसमये नृत्यन्ति" इति। मल्लिनाथस्तु बलिशब्दस्य पूजार्थकतामाह। बल्यङ्गत्वं वा पूजाङ्गत्वं वा नृत्यस्येत्यवधेयम्॥

कावेर्यास्संभूतं यवनोपद्रवं वर्णयति—

**अतिलङ्घ्य चिरन्तनीं स्वसीमा**
**मपदेष्वर्पितजीवनप्रवृत्तिः।**
**मुहुरुत्पथगामिनी तुलुष्का**
**नधुना हाऽनुकरोति सह्यकन्या॥** ॥ 6 ॥

**अतीति॥** सह्यकन्या कावेरी दक्षिणगङ्गेति प्रसिद्धा। कवेरकन्येयमगस्त्येन कमण्डलौ धृता सह्यपर्वतसमीपे नदीत्वेन प्रावहदित्येवमुच्यते। सा कर्त्री। चिरन्तनीम् चिरकालोद्भवाम् बहुकालसिद्धाम् परमेश्वरकृतामित्यर्थः। (पक्षद्वयेऽपि सममिदम्।)। (कावेरीपक्षे) स्वसीमाम् स्वीयमर्यादाम् (तुरुष्कपक्षे) स्वनिवासभूतं म्लेच्छदेशमिति च। 'सीमसीमे इमे क्षेत्रे। कूलमर्यादयोरपि' इति नानार्थरत्नमाला। सीमा च चतुर्विधेति निघण्टुकाराः। देशसीमा ग्रामसीमा क्षेत्रसीमा गृहसीमा – इति। 'डाबुभाभ्या' मिति पक्षे डाप्। ताम् अतिलङ्घ्य अतिक्रम्य (कावेरीपक्षे) मर्यादोल्लङ्घनं कृत्वेत्यर्थः। (तुरुष्कपक्षे) स्वदेशसीमामुल्लङ्घ्य स्वम्लेच्छदेशानतीत्येत्यर्थः। (कावेरीपक्षे) अपदेषु अस्थानेषु अनुचितेषु स्थानेषु स्वस्थितेरननुकूलेषु प्रदेशेषु तुरुष्कपरिकल्पितेषु तेषु तेष्वपथेष्विति यावत्। 'पदं व्यवसित



त्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। तेषु। (कावेरीपक्षे) अर्पिता न्यस्ता तुरुष्कानुसृत्येत्यर्थः। जीवनस्य जलस्य प्रवृत्तिः प्रवर्तनम् स्वप्रवहणम् यस्याः। तादृशी। तदनुकूलतया तन्निर्मितैर्मार्गैः प्रवहन्तीत्यर्थः। यद्वा। अपदेषु अयोग्येषु धर्मबाह्येषु म्लेच्छेषु अर्पिता दत्ता जीवनप्रवृत्तिः स्वजीवनप्रवर्तनम् यस्या इति वा। (तुरुष्कपक्षे) अपदेषु अस्थानेषु स्वस्थितेरननुकूलेषु वर्णाश्रमादिधर्मव्यवस्थावत्स्वार्यावर्तेषु पुण्यभूमिष्वित्यर्थः। म्लेच्छानामेतेषां म्लेच्छभूमिष्वेव स्थितिस्सर्वथा युज्यत इति भावः। म्लेच्छदेशाश्चेत्थमभिहिताः। "चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते। तं म्लेच्छविषयं प्राहुरार्यावर्तमतः परम्" आर्यावर्तं प्रति मनुरित्थमाह। — "आसमुद्राच्च वै पूर्वादासमुद्राच्च पश्चिमात्। हिमवद्विन्ध्ययोर्मध्यमार्यावर्तं विदुर्बुधाः" इति। अमरसिंहेन तु देशविभाग एवं प्रदर्शितः। "शरावत्यास्तु योऽवधेः। देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः। प्रत्यन्तो म्लेच्छदेशस्स्यान्मध्यदेशस्तु मध्यमः। आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः"। इति। शरावतीं प्रति कश्चन कविरेवमाह। "प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा। विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती" इति। (तादृशेष्वार्यावर्तेषु) अर्पिता न्यस्ता स्थापिता। जीवनम् जीविका जीवनोपायः 'आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने' इत्यमरः। जीव प्राणधारणे - करणे ल्युट्। तस्य प्रवृत्तिः प्रवर्तनम् आचरणम् राज्यपरिपालनादीत्यर्थः। (कावेरीपक्षे) मुहुः पुनःपुनः वारं वारम् न त्वेकदेत्यर्थः। उभयत्र समानमिदम्। पथः मार्गादुद्गतः उत्क्रान्तः बहिरागतः उत्पथम् विरुद्धमार्गः अमार्ग इत्यर्थः। प्रादिसमासः। 'ऋक्पूरब्धू' रित्यच्। 'पथस्संख्याव्ययादे' रिति नपुंसकता। तस्मिन् पुनः पुनः गच्छन्तीति उत्पथगामिनी मर्यादालङ्घनेन स्वमार्गेतरमार्गयायिनीत्यर्थः। (तुरुष्कपक्षे) उत्पथम् सत्पथात् भिन्नो मार्गः असन्मार्गः अन्याय्यो मार्गः तस्मिन् गन्तुं

शीलमेषामिति ताच्छील्ये णिनिः । दुष्कार्याचरणेनाधर्ममार्गप्रवृत्तिस्तेषां नैजो गुण इत्यर्थः । एवंभूतान् तुलुष्कान् यवनान् अनुकरोति विडम्बयति तत्सदृशी वर्तते इयमपीत्यर्थः । हा इति खेदे । नदीपराणि विशेषणानि सर्वाणि सर्वत्र तुरुष्कपरतयाऽर्थबोधने पुंलिङ्गतया विपरिणेतव्यानि । तुरुष्काः कावेरीं तत्पथात्प्रचाव्य स्वानुकूलतया मार्गान्तराणि परिकल्प्य प्रावाहयन् । तत्संसर्गेण त इवेयमप्युत्पथगामिनी संवृत्तेति कथ्यते । आर्यावर्तोऽयं पुण्यभूमिः । न तु भोगभूमिः । म्लेच्छास्तु भोगपरायणाः लुप्तधर्माणः । तेषां निवासाय निर्मितास्तदनुगुणा म्लेच्छभूमयः । तत्रैव स्थातव्यास्ते । राजपरिपालनादिना प्रवृत्तिश्च तत्रैव तेषामुचिता । इत्थं स्थिते ते विश्रृङ्खलास्साहसप्रवृत्तयस्स्वदेशान् परित्यज्य पुण्यभूमौ कृतावासा राज्यपरिपालनादिना स्वजीविकां यापयन्त्युत्पथगामिनो दुराचरणेन । महापातकिसंसर्गेण संसर्गीव, नदीयमपि ताननुसरन्ती भगवदाज्ञाभूतं स्वीयं धर्ममुल्लङ्घ्य जीवनमपातेषु दधती उत्पथप्रवृत्त्या तत्सदृशी समजायतेति तात्पर्यार्थः । तुरुष्कास्ते दक्षिणगङ्गेति प्रसिद्धां परमपवित्रां कावेरीमपि स्वसंसर्गेण दूषितामपथगामिनीं चाकुर्वन्निति परमार्थः । श्लिष्टविशेषणेयमुपमा ॥

इदानीमग्रहाराणां दुस्थितिं कथयति —

**सतताध्वरधूमसौरभैः प्राङ्**
**निगमोद्घोषणवद्भिरग्रहारैः ।**
**अधुनाऽजनि विस्रमांसगन्धै**
**रधिकक्षीबतुलुष्कसिंहनादैः ॥** ॥ 7 ॥

**सततेति** ॥ प्राक् पुरा । अध्वराः यागाः ‘ यज्ञस्सवोऽध्वरो यागस्सप्ततन्तुर्मखः क्रतुः ’ इत्यमरः । तेषाम् धूमः अग्नेः प्रज्वलनाय पुरतो दृश्यमाना दण्डाकारा नीलवर्णा धूपपङ्क्तिः तस्य सौरभाणि



सुगन्धाः । सततानि अविच्छिन्नतया प्रवृत्तानि ‘ नित्यं सदा सततमजस्रमिति सातत्ये ’ इत्यापिशलिः । ‘ समो हिततततयो ’ रिति मकारस्य लोपः । तथाविधानि अध्वरधूमसौरभाणि येषु तैः । निगमैः वेदैः । ‘ निगमाः पूर्वणिग्वेदनिश्चयाध्ववणिक्पथाः ’ इति हैमः । उद्घोषणवद्भिः उच्चैर्ध्वननवद्भिः संततप्रवृत्तवेदाध्ययनैरित्यर्थः । तादृशैः अग्रहारैः ब्रह्मप्रतिष्ठापरपर्यायैः निवासाय पोषणाय च ब्राह्मणेभ्यो दीयमानैः ग्रामैः । सप्तसंतानेष्वियमेका । “ ब्रह्मप्रतिष्ठा संतानं तटाको वनमेव च । कृतिर्देवालयश्चैव निक्षेपस्सप्तसंततिः ” इति सप्तसंततयः प्रकीर्तिताः । तैः कर्तृभूतैः । अधुना इदानीम् अस्मिन् समये विस्रमांसानि अपक्वामिषाणि आर्द्रमांसानीत्यर्थः । ‘ पिशितं तरसं मांसं पललं क्रव्यमामिषम् ’ इत्यमरः । तेषां गन्धाः दुर्गन्धाः येषु । तथाविधैः । अधिकम् क्षीबाः अत्यन्तं मत्ताः मद्यस्यातिपानेन मदयुक्ताः अतिमद्यपानेन परवशा इत्यर्थः । तथाविधाः तुलुष्काः तुरुष्काः । रलयोरभेदः । तेषाम् सिंहनादाः वीरगर्जितानि येषु तैः । तथाविधैः । अजनि अभावि । जनेर्भावे लुङ् । दीपजनेति चिण् । चिणो लुगिति लुक् । यज्ञादिपुण्यकर्मभिर्वेदघोषैश्च निर्भरा ब्राह्मणनिवासा अग्रहारभूमय इदानीं तुरुष्कैरधिष्ठिता मद्यपानशाला ( मांसदुर्गन्धभूयिष्ठा ) मांसाहारगृहाश्च कृता इति पिण्डीकृतोऽर्थः ॥

यवनानां घातुकत्वं प्रकथयन्ती मधुरापुरीदुस्थितिमितः प्रभृति पञ्चभिश्श्लोकैर्वर्णयति —

**मधुरोपवनं निरीक्ष्य दूये**
**बहुशः खण्डितनालिकेरषण्डम् ।**
**परितो नृकरोटिकोटिहार**
**प्रचलच्छूलपरम्परापरीतम् ॥** ॥ 8 ॥

**मधुरेति** ॥ बहुशः बहुवारम् । खण्डिताः छिन्नाः नालिकेराः लाङ्गलीवृक्षाः । 'नालिकेरस्तु लाङ्गली' इत्यमरः । अतएव 'नालिकेरचितस्तिलकः' इति दमयन्तीश्लेषः । रद्वितीयलचतुर्थोऽपि साधुः । नारिकेली महावीरैरिव नारिकेलीवनैरिति वासवदत्तायां श्लेषः । तेषाम् षण्डाः समूहाः यस्मिन् । वारं वारं परोपकारपराः फलवृक्षा एते, कल्पवृक्षाः काष्ठेभ्य इव मद्यार्थे छिन्ना अविवेकिभिस्तैरिति भावः । किञ्च । परितः अभितः उपवने सर्वत्रापीत्यर्थः । न्रृणाम् मनुष्याणाम् करोटयः शिरोस्थीनि कपालानि 'शिरोऽस्थिनि करोटः स्त्री" इत्यमरः । तेषाम् कोटयः समूहाः । तेषाम् हाराः मालाः तैः प्रचलन्त्यः अतिशयेन कम्पमानाः भारगौरवाड्डोलेव ततइतो वलमाना इत्यर्थः । तादृश्यः शूलपरम्पराः – शूलायुधसदृशा दीर्घाः आयसयष्टयः शूलानि । तेषाम् समूहाः । अनन्तानि शूलानीत्यर्थः । ताभिः परितः समन्तात् परीतम् व्याप्तम् संकुलम् । मधुरायाः मधुरानगर्याः उपवनम् आरामः कृत्रिमं वनम् सौन्दर्यखनिमित्यर्थः । निरीक्ष्य दृष्ट्वा । दूये परितप्ये । सौन्दर्यातिशयेन भूलोकनन्दनवनमिति जगद्विदितस्य चिरात्पोषितस्य आत्मेवात्यन्तं प्रियतमस्य मदुपवनस्य दुस्सहा दुस्थितिरियं ममेति भावः । अनेन क्रूरमृगा इव यवनाः जनपदेष्वटित्वाऽटित्वा पश्यन्तं हैन्दवजनमात्रं राक्षसा इव निर्दयमहिंसन् क्रौर्येण तदानीमिति ज्ञायते ॥

**रमणीयतरो बभूव यस्मिन्**
**रमणीनां मणिनूपुरप्रणादः ।**
**द्विजशृङ्खलिकाखलत्क्रियाभिः**
**कुरुते राजपथस्स्वकर्णशूलम् ॥ ॥ 9 ॥**

**रमणीयेति** ॥ यस्मिन् मधुरानगरे । राज्ञः पन्थाः राजपथः



राजमार्गः घण्टापथः । 'घण्टापथस्संसरणम्' इत्यमरः । 'दशधन्वन्तरो राजमार्गो घण्टापथस्स्मृत' इति चाणक्यः । रमणीनाम् सुन्दरीणाम् कान्तमभिसरन्तीनामित्यर्थः । दिवाभिसरणमप्यभिसारिकाणामस्ति । अभिसारिकाश्च त्रिविधाः दिवाभिसारिकाः ज्योत्स्नाभिसारिकाः तमिस्राभिसारिका इति । अभिसारिकाः मणिमञ्जीराणि धारयन्ति । तासाम् मणिनूपुराणि रत्नमयान्यङ्गदानि तेषां प्रणादः ध्वनिः । तेन । अत्यन्तं रमणीयः रमणीयतरः भृशं श्राव्यः । मम कर्णयोरमृतायमान इत्यर्थः । तथाविधस्सन् । बभूव आसीत् । पुरेति शेषः । अभिसारिकाणां नूपुरधारणं प्रति रसार्णवसुधाकरकाराः – 'रशनादाममाधुर्यदीपितानङ्गवैभवाः । चरणाम्बुजसंलग्नमणिमञ्जीरमञ्जुला' इत्याहुः । तस्मिन्नित्यर्थः । द्विजाः ब्राह्मणाः तेषाम् शृङ्खलिकाः निगडाः लोहरज्जवः । शृङ्खला एव शृङ्खलिका 'अथ शृङ्खला अन्दुको निगडोऽस्त्री स्यात्' इत्यमरः । आश्रयाश्रयिभावे षष्ठी । तत्पदादिषु संलग्नाश्शृङ्खला इत्यर्थः । तेषाम् खलत्क्रियाः खलत्काराः खलत्खलदित्येवंध्वनयः । (खलदित्यव्ययम् रवानुकरणे । क्रियाशब्दस्स्वरूपवाची ।) स्वम् आत्मा - 'स्वोऽज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः । तस्य ममेत्यर्थः । कर्णयोः श्रवणयोः शूलम् शूलवद्बाधाजनिकाम् रुजम् । 'अस्त्री शूलं रुगायुध' मित्यमरः । कुरुते तनुते । इदानीमिति शेषः । तद्ध्वनिर्मया श्रोतुमशक्यस्सन् मम भृशं दुःखमुत्पादयतीत्यर्थः । एतादृशदुर्दशाविपर्ययमहमनुभवामि त्वयि राजन्यपि नेयमुचितेति भावः । मधुरापुरीराजमार्गेषु प्रियवसतिं प्रति सविलासं गच्छन्त्यो भोगस्त्रियः स्वपादधृतनूपुरध्वनिभिश्श्रोतॄणां श्रवणतर्पणमकुर्वन् । इदानीं यवनास्तेष्वेव मार्गेषु श्रोत्रियान् द्विजान् शृङ्खलाभिर्दृढं पशुमिव बद्ध्वा कारागारंप्रति नीयमानेषूच्चैः प्रवृत्तास्तदार्तध्वनयश्शृण्वतां भयं जनयन्तीति पिण्डीकृतोऽर्थः । कर्मठान् ऋषिकल्पान् श्रोत्रियद्विजान् बन्दीकृत्य यज्ञादि

पुण्यकर्माणि व्यनाशयंस्ते इति परमार्थः । अयोध्यापुराधिदेवता कुशमेवमेव प्रबोधयति – " निशासु भास्वत्कलनूपुराणां यस्संचरोऽभूदभिसारिकाणाम्। नदन्मुखोल्काविचितामिषाभिस्स वाह्यते राजपथश्शिवाभिः ' इति ॥

परितस्तततन्तुवायतन्तु
व्यतिषङ्गाज्जनितानि जालकानि ।
पुरगोपुरसालभञ्जिकानां
दधते चीनपटावगुण्ठनत्वम् ॥ ॥ 10 ॥

**परित इति** ॥ परितः सर्वतः सर्वत्र सर्वप्रदेशेष्वित्यर्थः । तताः विस्तृताः व्याप्तिं नीताः तन्तुवायानाम् लूतानाम् 'लूता स्त्री तन्तुवायोर्णनाभमर्कटकास्समाः' इत्यमरः । तेषाम् तन्तवः (सूक्ष्माणि) सूत्राणि लूतानिर्मिततन्तव इत्यर्थः । तेषु व्यतिषङ्गः अत्यन्तं सङ्गः परितः व्याप्तिरिति यावत् । तेन जनितानि उत्पादितानि परिकल्पितानि जालकानि कुलायानि । 'जालकं कोरके दम्भे कुलायानाययोरपि । न पुंसि मोचनफले स्त्रियां तु वसनान्तरे' इति सुधा। तानि कर्तृभूतानि । स्वामिनां देशान्तरविलीनत्वेन तुरुष्कराज्ञानामुदरप्रसितत्वेन चैवं संवृत्तमिति भावः। पुराणि पत्तनानि तेषाम् गोपुराणि द्वाराणि । 'द्वारमात्रं तु गोपुर' मित्यमरः । तेषु सालभञ्जिकाः दन्तकाष्ठादिनिर्मिताः प्रतिमाः पाञ्चालिकाः राजस्त्रीरूपाः तासाम् चीनपटाः चीनांशुकानि चीनदेशभवानि वस्त्राणि । तस्यातिसूक्ष्मत्वादेवमुच्यते । तेन अवगुण्ठनत्वम् तत्कृतसशिरोमुखप्रावरणवत्ताम् । तत् कर्म । दधते धारयन्ति बिभ्रतीवेति संभावना । डु धाञो लट् । मधुरापुरद्वारेषु सालभञ्जिकाः स्थापिताः। इदानीं धूल्यादिना परितस्समाच्छादितास्ता लूतातन्तूनामालवालभूताः पश्यतां तैस्सूक्ष्मवस्त्राच्छादिता इव भान्ति । ताश्च प्रतिमा राजदारा इति तासामव



गुण्ठनमत्यावश्यकमिति धिया तदेता लूता स्तासां स्वजालैः कल्पयन्तीव स्थिता इति पिण्डीकृतोऽर्थः। अत्र लूतातन्तुजालकेषु चीरपटावगुण्ठनत्ववहनसंभावनेति क्रियोत्प्रेक्षाऽलङ्कारः ॥

हिमचन्दनवारिसेकशीता
न्यभवन् यानि गृहाङ्गणानि राज्ञाम् ।
हृदयं मम खेदयन्ति तानि
द्विजबन्दीनयनाम्बुदूषितानि ॥ ॥ 11 ॥

**हिमेति** ॥ राज्ञाम् मधुरापुरीपालकानां पुरातनानां प्रभूणामित्यर्थः । यानि गृहाणाम् भवनानाम् अङ्गणानि प्राङ्गणानि भवनपुरोभागाः । कर्तृभूतानि । " अङ्गनं प्राङ्गने याने कामिन्यामङ्गना मता ' इति नान्तेष्वमुं पपाठ विश्वः। पृषोदरादित्वादङ्गणमिति सुधा । " अध्यास्य सौरमेयं मौक्तिकरुचिरङ्गणेषु विहितमतिः " इत्येवमादिश्लेषप्रयोगा अस्य सत्तामुद्भावयन्ति । हिमम् कर्पूरः । 'वेणुसारस्तु (रेणुकावर्ण) कर्पूरश्चन्द्रभस्म हिमाह्वयम् वेधकः' इति त्रिकाण्डशेषः। चन्दनम् गन्धसारः तयोः वारि उदकम् कर्पूरोदकं चन्दनोदकं चेत्यर्थः । ताभ्याम् सेकः सेचनम् क्षरणम् तेन शीतानि शैत्यवन्ति । अभवन् आसन् । पुरेत्यर्थः। तानि तादृंशि राजभवनानि । द्विजाः ब्राह्मणाः त एव बन्द्यः कारागृहनिबद्धाः तेषाम् नयनानि नेत्राणि तेषाम् अम्बूनि तेभ्यस्स्रवन्ति उदकानि अश्रूणि तैः दूषितानि कश्मलानि मालिन्यवन्ति भूत्वा । मम हृदयम् मन्मनः खेदयन्ति क्लेशयन्ति । कर्पूरचन्दनसुगंधोदकैरार्द्रीकृताः पूर्वं ये प्रदेशास्सुगन्धं शैत्यं चोदवमंस्तेषु (मधुरापुर्याः) स्वस्य पूर्वं परिपालकानां राज्ञां भवनाङ्गणं ष्विदानीं स्थापिताः बन्दीकृता ब्राह्मणाः । ते तुरुष्कभटैरतीव बाधिता अत्यन्तं दुःख्यन्ति । तदश्रुभिस्तत्प्रदेशा आर्द्रीकृता भृशमौष्ण्यं वहन्ति मालिन्येन साकमिदानीमिति निवेदयति

मधुरानगरी स्वदुर्दशां कम्पराजाय ॥

**न तथा कटुघूत्कृताद्व्यथा मे**
**हृदि जीर्णोपवनेषु घूकलोकात् ।**
**परिशीलितपारसीकवाग्भ्यो**
**यवनानां भवने यथा शुकेभ्यः ॥ ॥ 12 ॥**

**न तथेति** ॥ यवनानाम् तुरुष्काणां । भवने गृहेषु । जातावेकवचनम् । परिशीलिताः अभ्यासिताः । शील उपधारणे (उपधारणमभ्यासः) ण्यन्तात् क्तः । पारसीके देशे भवाः पारसीकाः यवनाः 'कोपधाच्चे' त्यण् । तेषाम् वाचः वचनानि म्लेच्छभाषागिर इत्यर्थः । ताः यैः । तादृग्भ्यः शुकेभ्यः कीरेभ्यः यथा येन प्रकारेण मे मम हृदि मनसि व्यथा बाधा दुःखम् यादृशं दुःखमित्यर्थः । भवतीति शेषः । अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति महाभाष्यवचनात् । तथा तेन प्रकारेण जीर्णानि शिथिलानि शुष्काणि उपवनानि आरामाः मधुरोद्यानवनानीत्यर्थः । तेषु कटूनि तीक्ष्णानि भयजनकानि । श्रवणोद्वेजकत्वादरिष्टाधायकत्वाच्चेति भावः । 'रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः' इत्यमरः । तथाविधानि । घूत्कृतानि घूत्काराः घूदित्येवंरूपा ध्वनयः यस्मात् । तादृशात् । घूकानाम् उलूकानाम् 'उलूके तु वायसारातिपेचकाः । दिवान्धः कौशिको घूक' इत्यमरः । तेषाम् लोकात् संघात् । व्यथेत्यर्थसिद्धा । न नभवति । पवित्रं रामनाम । सततं तदुच्चारणेन धन्याश्शुकाः । तइदानीं यवनभवनेषु निरुद्धास्तैर्बलात्कारिता भूत्वा तदनूच्चारणेन म्लेच्छभाषामभ्यस्यन्ति । सोढुमशक्यं महद्दुःखं ममेदमिति भावः । मदीयं महोद्यानं शुकशून्यं कृत्वा घूकावासतया श्मशानमिव कृतं यवनकिरातैः । तदपि न महते दुःखाय मम । "सद्बीजान्यपि सस्यानि दुष्येयुः क्षेत्रदोषतः" इति न्यायेन परमपवित्राणां शुकानां म्लेच्छसंसर्गेण दुष्टतेति यत्तदतीव बाधते माम् । न क्षन्तव्योऽयं तेषामपराधस्त्वयेति तु परमार्थः ॥



तुरुष्काणां गोवधो वर्ण्यते —

**स्तनचन्दनपाण्डु ताम्रपर्ण्या**
**स्तरुणीनामभवत्पुरा यदम्भः ।**
**तदसृग्भिरुपैति शोणिमानं**
**निहतानामभितो गवां नृशंसैः ॥ ॥ 13 ॥**

**स्तनेति** ॥ पुरा प्राक् यवनाक्रमणात्प्राक्काले इत्यर्थः । ताम्रपर्ण्याः तदाख्यायाः नद्याः । पाण्ड्यदेशस्थिताया इत्यर्थः । यत् अम्भः यदुदकम् । तरुणीनाम् युवतीनाम् स्नान्तीनामित्यर्थः । स्तनयोः कुचयोः चन्दनम् मलयजः कुचतटेषु घटितचन्दनमित्यर्थः । तेन पाण्डु धवलम् । 'पाण्डुः कुन्तीपतौ सिते' इत्यमरः ।(तथाविधम्)अभवत् आसीत् । युवतयो जलक्रीडाभिः प्रियैस्सह विहरन्त्यस्तनचन्दनेन धवलां नदीं चक्रुरिति भावः । तत् नदीजलम् कर्तृ । अभितः सर्वत्र नृशंसैः घातुकैः क्रूरैः 'नृशंसो घातुकः क्रूरः' इत्यमरः । यवनैरित्यर्थः । तैः । निहतानाम् संहृतानाम् गवाम् गोमातॄणाम् । 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी । अर्जुन्यघ्न्या रोहिणी स्यात् ।' इत्यमरः । असृग्भिः रक्तैः । करणभूतैः । शोणिमानम् लौहित्यम् उपैति प्राप्नोति। महानदी ताम्रपर्ण्यपि पुरा यद्वैभवमनुबभूव जलक्रीडादिभिस्सुन्दरीणां तत्सर्वं परित्यज्य केवलं तुरुष्कहतकैस्सर्वदा हन्यमानानामसंख्यानां गवां रक्तधाराप्रवाहैरसृङ्मयी संवृत्तेति भावः । मातृदेवतागावः कोटिशस्तैर्गोमांसभक्षकैस्स्वाहाराय ताम्रपर्णीतीरे संहृत्य तद्रक्तेन तां नदीं कलुषितामकुर्वन्निति परमार्थः ॥

गोहत्यादिमहापापानां यवनकृतानां फलं दर्शयति —

सुवते न यथापुरं वसूनि
क्षितयो वर्षति पूर्ववन्न शक्रः ।
शमनोऽपि जनं नयत्यकाण्डे
विषयेऽस्मिन् यवनैर्हतावशिष्टम् ॥ ॥ 14 ॥

**सुवत इति ॥** क्षितयः भूमयः क्षेत्राणि च । वसूनि रत्नानि रत्नगर्भत्वात्तस्या एवमुक्तिः । धनानि च सस्यादिद्वारेणेत्यर्थः । यथापुरम् पुरेव पूर्वस्मिन्निव सादृश्येऽव्ययीभावः । नाव्ययीभावादित्यम् । न सुवते न प्रसवन्ति । 'यज्ञाद्भवति पर्जन्यः पर्जन्यादन्नसंभवः' इत्यादिना धर्मकर्ममूलकत्वात्संपदामिति भावः । शक्रः इन्द्रः पूर्ववत् पुरेव न वर्षति मेघैर्न जलं ददातीत्यर्थः । इन्द्रः प्रयोजककर्ता । नतु कर्ता । कर्तृत्वव्यपदेशस्तु समर्थाचरणेन । यथा 'पञ्चभिर्हलैः कर्षति ग्रामं ग्रामणीः' इति । इन्द्रोत्सवादिमूलकत्वाद्वृष्टेः । यथाह दण्डनीतिः – "राजा त्वर्थान् समाहृत्य कुर्यादिन्द्रमहोत्सवम् । प्रीणितो मेघवाहस्तु महतीं वृष्टिमावहेत्" इति । शमनः यमः धर्मराजोऽपि । अस्मिन् विषये एतस्मिन् देशे दक्षिणदेशे इत्यर्थः । अकाण्डे असमये आयुष्काले अप्राप्त एवेत्यर्थः । हतेभ्यः तुरुष्कैर्मारितेभ्यः अवशिष्टम् शेषम् मारणकर्मण्युपयुक्तादन्यं जनम् प्रजाः नयति प्रापयति स्वसमीपमिति शेषः । अधर्मप्राबल्यादवग्रहो भूदेवताया वन्ध्यात्वमकालमरणाश्च समभवन्निति भावः । अत्र कामन्दकः – "हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा । इति पञ्चविधं दैवम् मानुषं व्यसनं तथा । अयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम्" इति । अत्र दैवोपद्रवा वर्णिताः ॥

यवनदुर्नयसंप्राप्तं द्राविडाङ्गनाजनदुःखं वर्णयति –

श्वसितानिलशोषिताधराणि
श्लथशीर्णायतचूर्णकुन्तलानि ।



बहुबाष्पपरिप्लुतेक्षणानि
द्रमिडानां वदनानि वीक्ष्य दूये ॥ ॥ 15 ॥

**श्वसितेति ॥** श्वसितानिलाः निश्वासवायवः तैः शोषिताः अधराः येषु तथोक्तानि स्वभर्तृवधस्स्वमानभङ्गश्च संजायत इति महद्दुःखमनुभवन्त्यो । निश्वसन्ति द्रविडाङ्गनाः इति तन्निश्वासोष्णवायुसंस्पर्शादधरशोषणं जातं तासामिति भावः । श्लथाः विश्लथाः शिथिलाः शीर्णाः विकीर्णाः विक्षिप्ताः आयताः दीर्घाः चूर्णकुन्तलाः अलकाः येषु तानि । संस्कारहैन्येन पृथक्पृथङ्मुखे विकीर्णाः अभितो मुखमलकाः पतन्तीति भावः । बाष्पाणाम् शोकाश्रूणाम् परिप्लुताः प्रवाहाः बाष्पपरिप्लुताः । बहुवः विस्तृताः बाष्पपरिप्लुताः येषु तथोक्तानि । बहुबाष्पपरिप्लुतानि ईक्षणानि नेत्राणि येष्विति बहुव्रीहिगर्भो बहुव्रीहिः । तासां नेत्रेषु शोकबाष्पप्रवाहा अविच्छिन्नतया प्रवहन्तीति भावः । एतादृशानि । द्रविडानाम् द्राविडस्त्रीणाम् वदनानि मुखानि दृष्ट्वा वीक्ष्य दूये परितप्ये । कर्तव्यतामूढा किमपि कर्तुमपारयन्ती परितापेनाहं प्रतिकरोमीति भावः । द्रविडाङ्गनासु यवनदौरात्म्यमतिवेलं प्रवर्तते । अनाथास्ताश्शरणमलभमाना भृशं दुःख्यन्तीति परमार्थः ॥

यवनदुर्नीतिं सर्वां संक्षेपेण कथयति –

श्रुतिरस्तमिता नयः प्रलीनो
विरता धर्मकथा च्युतं चरित्रम् ।
सुकृतं गतमाभिजात्यमस्तं
किमिवान्यत्कलिरेक एव धन्यः ॥ ॥ 16 ॥

**श्रुतिरिति ॥** श्रुतिः वेदः । 'श्रुति स्त्री वेद आम्नाय' इत्यमरः । सा । अस्तम् नाशम् इता गता । इण् गतौ कर्तरि क्तः ।

श्रोत्रियान् सर्वान् हत्वा वा बन्दीकृत्वा वा वैदिकेभ्यो द्रुह्यन्ति तुरुष्का इति तेषामस्तमितत्वेन तदाश्रयो वेदोऽप्यस्तमितप्राय इति भावः। नयः नीतिः न्यायः ऋजुमार्गप्रवर्तनम् प्रलीनः तुरुष्कभया दन्तर्हितः। इदानीं सर्वेऽप्यसत्यवादिनः कपटमार्गानुयायिनश्च भूत्वा तुरुष्कं सेवन्ते स्वप्राणान् हस्ते निक्षिप्य तदनुसरणेनेति भावः। धर्म कथा धर्मवार्ता विरता विश्रान्ता। धर्मस्य नामापि न श्रूयते इति भावः। यज्ञादीन् विध्वंस्य कलियुगराक्षसास्ते धर्माचरणं सर्वमनाश यन् धार्मिकान् बाधित्वेत्यर्थः। धर्माचरणकामो न कोऽप्यस्ति तज्जनित भयादिति परमार्थः। चरित्रम् शीलम् च्युतम् गलितम्। तैः मान भङ्गादिकरणेन स्त्रियो दूषिताः। पुरुषाश्च तैर्बलात्परधर्मपरमताद्या श्रयणकरणेन कलङ्किताः कृता इति भावः। सुकृतम् पुण्यम् गतम्। पुण्यकर्माचरणं नास्तीति कारणाभावात्कार्याभावस्सिद्ध इति भावः। आभिजात्यम् कुलीनता महति कुले संभवः अस्तम् नष्टम्। कुलशुद्धिर्नष्टा। प्रायशस्सर्वेऽपि नष्टस्वधर्माः म्लेच्छा एव तैः कृता जना इति भावः। अन्यत् इतरत् शेषम् उक्तेतरम् किमिव किमस्ति न किमपीत्यर्थः। इवेति वाक्यालङ्कारे। वक्ष्यमाणवाक्येन सर्वं गतार्थमिति भावः। तदेवोदाहरति। कलिः कलियुगाधिष्ठान देवता कलिपुरुषः अधर्मदेवतेति यावत्। सः एक एव एकसंख्याक एव न द्वितीयः कोऽपीति भावः। धन्यः चरितार्थः स्वसंकल्पसिद्धिं सर्वां सुष्ठु साधयामासेत्यर्थः। अधर्म एव सर्वत्र लब्धावकाशो वर्तते। धर्मप्रवृत्तेरणुमात्रमप्यस्मिन् देशे नैवावकाश इति परमार्थः। अत्र कलिरेक एव धन्य इत्यमुमर्थं वाक्यार्थभूतं श्रुतिरस्तमितेत्या दयो वाक्यार्थास्समर्थयन्तीति वाक्यार्थं प्रति वाक्यार्थहेतुकं काव्यलिङ्ग मलङ्कारः। एतच्छ्लोकस्य प्रतिकृतिरिव कालिदासीयं पद्यमित्थं दृश्यते — "धृतिरस्तमिता रतिश्च्युता। विरतं गेयमृतुर्निरुत्सवः। गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे" इति ॥



**इति सा निखिलं निवेद्य राज्ञे**
**यवनानां जनगर्हितं चरित्रम्।**
**अतिभीषणमात्मनः प्रभावा**
**त्कमपि प्रादुरभावयत्कृपाणम्॥ ॥ 17 ॥**

**इतीति** ॥ इति इत्थम्। सा मधुराधिदेवता। कर्त्री। राज्ञे कम्पराजाय। जनगर्हितम् लोकनिन्दितम् लोकविद्विष्टमित्यर्थः। यवनानाम् तुलुष्काणाम् चरित्रम् लोकप्रवर्तनम्। निवेद्य विज्ञाप्य सविनयं कथयित्वा। आत्मनः स्वस्य। प्रभावात् महिम्नः महत्त्वेन। आत्मनो देवतामूर्तित्वादित्यर्थः। अतिभीषणम् अत्यन्तं दारुणम् अतिभयङ्करम् दर्शनमात्रेणैव शत्रुप्राणापहारकमित्यर्थः। कृपाणम् खड्गम्। कमपि अनिर्वचनीयम् वर्णयितुमशक्यम् महान्तम् सर्वदेवतायुधांशसारभूतं दिव्यं खड्गम्। प्रादुरभावयत्। आविर्भावयामास। इन्द्रजालेनेव सद्यस्स्वसन्निधिं प्रापयामासेत्यर्थः। बलसम्पन्नानामप्राकृतानां संहरणं दिव्यैरेव साधनैर्भवति, न तु साधारणैः। अयमपि यवनराजो रावणवत्तेजस्वी। शूरवतंस इति रावणवध इवैतस्यापि संहारो दिव्यसाधनैरेव साध्यः। न तु लौकिकैरित्यमानुषं साधनं तत्कम्पराजाय दातुं स्वप्रभावेन संनिधाप्य राज्ञे दर्शयामास तमिति निर्गलितोऽर्थः। अनेन रावणवल्लोककण्टकोऽयं यवनराट् तदर्थं कृतजन्मना रामेणेव कम्पराजेनैव वध्य इति सूच्यते ॥

दिव्यायुधममुं प्रस्तोतुमुपक्रमते —

**अथ तं कलधौतकोशतस्सा**
**करलग्नतसरुरुच्चखान खड्गम्।**
**अचिरोज्झितकञ्चुकानुबन्ध**
**स्फुटकालोरगभोगसाम्यभाजम्॥ ॥ 18 ॥**

**अथेति** ॥ अथ अनन्तरम् तस्मिन् खड्गे प्रादुर्भूते सतीत्यर्थः । करे हस्ते लग्नः सक्तः हस्तधृत इत्यर्थः । तादृशः त्सरुः खड्गमुष्टिः यस्याः । तादृशी । कलधौतकोशतः स्वर्णमयखड्गपिधानकात् । 'कलधौतं रूप्यहेम्नोः' 'कोशोऽस्त्री कुड्मले खड्गेऽपिधानेऽर्थौघदिव्ययोः' इति चामरः । पञ्चम्यास्तसिः । अचिरात् सद्यः उज्झितः परित्यक्तः । कञ्चुकः निर्मोकः सर्पत्वक् । 'समौ कञ्चुकनिर्मोकौ' इत्यमरः । तस्य अनुबन्धः संबन्धः तेन स्फुटः व्यक्तः प्रकाशमानः । 'स्फुटो व्यक्तप्रफुल्लयोः । सिते व्याप्ते' इति हैमः । कञ्चुकपरित्यागेन सर्पाणां दीप्तिमत्त्वं भवतीत्येवमुच्यते । कालोरगस्य कृष्णसर्पस्य भोगः शरीरम् । 'भोगस्सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । तस्य साम्यम् सादृश्यम् । तद्भजतीति 'भजो ण्विः' । तमुज्झित्वा कालाहिरिव कोशमुत्सृज्य भृशमभादप्रतिरोधेन स खड्ग इति भावः । तथाविधम् तम् खड्गम् कृपाणम् । कर्म । उच्चखान – आचकर्ष – आकृष्टवती । वल्मीकात् कालोरगमिव (खड्ग) कोशात् तं द्रुतं निर्गमय्य हस्ते चकारेति वाक्यार्थः । उपमालङ्कारः ॥

इतःपरं त्रिभिश्श्लोकैस्तमेव खड्गं वर्णयति —

**क्षयकालकरालभद्रकाली**
**गलकालागरुकर्दमायमानैः ।**
**महसां प्रसरैरदीपहार्यं**
**किमपि ध्वान्तमिव प्रकाशयन्तम् ॥** ॥ 19 ॥

**क्षयेति** ॥ क्षयकालः प्रलयसमयः तस्मिन् कराला भयंकरी । लयं कर्तुं प्रवृत्तत्वादिति भावः । 'करालं दन्तुरे तुङ्गे भीषणे चाभिधेयवत्' इति मेदिनी । तादृशी भद्रकाली तन्नाम्नी शक्तिः शक्तिविशेषरूपा । शक्तिभेदाश्चेत्थमभिहिताः । "नारायणी भद्रकाली रुद्राणी



कृष्णपिङ्गला । अग्निज्वाला रौद्रमुखी कालरात्री तपस्विनी" इति । तस्याः गलः कण्ठः तस्मिन् कालागरुः कृष्णागरुः तस्य कर्दमः पङ्कः । गलधृतकृष्णागरुद्रव इत्यर्थः । स इव आचरद्भिः तथोक्तैः । 'कर्तुः क्यङ् सलोपश्चे' ति क्यङ् । शानजादि । महसाम् तेजसां दीप्तीनाम् । 'महस्तूत्सवतेजसोः' इत्यमरः । दीपेन प्रदीपेन गृह मणिना हार्यम् हरणीयम् । ऋहलोर्ण्यत् । वृद्धिः । दीपहार्यं न भवतीत्यदीपहार्यम् । दीपे प्रज्वलत्यपि नैवापगतं प्रत्युत भासमान मित्यर्थः । प्रसरैः प्रसरणैः व्याप्तिभिः । अतएव किमपि अपूर्वम् दीप्ति तमसि आवरणस्वभाव एव वर्तते । ननु दीप्तिः । अत्र दीप्ति रपीति तेजस्तिमिरयोस्सामानाधिकरण्यं दृश्यत इत्यतो विस्मयावहत्व मस्येति भावः । ध्वान्तम् अन्धकारम् । 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' इत्यमरः । प्रकाशयन्तं द्योतयन्तमिव स्थित मित्युत्प्रेक्षा । भयंकरास्तत्कान्तयो विद्युत्प्रकाशा इव धगधगत्प्रकाशेन वृष्टीनां चाञ्चल्यमावहन्तोऽन्धकारं सृजन्तीति तात्पर्यार्थः । क्रियास्वरूपोत्प्रेक्षेयम् । उपमा चास्या उपकरोतीत्येतयोस्सङ्करः ॥

**प्रतिबिम्बितदीपकान्तिमन्त**
**स्फुटतापिञ्छतरुप्रसूननीलम् ।**
**नवमम्बुधरं विडम्बयन्तं**
**जठरोज्जृम्भितवैद्युतप्रकाशम् ॥** ॥ 20 ॥

**प्रतिविम्बितमिति** ॥ अन्तः गर्भे मध्यभागे । प्रतिबिम्बिता संजातप्रतिबिम्बा दीपकान्तिः दीपिकाप्रभाः । जातावेकवचनम् । यस्मिन् तथोक्तम् । तथाविधं सत् । किञ्च । स्फुटम् फुल्लम् विकसितम् 'स्फुटो व्यक्तप्रफुल्लयोः' इति हैमः । तापिञ्छतरोः तमालस्य । 'कालस्कन्धस्तमालस्स्यात्तापिञ्छोऽपि' इत्यमरः । तस्य प्रसूनम् पुष्पम् तदिव नीलम् कृष्णवर्णम् । तथाविधं च सत् । जठरः कुक्षिः मध्य

भाग इत्यर्थः । ' पिचण्डकुक्षी जठरोदरं तुन्दम् ' इत्यमरः । तस्मिन् उज्जृम्भिताः विजृम्भिताः अतिशयिताः विद्युतामिमे वैद्युताः तटित्संबन्धिनः तदाश्रया इत्यर्थः । तादृशाः प्रकाशाः कान्तयः यस्य । तथाविधम् । नवम् नूतनोदयम् वर्षाकालिकमित्यर्थः । नैल्यातिशय लाभार्थमेवमुक्तिः । तथाविधम् अम्बुधरम् जलधरम् मेघम् । विडम्ब यन्तम् अनुकुर्वन्तम् तादृशजलधरेण सदृशमित्यर्थ । गृहदीपाः प्रज्व लन्ति । खड्गेस्मिन्नन्तरा तत्कान्तयः प्रतिफलन्ति । कान्तयश्च ताः विद्युत्प्रकाशा इव विद्योतन्ते । तापिञ्छपुष्पमिवात्यन्तं नील आयतश्च स खड्गो मेघ इवाभाति । अन्तरा स्थिता दीपकान्तयश्च खड्ग मध्ये राजमाना विद्युत्कान्तय इव विद्योतन्ते । अतोऽयं सर्वथा वर्षा कालमेघ इव स्थित इत्युपमार्थः । वाक्यार्थोपमेयम् । " विडम्बयति संधत्ते हसतीर्ष्यत्यसूयति ... इति शब्दास्सादृश्यवाचकाः । उपमाया मिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः " इति दण्डी ॥

कम्पराजे महोत्साहमजनयदयं खड्ग इति वीररसस्थायिनं प्रब्रूते —

**तमरातिनराधिनाथनारी**<br>
**नयनाम्भःकणपातहेतुभूतम् ।**<br>
**प्रभुरुन्मिषितस्वरोषवह्ने**<br>
**रधिकोद्दाममनंस्त धूमदण्डम् ॥** ॥ 21 ॥

**तमिति** ॥ प्रभुः राजा । कर्ता । अरातिनराधिनाथाः शत्रु राजाः तेषाम् नार्यः स्त्रियः तद्द्वारा इत्यर्थः । तासाम् नयनानि नेत्राणि तेभ्यः अम्भःकणाः शोकाश्रुबिन्दवः । तेषां पातः पतनम् भूमौ प्रसरणम् प्रवहणम् तस्मिन् हेतुभूतम् कारणभूतम् । तद्भर्तॄणां हननेन तासां शोकदातारमित्यर्थः । यम् खड्गम् तच्छब्दादस्याक्षेपः ।



धूमोऽपि लोके नेत्रयोः रुजां जनयन् नेत्रेभ्योऽश्रुकणान् पातयति । अतएव धूमदण्डत्वेन संभावना युज्यते । उन्मिषितः विकसितः अभि वर्धमानः । प्रज्वलदिति च गम्यते । आदिकर्मणि क्तः कर्तरि चेति क्तः । स्वस्य आत्मनः रोषः क्रोधः स एव वह्निः अग्निः । तस्य । अधिकं यथा तथा उद्दामः भयजनकः । तम् । अनेन रोषस्य प्रल याग्निसादृश्यं द्योत्यते । धूमदण्डम् धूमाकारां यष्टिम् । अविच्छिन्न धूमपरम्परामित्यर्थः । अग्निः प्रज्वलन् लोके पुरतो धूममुद्वमति प्रलयकालिको महाग्निरयमित्यतिभीतिजनकं धूमदण्डमुत्पादयत्ययमिति भावः । (इत्थम्) यम् खड्गम् । यत्तदोर्नित्यसम्बन्धात् । अमंस्त अतर्कयत् । तम् खड्गम् उच्चखान) । धूमो यथा वह्नेः प्राग्भावी यथा च नेत्रोत्पीडनेन बाष्पकणपातोऽस्मात्तथा अयमपि खड्गः कम्पराजस्य महोग्ररोषस्य यवनराजवधैकफलकस्य पुरतो भावी उत्साहजननद्वारा तज्जनकः तद्वधेन तन्नारीजननेत्रेभ्यः पातयत्यश्रुकणान् अतस्संभाव्यतेऽयं धूमदण्ड इति । अतएव द्रव्योत्प्रेक्षेयम् । रोषवह्नि रिति रूपकमस्यास्समुज्जीवकमित्येतयोरङ्गाङ्गिभावेन संकरः । विशे षकम् । "द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिश्श्लोकैर्विशेषकम् । कालापक चतुर्भिस्स्यात्तदूर्ध्वं कुलकं स्मृतम्" इति तल्लक्षणात् ॥

**प्रणयागतचोलपाण्ड्यलक्ष्मी**<br>
**श्रवणेन्दीवर मालिकायमानम् ।**<br>
**विरचय्य पुरः कृपाणमेषा**<br>
**पुनरप्याह पुरन्दराभमेनम् ॥** ॥ 22 ॥

**प्रण येति** ॥ एषा प्रकृता मधुरादेवता । प्रणयेन प्रेम्णा । अभि लष्य स्वयमित्यर्थः । आगते उपसृते स्वयंवरणाय कम्पराजसविधं प्राप्ते । चोलः चोलानां राजा । ' कम्बोजादिभ्यो लुग्वचनं चोला दिभ्य ' इत्यञो लुक् । पाण्ड्यः पाण्ड्यानां राजा । ' पाण्डोर्ड्यण् ।

भाग इत्यर्थः । ' पिचण्डकुक्षी जठरोदरं तुन्दम् ' इत्यमरः । तस्मिन् उज्जृम्भिताः विजृम्भिताः अतिशयिताः विद्युतामिमे वैद्युताः तडित्संबन्धिनः तदाश्रया इत्यर्थः । तादृशाः प्रकाशाः कान्तयः यस्य । तथाविधम् । नवम् नूतनोदयम् वर्षाकालिकमित्यर्थः । नैल्यातिशय लाभार्थमेवमुक्तिः । तथाविधम् अम्बुधरम् जलधरम् मेघम् । विडम्बयन्तम् अनुकुर्वन्तम् तादृशजलधरेण सदृशमित्यर्थ । गृहदीपाः प्रज्वलन्ति । खड्गेस्मिन्नन्तरा तत्कान्तयः प्रतिफलन्ति । कान्तयश्च ताः विद्युत्प्रकाशा इव विद्योतन्ते । तापिञ्छपुष्पमिवात्यन्तं नील आयतश्च स खड्गो मेघ इवाभाति । अन्तरा स्थिता दीपकान्तयश्च खड्गमध्ये राजमाना विद्युत्कान्तय इव विद्योतन्ते । अतोऽयं सर्वथा वर्षाकालमेघ इव स्थित इत्युपमार्थः । वाक्यार्थोपमेयम् । " विडम्बयति संधत्ते हसतीर्ष्यत्यसूयति ... इति शब्दास्सादृश्यवाचकाः । उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः " इति दण्डी ॥

कम्पराजे महोत्साहमजनयदयं खड्ग इति वीररसस्थायिनं प्रब्रूते —

**तमरातिनराधिनाथनारी**
**नयनाम्भःकणपातहेतुभूतम् ।**
**प्रभुरुन्मिषितस्वरोषवह्ने**
**रधिकोद्दाममममंस्त धूमदण्डम् ॥** ॥ 21 ॥

**तमिति** ॥ प्रभुः राजा । कर्ता । अरातिनराधिनाथाः शत्रु राजाः तेषाम् नार्यः स्त्रियः तद्दारा इत्यर्थः । तासाम् नयनानि नेत्राणि तेभ्यः अम्भःकणाः शोकाश्रुबिन्दवः । तेषां पातः पतनम् भूमौ प्रसरणम् प्रवहणम् तस्मिन् हेतुभूतम् कारणभूतम् । तद्भर्तॄणां हननेन तासां शोकदातारमित्यर्थः । यम् खड्गम् तच्छब्दादस्याक्षेपः ।



धूमोऽपि लोके नेत्रयोः रुजां जनयन् नेत्रेभ्योऽश्रुकणान् पातयति । अतएव धूमदण्डत्वेन संभावना युज्यते । उन्मिषितः विकसितः अभिवर्धमानः । प्रज्वलदिति च गम्यते । आदिकर्मणि क्तः कर्तरि चेति क्तः । स्वस्य आत्मनः रोषः क्रोधः स एव वह्निः अग्निः । तस्य । अधिकं यथा तथा उद्दामः भयजनकः । तम् । अनेन रोषस्य प्रलयाग्निसादृश्यं द्योत्यते । धूमदण्डम् धूमाकारां यष्टिम् । अविच्छिन्न धूमपरम्परामित्यर्थः । अग्निः प्रज्वलन् लोके पुरतो धूममुद्वमति प्रलयकालिको महाग्निरयमित्यतिभीतिजनकं धूमदण्डमुत्पादयत्ययमिति भावः । (इत्थम्) यम् खड्गम् । यत्तदोर्नित्यसम्बन्धात् । अमंस्त अतर्कयत् । तम् खड्गम् उच्चखान) । धूमो यथा वह्नेः प्राग्भावी यथा च नेत्रोत्पीडनेन बाष्पकणपातोऽस्मात्तथा अयमपि खड्गः कम्पराजस्य महोग्ररोषस्य यवनराजवधैकफलकस्य पुरतो भावी उत्साहजननद्वारा तज्जनकः तद्वधेन तन्नारीजननेत्रेभ्यः पातयत्यश्रुकणान् अतस्संभाव्यतेऽयं धूमदण्ड इति । अतएव द्रव्योत्प्रेक्षेयम् । रोषवह्निरिति रूपकमस्यास्समुज्जीवकमित्येतयोरङ्गाङ्गिभावेन संकरः । विशेषकम् । " द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिश्श्लोकैर्विशेषकम् । कालापकं चतुर्भिस्स्यात्तदूर्ध्वं कुलकं स्मृतम् " इति तल्लक्षणात् ॥

**प्रणयागतचोलपाण्ड्यलक्ष्मी**
**श्रवणेन्दीवर मालिकायमानम् ।**
**विरचय्य पुरः कृपाणमेषा**
**पुनरप्याह पुरन्दराभमेनम् ॥** ॥ 22 ॥

**प्रणयेति** ॥ एषा प्रकृता मधुरादेवता । प्रणयेन प्रेम्णा । अभिलष्य स्वयमित्यर्थः । आगते उपसृते स्वयंवरणाय कम्पराजसविधं प्राप्ते । चोलः चोलानां राजा । ' कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम् ' इत्यत्रो लुक् । पाण्ड्यः पाण्ड्यानां राजा । ' पाण्डोर्ड्यण् ' इत्यत्रो लुक् ।

तयोः लक्ष्मीः राज्यलक्ष्मीः उभे राज्यलक्ष्मीनायिके इत्यर्थः। तयोः श्रवणानि कर्णाः तेषु इन्दीवराणि नीलोत्पलानि। 'अथ नीलाम्बुजन्म च इन्दीवरं च नीलेऽस्मिन्' इत्यमरः। तयोः मालिका माला पङ्क्तिः। मालैव मालिका। स्वार्थे कः। 'माला तु पङ्क्तौ पुष्पादिदामनि' इत्यमरः। सेव आचरन्तम्। 'कर्तुः क्यङ्-' ङिति क्यङ्। शानजादि। पाण्डयचोलराजलक्ष्म्यौ उभे कम्पराजं प्रेम्णा गुणलुब्धे वरीतुमभिसारिके भूत्वा कर्णपूरतया धृतनीलोत्पलमालिके आगते। ताभ्यां धृता या नीलोत्पलमालिका। सेव स्थितेयमित्युपमोपक्रमोत्प्रेक्षेयम्। तादृशराज्यलक्ष्म्याः अभेदेनैवोपपाद्यमानत्वान्नोपमा। अभिसारिकासु च तमिस्राभिसारिके इमे राज्यलक्ष्म्यौ। एतासां तमस्सवर्णभूषणधारणं चेत्थमभिहितमन्यत्र। "तमस्सवर्णं विदधे विभूषणं निनादघोषेण नुनोद नूपुरम्। प्रतीक्षितुं न स्फुटचन्द्रिकाभयादियेष दूतीमभिसारिकाजनः". इति। अयं भावः। इदानीं पाण्डयचोलदेशावुभावपि यवनराजेनाक्रान्तौ वर्तेते। राजानौ च तयोः पराजितौ तुरुष्कराजेन कम्पराजं शरणं गतौ। यवनराजवधश्च भविष्यति यदि तदानीं तदुभे राज्ये एतदधीने भवतः। तदेवेत्थं कथयति स्वप्रौढोक्त्या कवयित्री। अभिसरणाय राज्यलक्ष्म्यौ उभे अपि सन्नद्धे। ताभ्यां भूषणधारणं च कृतमिवानेन खड्गेन। अचिरादेवाभिसरणमिह भविष्यतीति भावः। तथाविधम् कृपाणम् (दिव्य) खड्गम्। पुरः पुरस्तात् राज्ञोऽग्रभागे विरचय्य संघटय्य निक्षिप्येत्यर्थः। पुरन्दराभम् इन्द्रसदृशम् द्वितियमिन्द्रमिव स्थितम् तेजोवैभवादिना सदृशमित्यर्थः। अनेन दिव्यायुधधारणार्हतास्य सूच्यते। (एवं खड्गं निक्षिप्य) पुनः भूयोऽपि आह भाषते भणति। कम्पराजमुद्दिश्येत्यर्थः। तुरुष्कराजवधेन पाण्डयचोलराज्यसमुद्धरणाय दिव्यसाधनं दत्त्वा तन्महिमानमाख्याति देवतेयं कम्पराजस्येति परमार्थः॥



तत्संभाषणप्रकारमेव कथयति। तत्र चास्य दिव्यायुधस्यागमनप्रकारस्त्रिभिश्श्लोकैर्वर्ण्यते —

**नरनाथ पुरा कृपाणमेनं**
**विरचय्याखिलदेवतायुधांशैः।**
**उपदीकृतवान् पिनाकपाणे**
**र्दनुजानां विजयाय विश्वकर्मा॥** ॥ 23 ॥

**नरनाथेति**॥ नरनाथः मनुजाधिपः तस्य संबुद्धिः हे! नरनाथ! भो राजन्! पुरा पूर्वकाले। विश्वकर्मा देवताशिल्पी। 'विश्वकर्माऽर्कसुरशिल्पिनोः' इत्यमरः। एनम् पूर्वोक्तम् अमुम्। इदम एनादेशः। कृपाणम् खड्गम् अखिलदेवताः सर्वा देवताः तासाम् आयुधानि शस्त्राणि सर्वाणि दिव्यायुधानीत्यर्थः। तेषाम् अंशैः भागैः तेषु सारभूतान् भागानादायेत्यर्थः। विरचय्य निर्माय। पिनाकः अजगवम् (ईश्वर)धनुः सः पाणौ यस्य। शिवः। 'प्रहरणार्थेभ्य' इति परा सप्तमी। तस्य। शेषत्वविवक्षया षष्ठी। तस्मादित्यर्थः। दनुजानाम् राक्षसानाम्। विजयाय तद्विजयं प्राप्तुमित्यर्थः। क्रियार्थोपपदस्येति चतुर्थी। उपदीकृतवान् अनुपदाम् उपदां कृतवानित्यभूततद्भावे च्विः। उपहारीकृतवानित्यर्थः। सादरं पारितोषिकतया ऽस्मै प्रददाविति यावत्। सर्वदेवतायुधमयीयं खड्लता। ईश्वरोऽप्यनेन विजयीत्येतत्प्रभावः कथ्यते। इत्थमीश्वरार्थे प्रथमं निर्मितोऽयमभूदिति परमार्थः॥

**अमुमुग्रतपःकृतप्रसादः**
**प्रददौ पाण्डयनृपाय सोऽपि देवः।**
**यमुपेत्य चिरेण तस्य वंश्याः**
**पृथिवीमप्रतिशासनामशासन्॥** ॥ 24 ॥

**अमुमिति** ॥ सः प्रसिद्धः देवः महादेवः ईश्वरोऽपि। कर्ता। उग्रम् भयंकरम् तपः भगवदनुग्रहाय तस्मिन् समनस्केन्द्रियाणामैकाग्रयम् शीतोष्णसुखदुःखादिद्वन्द्वविजयः। चान्द्रायणव्रतादिकृत्स्ननियमाचरणं च 'तपः कृत्स्नादिकर्म च' इत्यमरः। तेन कृतः धृतः प्रसादः अनुग्रहः येन। तथाभूतस्सन्। पाण्ड्यनृपाय पाण्ड्यराजाय। अमुम् एतम् खड्गम्। कर्म। प्रददौ अदिशत्। तस्य पाण्ड्यराजस्य वंश्याः वंशे कुले भवाः। दिगादित्वाद्यत्। तस्मिन् गतेऽपि तद्वंश्या इति भावः। धम् खड्गम् वंशानुक्रमात्संप्राप्तमित्यर्थः। उपेत्य प्राप्य यद्बलं समाश्रित्येत्यर्थः। चिरेण चिरम् बहुकालम्। पृथिवीम् भुवम् स्वराज्यमित्यर्थः। अप्रतिशासनम् अविद्यमानम् प्रतिशासनम् स्वविरुद्धाज्ञा यस्यां सा तथोक्ताम्। अप्रतिहताज्ञामित्यर्थः। तादृशीम् सतीम्। अशासन् पर्यपालयन्। शासु अनुशिष्टौ – लङ्। अशासन् इत्येव मातृकापाठः। अशासुरिति तु युक्तम्। पाण्ड्यराजस्तपः कृत्वा शिवप्रसादेन लब्धवानेतच्छस्त्रम्। तद्राज्यं तद्बलेन निस्सपत्नं सोऽनुशशास। तत्सन्ततिरपि तथैव पाण्ड्यराज्यमेतदाश्रयेण परिपालयामास निर्निरोधमिति पिण्डीकृतोऽर्थः ॥

**अथ कालवशेन पाण्ड्यवंश्यान्**
**गतवीर्यानवधार्य कुम्भजन्मा।**
**मनुजेश्वर मण्डलाग्रमेनं**
**भवते प्रेषितवान् महाभुजाय ॥** ॥ 25 ॥

**अथेति** ॥ अथ अनन्तरम् महासत्त्वेषु तद्वंश्येषु केषुचिद् गतेषु तदनन्तरमित्यर्थः। कुम्भजन्मा कलशोद्भवः अगस्त्यः। कर्ता। कालवशेन कालाधीनतया कलिकालवशंगतत्वेन। "राजा कालस्य कारणम्" इति कालनियामकेन राज्ञा भवितव्यम्। एते तु कालनियम्या



एवाभवन्। कलिमुल्लङ्घ्य प्रवर्तितुं नाशक्नुवन्निति भावः। अतएव गतवीर्यान् अपगतप्रभावान् दुर्बलान् वा। 'वीर्यं बले प्रभावे च' इत्यमरः। अवधार्य निश्चित्य। सद्बीजमपि नह्यूषरक्षेत्रे फलतीति न्यायेनेति भावः। हे मनुजेश्वरेति राज्ञस्संबुद्धिः। एनम् अमुम् मण्डलाग्रम्। 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इत्यमरः। महान्तौ उरू सत्त्ववन्तौ भुजौ यस्य तस्मै, बाहुशालिने भुजबलसंपन्नायेत्यर्थः। भवते तुभ्यम्। प्रेषितवान् प्रहितवान्। अगस्त्यस्स्वमहिम्ना पाण्ड्यस्थितमेतं सन्निधाप्य रावणवधाय रामायेव दिव्यशस्त्रमिमं तुरुष्कवधाय मां द्वारीकृत्य प्रेषयामासेति पिण्डीकृतोऽर्थः। "अनेन देशानधिकृत्य दक्षिणान् वितन्यते राक्षसराजदुर्नयः। त्वयापि लोकत्रयतापहारिणा विधीयतां राघवकर्म निर्मलम्।" इत्याज्ञापितो बुक्कराजेन कम्पराजः। साक्षात्तत्तथैवेत्यनेन संविधानेन ज्ञायते। रावणसंहाराय राघवस्य दिव्यास्त्रप्रदानं रामायणे तावदित्थं वर्णितम् "... ... ... धर्मज्ञो मुनिपुङ्गवः। उवाच राममासीनं प्राञ्जलिं धर्मकोविदम्। इदं दिव्यं महच्चापं हेमरत्नविभूषितम् ॥ वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा। अमोघस्सूर्यसंकाशो ब्रह्मदत्तश्शरोत्तमः ॥ दत्तौ मम महेन्द्रेण तूणी चाक्षयसायकौ। महारजतकोशोऽयमसिर्हेमविभूषितः ॥ अनेन धनुषा राम हत्वा संख्ये महासुरान्। आजहार श्रियं दीप्तां पुरा विष्णुर्दिवौकसाम् ॥ तद्धनुस्तौ च तूणीरौ शरं खड्गं च मानद। जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा ॥ एवमुक्त्वा महातेजास्समस्तं तद्वरायुधम्। दत्त्वा रामाय भगवानगस्त्यः पुनरब्रवीत् ॥" इति ॥

दिव्यायुधसमागमवृत्तान्तमुपवर्ण्य तत्साधनेनैतस्य प्रयोजनं कथयति श्लोकत्रयेण —

**अमुना युधि दुस्सहं महस्स्या**
**त्तव नैसर्गिकसाहसप्रवृत्तेः।**

**ध्रुवमूष्मणि दारुणो दवाग्निः**
**किमुतोच्चण्डसमीरसंस्तवेन ॥** ॥ 26 ॥

**अमुनेति** ॥साहसानि दुष्करकर्माणि प्रबलशत्रुहननादीनि तेषु प्रवृत्तिः प्रवर्तना तथोक्ता। नैसर्गिका निसर्गात् स्वभावात् भवा जाता प्रकृतिसिद्धेत्यर्थः। बलवन्तम् यावन्तमपि शत्रुं त्वं प्रकृत्यैव हन्तुं समर्थ इति भावः। तादृशी साहसप्रवृत्तिः यस्य तस्य। यद्वा नैसर्गिका साहसप्रवृत्तिः शत्रुदमनाचरणं दण्डविजय इति यावत्। सा यस्मिन् तस्य। 'साहसं तु दमे दुष्करकर्मणि अविमृश्यकृतौ धार्ष्ट्ये' इति। 'प्रवृत्तिर्वृत्तिर्वृत्तान्तप्रवाहेषु प्रवर्तने' इति च हैमः। तथा विधस्य तव भवतः। अमुना प्रकृतेन शस्त्रेण। युधि युद्धे। दुस्सहम् दुःखेन सोढुं शक्यम् शत्रूणाम् दुष्प्रतीकारमित्यर्थः। 'ईषद्दुस्सुष्वि' ति खल्। तादृशम् महः तेजः पराक्रमः स्यात् भवेत्। सहजं त्वत्तेजोऽनेन समभिवर्धितं भवति। तेन च तव प्रबलशत्रुहननादिना विजयो महायुद्धेषु शतपत्रच्छेदनवत् सुकरो भविष्यतीति भावः। ध्रुवम् निश्चितम्। 'ध्रुवं तु निश्चिते तर्के निश्चले शाश्वतेऽन्यवत्' इति विश्वः। तत्र दृष्टान्तं प्रदर्शयति – ऊष्मणि ग्रीष्मकाले दारुणः भयङ्करः दवाग्निः वनवह्निः। सहायमन्तरैव प्रकृत्या दग्धुं समर्थ इति भावः। चण्डः प्रचण्डः अत्यन्तं तीक्ष्णः समीरः वायुः। महारयो दुर्भरो वात इत्यर्थः। तस्य संस्तवेन परिचयेन वीजनेन पुनः किमुत किमु वक्तव्यम्। श्रममन्तरैव भस्मसात्कर्तुं सर्वं प्रभवतीति भावः। साधितुमशक्यान्यपि कार्याणि साधयितुं स्वतेजसैव प्रकृतिसिद्धया समर्थो भवान् ग्रीष्मकालाग्निरिव। तथाप्ययं त्वत्तेजोऽभिवर्धयन् (दवाग्नेः) प्रचण्डवायुरिव साह्यं करिष्यति तव शत्रुविजय इति श्लोकार्थः। अत्र कैमुत्यन्यायेनार्थतस्सिद्धोऽर्थो दृष्टान्ते सादृश्याक्षेपायोपकरोतीति दृष्टान्ताङ्गभूतोऽयमर्थापत्तिरलङ्कारः ॥



**अधिसङ्गरमस्य च प्रभावा**
**द्भविता ते न कदाऽपि सत्त्वसादः।**
**असितोमरचक्रचापमुख्यै**
**र्द्विषदस्त्रैर्वपुषो न चाभिषङ्गः ॥** ॥ 27 ॥

**अधिसङ्गरमिति** ॥ अस्य शस्त्रस्य दिव्यायुधस्येत्यर्थः। प्रभावात् तेजसः। च पादपूरणे। सङ्गरे युधि अधिसङ्गरम्। विभक्त्यर्थेऽव्ययीभावः। कदाऽपि यस्मिन् कस्मिंश्चिदपि काले। सत्त्वसादः बलनाशः न भविता। न भविष्यति। किञ्च। असिः खड्गः। तोमरम् शस्त्रविशेषः। अत्र वैजयन्ती – 'तोमरोऽस्त्री लोहबहुलं दण्डः कासूश्च सर्वला। हलं द्विफलपत्राग्रम्' इति। चक्रम् चक्रायुधम् चापः धनुः ते मुख्याः येषां तानि। तैः द्विषदस्त्रैः। वैरिप्रयुक्तशस्त्रास्त्राभ्यामित्यर्थः। वपुषः शरीरस्य अनुषङ्गः बाधः न न भविष्यति। दिव्यायुधांशैस्सर्वैर्निर्मितत्वेनास्य परास्त्राणि पुष्पाणीव भूत्वा न बाधां ते कुर्युः। शक्तिहैन्यं च न महायुद्धेषु बहुकालमविच्छिन्नतया प्रवृत्तेष्विति तस्य प्रभावो वर्ण्यते ॥

**अमुमास्रक्रालरश्मिपाली**
**रचितालीकतटिच्छटाविलासम्।**
**धुवतस्तव चेष्टितुं पुरस्ता**
**न्न कृतान्तोऽपि भवत्यलं किमन्यैः ॥** ॥ 28 ॥

**अमुमिति** ॥ अमुम् एनम् दिव्यम् खड्गम्। अस्रम् शोणितम् तस्य इमे आस्राः। अण्। शात्रवरुधिरसंबन्धिन इत्यर्थः। क्रालाः भयङ्कराः रश्मयः किरणाः दीर्घप्रसाराः कान्तयः तेषाम् पाली पङ्क्तिः। 'पालिः कर्णललाटाग्रेऽस्त्री पङ्क्तावङ्कप्रभेदयोः' इति मेदिनी। 'कृदिकारादक्तिनः' इति पाल रक्षणे इत्यस्माच्चुरादिण्यन्तादच इः।

ङीष् । तया रचिताः परिकल्पिताः अलीकाः मिथ्याभूताः कृत्रिमा इत्यर्थः । तथाभूताः तटिच्छटाः विद्युत्कान्तयः तासाम् विलासाः विलसनानि प्रकाशाः येन तम् । शत्रुरक्तपङ्कविलेपनेन धलधलद्रक्त कान्तीरुद्वमन् विद्युत्प्रकाशाः किमभवन्निति भ्रान्तिं पश्यतां स्रक्ष्यत्ययं खड्ग इति भावः । विद्युत्पीतवर्णा पीतलोहितयोरैक्यं कविसमयसिद्धमित्येव मुक्तिः । तथाभूतम् अमुम् एनम् खड्गम् धुवतः चलयतः भ्रमयतः तव भवतः पुरस्तात् अग्रभागे चेष्टितुम् व्यापर्तुम् चलितुम् । कृतान्तः यमः कृतसर्वनाशोऽपीत्यर्थः । 'कृतान्तो यमुनाभ्राता शमनो यम राड्यमः' इत्यमरः । न अलं भवति न प्रभवति । अस्य प्रभावात् यमस्याप्यप्रधृष्यस्त्वं भविष्यसीति भावः । अन्यैः इतरैः 'उक्तै' रित्यर्थादाक्षिप्यते । किम् किं प्रयोजनम् पुनस्तथोक्तिरर्थवती नेत्यर्थः । यमस्यैव शक्तिर्नास्तीत्युक्ते अन्ये वराका अशक्ता इत्युक्तिः परिशेष न्यायसिद्ध इत्यर्थसिद्धस्य तस्योक्तिः भृशमर्थहीनेति भावः । एतद्दिव्या युधधारिणा भवता योद्धुं त्रिषु लोकेषु न केऽपि शक्ता इति यावत् । खड्गोऽयं त्वया क्षिप्तस्सद्य एव शत्रुकण्ठान् छित्त्वा तदसृङ्मयो भूत्वा स्वप्रकाशैर्विद्युद्दीप्तयः किमुदिता इति भ्रान्तिं जनयिष्यति । एवं भृशं भयप्रदोऽयं त्वद्धस्ते नरीनृत्यमानः कृतान्तस्यापि भयमुत्पादयित्वा युद्धे त्वदभिमुखं क्षणं तूष्णीं स्थातुं वापि तस्य नावकाशं दास्यतीति तात्पर्यार्थः । तटिच्छटाविलासेष्वाहार्यज्ञानविषयत्वं प्रतिपाद्य असृक्कान्ति प्रकाशेषु रूपणं प्रतिपाद्यत इति रूपकमलङ्कारः ॥

इत्थं दिव्यायुधस्वरूपस्वभावौ प्रतिपाद्य कर्तव्यमर्थं प्रब्रुवती तुरुष्कवधाय प्रचोदयति कम्पनं मधुराधिदेवता यावत्सर्गम् —

**अमुनाशु विशस्य दक्षिणस्यां**
**मधुरायां पुरि कंसवन्नृशंसम् ।**



**यवनाधिपतिं बलोत्तरस्त्वं**
**विदधीथा स्फुटमच्युतावतारम् ॥** ॥ 29 ॥

**अमुनेति** ॥ बलेन सत्त्वेन उत्तरः श्रेष्ठः महाबल इत्यर्थः । "उत्तरं प्रतिवाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवत् । उत्तरस्तु विराटस्य तनये दिशि चोत्तरा" इति विश्वः । त्वं भवान् । दक्षिणस्याम् दक्षिणदिक्स्थायाम् मधुरायाम् पुरि मधुरापत्तने । उत्तरस्यामपि मधुरा बृन्दावनसमीपगताऽस्तीत्येवमुक्तिः । कंसवत् कंसेन तुल्यमिति विग्रहः । कंससदृशम् । तेन तुल्यं क्रिया चेद्वतिः । नृशंसशब्देन नृशंसकर्तृक घातुकत्वं लक्ष्यत इति वतेरुपपत्तिः । कंसो यथा सोदर्याशिशून्निर्लज्जो निर्दयो हन्ति, पूज्यान् व्यथयति, तथाऽयमपि पशुमारं मारयति प्रजास्सर्वा आबालवृद्धं, श्रोत्रियद्विजान् ऋषिकल्पान् कारागृहबन्धना दिना पीडयति । स इव राक्षसांशश्चेत्येवमुच्यते । नृशंसम् घातुकं पापम् नित्यं परद्रोहकारिणम् 'नृशंसो घातुकः क्रूरः पाप' इत्यमरः । तथाविधम् यवनाधिपतिम् तुरुष्कराजम् विशस्य हत्वा । अच्युतस्य श्रीकृष्णस्य अवतारः आवेशः विभूतिविशेषः तस्य आश्रयम् आत्मान मित्यर्थः । 'अवेतॄस्त्रोर्घञ्' इत्यधिकरणे घञ् । तथाविधम् स्फुटम् व्यक्तम् सर्वजनविदितं यथा स्यात्तथेत्यर्थः । विदधीथाः कुरु आचर । स कंस इव लोकमुद्वेजयति । तद्वधेन त्वं कृष्ण इति लोकविदितो भवेरिति तात्पर्यम् । विपूर्वात् धाञो लिङ् ॥

दुष्टशिक्षणं शिष्टरक्षणं च तव वंशपरम्परायातमिति राजानं प्रस्तौति देवी —

**अनिदम्प्रथमो हि धार्यतेऽसौ**
**भवताऽन्यैर्मनसाप्यधारणीयः ।**
**भुवनत्रयरक्षणैकदीक्षा**
**विधिशंसी कटकः पदाम्बुजेन ॥** ॥ 30 ॥

**अनिदमिति** ।। भवता त्वया । कर्त्रा । अन्यैः त्वत्तो भिन्नैः त्वदितरैः राजभिः मनसा चित्तेनाऽपि किमुत पदेनेति भावः । अधारणीयः धर्तुमशक्यः इदं धरिष्यामीत्यभ्यूहितुमप्यशक्त इत्यर्थः । 'शकि लिङ्चे' ति शक्यार्थेऽनीयर् । भुवनत्रयम् त्रिलोकी तस्य रक्षणम् परिपालनम् तस्मिन् एका अद्वितीया अनितरसाधरणी दीक्षा नियमः दृढाभिनिवेशः तस्य विधिः विधानम् व्यापारः तम् भृशम् शंसति कथयतीत्याभीक्ष्णये णिनिः । लोकत्राणपरायणताबोधक इत्यर्थः । कटकः वलयः वलयाकारः शूरैः धार्यमाणः पादभूषाविशेषः । (गंडपेंडारमिति भाषायां ख्यातः) पदाम्बुजेन पादपद्मेन वामेन "कराम्बुजेने" ति पूर्वमुद्रापकैः परिष्कृतः पाठः 'पदाम्बुजेन' इति मातृकापाठे न किञ्चिद्दोषस्पर्श इति मन्वानेन मयोपेक्षितस्स पाठः । (इदंप्रथमः) अयं प्रथमः आद्यः यस्य । इदम्पूर्वः त्वदुपज्ञ इति यावत् । स न भवतीत्यनिदंप्रथमः । वंशपारंपर्यानुगतस्सन्नित्यर्थः । धार्यंते ध्रियते उह्यते । हि प्रसिद्धौ । सर्वजगद्विदितोऽयं वृत्तान्त इति विजयानगरराजकृतदेशोद्धरणकृत्यप्रशंसा क्रियते । कम्पराजश्शूराग्रेसर इति तस्य वामपादे राजप्रतिमाविराजितस्सर्वराजाधिराजतासूचको वीराणां बिरुदभूतः कश्चन पादवलयो वर्तते । अयमेतस्यैव न॰ बुक्कराजादिभिरप्येतद्वंश्यैस्सर्वराजान्विजित्य धार्यते चिरादयं भुवमापद्भ्यो रक्षामोऽवश्यं वयमेवेतीतरव्यावर्तकतया । एवं वंशानुयातः प्रतिज्ञाविधिरद्य परिपालनीयोऽवश्यं भवता । न चेदसत्यतादोषोऽपप्रथा च बहुधा संभवेदिति तुरुष्कराजवधस्य तदेककर्तव्यतायामौचित्यं प्रदर्शयन्ती त्वरयति तदर्थमेनं मधुरापुराधिदेवता ।।

इममारभ्य पञ्चभिश्श्लोकैरादिशति राजानं तदुत्साहं समभिवर्धयन्ती मधुराधिदेवता —

**चलवेणिभिरुल्बणारुणाक्षै**
**विपुलश्मश्रुभिरात्तसिंहनादैः ।**



**विकटभ्रुकुटीकरालफ़ालै**
**स्त्वरमाण[स्तृणु गां]तुलुष्कशीर्षैः ।। ।। 31 ।।**

**चलेति** ।। त्वमित्यध्याहारः । त्वरमाणः कालविलम्बमकुर्वन् । चलाः कम्पमानाः वेण्यः जटा येषु तैः । किञ्च । उल्बणानि प्रव्यक्तानि अतिशयितानि अरुणानि लोहितानि मद्यपानेनेत्यर्थः । अक्षीणि नेत्राणि येषु तैः । 'बहुव्रीहौ सक्थ्यक्ष्णो' रिति षच् । किञ्च । विपुलानि विस्तृतानि लम्बमानानि श्मश्रूणि कूर्चानि येषु तैः । 'तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुखे' इत्यमरः । किञ्च विकटाः अतिभीकराः 'विकटः पृथुले रम्ये विशालविकरालयोः' इति नानार्थरत्नमाला । 'भ्रकुटि तादृशाः भ्रुकुटयः भ्रूभङ्गाः क्रोधादिना ललाटसंकोचनरूपाः । 'भ्रुकुटिर्भ्रूकुटि स्त्रियाम्' इत्यमरः । ताभिः करालानि दन्तुराणि उन्नतनतानि भयंकराणीति वा । 'करालं दन्तुरे तुङ्गे भीषणे चाभिधेयवत्' इति मेदिनी । तथाविधानि फालानि ललाटानि येषु तैः । किञ्च । आत्ताः गृहीताः स्वीकृताः प्रकटिताः सिंहनादाः क्ष्वेडाः करणवीरगर्जितानि यैः तथाविधैः । तुरुष्कशीर्षैः यवनशिरोभिः । करणभूतैः । गाम् भूमिम् 'गौर्नादित्ये बलीवर्दे ... ... ... स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि' इति केशवः । स्तृणु आच्छादय । भूमिदेवतायास्संतृप्तिं जनयैतानि तान् हत्वा तैर्भूदेवतां तिरोधापय । भूमिदेवतायास्संतृप्तिं जनयैतानि बलितया तस्यै दत्त्वेति भावः । निश्शेषं तान् जहि भूभारमपनयेति परमार्थः । स्वादिगणपठितात् स्तृञ् आच्छादने इत्यस्माल्लोट् । 'स्तृणगात्' इति मातृकापाठः प्रश्नार्थकचिह्नेन परिष्कर्तृभिः पूर्वं मुद्रणेऽङ्कितः । मातृकापाठ एव किञ्चिद्विपरिणामेन परिगृहीतो मया 'स्तृणु गा' मिति ।।

**ग्रसतु प्रधनाह्वये दिनादौ**
**प्रथमानो भवतः प्रतापसूर्यः ।**

**मधुपानमदप्रदोषरूढं**
**यवनीनां स्मितचन्द्रिकाविकासम् ॥ ॥ 32 ॥**

**ग्रसत्विति ॥** प्रधनम् युद्धम् । 'युद्धमायोधनं जन्यं प्रधनं प्रविदारण' मित्यमरः । तत् आह्वयः यस्य तस्मिन् । युद्धरूपे इत्यर्थः । तादृशे दिनादिः दिवसमुखम् प्रातःकालः तस्मिन् प्रथमानः वर्धमानः । भवतः तव प्रतापः पौरुषम् पराक्रमः 'प्रतापे पौरुषातपौ' इति नानार्थरत्नमाला । स एव सूर्यः । कर्ता । मधु पानम् मद्यास्वादः तेन मदः तत्कृता मत्तता स एव प्रदोषः रात्र्या रम्भकः कालः । उभयोरप्यारुण्येनैवमुक्तिः । प्रकृष्टो दोष इति च स्फूर्तिः । 'प्रदोषो रजनीमुख' मित्यमरः । तस्मात् रूढम् उत्पन्नम् । यवनीनाम् तुरुष्कस्त्रीणाम् स्मितम् हासः तदेव चन्द्रिकाविकासः ज्योत्स्नाविजृम्भणम् तम् ग्रसतु गिलतु भक्षयतु अदर्शनं नयत्वित्यर्थः । 'ग्रस ग्लसु अदने' इत्यात्मनेपदेष्वयं पठ्यते । तथापि चक्षिङो ङ्यनु बन्धकरणादनुदात्तनिमित्तमात्मनेपदमनित्यमिति ज्ञाप्यते । तथा च वामनः – "वलेरात्मनेपदमनित्यं ङित्करणात्" इति । उदाहरति च स्वक्रियानिघण्टौ वीरपाण्ड्यभूपालः परस्मैपदमप्येनम् । 'भक्षयत्यत्ति खादति ... ... ... ग्रिलति ग्रसति ग्रासं ग्रिरति ग्रसते तथा" इति । अद्य यवनस्त्रियः स्वप्रियैस्साकं मधु प्रपीय मत्ता अति हसन्ति । ताश्शीघ्रमेव युद्धे त्वत्प्रतापविजृम्भणेन हतान् स्वनाथान् दृष्ट्वा मधु पानं तदुद्भूतं स्वहासं च त्यक्त्वा शोच्यां दशामनुभवन्तु द्राविड स्त्रिय इवेति तुरुष्कवधाय त्वरयति राजानं मधुरेति सारांशः । अत्र प्रधनादिषु दिनत्वादिरूपणमिति रूपकालङ्कारः ॥

**अविनीतिदवानलानुबन्धा**
**दधिकोन्मीलदधर्मघर्मजातम् ।**



**निहताहितलोहिताम्बुवर्षै**
**र्नृप निर्वापय तापमुर्वरायाः ॥ ॥ 33 ॥**

**अविनीतीति ॥** नृपः राजा तस्य संबुद्धिः । हे नृप राजन् । अविनीतिः अविनयः धाष्टर्यम् औद्धत्यम् तुरुष्काणामित्यर्थः । सैव दवानलः दावाग्निः । उभयोरपि दाहकत्वसाम्यादेवमुक्तिः । तस्य अनु बन्धात् संबन्धात् संपर्कात् । अधिकं यथा भवति तथा उन्मीलत् विकसत् एधमानम् परितो व्याप्नुवत् अधर्म एव घर्मजातम् स्वेद परम्परा यस्य तथोक्तः । तथाविधम् । उर्वरायाः भूम्याः । 'उर्वरा तु भूमात्रे सर्वसस्याढ्यभुव्यपि' इति हैमः । तापः संतापः बाधा स एव तापः औष्ण्यम् । तम् । कर्म । निहताः मारिताः संहृताः अहिताः विद्विषः शत्रवः तेषाम् लोहितम् रक्तम् तदेव अम्बु जलम् तस्य वर्षाः वृष्टयः अविच्छिन्नधारारूपाः । तैः करणभूतैः । निर्वापय उपशमय नाशय । तुरुष्ककृतदुराचरणैरधर्मस्सर्वत्र प्रवृद्धः । तेन भूम्या अतीव भारस्समजनि । तस्मात् खिद्यते भूदेवता । यथा दवानलसंपर्कादौष्ण्यातिशयस्तेन च स्वेदप्रकोपः तस्य च जलसेचनै रपगमः तद्वत्त्वमपि दवानलवत् प्रज्वलद्यवनदुरन्तैर्दिनदिनमभिवर्धित मुष्णातिशयवन्नितरां बाधमुत्पादयन्तं स्वेदजलवत्प्रजासु कश्मलतामाश दयन्तं भूदेवतायाः अधर्मं जलवर्षणेनेव तुरुष्करक्तैश्शीघ्रं नाशय । उद्धर भूदेवतामिमामिति मधुरादेव्या प्रबोध्यते कम्पराजः । अत्र समस्तवस्तुविषयकं सावयवं रूपकम् । ताप इत्यत्र तु श्लिष्टमिति विशेषः ॥

**परिपन्थिकबन्धकन्धरान्त**
**स्स्रुतरक्तासवपूरपारणाभिः ।**
**कटपूतनभूतयातुधाना ॥ 34 ॥**
**नभितस्तर्पयतात्तवैष खड्गः ॥**

**परिपन्थीति** ।। तव भवतः एषः पुरत स्थितः । खड्गः दिव्यासिः । परिपन्थिनः शत्रवः । 'दस्युशात्रवशत्रवः । अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ' इत्यमरः । 'छन्दसि परिप' न्थीति छन्दस्येवायं निपातितः । "तटित्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया" इत्यादयः परश्शतं प्रयुज्यन्ते कविभिः । 'छान्दसा अपि क्वचिद्भाषायां भवन्तीतिरीत्या साधुत्वमवगन्तव्यमस्य । तेषाम् कबन्धकन्धरम् - कबन्धः क्रियायुक्तं शिरोविहीनं शरीरम् । 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवर' मित्यमरः । स च कन्धरा ग्रीवा अनयोस्समाहारः । प्राण्यङ्गत्वादेकवद्भावः । तस्य अन्तः तयोः गर्भात् स्रुतम् स्रवत् क्षरत् उद्वमत् 'आदिकर्मणि क्तः कर्तरि चे' ति क्तः । रक्तम् असृक् तदेव आसवः मद्यम् तस्य पूरः प्रवाहः तस्य पारणाभिः समृद्धिमद्भिर्भोजनैः । "उपोषितस्य या भुक्तिः पारणा सा निगद्यते" इति गोपालः । कटाः शवाः प्रेताः लक्षितलक्षणया भूतविशेषा उच्यन्ते । कटशब्दो मृतप्राणि (प्रेत) परः । 'कटश्श्रोणौ क्रियाकारे कलिञ्जेऽतिशये शवे' इति विश्वः । प्रेतशब्दश्च भूतविशेषमभिधत्ते । 'प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः' इति मेदिनी । ते च पूतनाः बालग्रहभेदाः यातुधानाः राक्षसाः । 'यातुधानः पुण्यजनो नैरृतो यातुरक्षसी' इत्यमरः । तान् भूतप्रेतरक्षांसीत्यर्थः । एतान् अभितः निरवशेषान् "भुङ्क्तेऽन्नमभितोऽतिथिम्" इत्यादाविव । अथवा 'अभितश्शत्रुरायाती' त्यादाविव शीघ्रमिति वा । 'समीपोभयतश्शीघ्रसाकल्याभिमुखेऽभितः' इति नानार्थरत्नमाला । तर्पयतात् प्रीणयतात् । तादृशभोजनेनैतेषां प्रीतिं जनयत्वित्यर्थः । तुरुष्करक्तक्षरणेन भूततृप्तिं संधाय साधय देशक्षेमं शीघ्रमेवैतत्खड्गसाहाय्येनेति संदिश्यते राजा कम्पनो यवनराजसंहाराय मधुरादेव्या । यवनसंहारं कुर्विति वक्तव्ये तद्द्योतकतया भङ्गयन्तरेणैवमुक्तेः पर्यायोक्तमलङ्कारः । "पर्यायोक्तं तु गम्यस्य वचोभङ्गयन्तराश्रयम्' इति



तल्लक्षणात् ।।

**दुरितैकपरं तुरुष्कनाथं**
**द्रुतमुत्खाय जगत्त्रयैकशल्यम् ।**
**प्रतिरोपय रामसेतुमध्ये**
**विजयस्तम्भशतानि बाहुशालिन् ।।** ।। 35 ।।

**दुरितैकेति** ।। बाहुशालिन् इति संबुद्धिः महाबाहो । अत एव तुरुष्कराजवधस्त्वयि संभाव्यत इति भावः । एकस्मिन् एकस्मिन्नेव परः आसक्तः नत्वन्यस्मिन् कस्मिंश्चिदपीत्यर्थः । तस्मिन्नेव आसक्त इत्यर्थः । दुरिते पापे एकपरः इति विग्रहः । पापकार्याचरणपरायण इत्यर्थः । तथाविधम् । किञ्च । तम् जगत्त्रयस्य भुवनत्रितयस्य त्रयाणां जगतामित्यर्थः । एकम् श्रेष्ठम् महत् दृढम् अभेद्यम् शल्यम् बाणः तदिव महाव्यधाजनकमित्यर्थः । 'एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु' इति मेदिनी । 'शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषु तोमरे' इति मेदिनी । तथाविधम् तुरुष्कनाथम् यवनराजम् । कर्म । द्रुतम् शीघ्रम् । स्वस्य देशकालयोरनुकूलत्वेन तदीयदुष्कृतस्य चात्युत्कटत्वेन नह्युपेक्षायास्समयोऽयमिति भावः । उत्खाय उत्पाट्य उन्मूल्य समूलं विनाश्येत्यर्थः । "उन्मूलत्युज्जहाति चोत्पाटयति वै समाः । उत्खनत्यात्मनेऽप्येते" इति भट्टमल्लः । रामेण रावणवधाय समुद्रे निर्मितस्सेतुः रामसेतुः । तस्य मध्यः तदवधिको मध्यभाग इत्यर्थः । मधुरामारभ्य सेतुपर्यन्तमित्यर्थः । यवनाक्रान्ताः प्रदेशाः एत इति जेतव्यस्थलनिर्देशश्च सूच्यते । तस्मिन् विजयस्तम्भाः मधुराविजयशंसकाः शासनस्तम्भा इत्यर्थः । तेषाम् शतानि दशगुणं शतम् सहस्रम् । असंख्याकानि तानीति यावत् । प्रतिरोपय प्रतिष्ठापय । त्वद्विजयं सर्वंजगद्विदितं कुर्वित्यर्थः । तुरुष्कवधानन्तरं प्रतिष्ठितानि कम्पराजविजयशासनानि मधुरायास्सेतोश्च मध्ये वर्तेरन्नित्यनेन ज्ञायते ।

पाण्डचचोलदेशास्तुरुष्काक्रान्ता इदानीं वर्तन्ते । तद्देशपरिपालकाश्च राजानस्तुरुष्कराजेन पराजिताः कम्पराजसविधे कालं नयन्ति । तुरुष्क राजवधेन पुनस्तद्देशा विजेतव्याः । कालश्चानुकूलः । तस्य विनाशस्य च समय एष आगत इति कम्पराजं प्रबोधयति जगत्क्षेमाय मधुरापुरदेवता ॥

उपसंहरति स्वप्रबोधं देवी —

**त्वयि नाथ नियन्तृतां प्रपन्ने**
**धृतवेगा स्थिरसेतुबन्धनेन ।**
**प्रथयत्वनुकूलयानलीला**
**मचिरेणैव कवेरजाकरेणुः ॥** ॥ 36 ॥

**त्वयीति ॥** नाथः प्रभुः रक्षकः अनाथानामित्यर्थः । आर्तत्राण परायण इति यावत् । तस्य संबुद्धिः हे नाथ । त्वयि भवति । नियन्ता शासकः परिपालकः राजा तस्य भावः तत्ता । राजत्वमित्यर्थः । ताम् प्रपन्ने प्राप्ते , त्वयि राजनि सतीत्यर्थः । कवेरात्पर्वतात् जायत इति कवेरजा कावेरी । तदाख्या सरित् । 'पञ्चम्यां जनेर्डः' इति डः । सैव करेणुः गजयोषा स्त्रीगजः । 'करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे' इति मेदिनी । अचिरेण सद्य एव । अनुकूलयानलीलाम् । कावेरीपक्षे - अनुकूला अनुगुणा स्वस्य अनुरूपा यानलीला प्रवहणव्यापारः यथापूर्वं गमनमित्यर्थः । गजपक्षे - अनुकूलम् नदीतीरे । विभक्त्यर्थेऽव्ययीभावः । यानम् प्रस्थानम् तदनुसृत्या गमनम् तत्र लीला विलासः मन्दगमनमिति यावत् । ताम् स्थिरम् दृढम् अशिथिलम् यथा भवति तथा सेतुबन्धनम् सेतुनिर्माणम् तेन । धृतः पुष्टः अभिवृद्धः । धृञ् धारणपोषणयोः क्तः । तादृक् वेगः यस्याः तथाभूता । प्रथयतु प्रख्यापयतु प्रदर्शयतु । प्रथ प्रख्याने



ण्यन्ताल्लोट् । घटादय इति मित्त्वादुपधाह्रस्वो न । तुरुष्काः कावेर्यास्सेतुं प्रशिथिलय्य प्रवाहवेगनिरोधनेन तत्तदपमार्गेषु स्वानुकूलेषु प्रावर्तयन्निति पूर्वमुक्तम् । तद्वधेन तामुन्मार्गप्रवर्तिनीं सन्मार्गे यथापूर्वं प्रवर्तय । शिथिलं सेतुबन्धं च दृढं कुरु । करिणीमिव स्वतीरानुसरणेन सविलासं महावेगेन प्रवहन्तीं तां कुर्विति शास्ति देवतेयं राजानम् । अनेन कावेर्यास्सेतुबन्धोद्धारोऽपि कम्पराजेन कृत इति चरित्रांशो ज्ञायते । कावेर्यां करेणुत्वरूपणमत्रेति रूपकमलङ्कारः । वृत्तविपरिणामो न जात इति सर्गो न परिसमाप्तः । दश श्लोका वा तदुपरिसंख्याका वा श्लोका अत्र लुप्ता इत्यभ्यूहितुं शक्यते । तैश्च श्लोकैर्मधुरादेव्याः कम्पराजाश्वासनपूर्वकदत्ताभयोक्तिरूपैर्भवितव्यम् ॥

इति
श्रीगङ्गादेव्या विरचिते
मधुराविजयनाम्नि वीरकम्परायचरिते
मधुराधिदेवतादिव्यास्त्रप्रदानं नाम
अष्टमसर्गः

* * * *

**इतीति ॥** शेषं पूर्ववत् । मधुरापुराधिदेवता । देवतात्मा मधुरेत्यर्थः । तस्याः कर्तरि षष्ठी । दिव्यास्त्रम् देवतासम्बन्धी खड्गः । तस्य प्रदानम् तुरुष्कवधं कर्तुं कम्पराजाय तत्समर्पणम् । नामेति प्रसिद्धौ ।

तेन प्रख्यातः। स्वस्य दक्षिणदेशस्य च तुरुष्कजनितोपद्रवाणामनया कथनेऽपि तदङ्गतयैव कथनमिति न तत्तेषां पृथगुपादानम्। एतादृशः ( सर्गः ) ( इति समाप्तः ) इति तु विशेषः ॥

इति
श्रीपरमेश्वरीकृपासमुपलब्धशास्त्रसाहितीवैदुष्य
'साहित्यालङ्कार' 'विद्वत्कवीशान'
**पोतुकुच्चि सुब्रह्मण्यशास्त्रिणा**
'काव्यकलानिधि' 'महीशूरमहाराजास्थानमहाविद्वत्कवि'
श्रीचिदम्बरशास्त्रिणां भागिनेयेन विरचितया
**भावप्रकाशिका**ख्यव्याख्यया समलङ्कृतायाम्
श्रीगङ्गादेव्याः कृतौ मधुराविजये महाकाव्ये
मधुराविजयाय दिव्यास्त्रप्रदानं नाम
**अष्टमसर्गः**

*  *  *  *

*

श्रीः

# मधुराविजयम्

## भावप्रकाशिकाख्यव्याख्यासमेतम्

## नवमसर्गः

अयं तावत्सर्गस्तुरुष्काणां कम्पराजभटानां च युद्धं वर्णयन्नुपक्रमते। अस्य च पूर्वसर्गस्य च कथासंदर्भो न घटत इति बहवश्श्लोका अत्र लुप्ता इति निश्चप्रचम्। अस्मिन् काव्ये सर्गारम्भेषु सर्वेषु तदारम्भसूचकोऽथशब्दः प्रयुज्यते प्रायशः, क्वाचित्कस्तु 'तत' इति। पूर्वसर्गेऽस्मिश्च स न दृश्यत इति सर्गाविमौ लुप्तपूर्वभागावित्यत्र हेतुरयमपि भवितुमर्हति। अत्र पूर्वापरकथासंघटनाय निर्दिश्यतेऽनुमीयमानः कथाभागो मयातिसंक्षेपतो गद्यरूपेण। एतेनैवायं सर्गः प्रारभ्यत इत्यवगन्तव्यम्।

[इत्थं देशस्य स्वस्य च शोच्यां दशां कम्पराजाय निवेद्य यवनराजवधाय खड्गं च दिव्यं प्रदाय तूष्णीमास तस्मिन् दत्तदृष्टिर्मधुरापुराधिदेवी। स च राजा श्रुत्वा तत्सर्वं क्रोधोद्दीपितमनाः कालाग्निरिव प्रज्वलन् दयमानस्तस्यामेवमभाणीत् - 'अम्ब ममापराधमिमं क्षन्तुमर्हसि पुत्रवात्सल्येन। यत्किमपि पुराकृतं तस्य दुराचारस्य यवनकिरातस्य मामुपेक्षावन्तमेतावन्तं कालमकरोत्। तत्कृतदुष्कृतपरीपाकेन समासन्नो विनाशकालस्तस्य। विनाशकाले च विपरीता बुद्धिः। हन्त यदेवं दुर्नयमाचरति दैवतेषु गोषु ब्राह्मणेषु पतिव्रतासु महानदीष्वमायिकासु प्रजासु च। अवश्यमद्यैव हन्यते स दुरात्मा सपरिवारस्सबान्धवस्ससुहृद् घातुको मृग इव। अयि भगवति

शपामि खड्गमिमं संस्पृश्य । विश्वसि हि मां, नाश्नामि न स्वपिमि यावन्न वध्यते मया स महापातकी । त्यज दैन्यम् । पश्यसि खलु त्वमेव श्वः किं भविष्यतीति । वाग्भिश्शूरा न प्रतिकर्तुमर्हन्ति । गच्छ यथेच्छम् । कालविलम्बो माभून्मम ' इति सोत्साहं सानुकम्पं सक्रोधं च कथयति कम्पराजे तमाशीर्भिरभिनन्द्य तत्रैवान्तर्हिता सा देवी । राजा च दैवचोदनया कालोऽयमिति तुरुष्कवधे कृतत्वरः प्रभातं प्रतीक्षमाणो भगवत्युदिते भानुमालिनि निर्वर्तितसदाचारो निवेद्य मन्त्रिभ्यस्सर्वं तैः कृतदण्डयात्रासन्नाहो मधुरां प्रतस्थे वाहिनीभिस्समुद्र इव व्यूहितैस्स्वबलैरनुगम्यमानस्सपदि । महाबलस्स महाजवेन काले नाल्पीयसैव प्रविवेश मधुरां हठादविदितात्मवृत्तान्तो रहस्यमार्गेण तुरुष्काणां समुत्पादयन् भीतिम् । प्रविशन्नेव स पुरीं दुर्गरक्षणादिषु प्रमत्तान् मत्तांस्तांस्तृणाय मत्वा दुर्गाक्रमणे प्रायतत । तुरुष्कराजोऽपि दुर्गरक्षणे प्रयतमानस्स्वसेनाभिस्तमभ्यषेणयत्ससैन्यम् । सेनयोरुभयोः प्रावर्तत तदानीं तुमुलं युद्धं महाभयदम् ।।]

सेनयोरुभयोः प्रवृत्तं तत्तुमुलयुद्धमद्य प्रस्तूयते —

**[क्रोधेन योधाः] फलकेन केचि**
**त्प्रत्यर्थिनां वञ्चितबाणवर्षाः ।**
**अलक्ष्यपातं युगपत्कृपाणैः**
**कृत्ताखिलाङ्गांस्तुरगानकुर्वन् ।।** ।। 1 ।।

**क्रोधेनेति** ।। योधाः योद्धारः भटाः । ' भटा योधाश्च योद्धार ' इत्यमरः । केचन कतिचन केचित् । कर्तारः । ते क्रोधेन रोषेण शत्रुकृतावमानजनितेनेत्यर्थः । ' कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ' इत्यमरः । फलकेन चर्मणा बाणादिवारणसाधनेन । प्रत्यर्थिनाम् शत्रूणाम् ' अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ' इति शत्रुपर्या



येष्वमरः । वञ्चिताः प्रतारिताः निराकृताः निष्फलाः कृता इति यावत् । तादृशाः बाणवर्षाः अविच्छिन्ना बाणपरम्पराः यैः तथोक्ताः । तथाविधास्सन्तः । अलक्ष्यपातम् – अविदितः परैरज्ञातः लक्ष्यपातः लक्ष्यहृतिः लक्ष्यवेधः लक्ष्यभेदनम् यस्मिन् कर्मणि तथा । ' नञो ऽस्त्यर्थाना ' मित्युत्तरपदलोपः । (तथाविधम्) युगपत् एककाले यदा शत्रुप्रयुक्तबाणवर्षनिवारणं कृतं तदानीमेवेत्यर्थः । तुरगान् अश्वान् शत्रुभिरधिष्ठितानित्यर्थः । तान् कर्म । कृत्तानि छिन्नानि । कृती छेदने क्तः । तादृशानि अखिलाङ्गानि समस्तावयवाः येषाम् । तथा भूतान् अकुर्वन् अतन्वन् आचरन् । ( शत्रुच्छिद्राण्यवेक्ष्य ) स्वहस्त लाघवं प्रादर्शयन्नित्यर्थः । शत्रुभिर्युध्यमाना वीराः कृतप्रतिकृतं कुर्वन्त एव तच्छिद्राणि संलक्ष्य तदधिरूढान् वाहनराजान् खण्डशश्छित्वा कृतहस्तास्ते वैरनिर्यातनमीयुरिति तात्पर्यार्थः । अस्मिन् सर्गे वृत्तं प्रायश उपजातिः । क्वचिदिन्द्रोपेन्द्रवज्रे । तल्लक्षणं तु " स्यादिन्द्र वज्रा यदि तौ जगौ गः " " उपेन्द्रवज्रा जतजास्ततो गौ " " अनन्त रोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः " इति । सर्गोऽय मुभयसेनयोर्युद्धवर्णनेन समारब्धः परिसमाप्यते कम्पराजकृतयवनसुर त्राणसंहारपूर्वकमधुराविजयसाधनेन ।।

युद्धभूमिर्वर्ण्यते —

**आसञ्जिता कङ्कमुखैर्विमुच्य**
**[योधाङ्गलग्ना] भुवनेषुपङ्क्तिः ।**
**आराच्चरन्त्या विरराज मृत्यो**
**रुत्तम्भिता तोरणमालिकेव ।।** ।। 2 ।।

**आसञ्जितेति** ।। योधानाम् भटानाम् अङ्गेषु अवयवेषु लग्ना सक्ता अन्तः प्रविष्टा शत्रुभिः भृशं निखाता । कङ्कमुखैः कङ्कस्य

लोहपृष्ठस्य मुखमिव मुखं येषां तैः। कङ्कवदनैः शल्योत्पाटन साधनभूतयन्त्रविशेषैः। विमुच्य मोचयित्वा तेषां तेषां देहेभ्यः उत्पाट्य। मुच्लृ मोक्षणे ण्यन्तात् क्त्वो ल्यप्। आसञ्जिता समन्तात् योजिता सुदीर्घं निक्षिप्ता। भुवनानि (योधानां) समीपप्रदेशाः तत्रस्था इषु पङ्क्तिः बाणश्रेणिः। कर्त्री। आरात् (स्व) समीपे चरन्त्याः संच रन्त्याः विहरन्त्याः। मृत्योः मृत्युदेवतायाः तस्यै तामलङ्कर्तुमित्यर्थः। संबन्धसामान्यविवक्षया शेषे षष्ठी। उत्तम्भिता संग्रथिता। तोरण मालिका पत्रपुष्पादिभिर्विरचितो हारः। 'बुधैर्वन्दनमाला तु तोरणं परिकीर्त्यते' इति हलायुधः। सेव स्थितेत्युत्प्रेक्षा। प्रतियोधैस्स्वाङ्गेषु भृशमारोपितानि शल्यानि निजगात्रेभ्यस्समुद्धार्य स्थापिता आयता बाणपरम्परा स्वस्य समीपदेशेषु योधैः। मृत्युदेवता च समयं निरीक्ष माणा योधानेताननुगच्छन्ती चरति युद्धभूमौ। एषा बाणपङ्क्तिः कुवलयादिग्रथिता मालेव विराजत इति मृत्युं तां संभावयितुकामा एते किमेतामकल्पयन्निति बाणपङ्क्तौ तोरणमालात्वसंभावनेति द्रव्य स्वरूपोत्प्रेक्षेयम् ॥

गजयुद्धं वर्ण्यते —

**कृत्ताश्शशाङ्कार्धमुखैः पृषत्कै**
**र्धनुष्मतां हास्तिकहस्तकाण्डाः।**
**रक्तह्रदेषु न्यपतन् भुजङ्गाः**
**पारीक्षितस्येव मखानलेषु ॥** ॥ 3 ॥

**कृत्ता इति** ॥ धनुष्मताम् धानुष्काणाम् योधानाम् शशाङ्कस्य चन्द्रस्य अर्धम् सम (प्रवि) भागः शशाङ्कार्धमिति षष्ठीसमासः। एकदेशिसमासस्तु न बाधते षष्ठीसमासमिमम्। तस्यापीष्यमाण त्वात्। 'प्रेम्णा शरीरार्धहरा हरस्य' इति कालिदासः। अत एव



'अर्धं नपुंसक' मिति सूत्रं 'समुदाये दृष्टाश्शब्दा अवयवेष्वपि वर्तन्त' इति न्यायमाश्रित्य प्रत्याख्यातं भाष्यकृता। तेन च 'अर्ध विलोकितम्' 'अर्धोक्तम्' इत्यादि प्रयोगाणां सिद्धिः। अर्धशशाङ्क वत् मुखम् येषां तैः अर्धचन्द्राकाराग्रभागैः पृषत्कैः बाणैः क्षुरप्रै रित्यर्थः। 'पृषत्कबाणविशिखा अजिह्मगखगाशुगाः' इत्यमरः। तैः कृत्ताः छिन्नाः। कृती छेदने क्तः। हास्तिकम् – गजबृन्दः 'हास्तिकं गजता बृन्दे' इत्यमरः। हस्तिनां समूह इत्यर्थे 'अचित्तहस्तिधेनो' रिति ठक्। तेषाम् हस्तकाण्डाः शुण्डादण्डाः। कर्तारः। रक्ताः रिति ठक्। तेषाम् हस्तकाण्डाः शुण्डादण्डाः। कर्तारः। रक्ताः असृङ्मयाः ह्रदाः अगाधजलकूपाः। 'तत्रागाधजलो ह्रदः' इत्य मरः। तेषु। परीक्षितः अपत्यं पुमान् पारीक्षितः जनमेजयः 'तस्या पत्य' मित्यण्। तस्य मखानलेषु यज्ञाग्निषु भुजङ्गाः सर्पा इव न्यपतन् पेतुः अभ्रश्यन्। "पतत्यधोगतौ भ्रंसतेऽपि भ्रश्यति भृश्यति" इति भट्टमल्लः। योधखण्डिता हस्तिहस्ताः रक्तप्रवाहेषु पतन्ति। ते च जनमेजयसर्पयागे होमाग्निषु पततस्सर्पान् स्मारयन्तीति पिण्डी कृतोऽर्थः। उपमालङ्कारः। उपमानं च पुराणप्रसिद्धम्। भुजङ्गानां हस्तिहस्तैस्साम्यं भारतेऽस्मिन्नेवमुक्तमस्मिन्नेव प्रस्तावे – "तुरगा इव तत्रान्ये हस्तिहस्ता इवापरे। प्रपेतुरग्नावुरगाः मातृवाग्दण्डपीडिताः" इति। परीक्षित् स्वपिता सर्पदष्टो मृत इति कुपितेन जनमेजयेन सर्पयाग आरब्धः। तत्र अर्बुदन्यर्बुदसंख्याभिर्यज्ञाग्नौ पतितास्सर्पा मृताः। आस्तिकेन वासुक्यभ्यर्थितेन जनमेजयाद्वरादानद्वारा वारितस्स च याग इत्येषा भारतगाथात्रानुसन्धेया। अमुमनुकुर्वन्निव कश्चन कविरेवं वर्णयति – "विजयस्य रथे ततो निपेतुर्विमतानामिषवः परस्सहस्राः। जनमेजययागवेदिमध्ये जगतां भीतिकरा इवाहिसङ्घाः" इति ॥

**मुक्ताफलैर्वीरकृपाणलेखा**
**विभिन्नगन्धद्विपकुम्भमुक्तैः।**

**रक्तारुणैस्तत्क्षणघट्टनोत्थ**
**स्फुलिङ्गसंघातमतिर्वितेने ॥** ॥ 4 ॥

**मुक्तेति** ॥ वीराः शूराः तेषाम् कृपाणलेखाः खड्गरेखाः ताभिः
विभिन्नाः विदलिताः कुम्भाः गजशिरांसि तेभ्यः मुक्तानि त्यक्तानि
च्युतानीत्यर्थः । तैः । किञ्च । रक्तेन तच्छिरस्स्रुतेन असृजा । तत्स
ङ्गेनेत्यर्थः । अरुणैः रक्तवर्णैः । मुक्ताफलैः मुक्तामणिभिः । कर्तृभिः ।
तत्क्षणम् सद्यः तत्काल एव घट्टनम् (आयुधानाम्) परस्परसम्मर्दः
तेन उत्थाः उत्पन्नाः स्फुलिङ्गाः अग्निकणाः त इति मतिः बुद्धिः।
वितेने अकारि आपादि । मुक्तामणयः तादृशीं बुद्धिं जनयामासु
रित्यर्थः । "कृतौ करोत्यावहति विदधात्यादधाति च । वितनोत्यात्मने
पञ्च" इति भट्टमल्लः । वीरास्स्वदीर्घकृपाणैः गजकुम्भान् बिभिदुः।
विदलितेभ्यश्च तेभ्यो मुक्तामणयस्तद्रुधिरक्लिन्नाः रक्तवर्णा भूत्वा तेषा
मसिसंघर्षणेन समुल्लसद्भिरग्निकणैर्भूयस्साम्यं दधुरिति पिण्डीकृतोऽर्थः ।
मौक्तिकानामुत्पत्तिस्थानानि चैवमुक्तानि रत्नशास्त्रे । "गजेन्द्रजीमूत
वराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके
तेषां तु शुक्त्युद्भवमेव भूरि" इति । करवालानां संघर्षणेनाग्न्युत्पत्तिः
पाषाणादिभिः कठिनपदार्थैः गाढसंघर्षणेन स्फुलिङ्गोत्पत्तिः प्रसिद्धा ।
कविभिरनेकधा वर्णिता च । अत्र रक्तमयेषु मुक्ताफलेषु स्फुलिङ्गत्व
संभावनेति द्रव्योत्प्रेक्षा । अस्याश्च काव्यलिङ्गं सहकारीति तेन साक
मस्यास्सङ्करः । गजदन्तसंघर्षणादग्न्युत्पत्तिः प्रसिद्धा । "मातङ्गानां
दन्तसंघट्टजन्मा हेमच्छेदच्छायचञ्चच्छिखाग्रः । लग्नोऽप्यग्निश्चामरेषु
प्रकामं माञ्जिष्ठेषु व्यज्यते न स्म सैन्यैः" इति ॥

**यावत्कृपाणेन विपाट्य कुम्भं**
**निवर्तते सत्वरमश्ववारः ।**



**तावद् गृहीत्वास्य तुरङ्गमङ्घ्र्यो**
**रास्फालयामास गजस्तमुर्व्याम् ॥** ॥ 5 ॥

**यावदिति** ॥ अश्ववारः सादी अश्वारोहः । कृपाणेन खड्गेन
कुम्भम् गजशिरोभागम् । 'कुम्भौ घटेभमूर्धांशौ' इत्यमरः । विपाट्य
विदलय्य यावत् यावता कालेन निवर्तते परावर्तते तावत् तावत्येव
काले सत्वरम् त्वरया वेगेन सहितं यथा भवति तथा । अति
लाघवेन अप्रतीकारेणेत्यर्थः । अङ्घ्र्योः चरणयोः 'पदङ्घ्रिश्चरणोऽ
स्त्रिया' मित्यमरः । तुरङ्गम् अश्वम् गृहीत्वा शुण्डादण्डेन तदीया
श्वस्य पादौ परिगृह्येत्यर्थः । तम् अश्वारोहम् उर्व्याम् भूम्याम्
आस्फालयामास पातयित्वा ताडयामासेत्यर्थः । पतनपूर्वकताडनं धातो
रर्थः । आङ्पूर्वात् स्फुल संचलने इत्यस्मात् घञि 'स्फुरतिस्फुल
त्योर्घ' ञीत्यात्वे निष्पन्नात् आस्फालशब्दात्तत्करोतीति णिच् ।
"ताडने ताडयति च हन्ति ... ... आघट्टयति चास्फालयति' इति
भट्टमल्लः । अश्वसादी हस्तिकुम्भं विभिद्य परावर्तते । गजश्चाम
मविगणय्य तद्बाधाम् तदधिष्ठिताश्वेन साकं क्रोधात्तं भूमौ पात
यित्वा मारयामासेत्यर्थः । अयं च हस्ती गम्भीरवेदीति ज्ञायते ।
अत्र गजशास्त्रम् "त्वग्भेदाच्छोणितस्रावान्मांसस्य च्यवनादपि । आत्मानं
यन्नजानाति सा स्याद् गंभीरवेदिता" इति ॥

तस्मिन् घोरे युद्धे राक्षससंचारं वर्णयति ॥

**निशाचराः केचन कुञ्जराणां**
**कुम्भस्थलान्निस्सृतमाल्लपूरम् ।**
**निष्ठ्यूतमुक्तामणयस्सहर्षं** ॥ 6 ॥
**चुचूषुरुत्पुष्करनालदण्डैः ॥**

**निशाचरा इति ॥** केचन निशाचराः कतिचन रात्रिंचराः राक्षसाः। कर्तारः। कुञ्जराणाम् गजानाम् कुम्भस्थलात् कुम्भस्थलेभ्यः (गज) शिरःप्रदेशेभ्यः। जातावेकवचनम्। निस्सृतम् निर्गतम् अस्रमेव आस्रम्। तस्य पूरम् रक्तप्रवाहम्। पुष्कराणि करिहस्ताग्राः 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले' इत्यमरः। तान्येव नालदण्डाः पद्मकाण्डाः। तैः। उद्गताः उत्क्षिप्ताः पुष्करनालदण्डाः तथोक्ताः। तैः करणभूतैः। निष्ठ्यूताः उद्वान्ताः बहिर्निर्गमिताः मुक्तामणयः मौक्तिकानि यैः तथाभूतास्सन्तः। "निष्ठ्यूतोद्गीर्णवान्तादि ग्राम्यवृत्तिव्यपाश्रयम्। अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते" इति दण्डी। सहर्षम् सानन्दम्। तेषां रक्तपायित्वादिति भावः। चुचूषुः पपुः आस्वादयामासुः। चूष पाने लिट्। योधैर्विदलितकुम्भानां गजानां कुम्भेभ्यो रक्तनद्यः प्रवहन्ति। तत्रत्यमौक्तिकैस्सह अस्रपा राक्षसा एते रक्तपाने प्रवृत्तास्तत्समये रक्तेन साकमास्वादितान् मणीन् निष्ठीव्य मद्यमिव रक्तं शुण्डाकाण्डैस्सविलासं मद्यपायिन इव पिबन्तीति तात्पर्यार्थः॥

युद्धभूमिरियं प्रेतभूमिस्संवृत्तेति कथ्यते —

**जिघत्सयान्तः पतगैः प्रविष्टैः**
**प्रस्पन्दमानं कुणपं द्विपस्य।**
**समीपमासाद्य सजीवबुद्ध्या**
**व्यसुं सतृष्णोऽपि जहौ सृगालः॥** ॥ 7 ॥

**जिघत्सयेति ॥** अत्तुमिच्छा जिघत्सा बुभुक्षा। अदेस्सन्नन्तादप्रत्ययः। 'लुङ्सनो' रिति घसिरादेशः। तया अन्तः अन्तरा प्रविष्टैः तत्र स्थितैः पतगैः पक्षिभिः मांसलुब्धैः गृध्रादिभिः प्रस्पन्दमानम् तैस्साकम् किञ्चिच्चलन्तम्। ते चलन्ति तैस्साकमयमपि कम्पत



इत्यर्थः। द्वाभ्यां करेण मुखेन च पिबतीति द्विपः गजः। 'सुपि स्थ' इति योगविभागात् कः। तस्य कुणपः शवः। 'कुणपश्शवमस्त्रियाम्' इत्यमरः। तम् समीपम् तस्य समीपमित्यर्थः। 'दूरान्तिकार्थेभ्यो द्वितीया' चेति द्वितीया। सृगालः जम्बुकः। कर्ता। 'सृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः' इत्यमरः। आसाद्य प्राप्य सतृष्णोऽपि आशया सहितोऽपि। बुभुक्षितत्वेन तस्य भक्षणे नितरां सोत्सुकोऽपीति भावः। जीवेन प्राणेन सहितः सजीवः सप्राणः। 'जीवो बृहस्पतिप्राणजीवनात्मखगेषु वा' इति नानार्थरत्नमाला। 'वोपसर्जनस्येति सभावः। तथाविध इति बुद्धिः। तया तादृशभ्रान्त्या। विगताः अपगताः असवः प्राणाः यस्य तम् व्यसुम् प्रेतम् शवम्। न तु सप्राणमित्यर्थः। जहौ तत्याज। तम् परित्यज्य मां प्रहरेदयमिति भयातिशयेन कम्पमानो मनोजवेन धावति स्म स इति भावः। वपामेदःकर्दमयुता भूतप्रेतादिभिर्गृध्रजम्बुकादिभिश्च परीता श्मशानभूमिरिव नितरां जुगुप्साधायको वर्तते भूमिरियमिति बीभत्सो वर्ण्यते। तदङ्गतया च भयानको जम्बुकालम्बनतया प्रस्तूयते। अत्र भ्रान्तिमानलङ्कारः॥

हस्तिपकवधो वर्ण्यते —

**चक्रैर्निकृत्तानि शिरांसि याव**
**दाधोरणानां न पतन्त्यधस्तात्।**
**अक्लिष्टशोभान्यवतंसहेतो**
**स्तावत्प्रतीष्टानि निशाचरीभिः॥** ॥ 8 ॥

**चक्रैरिति ॥** चक्रैः चक्रायुधैः। निकृत्तानि समूलं खण्डितानि। आधोरणानाम् हस्तिपकानाम्। 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः। शिरांसि शीर्षाणि। अधस्तात् अधः

भूमावित्यर्थः। यावत् यावति काले। पतन्ति भ्रश्यन्ति न न भवन्ति। तावत् तावति काले। अतिशीघ्रमित्यर्थः। निशाचरीभिः राक्षसीभिः। कर्त्रीभिः। अवतंसहेतोः अवतंसस्य हेतोः। अवतंसेन निमित्तेन। कर्णपूरनिमित्तमिति यावत्। कर्णभूषणानि कृत्वा धर्तुमनस इत्यर्थः। 'षष्ठी हेतुप्रयोगे' इति षष्ठी। अतएव अक्लिष्टा अम्लाना शोभा कान्तिः येषाम् तथोक्तानि। अमलिनकान्तीनीत्यर्थः। तथा विधानि यथा भवन्ति तथेत्यर्थः। अक्लिष्टशब्दमेतदर्थे कालिदासोऽपीत्थं प्रयुङ्क्ते। "इदमुपनतमेवंरूपमक्लिष्टकान्ति" इति। प्रतीष्टानि गृहीतानि। भूमौ पतने मालिन्यं तेषां संभवेदिति धिया सबहुमानं मार्गमध्य एव परिगृहीतानि सत्वरं ताभिरिति भावः। 'गृह्णात्येवं झषति चीवति स्वीकरोतीति चत्वारि चात्मने स्युः। प्रतीच्छति' इति भट्टमल्लः। अनेन तेषां मुखेषु न दैन्यभावलेशोऽपीति महावीरत्वं तेषु ध्वन्यते। तेन वीरस्वर्गश्च तेषां हस्तगत इति सूच्यते। निशाचरीणामेतादृक्करणासंबन्धेऽपि तथोक्तिरित्यतिशयोक्तिरलङ्कारः। एतादृशप्रस्तावे कालिदास एवं प्रकथयति "अधोरणानां गजसन्निपाते शिरांसि चक्रैर्निशितैः क्षुराग्रैः। हतान्यपि श्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतुः" इति॥

गजविजयो वर्ण्यते —

**करेण कं चित् पदयोर्गृहीत्वा**
**क्षिप्तं दवीयो वियति द्विपेन्द्रः।**
**पतन्तमाच्छिन्नकृपाणयष्टिः**
**प्रत्यैच्छदुच्चैर्दशनद्वयेन॥** ॥ 9 ॥

**करेणेति॥** द्विपेन्द्रः गजेन्द्रः उत्तमगजः क्षत्रियजातीयो गज इत्यर्थः। गजागम एवमाह "भद्रश्रीहरितालुगुग्गुलुशिलागन्धोऽतिशूरो रणे। नानाशस्त्रनिपातवेगसहनः स्तम्बेरमः क्षत्रियः" इति। तादृग्गजः। कर्ता। कंचित् यं कमपि। युध्यमानेषु योधसहस्रेषु स्वाभिमुखं प्रहरन्तमेकं वीरमित्यर्थः। करेण हस्तेन स्वतुण्डेन। पदयोः तस्य पादयोः गृहीत्वा पादौ परिगृह्येत्यर्थः। कर्मणोऽधिकरणत्वविवक्षया सप्तमी। तदीयपादौ स्वशुण्डासंवेष्टितौ कृत्वेति यावत्। (तथा कृत्वा) वियति आकाशे। दवीयः सुदूरम्। 'दवीयश्च दविष्ठं च सुदूरे' इत्यमरः। दूरशब्दादीयसुन्। 'स्थूलदूरयु' वेति साधुः। क्षिप्तम् प्रास्तम्। पतन्तम् आकाशादध आयान्तम्। आच्छिन्ना खण्डशो भिन्ना। कृपाणयष्टिः खड्गलता यस्मात् तथोक्ता। तथा विधा सती। तदीयखड्गलतामिक्षुवत् भङ्क्त्वेत्यर्थः। दशनद्वयेन दन्ताभ्यामुभाभ्याम्। उच्चैः उपरिदेश एव। भूमौ अपतत एवेत्यर्थः। प्रत्यैच्छत् जग्राह। दन्ताभ्यां गृहीत्वाऽपिषदित्यर्थः। क्रुद्धो हस्ती किं न करोतीति भावः। योद्धारं तुण्डेन संपीड्य व्योम्नि समुत्क्षिप्य स्वलाघवातिशयेन कृपाणच्छेदनपूर्वकं मध्येमार्गं एव तं दन्ताभ्यां गृहीत्वा पिपेषेति पिण्डीकृतोऽर्थः॥

इदानीं योधविजयं प्रस्तौति —

**क्षिप्तो गजेनोर्ध्वमसिद्वितीय**
**स्स्कन्धे निपत्यास्य पुरस्तरस्वी।**
**निपात्य चाधोरणमभ्यमित्रं**
**गजाधिरोहस्स्वयमेव जज्ञे॥** ॥ 10 ॥

**क्षिप्त इति॥** तरस्वी शूरः वेगवान् लाघववानिति वा। तरः बलम् (जवो वा) अस्तीति 'अस्मायामेधा' इति विनिः। 'वेगिशूरौ तरस्विनौ' इत्यमरः। असिद्वितीयः खड्गैकसाधनः गजसेनायां प्रविष्ट इत्यर्थः। गजेन हस्तिना। तेष्वेकेनेत्यर्थः। ऊर्ध्वम्

उपरितनप्रदेशम् तमुद्दिश्येत्यर्थः । क्षिप्तः प्रास्तः । आकाशे समुत्क्षिप्त इत्यर्थः । अस्य प्रकृतस्य गजस्य । स्कन्धे पृष्ठे ·पुरः अग्रे अभ्य मित्रम् अमित्रस्याभिमुखम् । निपत्य उत्प्लुत्य स्वस्य शत्रोः हस्तिपकस्य अभिमुखं यथा तथा गजस्कन्धे स्थित्वेत्यर्थः । आधोरणम् हस्त्यारोहम् निपात्य अधःपतितं कृत्वेत्यर्थः । स्वयम् एव आत्मनैव न त्वन्येन । 'स्वयमात्मना' इत्यमरः । गजम् अधिरोहतीति गजाधिरोहः । हस्त्यारोहः हस्तिनमधिरूढः हस्तिपकस्सन् । कर्मण्यण् । जज्ञे अजनि अभावि । 'जनी प्रादुर्भावे – भावे लिट् । "भवत्यर्थे भवत्यस्ति जायते विद्यते तथा" इति क्रियानिघण्टुः । ·शूरोऽयं गजेन वियति क्षिप्तो महता लाघवेन तस्मिन्नेव तद्धस्तिपकाभिमुखं तत्स्कन्धाग्रभागमधिष्ठाय तं निरस्य तत्स्थानमाक्रम्य स्वयं तस्य नियन्ता संवृत्त इति योधविजयोऽत्र प्रकथ्यते ॥

**द्विषा सरोषेण पृषत्कवर्षै-**
**र्निषूदितः कोऽप्यमरत्वमेत्य ।**
**चकार तस्योपरि पुष्पवर्षं**
**सहर्षमुद्घोषितचाटुवादः ॥** ॥ 11 ॥

**द्विषेति** ॥ सरोषेण सक्रोधेन । युध्यमाने योधद्वये प्रतियोधकृतपराभवजातामर्षेणैकेनेत्यर्थः । द्विषा शत्रुणा । पृषत्कवर्षैः बाणवृष्टिभिः अविच्छिन्नबाणपरम्पराभिः श्लाघनीयवीर्यातिशयप्रदर्शिकाभिरित्यर्थः । निषूदितः हतः संहृतः । कोऽपि यः. कश्चन वीरः । अमरत्वम् देवताभावम् देवत्वम् । एत्य प्राप्य । अपराङ्मुखा भूत्वा युध्यमानानां वीराणां स्वर्गस्मरणादिति भावः । सहर्षम् सानन्दम् । 'मरणान्तानि वैरा'णीति न्यायात्तद्विस्मृत्येति भावः । उद्घोषः महाध्वनिः । तद्वन्तः कृताः । महता रवेण समुत्थिता इत्यर्थः । तादृशाः



चाटुवादाः प्रियवचनानि यस्मिन् तथाभूतस्सन् । तस्य उपरि येन हतस्स तस्य शत्रोरुपरीत्यर्थः । पुष्पवर्षम् अविच्छिन्नां कुसुमसंततिम् । चकार अकरोत् व्यतनुत । मेघो जलमिव पुष्पाणि ववर्षेत्यर्थः । तस्मिन् तानि पातयामासेति यावत् । सः कोपेन बाणवर्षं मुमोच । अयं तु हर्षेण पुष्पवृष्टिम् । स देवः । अयं तु मनुष्यः । तस्य देवत्वेन शत्रावपि गुणग्रहणपूर्वकसंभावना च सुष्ठु युज्यते । वर्षेण संभावितस्य पुनर्वर्षेणैव संभावना समुचितेत्येवमुच्यते । शत्रुणापि श्लाघनीयपराक्रम एष इति वीर्यातिशयोऽस्य प्रस्तूयते ॥

**कुन्तेन कश्चिद् द्विषता विभिन्न-**
**स्तथैव संश्लेषममुष्य यातः ।**
**भिन्दन्नुरस्तेन चमत्कृतोऽभूद्**
**गुणेषु को मत्सरमादधाति ॥** ॥ 12 ॥

**कुन्तेनेति** ॥ कश्चित् कश्चन योधः । कुन्तेन भल्लेन । करणभूतेन । द्विषता शत्रुणा प्रतियोधेन । कर्त्रा । विभिन्नः विदारितः । हृदयादिषु भृशं व्यधितः । अमुष्य कुन्तस्य प्रकृतस्य । संश्लेषम् संयोगम् तेन साकम् सम्मेलनम् । तथैव तेन प्रकारेणैव । यद्विधया तत्संश्लेषस्तस्मिंस्तस्याभूत्तद्विधयैवेत्यर्थः । कथं वा तेन स गृहीतः कथं वा प्रयुक्तः तत्सर्वं तथैव । न तु तद्व्यतिक्रमलेशोऽप्यत्रेति भावः । (तं तथा) यातः गतस्सन् । कृतस्य समुचितस्य प्रतिकृतस्यैव युक्तत्वादिति भावः । उरः वक्षः भिन्दन् विदलयन् । तेन प्रतियोधेन । गुणेषु अप्रधानेषु कर्तृपरतन्त्रेषु करणेषु (युद्ध) साधनेषु भल्लादिष्वित्यर्थः । तेषाम् कर्त्रधीनत्वेन तैर्न किञ्चिदपराद्धमिति धियेति भावः । कः जनः मत्सरम् विरोधम् आदधाति आचरति वहतीति काकुः । न कोऽपि तथा लोके इत्यर्थः । गुणिषु चेतनेष्वेव

वैरो युज्यते न त्वचेतनेषु गुणेषु, तेषां सुखदुःखादिज्ञानशून्यत्वादिति च भावः। यस्य येन विरोधः तस्य तद्गुणादि तच्चेष्टादि सर्वं द्वेष्यमेव भवति। तथाऽपि गुणानामस्वतन्त्रत्वेन तेषु विरोधो न गृहीतश्शत्रुणा। भल्लप्रयोगेण हृदयभेदने तथैव पुनः करणात्। एष च उचित एव लोकसाधारणत्वादिति प्रथमयोधस्योक्तिः। किञ्च। गुणेषु प्रशस्तगुणेषु सत्सु शत्रावपीत्यर्थः। कः को वा विवेकी जनः मत्सरम् गुणविषये वैरम् तद्गुणाग्रहणहेतुम् आदधाति आचरति न कोऽपीत्यर्थः। अतएव मदनुकरणं भल्लप्रयोगादिरूपेण तवेति भावः। एवमर्थान्तरमपि। इतीत्यस्य गम्यमानत्वादप्रयोगः। प्रयोगे पौनरुक्त्यमित्यालङ्कारिकाः। इति इत्थम् उक्तप्रकारेण तेन प्रतियोधेन चमत्कृतः। चमत्कृतम् चमत्कृतिः चमत्क्रियानैपुण्यम् उक्तिविषयकम् तदस्यास्ती 'त्यर्श आदित्वा' दच्। शत्रूद्देशेन प्रवृत्तोक्तिविषयकनैपुण इत्यर्थः। अभूत् आसीत्। योधावुभौ परस्परं युध्येते। तयोः कश्चित्तदानीं भल्लेन कस्यचन वक्षो बिभेद। तेनेत्थं व्यधितस्य च कृतस्य सदृशी प्रतिकृतिरेव पौरुषप्रख्यापिकेति मन्वानस्तथैव तद्वक्षो व्यदलयत्। एवम् भिन्नवक्षास्सः मत्कृतेनैव प्रतिकरोषि। तत्र मात्सर्यं त्वया न प्रादर्शि। गुणेषु (अचेतनेषु अप्रधानेषु साधनेषु च।) मात्सर्यं विवेकिना न क्रियते। (शत्रावपि) शत्रुकृतव्यापारेऽपि गुणो वर्तते चेत्तद्ग्राह्य एव भवति बुद्धिमताम्। भवान् बुद्धिमान् विवेकी च। अतएवेत्थमकरोरिति शत्रुं तुष्टावायमिति तात्पर्यार्थः। अत्र गुणेषु मत्सराभावो विवेकिनां लक्षणमिति लोकसामान्यार्थेन प्रकृतविषयस्य समर्थनमित्यर्थान्तरन्यासः। श्लेषश्च 'तेन चमत्कृतोऽभू' दित्यत्र प्रतिपादितं चमत्कारं विशदयन् प्रकृतस्य शोभाधायकोऽभवदिति संकीर्यते तेनेति संक्षेपः ॥

**चिराय कौचित् कलहायमाना**
**वन्योन्यकौक्षेयककृत्तशीर्षौ ।**



**विमुक्तदेहौ तदनु क्षणेन**
**ससौहृदौ दिव्यपुरीमयाताम् ॥** ॥ 13 ॥

**चिरायेति** ॥ कौचित् कावप्युभौ। कलहायमानौ युद्धं कुर्वाणौ। 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' इति क्यङ्। तदन्तात् शानच्। तथाविधौ सन्तौ अन्योन्यम् परस्परम्। कौक्षेयकाभ्याम् खड्गाभ्याम्। 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः। कौक्षेयको मण्डलाग्रः करपालः कृपाणवत्' इत्यमरः। कृत्तौ छिन्नौ शीर्षौ शिरसी याभ्यां तथोक्तौ। अतएव विमुक्तौ त्यक्तौ विसृष्टौ देहौ शरीरौ ययोः तथाभूतौ। तदनु ततः पश्चात्। सौहृदम् मैत्री, तेन सहितौ। (सौहृदशब्दसाधुत्वं च पूर्वं दर्शितम्, स्नेहयुतावित्यर्थः। दिव्यपुरीम् देवतानगरीम् अमरावतीम् स्वर्गमित्यर्थः। अयाताम् अगच्छताम्। अप्रापताम् युद्धेष्वपराङ्मुखा युध्यमाना वीरास्स्वर्गं यान्तीति स्मरणादिति भावः। योधावुभावपि सममेव विक्रम्य परस्परं परस्परेण हतौ तौ ('मरणान्तानि वैराणीति न्यायेन देवभावापन्नत्वेन च) वैरं विस्मृत्य प्रेम्णा परस्परं सम्मानयन्तौ स्वर्गमापतुरिति वर्ण्यते। अत्र परस्परहनने प्रवृत्तयोस्तयोः कथं मित्रतेति प्रतीयमानविरोधस्य स्वर्गमयातामित्यस्मात्प्रतीयमानदेवताभावापन्नत्वेन परिहार इति विरोधाभासः प्रतीयते ॥

**संग्रामवन्यामभितश्चरन्तो**
**दर्पोद्धताः केचन राजसिंहाः ।**
**प्रत्यर्थिनां पार्थिवकुञ्जराणां** ॥ 14 ॥
**शिरांस्यभिन्दन्नखरैः कराग्रैः ॥**

**संग्रामेति** ॥ संग्रामः युद्धम् स एव वनी अटवी तस्याम्। अभितः समन्तात् युद्धभूमौ। वने च सर्वत्रेत्यर्थः। चरन्तः विह

रन्तः वीरविहारं कुर्वन्तः । संचरन्तश्च । दर्पोद्धताः दर्पेण गर्वेण उद्धताः अविनीताः अतिशयितदर्पा इत्यर्थः । जगत्तृणाय मन्वानाः सोत्साहा इति यावत् । मदोद्धता इति च । केचन कतिचन राजसिंहाः राजान एव सिंहाः मृगेन्द्राः । कर्तारः । प्रत्यर्थिनाम् शत्रूणाम् । 'अभिघाति परारातिप्रत्यर्थिपरिपन्थिनः' इत्यमरः । पार्थिवाः राजानः प्रतियोद्धार इत्यर्थः । त एव कुञ्जराः गजाः तेषाम् शिरांसि मस्तकानि (कुम्भस्थलानीति च ।) नखरैः आयुधविशेषैः तैरेव कराग्रैः नखैः अभिन्दन् व्यदलयन् । महान्तो मृगराजा इव वने शूरा राजवतंसाः युद्धभूमावप्रतिहतगमनेन वीरविहारं कुर्वन्तो गजानिव कांश्चन राज्ञो नखरायुधैश्शिरस्सु नखैः कुम्भस्थलेष्विव प्राहरन्निति पिण्डीकृतोऽर्थः । अवयवावयविनोस्सामस्त्येन रूपणमत्रेति समस्तवस्तुविषयं रूपकमलङ्कारः ॥

इत आरभ्य नवभिश्श्लोकैस्तुरुष्कसेनया साकं कम्पराजस्य युद्धं वर्ण्यते —

**[वल्गन् रयेणावनिपालवाजी**
**रराज योधानभि फेनराजीम् ।**
**समुद्वमं]स्तस्य विरोधियोधान्**
**दृष्ट्वा जहासेव पलायमानान् ॥** ॥ 15 ॥

**वल्गन्निति** ॥ अवनिपालः भूमिपालः कम्पनः तस्य वाजी अश्वः औपवाह्य इत्यर्थः । 'वाजी बाणाश्वपक्षिषु' इति मेदिनी । योधान् वीरान् अभि आभिमुख्येन वीराणामभिमुखमित्यर्थः । 'अभिरभाग' इति कर्मप्रवचनीयत्वाद् द्वितीया । रयेण जवेन उत्साहजनितेनेत्यर्थः । वल्गन् (धाराविशेषेण) गच्छन् । फेनराजीम् फेनपरम्पराम् फेनराशिमित्यर्थः । समुद्वमन् बहिः प्रकाशयन् पलायमानान् अप



क्रामतः युद्धं परित्यज्य धावतः । परापूर्वकादयतेर्लटश्शानच् । 'उपसर्गस्यायते' रिति लः । विरोधियोधान् शत्रुवीरान् दृष्ट्वा वीक्ष्य जहास । अहसदिव स्थित इत्यर्थः । भवद्वीर्यातिशया एतन्मात्रा वेति पर्यहसदिव रराजेत्यर्थः । तुरुष्कयोधाः, वायुजवेन सोत्साहं धारावाहिकया गत्या स्वाभिमुखं समभिद्रवन्तं राजाश्वं दृष्ट्वा भीताः आत्मत्राणाय प्रधावन्ति । अश्वराजश्च मुखे फेनमुद्वमति हसितमिव । अत उत्प्रेक्ष्यते । तान् दृष्ट्वा अहो भवद्वीर्यातिरेक इति हसतीति । एवं फेनवमनेऽश्वस्य प्रकृतिसिद्धे कविप्रौढोक्तिसिद्धा तस्मिन् हसनसंभावनेति क्रियोत्प्रेक्षयम् ॥

कम्पराजस्य गजयुद्धं त्रिभिश्श्लोकैः प्रस्तूयते —

**एकप्रहारेण सकङ्कटाना**
**माधोरणानां करिणां च देहैः ।**
**द्विधा विभिन्नैरभितो विवेक्तु**
**मीषत्करास्तस्य विमर्दमार्गाः** ॥ 16 ॥

**एकेति** ॥ तस्य कम्पराजस्य । विमर्दमार्गा युद्धसंचारपद्धतयः । कर्तारः । अभितः समन्तात् युद्धभूमौ स्वविहाराश्रयभूतायां सर्वत्रेत्यर्थः । एकेन एकसंख्याकेनैव प्रहारेण प्रहरणेन आहत्य अस्याघातेनेत्यर्थः । 'अधिकरणविचालने च' इति धा । विभिन्नैः पृथग्भावमापन्नैः एकतया स्थितैः पृथग्भूय द्वाभ्यां भूत्वा स्थितैरित्यर्थः । एतादृशैः कङ्कटः वर्म कवचः । 'जगरः कङ्कटो योगस्सन्नाहस्स्यादुरश्छदः' इति वोपालितः । तेन सहितानाम् सकङ्कटानाम् । आधोरणानाम् हस्तिपकानाम् गजारोहकाणाम् । करिणाम् हस्तिनाम् । च समुच्चये । एषामेषां चेत्यर्थः । देहैः शरीरैः । करणभूतैः । विवेक्तुम् पृथक्कर्तुम् । एते एतस्य युद्धमार्गा इति विभिन्नतया तदितरवैलक्षण्येन

ज्ञातुमित्यर्थः । ईषत्करा: सुलभा: । 'ईषद्दुस्सु' ष्विति खल् । बहुभिस्साधनैर्बहुकृत्वो बहुधा यथाकथमपि भेदनीयानि लक्ष्याणि सिद्धहस्तोऽयमेकधैवामोघेन स्वप्रहारेणैकेन भेदयति क्षणे । स्वप्रहारेणैकेनैव हस्तिनः कवचं भेदयति । तेनैव हस्तिनं च द्विधा करोति । तेनैव हस्तिपकस्य कवचं विदलयति । तेनैव तं च द्विधा करोति । अतएवैतस्य लक्ष्यसिद्धिर्लाघवातिशयश्च नैवेतरजनसाधाणाविति प्रत्यभिज्ञातुमस्य युद्धमार्गान् श्रममन्तरैव शक्यत इति नायकस्य वीर्यातिशयः प्रस्तूयते । पराक्रमसमृद्धिरत्र वर्णितेत्युदात्तोऽलङ्कारः । "समृद्धिमद्वस्तुवर्णनमुदात्त" इति तल्लक्षणात् । करिदेहा: तद्वर्म, हस्तिपकदेहाः तद्वर्म, चैककाल एव तथा कृतमिति ध्वननात्सहोक्तिर्ध्वन्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥

**कुम्भेषु भिन्दन्नृपतिर्द्विपेन्द्रान्**
**मुक्ताफलैश्शर्करिलान्तराभिः ।**
**प्रावर्तयद्रक्ततरङ्गिणीभिः**
**परश्शतास्संयति ताम्रपर्णीः ॥** ॥ 17 ॥

**कुम्भेष्विति** ॥ नृपतिः राजा कम्पनः । कुम्भेषु शिरःपिण्डेषु । अवयवावयविभावे सप्तमी । कुम्भाऽवच्छेदेनेत्यर्थः । द्विपेन्द्रान् गजराजान् । भिन्दन् स्फोटयन् तेषां कुम्भानां भेत्ता सन्नित्यर्थः । 'नलोकाव्य' येति षष्ठीप्रतिषेधात् द्विपेन्द्रानिति द्वितीया । गजकुम्भान् विदार्येति यावत् । मुक्ताफलैः मौक्तिकैः । शर्करिलानि शर्कराः उपला: सन्ति एष्विति विग्रहः । उपलावन्ति 'शर्करा खण्डविकृतौ कर्परांशे रुगन्तरे । उपलायां शर्करायुक्तदेशे शकलेऽपि च' इति हैमः । 'देशे लुबिलचौ च' इतीलच् । तथाविधानि अन्तराणि अधःप्रदेशा: यासु ताभिः । रक्ततरङ्गिणीभिः असृङ्नदीभिः



परश्शता: शतात् परे इति विग्रहः । शताधिकाः अनन्ता इत्यर्थः । पारस्करादित्वात्सुट् । सस्य श्चुत्वम् । 'कर्तृकरणे कृता बहुल' मिति बहुलग्रहणात्समास इति कैयटः । 'मयूरव्यंसकादित्वात्सुप्सुपेति वा' समास इति नागेशः । राजदन्तादित्वात्परनिपातः । स्पष्टं चैतत्सर्वं 'नाज्झलाविति सूत्रे 'अज्झलोः प्रतिषेध' इति वार्तिकव्याख्यानावसरे भाष्यकैयटोद्द्योतादौ । 'परवल्लिङ्गत्वमस्य प्राप्तमपि लोकाश्रयत्वाल्लिङ्गस्य विशेष्यनिघ्नत्वमेव । तथाविधाः । ताम्रपर्णीः तदाख्याः नदीः । ताम्रपर्ण्यः मुक्तावासा इत्येवमुच्यते । संयति युद्धे प्रावर्तयत् प्रवर्तयामास पर्यकल्पयदित्यर्थः । राजा गजकुम्भान् बिभेद । तत्कुम्भाश्च मुक्तावासाः । तेभ्यस्स्रुतेन रक्तेन साकम् मुक्ता अपि सम्मिलिताः । अत एते प्रवाहा मुक्तामयाधोभागास्ताम्रपर्णीनदीप्रवाहभावमभजन् । अत एते प्रवाहा मुक्तामयाधोभागास्ताम्रपर्णीनदी मनुकुर्वन्तोऽनन्तास्ताम्रपर्ण्य इव भान्तीति तात्पर्यार्थः । अत्र मुक्तामयरक्तनदीषु ताम्रपर्णीनदीत्वारोप इति व्यधिकरणरूपकमलङ्कारः । ताम्रपर्णीरिति बहुवचनेन तादृशनदीनां बहुत्वं तु कविप्रौढोक्तिमूलमित्यवगन्तव्यम् । यद्वा । ताम्रपर्णीनां बहूनामसंबन्धेऽपि तत्सम्बन्धोक्तिरत्रेत्यतिशयोक्तिभेदः ॥

**तेन द्विपास्तोमरिणा विभिन्नाः**
**कुम्भस्थलैरुज्झितमौक्तिकौघैः ।**
**क्रौञ्चस्य जह्रुर्गुहशक्तिघात**
**प्रकीर्णहंसप्रकरस्य शोभाम् ॥** ॥ 18 ॥

**तेनेति** ॥ तोमरः शर्वला अल्पः कुन्तः । 'शर्वरा तोमरोऽस्त्रिया' मित्यमरः । 'तोमरोऽस्त्री लोहहुलदण्डः कासूश्च सर्वला ।' (हुलं द्विफलपत्राग्रम्) इत्याह वैजयन्ती । सोऽस्यास्तीतीनिः । तेन तोमरवता स्वहस्तधृततोमरायुधेनेत्यर्थः । विभिन्नाः विदलिताः द्विपाः गजाः । कर्तारः । उज्झिताः त्यक्ताः तैर्विसृष्टाः मुक्तौघाः मौक्तिक

प्रवाहाः अविच्छिन्नमुक्तापरम्पराः यैः तैः। तादृशैः कुम्भस्थलैः स्वशिरोंशप्रदेशैः। उपलक्षणे तृतीया। तदुपलक्षितास्सन्त इत्यर्थः। गुहः कुमारः। 'पार्वतीनन्दनस्कन्दस्सेनानीरग्निभूर्गुहः' इत्यमरः। तस्य शक्तिः कासूः तेन घातः प्रहारः तत्कृत आघातः तेन प्रकीर्णाः व्याप्ताः मेर्वादि गन्तुमभितो व्याप्ता इत्यर्थः। हंसप्रकराः हंसपक्षिणां पङ्क्तयः यस्मिन्। तथाभूतस्य क्रौञ्चस्य हिमवतस्सुतस्य तदाख्यपर्वतस्य शोभाम् प्रभाम् प्रकाशम् जह्रुः आहरन् तत्सदृशा अभवन्नित्यर्थः। यथा वा कुमारस्य क्रौञ्चपर्वतविभेदनेन तद्रन्ध्रतो मेर्वादीन् गच्छन्तः पर्वतमभितो व्याप्ता हंसास्स्वकान्तिभिः कान्तिमन्तं पर्वतं कुर्वन्ति तद्वदेव तोमरकृतरन्ध्रेभ्यो मुक्ता वमन्तस्तत्कान्तिभिः कृतप्रकाशाः परां शोभां वहन्ति करिण एतेऽपीत्युपमार्थः। क्रौञ्चविभेदनं प्रत्येवमुक्तं महाभारते – "स तूत्थाय महाबाहुरुपसान्त्व्य च तान् जनान्। धनुर्विकृष्य व्यसृजद्बाणान् श्वेते महागिरौ। बिभेद स शरैश्शैलं क्रौञ्चं हिमवतस्सुतम्। तेन हंसाश्च गृध्राश्च मेरुं गच्छन्ति पर्वतम्" इति। शक्त्या क्रौञ्चभेदनमित्थं वर्णितमनन्तभट्टेन "विशालरन्ध्रं विजयास्त्रदत्तं देहस्य मध्ये दधतो महान्तः। स्कन्दस्य लीलां करिणो विवव्रुः" इति। काव्यलिङ्गानुप्राणितोपमालङ्कारः॥

कम्पराजस्य प्रतिवीरैस्साकं युद्धं तत्प्रशंसा च चतुर्भिश्श्लोकैरितआरभ्य प्रस्तौति –

**रंहस्स्विनस्स्वाभिमुखान् क्षितीन्द्रो**
**मृगान्नखाग्रेण यथा तरक्षुः।**
**प्रसह्य वक्षस्सु युधि प्रवीरान्**
**क्षुण्णानकार्षीच्छुरिकामुखेन॥** ॥ 19 ॥

**रंहस्स्विन इति॥** क्षितीन्द्रः भूपतिः कम्पराजः। कर्ता। छुरिका असिपुत्रिका। 'स्याच्छस्त्री चासिपुत्री च च्छुरिका चासिधेनुका' इत्यमरः। तस्याः मुखम् अग्रभागः। तेन वक्षस्सु हृदयस्थलेषु तदवच्छेदेनेत्यर्थः। युधि युद्धे। रंहस्स्विनः अतिशयितवेगवतः 'रंहस्तरसी तु रयस्स्यदः। जवः' इत्यमरः। 'अस्मायामेधास्रज' इति विनिः। स्वस्य आत्मनः अभिमुखान् सम्मुखान् युद्धाय सन्नद्धीभूत्वाऽग्रत स्थितानित्यर्थः। प्रसह्य हठात् अनालोचितलक्ष्यपातमित्यर्थः। 'तरक्षुः मृगादनः क्षुद्रशार्दूलः। 'तरक्षुस्तु मृगादनः' इत्यमरः। नखाग्रेण कररुहाग्रभागैः मृगान् हरिणानिव वक्षस्सु हृदयेषु स्वावयवेष्वित्यर्थः। क्षुण्णान् भिन्नान् विदारितान् "क्षुदिर् संप्रेषणे" क्तः। 'रदाभ्या' मिति नः। णः। अकार्षीत् अकरोत्। वक्षांसि छुरिकया विददार लाघवातिशयेनेत्यर्थः। शूराग्रगान् युद्धाय सन्नद्धान् प्रतियोधाननालक्षितलक्ष्यपातं स्वासिपुत्रिकया श्रममन्तरैव तद्वक्षांसि बिभेद स इति तस्य कृतहस्तता वीर्यातिशयश्च प्रस्तूयते। वाक्यार्थोपमेयम्॥



**शूरस्तथा प्राहृत मुद्गरेण**
**शिरस्त्रवन्ति द्विषतां शिरांसि।**
**यथा विनिर्यन्नयनानि तानि**
**मङ्क्षु न्यमाङ्क्षुस्स्वशरीर एव॥** ॥ 20 ॥

**शूर इति॥** शूरः वीरः प्रदर्शितवीर्यसार इत्यर्थः। मुद्गरेण (तेन) तदाख्येनायुधविशेषेण द्रुघणेन 'द्रुघणे मुद्गरघनौ' इत्यमरः। (तेन) तानि सन्ति येष्विति मतुप्। शिरस्त्रम् शीर्षरक्षणम् शीर्षण्यम्। 'अथ शीर्षकम् शीर्षण्यं च शिरस्त्रे' इत्यमरः। द्विषताम् शत्रूणाम् शिरांसि मस्तकानि। कर्म। विनिर्यन्ति बहिर्विनिर्गच्छन्ति नयनानि नयनेत्राणि येषु तथोक्तानि। शिरस्सु कृतस्य प्रहारस्य गाढत्वेन नयनानां बहिर्निस्सरणं जातमिति आघातवेगातिशयो बलवत्त्वं च प्रस्तू

यत इत्यर्थः। तथाविधानि। तानि। मङ्क्षु शीघ्रम् सद्य एवेत्यर्थः। ‘द्राङ्मङ्क्षुसपदि द्रुते’ इत्यमरः। स्वशरीरे निजदेह एव यथा न्यमाङ्क्षुः न्यमज्जन्। निपूर्वात् मस्जेर्लुङ्। तथा तेन प्रकारेण शरीरे ष्वेव शिरांसि लीनानि न तु पृथक्तया दृश्यमानानि यथा भवेयु स्तथेत्यर्थः। प्राहृत अविध्यत। महावेगेन दृढमाहतवानित्यर्थः। प्रपू र्वात् हन्तेः कर्मणि लुङ्। शिरस्सु शिरस्त्राणि धृतानि राजभिः। तान्यपि विभिद्य कम्पराजप्रहारो भृशं व्यथां जनयासास तच्छीर्षे ष्विति महाबलवत्त्वं कम्पराजे प्रकथ्यते। शिरसि गाढप्रहारेण नय नानां बहिर्गतत्वं च प्रसिद्धम् - “निजघ्नुस्सहसाप्लुत्य यातुधानान् प्लवङ्गमाः। शैलशृङ्गाचिताङ्गाश्च मुष्टिभिर्वान्तलोचनाः। चेरुः पेतुश्च नेदुश्च तत्र राक्षसपुङ्गवाः” इति रामायणे॥

**ऽ[तस्मि] न्निति व्यापृतहेतिजाते**
**परापतन्त्यः परिपन्थिसेनाः।**
**कल्पक्षयोदर्चिषि हव्यवाहे**
**महाम्बुधेरोघ इवाशु ने ( शुः )** ॥ 21 ॥

**तस्मिन्निति** ॥ इति इत्थम् उक्तप्रकारेण। तस्मिन् राज्ञि। व्यापृतम् चोदितम् प्रयुक्तम् हेतीनाम् आयुधानाम्। ज्वालानामिति च गम्यते। ‘रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः’ इत्य मरः। तेषाम् जातम् समूहः येन तथोक्तः। तथाविधे सति। परा पतन्त्यः परावर्तमानाः पराङ्मुखा भवन्त्यः परिपन्थिसेनाः शत्रु सैन्यानि। कर्त्र्यः। कल्पक्षयः कल्पान्तः प्रलयकालः तस्मिन् उद्गताः ऊर्ध्वमुखं ज्वलन्त्यः अर्चिषः ज्वालाः यस्य तस्मिन्। भृशं प्रज्वल ज्जालायुते इत्यर्थः। हव्यवाहे अग्नौ। महाम्बुधेः अतिवेलं प्रवृत्तस्य

ऽश्लोकस्यास्य परस्तात् श्लोकदशकं लेखितुं पर्याप्ते द्वे तालपत्रे शून्ये वर्तेते॥



समुद्रस्य आप इव जलानीव आशु शीघ्रम् सद्यः तत्क्षणमेव नेशुः अन्तर्दधुः। णश अदर्शने लिट् “इष्यति नश्यति पलायतेऽन्तर्धत्त इत्यपि” इति भट्टमल्लः। भुवनं प्रदहन् प्रज्वलति प्रलयाग्नौ तस्मि न्नेव समये तदभिमुखमुद्वेलं महासंरम्भेण प्रवहति महाम्भोधौ यथा वा तदग्नेर्दाहात्तन्नाशस्तथैव शत्रुसेना असंख्याकास्तास्स्वाभिमुखमायाता स्स्वशौर्यप्रदर्शने भृशं प्रयतमाना अपि प्रतापोष्म समुद्गमतस्तस्य मुखे क्षणमपि स्थातुमशक्नुवत्यो विनष्टा बभूवुरिति तात्पर्यार्थः। उपमा लङ्कारः॥

**न जामदग्न्येन न राघवेण**
**तथा न भीमेन न चार्जुनेन।**
**आपादितस्तेन यथा समीके**
**हर्षो महर्षेः कलहप्रियस्य॥** ॥ 22 ॥

**नेति** ॥ तेन इत्थं विदितशौर्येण कम्पराजेन। समीकम् युद्धम् ‘मृधमास्कन्दनं संख्यं समीकं संपरायकम्’ इत्यमरः। तस्मिन्। प्रवृत्त इत्यर्थः। सः प्रियः कलहः विवादः देशक्षेमङ्करः दुष्टवधाय प्रवृत्त इत्यर्थः। सः प्रियः अशनवत्प्रीतिजनकः यस्य। महर्षेः देवर्षेः अशनवत्प्रियकलहस्य (कलहाशनस्य) नारदस्येति यावत्। तस्य। हर्षः संतोषः यथा यया विधया आपादितः संपादितः उत्पादितः, तथा तया विधया। अनेन प्रकारेणेति भावः। उत्तरत्र सर्वत्र निषेधवाक्येष्वस्य तथा शब्दस्य संबन्धो वेदितव्यः। जमदग्नेः अपत्यं पुमान् जामदग्न्यः परशुरामः। गर्गादित्वाद्यञ्। अनन्तरेऽपि गोत्रत्वारोपात् प्रत्ययस्योप पत्तिः। तेन त्रिस्सप्तकृत्वः क्षत्त्रकुलान्तकेनापीत्यर्थः। तथा न नैवा पादितः। रघोरपत्यं पुमान् राघवः दाशरथिः तेन रामेण सर्वराक्षस वंशघातिनापीत्यर्थः। न नैवापादितः। भीमेन भीमसेनेन कृतहिडिम्ब जरासन्धादिवधेनापीत्यर्थः। न नैवापादितः। अर्जुनेन कृतनिवातकवच

कालकेयभीष्मादिमहावीरसंहारकेणापीत्यर्थः । न नैवापादितः । लोकैक वीरान् दुष्टनिग्रहाय प्रवृत्तानेतान् सर्वानप्यतिशेतेऽयं वीर्यातिशयेन कम्पराज इत्यत्युक्तिरलङ्कारः । चम्पूभारतकर्ताप्येतां शैलीं स्वकृतौ प्रदर्शयति – "प्रविवेद कुलालचक्रवद् भ्रमतोस्तत्र तयोर्द्वयोर्भिदाम् । न बलो न हरिर्न पाण्डवा न सुरा नाश्वमुखा न चारणाः" इति । एषोऽपि नारदस्य कलहप्रियत्वमित्थं प्रब्रूते – "वीणामुनीन्द्रो विजयस्य युद्धं नीरन्ध्रभावेन निरीक्षमाणः । आनन्दजैरश्रुभिरेव चक्रे हस्तार्पितैराह्निककृत्यमभ्रे" इति ॥

नायकप्रतिनायकयोर्युद्धकथां प्रस्तोतुमुपक्रमते —

**ततस्तुलुष्कान् युधि (क्रान्दिशी)का**
**नालोक्य विष्फारितघोरशार्ङ्गः ।**
**कम्पक्षितीन्द्रं यवनाधिराजः**
**प्रत्यग्रहीद्वृत्र इवामरेन्द्रम् ॥** ॥ 23 ॥

**तत इति ॥** यवनाधिराजः तुरुष्कसम्राट् । ततः अनन्तरम् कम्पराजस्य वीर्यातिशयेऽप्रतिहतं प्रवृत्ते इत्यर्थः । युधि युद्धे कान्दिशीकाः भयाद्द्रुताः 'कान्दिशीको भयद्रुत' इत्यमरः । कां दिशं यामीत्याह कान्दिशीकः । 'तदाहेति माशब्दादिभ्य उपसंख्यानम्' इति ठक् । पृषोदरादिः । तान् तुलुष्कान् तुरुष्कान् यवनान् आलोक्य अवलोक्य दृष्ट्वा । विष्फारितम् विशेषेण चलितम् । शार्ङ्गम् (स्व) धनुः तस्य घोषः यस्य तथोक्तः । आस्फालितधनुर्घोष इत्यर्थः । युद्धाय शत्रुमाह्वयन्निति भावः । वृत्रः वृत्रासुरः अमरेन्द्रम् देवताराजम् इन्द्रमिव कम्पक्षितीन्द्रम् कम्पनभूपतिम् । कर्म । प्रत्यग्रहीत् न्यरुन्ध अगृह्णात् । भयङ्करेण संरम्भेण अन्यतो गमनं तस्य निरोधयामासेत्यर्थः । स्वयमेव राज्ञा तेन योद्धुं प्रवृत्त इति भावः ।



यथा वृत्रासुरो महता क्रोधेन युध्यमानं महेन्द्रं जग्राह, तथाऽयमपि न्यवारयदन्यतो गमनं स्वप्रयत्नसंरम्भेण भयङ्करेण कम्पनस्येत्येतावन्मात्रेणैव विश्रान्तिरुपमायाः । वृत्रग्रहणं प्रति महाभारते तावदेव मुक्तम् – "ततो युद्धं समभवद्वृत्रवासवयोर्महत् । संक्रुद्धयोर्महाघोरं प्रसक्तं कुरुसत्तम । ततो जग्राह देवेन्द्रं वृत्रो वीरश्शतक्रतुम्" इति ॥

प्रतिपक्षनायके यवनराजे रौद्रपरिपोषानुगुणतया तदनुभावादयो वर्ण्यन्ते —

**तं वीरपाणाधिकपाटलाक्षं**
**ललाटलक्ष्यभ्रुकुटीकरालम् ।**
**मदस्य रोषस्य च देहबन्धं**
**संभेदमाशङ्कत वीरवर्गः ॥** ॥ 24 ॥

**तमिति ॥** वीरवर्गः शूरसमूहः । कर्ता । वीराणां पानम् वीरपाणम् वीरैस्सेव्यमाना पानगोष्ठी । युद्धारम्भे युद्धान्ते वा शूरैः क्रियमाणं मद्यपानं वीरपाणमित्युच्यते । तदित्यर्थः । 'वीरपाणं तु तत्पानं वृत्ते भाविनि वा रणे' इत्यमरः । 'वा भावकरणयो' रिति णत्वम् । तेन अधिकपाटले अत्यन्तं रक्ते अक्षिणी नेत्रे यस्य तथोक्तम् । मद्यकृतमदसंजातनेत्ररक्तिमायुत 'बहुव्रीहौ सक्थ्यक्ष्णो' रिति षच् । ललाटे फाले लक्ष्या दृश्या भ्रुकुटी भ्रूभङ्गः मित्यर्थः । किञ्च । तया करालम् पराभिभवनसंजातमनःप्रज्वलनरूपरोषोद्भूत इत्यर्थः । तम् तादृशम् यवनप्रभुम् । कर्म । भयङ्करम् द्रष्टुमशक्यम् । धृत देहबन्धः देहसंबन्धः सोऽस्यास्तीति 'अर्श आदिभ्यो' ऽच् । धृत शरीरसंबन्धवान् धृताकार इति यावत् । मदस्य मदिरापानकृतहर्षोत्कर्षस्य गर्वस्य 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' इति विश्वः । च समुच्चये । तयोरुभयोरपीत्यर्थः । संभेदम् संगम् संयोग

मिव 'संभेदस्फुटने सङ्गे' इति सुधा। अस्मिन्नर्थे "स्नेहसौजन्य संभेदः परिष्वङ्ग इवापर" इत्यस्या गुरुदेवो विश्वनाथकविस्सौगन्धिकापहरणे प्रायुङ्क्त च। आशङ्कत संभावयामास। मदरोषाभ्यां धृताकारवत्त्वमस्मिन् तुरुष्कप्रभौ संभाव्यत इति गुणस्वरूपोत्प्रेक्षेयम्। अस्मिन् प्रतिनायके रौद्ररसालम्बनतया विपक्षशौर्यदर्शनादयो विभावाः तज्जन्यमनःप्रज्वलनादिसूचकाः भ्रुकुटयादयोऽनुभावाः दर्पाहङ्कारादयो व्यभिचार्यादयो वर्णिता इति ते स्थायिनं परिपोष्य नयन्ति रसता मित्यवधेयम् ॥

**निरायता तस्य तुरङ्गवेगा**
**द्वेणिर्मणिश्रेणिमती चकाशे ।**
**अमर्षवह्नेर्ज्वलनोन्मुखस्य**
**धूमच्छटेव स्फुरितस्फुलिङ्गाः ॥** ॥ 25 ॥

**निरायतेति** ॥ तस्य तादृशस्य यवनप्रभोः। मणिश्रेणिमती रत्नपङ्क्तिमती। तत्र तत्र रत्नश्रेणिभिः खचितेत्यर्थः। तैः शोण वर्णेति यावत्। सामान्यग्रहणे मणीनां रक्तवर्णतेति कविसमय इत्येव मुक्तम्। वेणिः उष्णीषसंबन्धी कल्पितकेशबन्धः। कर्त्री। तुरङ्गस्य यवनराडधिष्ठितस्य प्रतियोधमुद्दिश्य धावत इत्यर्थः। तस्य वेगात् जवात् ('तुरङ्गवेगा' इति मातृकापाठः। सा पञ्चम्यन्तत्वेन विपरिणतोऽन्वयानुरोधेन मया) निरायता नितराम् दीर्घा। तुरङ्गाणां वेगतो गमने तेषां निरायतपूर्वकायत्वमिति तदारूढस्यापि तथात्वेन तदलङ्कृतवेण्या अपि दैर्घ्यमिति भावः। ज्वलनस्य दीप्तेः उन्मुखस्य उद्युक्तस्य प्रदीप्यमानस्येत्यर्थः। अमर्षः क्रोधः 'कोपक्रोधामर्षरोष प्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः। स एव वह्निः अग्निः। तस्य। स्फुरिताः चलन्तः स्फुलिङ्गाः अग्निकणाः यस्यां सा। परिस्फुरदग्निकणसंपृक्तेत्यर्थः। धूमच्छटा धूमसमूहः धूमपङ्क्तिरिव। छटा



शब्दस्य समूहार्थकत्वं च प्रसिद्धम् - तथा च माघः "सटाच्छटा भिन्नघनेन बिभ्रता नृसिंह सैंहीमतनुं तनुं त्वया" इति। चकाशे विरराज। यथा वा धूमदर्शनं वह्नेरनुमापकं लोके तथा महता ऽश्वजवेन भृशं कम्पमाना दैर्घ्यमापन्ना तद्वेणिरनुमापिका भवति वैरिषु पराक्रममयं दर्शयिष्यति क्रोधेन महताऽप्रतिहतमित्यस्येति भावः। मणिकान्तिभिस्संकलिता नीलवर्णा तस्य दीर्घा वेणिस्तत्क्रोधाग्ने रचिरादेव प्रज्वलिष्यतः पुरस्तान्निर्गता स्फुलिङ्गविराजिता धूमरेखेव संदृश्यत इति तात्पर्यार्थः। महावेगेन शत्रून् प्रति तुरङ्गमं वल्गयत स्तस्य तद्वेगेन भृशं कम्पमाना दीर्घा च वेणिः कथयति वैरिषु विस्रक्ष्यत्ययमद्यैव क्रोधाग्निमिति परमार्थः। अत्र स्फुलिङ्गसहितधूम राशित्वं वेणौ संभाव्यत इति द्रव्यस्वरूपोत्प्रेक्षेयम् ॥

मधुराविजयस्य नान्दी प्रस्तूयते —

**आस्फाल्यमानस्य च तेन गाढं**
**शार्ङ्गस्य मौर्वीनिनदश्चकार ।**
**चिरात्परित्यज्य तमुच्चलन्त्या**
**जयश्रियो नूपुरघोषशङ्काम् ॥** ॥ 26 ॥

**आस्फाल्येति** ॥ तेन तादृशा तुरुष्कप्रभुणा। भृशं क्रोधवतेत्यर्थः। गाढम् दृढम् आस्फाल्यमानस्य ताडयतः शार्ङ्गस्य धनुषः (तस्य) धनुष्पाटवपरीक्षार्थं वीरैरास्फाल्यते धनुरित्येवमुच्यते। मौर्वीनिनदः आकृष्यमाणाया ज्यायाः घोषश्चेत्युभयमिति यावत्। सः कर्ता। चिरात् बहोः कालात्। तम् यवनराजम् परित्यज्य त्यक्त्वा उच्चलन्त्याः उत्पतन्त्याः निर्गच्छन्त्याः। 'निर्गच्छति च निर्याति निस्सरत्युत्पतत्यपि। उद्गच्छत्युद्व्रजत्युद्यात्युत्तिष्ठत्युच्चलत्यपि' इति क्रियानिघण्टुः। तादृश्याः जयश्रियः विजयलक्ष्म्याः नूपुराणाम् पादा

ङ्गदानाम् घोषः ध्वनिः। तस्य शङ्काम् स इति शङ्काम् तादृशीं संभावनामित्यर्थः। चकार अकरोत्। तथा समभावीत्यर्थः। तुरुष्क प्रभुणा कृतो धनुष्टङ्कारो ज्यानिनादश्च गम्भीरो वर्तते। बाढमा स्फाल्यमानत्वेन तयोरुच्चैर्नादोऽत्र जायते। अतएव जयलक्ष्म्या उच्च लनमित्युच्यते। तत्र च नूपुरघोषो महान् भवति। अतएवैवं संभावना। इतः पूर्वं बहोः कालादेनं वीर इत्याश्रित्य तिष्ठति जयलक्ष्मीरस्मिन्। इदानीं तस्य दुश्शीलेन वीरवरेण्यस्य सकलगुणाभि रामस्य कम्पराजस्य लाभेन च, साऽस्मिन् विरक्ता गन्तुं त्वरते। वार्यमाणाऽपि स्थातुं नेच्छति। उत्प्लुत्य गच्छति। एवं गच्छन्त्या स्तस्याः प्रयाणसंभ्रमेणोच्चैर्नादम् नदतः पादाङ्गदे। तावेवैतौ ध्वनी। नोचेत्कथं वा ध्वनेरेतावन्महत्त्वमिति। अत्र धनुर्ज्याटंकारयोर्जयलक्ष्मी नूपुरध्वनित्वेन संभावनेति द्रव्यस्वरूपोत्प्रेक्षेयम्। इतः पूर्वं प्रतियुद्धं विजयस्साधितस्तेन। इदानीं तु न तथा साधितुं शक्यते। मरणमस्य ध्रुवमिति तु प्रमार्थः॥

शत्रावपि गुणं दृष्ट्वा हर्षति कम्पराज इति तस्य गुणज्ञतां श्लाघते —

**पराक्रमाधःकृतचोलपाण्ड्यं**
**वल्लालसम्पल्लतिकाकुठारम्।**
**रणोन्मुखं कम्पनृपोऽभ्यनन्दी**
**द्वीरस्सुरत्राणमुदग्रशौर्यः॥** ॥ 27 ॥

**पराक्रमेति**॥ उदग्रम् भयंकरम् शत्रूणामित्यर्थः। शौर्यम् शूरता विक्रमः यस्य। तादृशः। अतएव वीरः पराक्रमवान् कम्प नृपः कम्पनप्रभुः। कर्ता। पराक्रमेण स्ववीर्येण अधःकृताः निराकृताः पराजिताः राज्याद् भ्रंशिताः चोलपाण्ड्याः तद्राजाः येन। तथा



विधम्। चोलदेशश्च पाण्ड्यदेशश्च द्वयमेतदाक्रान्तमेतेन। राजानौ च तौ कम्पराजसविधे शरणागताविदानीं वर्तेते। ज्ञायत एवं पूर्वापर ग्रन्थपरिशीलनेन। किञ्च। वल्लालः (वीर) बल्लालः इत्याख्यो हैन्दवराजः। 'वबयोरभेदा' देवमुच्यते। (होयिसळ्) चक्रवर्तिषु सुगृहीतनामा हैन्दवोद्धरणबद्धकङ्कणो वीराग्रणीरयमिति ज्ञायते। तस्य संपत् ऐश्वर्यम् सैव लतिका लता वल्ली। ऐश्वर्यमेनमाश्रित्य पुष्यति फलति चेत्येवमुच्यते। तस्य कुठारम् परशुम् तस्याः छेदकम् तत्स र्वस्वापहारिणमित्यर्थः। संपदा साकं तस्य हरणमत्र स्फुरति। चरित्र परिशीलनेनापि वीरबल्लाणस्य महतीं संपदमपहृत्य तं बन्दीचकार यम्। ततस्तमहनदचिरादेवेति ज्ञायते। एतत्सर्वं विशदीक्रियते चैत त्पीठिकायां मया। एतादृशम् वीरम् रणोन्मुखम् युद्धाय समु द्यतम् युद्धं कर्तुं कृतप्रयत्नमित्यर्थः। वीरधर्ममाश्रित्य शत्रोरभिमुखं युद्ध्वा प्राणांस्त्यक्तुमेव कृतनिश्चयमिति भावः। तथाविधम्। सुर त्राणम् इन्द्रम् तत्सदृशम् तुलुष्कप्रभुम्। भाषायां 'सुलतानु' इति विकृतिरस्य। तम् यवनप्रभुम्। (चरित्रपरिशीलनेन 'जलालुद्दीन् हसनषा' इत्यस्य नामेति विज्ञायते। निरूप्यते चैतदेतदीय भूमिकायाम्। तम् कर्म। अभ्यनन्दीत् अस्तावीत् प्राशंसत्। अभि पूर्वात् टु नदि समृद्धौ इत्यस्माल्लुङ्। "ईट्टे वर्णयति स्तौति स्तुते नौति प्रशंसति वन्दते कीर्तयति च श्लाघते चाभिनन्दति" इति क्रियानिघण्टुः। यतोऽयं वीरस्ततोऽस्य शत्रोरपि (वीर) गुणः प्रशं सार्होऽभवदिति भावः। शत्रूनपि वीरान् प्रशंसन्ति महात्मानः। तथाहि - 'जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम्। वीरं तुलित कैलासमरातिं बह्वमन्यत" इति। महावीरम् वीरवल्लालं विजित वतः स्वशौर्येण सत्त्ववन्तौ चोलपाण्ड्यौ भीत्या प्राणत्राणाय पलाय मानौ कृतवतस्स्वाभिमुखं योद्धुकामनया स्थितवतस्तुरुष्कसम्राजो वीर्यातिशयः प्रशंसापात्रमभूत्कम्पराजस्येति प्रतिनायकोत्कर्षकथनद्वारा नायको

त्कर्षः प्रस्तूयते। कम्पराजस्सुरत्राणमभ्यनन्दीदिति वाक्यार्थे विशेषणगत्या पराक्रमाधःकृतेत्यादीनां पदार्थानां हेतुतया समर्थनीयार्थसमर्थनमत्रेति काव्यलिङ्गमलङ्कारः। 'संभल्लतिकाकुठार' मिति परंपरितरूपकं च काव्यलिङ्गस्यास्य परिपोषकमित्यनयोस्सङ्करः ॥

नायकप्रतिनायकयोर्द्वन्द्वयुद्धं प्रस्तूयते तावदित आरभ्य दशभिश्श्लोकैः —

**आकर्णमाकृष्टशरासनौ तौ**
**मिथः किरन्तौ विशिखानसंख्यान् ।**
**वीरौ स्वबाहुद्रविणानुरूप**
**मायोधनं मानधनौ व्यधाताम् ॥** ॥ 28 ॥

**आकर्णमिति** ॥ मानः अभिमानः चित्तसमुन्नतिः चित्तोत्कर्षप्रत्ययः। 'मानश्चित्तसमुन्नतिः' इत्यमरः। स एव धनम् रक्ष्यं वस्तु ययोस्तौ। मानिनावित्यर्थः। वीरौ शूरौ। कर्तारौ। तथाभूतौ सन्तौ। किञ्च मिथः अन्योन्यम् परस्परम्। तस्योपर्येषः एतस्योपरि स चेत्यर्थः। कर्णावभिव्याप्य आकर्णम् श्रवणपर्यन्तमित्यर्थः। 'आङ् मर्यादाभिविध्यो' रित्यभिविधावव्ययीभावः। आकृष्टे समाकृष्टे नमिते शरासने धनुषी ययोः तौ। धनुषि बाणं संधाय तद्विमोचनार्थं महता प्रयत्नेन ज्यां दृढमाकृष्य नमितधनुष्कोणावित्यर्थः। शराः अस्यन्ते क्षिप्यन्तेऽनेनेति करणे ल्युट्। 'अथास्त्रियौ धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः। ते ययोः तौ। न विद्यते संख्या येषामिति असंख्याः गणयितुम् येषां संख्या न शक्यते तानित्यर्थः। अनन्तानिति यावत्। विशिखान् बाणान् 'विशिखा खनित्रिकायां रथ्यायां विशिखश्शरे' इति हैमः। किरन्तौ क्षिप्यन्तौ सन्तौ। कृतप्रतिकृताभ्यामित्यर्थः। स्वबाहू स्वीयभुजौ तयोः द्रवि



णम् बलम् 'द्रविणं तु बलं धन' मित्यमरः। तस्य अनुरूपम् अनुकूलम् तदुचितमित्यर्थः। महता संरम्भेणेति भावः। तथाविधम् आयोधनम् युद्धम्। कर्म। 'युद्धमायोधनं जन्य' मित्यमरः। व्यधाताम् अकुरुताम्। महावीरौ मानधनौ सत्त्ववन्तौ यथा युध्येरन् तथा तौ श्लाघनीयेन पथा अयुध्यन्तेति भावः। विपूर्वात् डु धाञ्‌ लुङ्। 'गातिस्थे' ति सिचो लुक्। उभयोरर्थयोरनुरूपयोर्वर्णनमत्रेति समालङ्कारः। "समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयो"रिति तल्लक्षणात् ॥

**बाणा निरस्ता यवनेन तस्मि**
**न्नपाङ्गपाता इव वीरलक्ष्म्याः ।**
**कम्पेश्वरेणाऽप्यभिपारसीकं**
**शराः कटाक्षा इव कालरात्रेः ॥** ॥ 29 ॥

**बाणा इति** ॥ यवनेन तुरुष्केण। कर्त्रा। तस्मिन् कम्पराजे तदुपरीत्यर्थः। बाणाः शराः। कर्म। वीरलक्ष्म्याः वीरसंपदः विजयलक्ष्म्या इत्यर्थः। तस्याः स्वयंवरणोत्सुकाया इत्यर्थः। अपाङ्गपाताः कटाक्षप्रसारा इव सविलासं वरस्योपरि निक्षिप्यमाणास्स्वयंवरवध्वाः कटाक्षा इवेति संभावना। निरस्ताः भृशं क्षिप्ताः। कम्पराजं बाधितुं प्रयुक्ता अपि ते नैव तस्य व्यथां जनयामासुः। प्रत्युत सुन्दरीकटाक्षा इव प्रीतिं तस्मिन्नुत्पादयामासुरित्यर्थः। तुरुष्कप्रयुक्तैर्बाणैरयं वीरपुङ्गवो न विव्यधे किञ्चिदपीति भावः। एतदनुगुणतयैव दिव्यासैः प्रभाववर्णनावसरे 'द्विषदस्त्रैर्वपुषो न चाभिषङ्ग' इत्युक्तम्। पारसीकम् अभि तुरुष्कस्याभिमुख्येन 'अभिरभागे' इति कर्मप्रवचनीयसंज्ञावत्त्वेन द्वितीया। कम्पेश्वरेण कम्पप्रभुणा। 'स्वामी त्वीश्वरः पतिरीशिता। अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः' इत्यमरः। शराः बाणा यवनराट्प्रयुक्ताः इत्यर्थः। कालरात्रिः प्रलयकर्त्री दुर्गा शक्तिमूर्तिभेदः। तस्याः कटाक्षाः नेत्रान्ताः रूक्ष

वीक्षणानीवेत्युत्प्रेक्षा । निरस्ताः क्षिप्ताः विसृष्टा इत्यर्थः । प्राणहरणोद्युक्तायास्तस्या देवतायाः भीतिजनकाः मृत्युदृष्टय इव भृशं व्यथां तस्य जनयामासुरित्यर्थः । उभयोरपि वीरयोर्नायकप्रतिनायकयोर्युध्यमानयोर्विजयलक्ष्मीकटाक्षैरनुगृहीत एक आसीत् । मृत्युदेवतावीक्षणैरनुगृहीतोऽपर आसीत् । प्राणहारका इव कम्पराजप्रयुक्ताश्शरा यवनराजे तीव्रवेदनामकल्पयन् । कम्पराजे तु यवनराजप्रयुक्ताश्शराः पुष्पाणीव तदलङ्करणायैव भूत्वा निष्फला अभवन्निति तात्पर्यार्थः । नायकप्रतिनायकबाणेषु वीरलक्ष्मीकालरात्रिकटाक्षभूतत्वं संभाव्यत इत्युत्प्रेक्षाद्वयमिदम् । एतयोर्नैरपेक्ष्यात्संसृष्टिः । अचिरादेव वीरलक्ष्मीस्वयंवरणं नायकस्य, मृत्युदेवतापरीरम्भश्च प्रतिनायकस्य भविष्यतीत्यनेन ज्ञायते ॥

**स केरलप्राणमरुद्भुजङ्गान्**
**वन्यावनीन्द्रद्रुमदाववह्नीन् ।**
**अन्ध्रान्धकारक्षयतिग्मभासो**
**बाणानमुञ्चद्यवने नरेन्द्रः ॥** ॥ 30 ॥

**स इति** ॥ सः नरेन्द्रः कम्पराट् । कर्ता । केरलः केरलानां राजा । 'कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थ' मिति तद्राजप्रत्ययस्य लुक् । तस्य प्राणमरुतः प्राणवायवः तेषाम् भुजङ्गान् सर्पान् तन्नाशकानित्यर्थः । सर्पाणां पवनाशनत्वेनैवमुक्तिः । समुद्धतं केरलराजं युद्धे हत्वा तद्राज्यं विजयनगरस्य सामन्तराज्यमकरोदिति भावः । वने भवः वन्यः आटविकः स चासौ अवनीन्द्रः भूपः आटविकराजः काञ्चीपुरपरिपालकश्चम्पराय इत्यर्थः । स एव [illegible] वृक्षः तस्य दाववह्नयः दवाग्नयः त इव दाहकाः नाशकाः तान् । दवाग्निश्शाखोपशाखं वृक्षमिव सपरिवारं तं नामावशेषं कृतवत इत्यर्थः । अन्ध्राः आन्ध्रराजाः त एव अन्धकाराः तिमिराणि तेषां क्षयः नाशः तत्र तिग्मभासः चण्डांशवः त्विषांपतयः । त इव तन्नाशका इत्यर्थः । तान् । तथाविधान् बाणान् । यवने तुरुष्कराजे अमुञ्चत् व्यसृजत् । इतः पूर्वं प्रबलशत्रुवधेन स्वस्य प्रत्यायकान् बाणान् तद्वधाय प्रायुङ्क्तेति भावः । कम्पराजोऽयं केरलदेशराज्यं काञ्चीराज्यं आन्ध्रराज्यं च स्वपराक्रमेण विजित्य स्वसामन्तराज्यान्यकरोदित्यनया वर्णनया ज्ञायते । बाणानामनेकधा रूपणमिति मालारूपकमलङ्कारः । रामायणे देशा इमे इत्थं नामग्राहं गृहीताः "तथा वङ्गान् कलिङ्गांश्च कौशिकांश्च समन्ततः । अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहम् । नदीं गोदावरीं चैव सर्वमेवानुपश्यत ॥ तथैवान्ध्रांश्च पुण्ड्रांश्च चोलान् पाण्ड्यान् सकेरलान्" इति । वीराः बलवतश्शत्रोर्वधाय प्रत्यायकान् बाणान् क्षिपन्तीति रामायणे वर्ण्यते । " ... ... चिन्तयामास राघवः । मारीचो निहतो यैस्तु खरो यैस्तु सदूषणः । क्रौञ्चावने विराधस्तु कबन्धो दण्डकावने ॥ त इमे सायकास्सर्वे युद्धे प्रत्यायका मम । किन्तु तत्कारणं येन रावणे मन्दतेजसः" इति ॥



**क्षतानि यान्यस्य शरैश्शरीरे**
**चकार वीरस्य तुलुष्कवीरः ।**
**वितेनिरे तानि नखाङ्कशङ्कां**
**जयश्रियो भोगसमुत्सुकायाः ॥** ॥ 31 ॥

**क्षतानीति** ॥ तुलुष्कवीरः पराक्रमवान् तुरुष्कः । कर्ता । शरैः बाणैः । करणभूतैः । वीरस्य शूरस्य अस्य राज्ञः कम्पनस्य शरीरे देहे यानि क्षतानि यान् व्रणान् चकार अकरोत् । तानि क्षतानि । भोगे वीरस्य अस्य नायकस्य समुपभोगे तेन साकं संक्रीडितुम् समुत्सुकायाः सोत्कण्ठायाः स्वकार्यसिद्धौ कालविलम्बमसहमानायाः जयश्रियः विजयलक्ष्म्याः नखाङ्कानि नखक्षतानि तेषां शङ्काम् तान्ये

वैतानीति भ्रान्तिम् वितेनिरे अकुर्वन् पश्यतामित्यर्थः। विपूर्वकात्
तनु विस्तारे - इत्यस्माल्लिट्। "कृतौ करोत्याव्रहति विदधात्यादधाति
च। वितनोत्यात्मने पञ्च" इति भट्टमल्लः। जयश्रीः काचन प्रौढा
नायिका। वीरं कम्पराजं वृत्वा कदा वीरपत्नी भविष्यामि कदा
वा तेन यथेच्छं क्रीडामीति सोत्सुका त्वरया तेन साकं क्रीडितुं समु
पक्रान्ता क्रीडारसास्वादपारवश्येन नखक्षतानि तत्तत्स्थानेषु कृतवती
किमिति संभाव्यन्ते कम्पराजशरीरे यवनकृतानि शरक्षतानीति तात्प
र्यार्थः। विजयलक्ष्मीसंभोगरसिक इव वीरश्रिया विराजमानोऽभव
द्यवनकृतव्रणैस्स राजेति परमार्थः। व्रणेषु भूयस्साम्यकृता भ्रान्ति
रत्नेति भ्रान्तिमानलङ्कारः। मदपारवश्येन स्त्रियोऽपि लज्जां परित्यज्य
स्वनायकाङ्गेषु नखक्षतानि कुर्वन्ति तथा च कालिदासः - "प्रणयि
नीव नखक्षतमण्डनं प्रमदया मदयापितलज्जया" इति। अतएव
प्रौढा नायिकेयम्। "स्मरमन्दीकृतव्रीडा प्रौढा संपूर्णयौवना" इति
तल्लक्षणात्॥

**उदग्रमग्रे यवनाधिभर्तु**
**स्साक्षात्कलेर्मौलिमिवाशुगेन।**
**स मङ्क्षु सार्धं जयकाङ्क्षितेन**
**ध्वाङ्क्षध्वजं ध्वंसयति स्म धन्वी॥** ॥ 32 ॥

**उदग्रमिति**॥ सः प्रकृतः धन्वी धनुर्धरः (राजा कम्पः)
अत एवैकेन बाणेनास्मिन् तत्संभाव्यत इत्यर्थः। धन्व अस्यास्तीति
व्रीह्यादित्वादिनिः। सः कर्ता। आशुगेन बाणेन एकेनैवेत्यर्थः।
यवनाधिभर्तुः तुरुष्काधिपतेः अग्रे पुरः पुरस्तात् अग्रभागे उदग्रम्
उन्नतम् काकध्वजम् काकपताकाम्। तम् कर्म। साक्षात् प्रत्यक्षम्
कलेः कलिपुरुषस्य अधर्माकारस्य मौलिम् शिर इव। मङ्क्षु शीघ्रम्
दुर्लक्षमित्यर्थः। अतिलाघवेनेति यावत्। 'मङ्क्षु शीघ्रभृशार्थयोः'



इति नानार्थरत्नमाला। जयकाङ्क्षितेन सार्धम् विजयाशया साकम्
ध्वंसयति स्म व्यनाशयत्। वीराणां प्रयत्नेन रक्ष्यो ध्वजः। तत्पतनं स्व
शिरःपतनसदृशं वीरस्य। तुरुष्कश्च काकं ध्वजमकरोत्। काकश्चा
रिष्टप्रदः। अतएवारिष्ट इति च तस्य नाम। तत एव कलिपुरु
षस्य मौलिरिति वक्तुं युज्यतेऽयम्। ध्वजरक्षणे प्रमत्तं समीक्ष्य तुरुष्कं
तदच्छिनत् कम्पनः। तच्चैकेनेति श्रममन्तरैव तच्छेदनमिति नायकस्य
वीर्यातिशयः प्रस्तूयते। तद्ध्वजपतनं यदाऽभवत्तदा जेतुं न शक्य
तेऽयं शत्रुरिति निर्णीय युद्धे स्वविजये नैराश्यमयात्तुरुष्कप्रभुः। तत्पतन
मस्य शक्तिहीनतां ज्ञापयन्नस्य पतनमपि समासन्नमेवेति बोधयति।
भूयोऽधर्माचरणेन सर्वथा कलिपुरुषस्याश्रयभूतोऽयमित्येतदीयध्वजच्छेदः
कलेर्मौलिच्छेद इति संभाव्यते। अत एव द्रव्योत्प्रेक्षेयम्। वस्तुतो
ध्वजध्वंसजन्यं जयाकाङ्क्षानैराश्यम्। तथाऽपि सहोक्तिरियं चमत्कार
कारिणी समभूदित्यक्रमातिशयोक्तिरियम्। एतयोः परस्परनैरपेक्ष्याच्च
संसृष्टिः॥

**अमर्षितस्याथ पृषत्कवर्षं**
**विमुञ्चतो विद्विषतश्शरेण।**
**सकार्मुकज्यामलुनात्तुलुष्क**
**राज्यश्रियो मङ्गलसूत्रकल्पाम्॥** ॥ 33 ॥

**अमर्षितस्येति**॥ अथ अनन्तरम् छिन्ने काकध्वजे तदुत्तर
कारण
काल इत्यर्थः। सः (कम्पराजः) कर्ता। शरेण बाणेन। ध्वजपतनस्य शीर्षपतनसमत्वा
भूतेन। अमर्षितस्य संजातरोषस्य। पृषत्कवर्षम् बाणवृष्टिम् अनन्तान्
द्वीराणामिति भावः। अत एव
बाणान् पुङ्खानुपुङ्खन्यायेनेत्यर्थः। विमुञ्चतः त्यजतः विद्विषतः शत्रोः।
राज्यश्रियः राज्यलक्ष्म्याः मङ्गलसूत्रम् माङ्गल्यहेतुः तन्तुः।
भर्त्रा स्वजीवनहेतुत्वेन भार्यायाः कण्ठे ध्रियमाणस्सौभाग्यभाग्याभि

वर्धकस्तन्तुविशेष इत्यर्थः । भर्तृजीवनहेतुत्वं च माङ्गल्यस्य प्रसिद्धम् - "माङ्गल्यतन्तुनाऽनेन मम जीवनहेतुना । कण्ठे वध्नामि सुभगे त्वं जीव शरदश्शतम्" इति स्मरणात् ॥ तेन सदृशीम् तथोक्ताम् स्त्रियाः मङ्गलसूत्रं यथा भर्तारं जीवयति तथेयमपि धनुर्मौर्वी एतद्वशंगतं राज्यं कुर्वती तमेतं जीवयतीति तथोक्तिः । 'ईषदसमाप्तौ' इति कल्पप् । तथाविधाम् कर्मणि युद्धकर्मणि घटते प्रभवतीति कार्मुकम् धनुः । 'कर्मणि घटोऽठच्' इत्यठच् । तस्य ज्याम् शिञ्जिनीम् 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । ताम् अलुनात् अच्छिनत् अकृन्तत् । पूर्वोक्तं पताकाच्छेदनमिदानीमुच्यमानं मौर्वीच्छेदनं च तस्य व्यग्रतां सूचयत्तस्य दौर्बल्यं कथयतः । मङ्गलसूत्रविच्छेदो यथा वा स्त्रियो वैधव्यसूचकस्तथेदं मौर्वीकर्तनमप्यस्य मरणं गमयदस्य राज्यलक्ष्म्याः अजीवद्भर्तृकतां सूचयतीति भावः । स्वस्माल्लाघवेनातिशयितः कम्पराजोऽवश्यं वधिष्यत्येनमचिरादेव । अनाथा च तेन भविष्यति तस्य राज्यलक्ष्मीरिति परमार्थः । अत्र तावदुपमोपक्रमोत्प्रेक्षा तावदलङ्कारः ॥

**विहाय शार्ङ्गं धनुरिद्धरोष**
**स्तुलुष्क(वीरस्त)रवारिमुग्रम् ।**
**तुरङ्गपर्याणनिबद्धवर्ध्रा**
**विलम्बिनं सत्वरमुज्जहार ॥** ॥ 34 ॥

**विहायेति** ॥ तुलुष्कवीरः पराक्रमवान् यवन इत्यर्थः । तुलुष्केषु वीरयते पराक्रमते इति विग्रहः । अन्यथा 'पूर्वाप' रेति वीरशब्दस्य पूर्वनिपातापत्तेः । बाहुलकादिति त्वगतिकगतिः । अतएव इद्धः दीप्तः भृशं ज्वलितः । 'ञि इन्धी दीप्तौ' क्तः । अग्निवद्दाहकस्स्वशरीरस्येत्यर्थः । तादृक् रोषः क्रोधः यस्य तथोक्तः । धनुर्ज्याच्छेदनकृतावज्ञया संजातदुर्वारक्रोध इत्यर्थः । तथाविधस्सन् । शृङ्गस्य विकारः



शार्ङ्गम् ( अण् ) शृङ्गनिर्मितम् धनुः । 'शार्ङ्गं कार्मुकमात्रेऽपि विष्णोरपि शरासने' इति हलायुधः । तथाविधम् धनुः चापः । शार्ङ्गशब्देनैव धनुष उक्तौ पुनर्धनुषः प्रयोगो गोबलीवर्दन्यायेन । तत् कर्म । विहाय त्यक्त्वा शत्रुणा पराभूतमिति हेतोरित्यर्थः । तुरङ्गस्य अश्वस्य पर्याणम् पल्ययनम् वाहनोपर्युपवेशनार्थमास्तीर्यमाणा कन्था । तस्मिन् निबद्धा ग्रथिता संघटिता वर्ध्रा वरत्रा चर्मरज्जुः । वृधु वर्धने । 'वृधुवपिभ्यां रन्' इत्यौणादिको रन् । टाप् । अमरसिंहस्तु 'नध्री वध्री वरत्रा स्यात्' इति ङीषन्तमुदाजहार । अत्र सुधा – गौरादित्वात् ङीषिति व्याचख्यौ । गौरादिषु त्वयं न दृश्यते । अतस्टाप् न विरुद्धोऽत्रेत्यलमतिविस्तरेण । तस्याम् विलम्बते लम्बते अवस्रंसते इति णिनिः । तत्र वर्ध्राविलम्बिभिः' इत्येव मातृकापाठः । अयं पूर्वमुद्रापकैः 'वर्ध्राविलम्बिनम्' इत्येवं परिष्कृतः । स एव मयापि समुचित इत्यादृतः । तम् । किञ्च । उग्रम् भयंकरम् भीतिजनकम् शत्रुप्राणापहरणसमर्थमित्यर्थः । तरवारिम् खड्गम् 'तरवारिर्मण्डलाग्रः खड्गः कौक्षेयकस्समाः' इति विश्वः । तम् कर्म । सत्वरम् शीघ्रम् अतिवेगेनेत्यर्थः । शत्रुकृतपराभवस्य दुर्भरत्वादिति भावः । 'सत्वरं चपलं तूर्णमविलम्बितमाशु च' इत्यमरः । उज्जहार उदहरत् आचकर्ष । कम्पराजप्रयुक्तबाणवेगं सोढुमशक्नुवन् बाणयुद्धाद्विरतोऽसिना योद्धुं साभिलाषः खड्गं हस्ते कृतवानिति तात्पर्यार्थः । 'धनुषो ज्यायास्सज्जीकरणेऽपि शत्रोर्यथा नावकाशस्तथा लाघवातिशयेन स्वकृतहस्ततां प्रदर्शयंस्तस्मिन् प्राहरदयं वीरः कम्पन इति तस्य वीर्यातिशयः प्रकथ्यते ॥

**अथाग्रहीत्कम्पनृपस्तमेव**
**कौक्षेयकं (कालकरालरूपम् ।**
**व्या)पादनार्थं यवनेश्वरस्य**
**यः प्रेषितः प्राक्कलशोद्भवेन ॥** ॥ 35 ॥

**अथेति** ।। अथ अनन्तरम् । शत्रौ स्वलाघवभीत्या बाणयुद्धाद्विरम्य खड्गधरे सतीत्यर्थः । कम्पनृपः वीरकम्पनप्रभुः । कर्ता । कलशात् कुम्भात् उद्भवः जनिः यस्य तथोक्तः । 'अथागस्त्यः कुम्भयोनिरगस्तिः कलशीसुतः' इति शब्दार्णवः । "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः" इति वामनः । कलशः उद्भवः उत्पत्तिस्थानं यस्येति वा । मित्रावरुणयोरूर्वशीदर्शनेन तेजस्स्खलनं तस्य कलशे निक्षेपणं तस्मादेतस्योत्पत्तिश्चोत्तररामायणादिषु वर्ण्यते । तेन कुम्भसंभवेन अगस्त्येन । प्राक् (इतः)पूर्वम् । यवनेश्वरस्य तुरुष्कप्रभोः व्यापादनार्थम् संहरणाय । यः यादृशः खड्गः असिः दिव्यायुधमयइत्यर्थः । प्रेषितः संप्रापितः मधुराधिदेवताद्वारेत्यर्थः । कालः यमः तद्वत् करालम् भयङ्करम् रूपम् आकृतिः यस्य । दर्शनमात्रेणैव प्राणापहारिणमिव स्थितमित्यर्थः । तम् एव नत्वन्यम् । अन्येषां तद्वधेऽशक्तत्वादिति भावः । कौक्षेयकम् खड्गम् दिव्यायुधम् । अग्रहीत् आददे । तुरुष्कवधाय सन्नद्धोऽभवदित्यर्थः । ग्रह उपादाने लुङ् । 'ह्ययन्ते' ति न वृद्धिः । असिना योद्धुं प्रयतमानं तुरुष्कराजम् समयोऽयमिति ज्ञात्वा देवतादेशं सम्मानयितुं तद्वधाय कम्पराजो दिव्यायुधं प्रतिजग्राहेति तात्पर्यार्थः । तुरुष्कवधाय कृतसंकल्पोऽभवत्कम्पराज इति परमार्थः ।।

दिव्यायुधं तं वर्णयति —

**विषच्छटाधूम्ररुचिर्नृपस्य**
**कराग्रधूता करवाललेखा ।**
**(जिह्वेव रेजे)यवनाधिराज**
**प्राणानिलान् जिग्रसिषोर्भुजाहेः ।।** ।। 36 ।।

**विषेति** ।। नृपस्य राज्ञः कम्पनप्रभोः । विषस्य गरलस्य । 'क्ष्वेलस्तु गरलं विष' मित्यमरः । तस्य छायाः कान्तयः ता इव धूम्राः धूमवर्णाः कृष्णलोहिताः 'धूम्रधूमलौ कृष्णलोहिते' इत्यमरः । तथाविधाः रुचयः कान्तयः यस्याः । तादृशी । किञ्च । कराग्रे हस्ताग्रभागे धूता कम्पमाना खेलन्ती । धूञ् कम्पने — आदिकर्मणि कर्तरि क्तः । करवाललेखा रेखाकारः खड्गः । कर्त्री । यवनाधिराजः तुरुष्कसम्राट् । 'राजाहस्सखिभ्य' इति टच् । तस्य प्राणाः असव एव अनिलाः वायवः तान् जिग्रसिषोः ग्रसितुम् भक्षितुम् इच्छोः । 'ग्रसेस्सन्नन्तादुः । भुजः बाहुः स एव अहिः सर्पः तस्य । सर्पाणां पवनाशनत्वादेवमुक्तिः । जिह्वा रसनेव । भक्षितुं त्वरया प्रसृता चलन्ती जिह्वेवेत्यर्थः । रेजे रराज प्रचकाशे । क्षुधातुरस्सर्पो वायुभक्षणे प्रवृत्तो यथा वा स्वजिह्वां धूम्रवर्णां पुनः पुनश्चलयति तथा धूम्रकान्तीः दिक्षु विक्षिपती कम्पराजहस्ते खेलती कृपाणलेखा भयंकराकारेण तुरुष्कराजवधोद्यमे व्याप्रियत इति तात्पर्यार्थः । अचिरकाल एव तुरुष्कराड्वधोऽनेन दिव्यायुधेन भविष्यतीति परमार्थः । करवाले जिह्वात्वं संभाव्यत इति द्रव्योत्प्रेक्षेयम् । भुजादिष्वहित्वादिरूपणमस्यास्समुज्जीवकमिति रूपकानुप्राणितेयम् । अतश्च संकर एतयोः । विषच्छटाधूम्रेत्युपमा च साम्यसंपादनेन समुपकरोत्येतस्यामिति तदङ्गत्वं चैतस्या इति तया चापि संकर एव । कृष्णवर्णवस्तुप्रस्तावे तावद्देवेशस्स्वकल्पलतायां "कृष्णानि ... ... ... ... ... विषाकाश कुहूशस्त्रागुरुपापतमोनिशः" इत्यभाणीत् । हरितो नीलत्वव्यवहार इवात्राप्येतद्व्यवहारो न विरुध्यत इत्यवगन्तव्यम् ।।

तुरुष्कराजवधं श्लोकाभ्यां द्वाभ्यां वर्णयति —

**स वञ्चयंस्तत्तरवारिधारां**
**धाराविशेषप्रवणौपवाह्यः ।**

**अशातयत्तस्य शिरो निमेषा**
**(दने) न कर्णाटकुलप्रदीपः ॥** ॥ 37 ॥

**स इति ॥** प्रदीपयतीति प्रदीपः । " इगुपधेति कः । कर्णाट कुलस्य कर्णाटवंशस्य प्रदीपः दीपः दीप इव प्रकाशकः तथोक्तः । स्वजन्मना सर्वलोकविदितकर्णाटवंशः कर्णाटकुलप्रतिष्ठाधायक इति यावत् । सः प्रसिद्धः कम्पराजः । कर्ता । तस्य तुरुष्कप्रभोः तरवारिः खङ्गः तस्य धाराम् निशितप्रान्तम् । 'धारा पूः कापि सेनाग्रं पतदम्ब्वादि संततिः । खड्गादिनिशितप्रान्ते तुरङ्गगतिपञ्चके' इति नानार्थरत्नमाला । धाराविशेषाः अश्वगतिविशेषाः 'आस्कन्दितं धोरितकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्च धाराः' इत्यमरः । तेषां विवरणं त्वित्थम्– आस्कन्दितम् - " उत्प्लुत्योत्प्लुत्य गमनं कोपादेत्राखिलैः पदैः । धोरितकम् – " तत्र धौरितकं धौर्यं धोरणं धोरितं च तत् । बभ्रु कङ्कशिखिक्रोडगतिवत् " इति । रेचितम् – " उत्तेजितं रेचितं स्यान्मध्य वेगेन या गतिः " इति । वल्गितम् – " वल्गितं पुनः अग्रकायसमुल्लासात्कुञ्चितास्यं नतत्रिकम् " इति हैममाला । प्लुतम् – " प्लुतं तु लङ्घनं मृगगत्यनुहारकम् " इति सुधा । तेषाम् प्रवणः आयत्तः प्रदर्शितधाराविशेष इत्यर्थः । 'प्रवणः क्रमनिम्नोर्व्यां प्रह्वे च स्याच्चतुष्पथे । आयत्ते च तथा क्षी (क्ष) णे प्रगुणे समुदाहृतः' इति धरणिः । तादृशः औपवाह्यः राजाश्वः यस्य तथोक्तः । तथाविधस्सन् वञ्चयन् प्रतारयन् लक्ष्यपातं मोघयन्निति यावत् । निमेषात् क्षणचतुष्टयपरिमितात्कालात् । " क्षणद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम् " इत्यागमसिद्धः कालः । अल्पकालादिति यावत् । ल्यब्लोपे पञ्चमी । निमेषकालं युद्ध्वेत्यर्थः । अनेन दिव्यासिना । करणभूतेन । तस्य तुरुष्कप्रभोः । शिरः शीर्षम् मस्तकम् अशातयत् चिच्छेद । शातम् भिन्नम् करोति शातयतीति 'तत्करोति तदाचष्टे'



इति णिच् । तस्माल्लङ् । कम्पराजोऽयं स्ववधाय तुरुष्कराजेन प्रयुक्तं खड्गप्रहारं स्वतुरङ्गमगमनवैचित्र्येणापसारितलक्ष्यपातो मोघीकुर्वंस्तं तुरुष्कं दिव्यायुधेन श्रममन्तरैवात्यल्पकालेऽवधीदिति निर्गलितोऽर्थः । पूर्वमस्य विद्याभ्यासप्रस्तावे " भूरिबलो धनुर्धरस्तुरङ्गमारोहणकर्ममर्मवित् । कृपाणविद्यानिपुणः " इत्यादि यदुक्तमक्षरशस्तद्याथातथ्यं बोधयत्येषा वर्णना । प्रसङ्गयानभूतं काञ्चीपुरविजयं पुरतस्संपाद्य स्वानुरक्तप्रजानीक इदानीम् प्रधानयानभूतं मधुराविजयं तुरुष्कवधेन साधयामास कम्पराजः । बुक्कराजाज्ञाम् पितृदेवोऽयं रेखामात्रमपि न व्यतीयायेति च ज्ञायते ॥

**अज्ञातसेवोचितचाटुवादं**
**तुलुष्कसाम्राज्यकृताभिषेकम् ।**
**दिवौकसामप्यकृतप्रणामं**
**भूमौ सुरत्राणशिरः पपात ॥** ॥ 38 ॥

**अज्ञातेति ॥** अज्ञाताः अविदिताः अननुभूताः । सेवायाः श्ववृत्तेः । 'सेवा श्ववृत्तिः' इत्यमरः । 'सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जये' दिति च मनुः । तस्याः उचिताः अनुरूपाः अनुगुणाः । दैन्यमवलम्ब्य 'त्वमिन्द्रस्त्वं ब्रह्मा त्वं विष्णु' रित्येवंरूपाः । चाटुवादाः प्रीतिभाषणानि सेव्यमानस्य प्रीतिसंपादनार्थे प्रयुक्ताः स्तावकगिर इत्यर्थः । वादा इति भावे घञ् । ते यस्मिन् तथोक्तम् । यदा कदाप्यननुभूतपौरुषहैन्यमदीनं मानधनमित्यर्थः । तत् । दिवम् स्वर्गः ओकः स्थानम् आश्रयः निवासः येषां ते दिवौकसः देवाः । दिवशब्दोऽदन्तोऽस्ति तथा च त्रिकाण्डशेषः – 'मन्दारस्सैरिभश्शक्रभव(सद)नं खं दिवं नभः' इति । 'सुपर्वाणस्सुमनसस्त्रिदिवेशा दिवौकसः' इति देवपर्यायेष्वमरः । तेषाम् (देवानाम्) पूजनीयानामपीत्यपिशब्दार्थः । अकृतः अनाचरितः प्रणामः नमस्करः येन

तथोक्तः। स्वमानच्युतिर्भवेदिति धियेति भावः। अनेन 'दर्पभूयिष्ठत्वमस्य सूक्तं भवति। तेन धीरोद्धतत्वमस्मिन्नायकेऽभिधीयते। 'दर्पमात्सर्यभूयिष्ठो मायाच्छद्मपरायणः। धीरोद्धतस्त्वहङ्कारी चलश्चण्डो विकत्थन" इति तल्लक्षणात्। सर्वदा सेव्यमानं न तु कदापि कस्यापि सेवकमित्यस्य समुद्धतत्वमनेन प्रकथ्यते। किञ्च। तुलुष्कसाम्राज्यम् यवनचक्रवर्तित्वम्। सम्राट् च त्रिधा ख्यातः। राजसूयकर्ता तावदेकः। द्वादशराजमण्डलस्याप्यधीश्वरोऽन्यः। सर्वनृपतीनां शासकोऽपरः। तथा चामरसिंहः – 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञस्स सम्राट्' इति। तुरुष्काणामनुशासकोऽयमित्येष सम्राडित्युच्यते। तस्य भावः साम्राज्यम् चक्रवर्तित्वम्। भावे ष्यञ्। तुरुष्काणां साम्राज्यम् तुरुष्कसाम्राज्यम् सर्वयवननियन्तृत्वम् तुरुष्कराजतेति यावत्। तदर्थे कृतः निर्वर्तितः आचरितः अभिषेकः तदङ्गतया स्नानविधिः यस्मिन् तथोक्तम्। मधुरासुरत्राणोऽयं हास्तिनपुरसम्राजमपि (ढिल्लीपादुषा इति व्यवह्रियमाणमपि) धिक्कृत्य स्वतन्त्रराज्यस्थापकोऽयं तदानीमभूदिति चरित्रपरिशीलनाज् ज्ञायत इति युज्यतेऽस्मिन्नेवमुक्तिः। तादृक्। सुरत्राणशिरः तुरुष्कराजशीर्षम्। भूमौ भुवि धूलिधूसरितायामित्यर्थः। पपात अभ्रश्यत्। कालप्रभावस्य केनापि निरोद्धुमशक्यत्वादिति भावः। दासीकृतराजलोकं समनुभूतमहावैभवं समुद्धतं क्वचिदप्यनवनतं तच्छिरोऽद्य भूमौ पतित्वा लुठति, गृध्रादीनां वशंगतं च भवतीति कालोऽयं दुरुल्लङ्घ्यो यादृशामपि, स्वकर्मानुगुणं कालदत्तं फलं तस्मिंस्तस्मिन् काले सुखं वा दुःखं वाप्यवश्यमनुभोक्तव्यमेव सर्वैरिति, नान्यथा चेष्टितुं शक्तिरस्ति यस्य कस्यापीति च बोध्यत इति परमार्थः॥

कम्पराजस्यौदार्यमत्र स्तूयते –



**च्युतेऽपि शीर्षे चलिताश्ववल्गा**
**नियन्त्रणव्यापृतवामपाणिम्।**
**प्रतिप्रहारप्रसृतान्यहस्तं**
**वीरः कबन्धं द्विषतोऽभ्यनन्दीत्॥** ॥ 39 ॥

**च्युत इति॥** शीर्षे शिरसि तुरुष्कराजस्येत्यर्थः। च्युते शरीरात् गलितेऽपि तस्मात् वियोजितेऽपि प्राणे गतेऽपीति यावत्। चलिताः कम्पमानाः धावन्त इत्यर्थः। तादृशाः अश्वाः हयाः तेषाम् वल्गाभिः (अश्व) रश्मिभिः नियन्त्रणम् नियमनम् निरोधः वारणम् तत्र व्यापृतः चेष्टितः प्रसृतः वामपाणिः सव्यहस्तः यस्य तम्। द्विषतः शत्रोः तुरुष्कवीरस्य कबन्धम् शिरोविहीनम् देहम्। कर्म। गतेऽपि प्राणे पूर्वसंस्कारबलेन शत्रौ प्रतिक्रियाचरणेन वैरनिर्यातनाय प्रयतमानमित्यर्थः। वीरः शूरः (कम्पनः) कर्ता। अभ्यनन्दीत् प्रशंसयामास। स्वयं वीरत्वाद्वीरकृत्यमिमं शत्रावपि दृष्ट्वा भृशं तुष्टावेति नायकस्यौदार्यं प्रशस्यते। हठाच्छीर्षे खण्डिते पूर्ववासनाबलादेवंप्रवृत्तिः कबन्धस्य न विरुद्धा – "नभसि तमभिवीक्ष्य घोररूपं दिशि दिशि तत्र पलायिते नृपौघे। मरणसमयमुष्टिलग्नशस्त्रस्तदभिमुखः प्रययौ कबन्ध एव" इत्यादीनि कवयो यतो वर्णयन्ति सहस्रशः॥

देवताहर्षो वर्ण्यते –

**मानोन्नते कम्पनृपस्य मौलौ**
**पपात दिव्यद्रुमपुष्पवृष्टिः।**
**स्वयंवराभ्युत्सुकराज्यलक्ष्मी**
**विमुक्तमुक्ताक्षतजालकल्पा॥** ॥ 40 ॥

**मानेति॥** मानः सम्मानः गौरवम् पूजनीयता तेन उन्नते

उत्कृष्टे महति। कम्पनृपस्य कम्पनप्रभोः। मौलौ शिरसि दिव्य द्रुमाः देवतावृक्षाः संतानाद्याः पञ्च। 'पञ्चैते देवतरवो मन्दारः पारिजातकः। संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' इत्यमरः। तेषाम् पुष्पाणि कुसुमानि तेषाम् वृष्टिः वर्षः अविच्छिन्ना (कुसुम) परम्परा। कर्त्री। स्वयंवरः स्वयंवरणम् पित्रादीनामाज्ञां विनैव आत्मना स्वोचितवरपरिग्रहणम्। तत्र उत्सुका सोत्कण्ठा राज्यलक्ष्मीः राज्यसंपत्। लक्ष्मीसंपदोरैक्यमित्येवमुक्तिः। काचिन्नायिकेति गम्यते। तया विमुक्ताः संभ्रमेण परिणयात्पूर्वमेव मुक्ताः त्यक्ताः शिरसि निक्षिप्ताः मुक्तानाम् मौक्तिकानाम् अक्षताः लाजाः अखण्डतण्डुलाः 'लाजाः पुंभूम्नि चाक्षताः' इत्यमरः। प्रकृतिविकृतिभावे षष्ठी। मुक्तामया अक्षता इत्यर्थः। तेषाम् जालम् समूहः श्रेणिः तेन सदृशी तत्कल्पा सती। पुष्पाणां शौक्ल्याद्वर्तुलत्वाच्चैवमुक्तिः। ईष दसमाप्तौ कल्पप्। पपात अभ्रश्यत। कम्पराजस्य वीरत्वधार्मि कत्वादिसुगुणसम्पदं दृष्ट्वा 'गुणलुब्धास्स्वयमेव संपद' इति न्यायेन गुणैकलोभाद्राज्यलक्ष्मीरस्मिन् गाढमनुरक्ता विलम्बमसहमाना परि णयात्पूर्वमेव मङ्गलाक्षतानेतस्योपरि निक्षिप्तवती किमित्यभ्यूह्यते रावणवधेनेव तुरुष्कराड्वधेन प्रमुदितैर्देवगणैरभिनन्दनपूर्वकमस्य शिरसि वृष्टा पुष्पवृष्टिरियम्। अत्र कल्पपा वाचकेन प्रथमतः प्रतीयमाना ऽप्युपमा परिशील्यमाने लक्ष्मीसंपदोरभेदविवक्षया केवलमुपलब्धसत्ता कया राज्यलक्ष्म्या मुक्ताक्षता एते इत्युपमानाप्रसिद्धेरुपमोपक्रमो त्प्रेक्षेयम्॥

तुरुष्कसंहारेण समुपलब्धपूर्वस्थितेर्दक्षिणदेशस्य समुत्पन्नमानन्दा तिशयं विशदयति —

**प्रशान्तदावेव वनान्तलक्ष्मी**
**र्गतोपरागा गगनस्थलीव ।**



**कलिन्दजा मर्दितकालियेव**
**दिग्दक्षिणाऽऽसीत्क्षतपारसीका ॥** ॥ 41 ॥

**प्रशान्तेति** ॥ क्षताः हिंसिताः नाशिताः। क्षणु हिंसायाम् क्तः। अनुनासिकलोपः। पारसीकाः तुरुष्काः। पारसीके तदाख्ये देशे ('पर्षिया' इति भाषायां विख्याते) भवाः इति विग्रहः। 'कोपधाच्चे' त्यण्। ते यस्यां सा तथोक्ता। तादृशी। दक्षिणा तथा प्रसिद्धा दिक् दिशा दक्षिणाशा दक्षिणदेश इत्यर्थः। सा कर्त्री। उपमेयभूता च। प्रशान्तः सुष्ठु उपशान्तः। भृशं प्रज्वलित इदानी मुपरत इत्यर्थः। तादृक् दावः दवाग्निः भयंकरोऽग्निः। सः यस्याम् तथोक्ता। तादृशी। वनान्तः वनप्रदेशः तस्य लक्ष्मीः संपत् वैभवम्। सेव। किञ्च। गतः नष्टः उपरागः ग्रहणम् चन्द्रसूर्ययोः राहुग्रासः 'उपरागस्तु पुंसि स्याद्राहुग्रासेऽर्कचन्द्रयोः' इति सुधा। सः यस्यां तथोक्ता। तादृशी गगनस्थली आकाशप्रदेश इव 'स्थलं स्थली' इत्यमरः। 'जानप' देति ङीष्। किञ्च। मर्दितः सम्मर्दितः संचू र्णितः। श्रीकृष्णपादाभ्यां शिथिलितसर्वावयव इत्यर्थः। तादृक् कालियः तदाख्य उरगः यस्यां तथोक्ता। तथाविधा कलिन्दजा कालिन्दी यमुनानदीव। कलिन्दात् तदाख्यपर्वताज्जायत इति विग्रहः। 'पञ्चम्या मजाता' विति डः। आसीत् बभूव। तुरुष्केभ्यः कष्टाननुभूयानुभूय वीरकम्पराजानुग्रहेण तुरुष्कवधादिदानीं नष्टभया दक्षिणदिशा भयमप गतमिति जाताश्वासा संप्राप्तामागन्तुकीं दुस्थितिं परित्यज्य पूर्वां स्थितिमनुभवन्ती, यथा वा दवाग्निना प्रदग्धा परितप्यमाना तत्प्रश मनेन पुरास्थितिमुपलभ्य मोदते वनलक्ष्मीस्तद्वत्। यथा वा ग्रहणेन नष्टशोभा शुद्धमोक्षानन्तरं महतीं पूर्वां शोभामापाद्य नन्दते गगनवीथी तद्वत्। यथा वा – कालियेन समुद्वान्तविषेण महतीं बाधामनुभवन्ती कृष्णकृतदण्डनेन दूरापास्तकालियोरगा पूर्वां स्थितिं संप्राप्य हृष्यति कालि

न्दी तद्वदित्युपमार्थः। अत्र सर्वत्र स्वस्यागन्तुकमहोपद्रवदुस्थितिपरित्याग पूर्वकसहजस्थितिलाभेन संप्राप्ताऽनन्दता सदृशतया वर्णिता। नूतनतया समुपलब्धं सुखं न किमपि। दुःखहेतोरपनयनेन पूर्वस्थितिलाभादेव तल्लाभात्। सिद्धसाधनतादोषाक्रान्तत्वेन नूतनतया तस्यानभिलप्यमाण त्वाच्च। लोके यथा महान्तं सुखमनुभवन् जनो मध्ये काले संप्राप्त महादुःखस्तादृशदुःखहेतोरपनयेन पूर्वां दशामधिगम्य महान्तं प्रमोद मनुभवति तद्वदियं दक्षिणदिशाऽपीति परमार्थः। एकस्यैवोपमेयस्य बहूपमानोपादानमत्रेति मालोपमाऽलङ्कारः॥

§मधुरापुरीविजयलक्ष्मीपाणिगृहीतेः कम्पराजस्य तत्पट्टाभिषेक महोत्सवमभिवर्ण्य मङ्गलान्ततया महाकाव्यमिदं परिसमाप्यत इव —

**हतावशिष्टानथ वैरियोधान्**
**संरक्ष्य पादप्रण[तान् शरण्यः।**
**कृताभिषेकः प्रशशास मेदिनीं**
**दिवं मरुत्वानिव कम्पभूपतिः ]॥ ॥ 42 ॥**

**हतेति॥** अथ अनन्तरम् तुरुष्कराजे हते मधुराविजये संसाधिते तदुत्तरकाल इत्यर्थः। शरणे रक्षणे साधुः प्रभविता शरण्यः रक्षकः। 'तत्र साधु' रिति यत्प्रत्ययः। कम्पभूपतिः वीरकम्पराजः कर्ता। हताः हिंसिताः नाशिताः अवशिष्टाः शेषाः हननक्रियायामुप युक्तेभ्यः इतराः तान्। पादयोः चरणयोः प्रणतान् आनतान् पादौ

§ मधुरायामित्थं पट्टाभिषिक्तोऽप्ययं स्वाश्रिताभ्यां पाण्डचचोलाभ्यां तद्राज्यं दत्वा स्वानुजं कम्पराजं काञ्चीपुर्यां संस्थाप्य बुक्कराजानन्तरं हम्पीविजयानगर साम्राज्यसिंहासनमध्यतिष्ठदयम्। सोऽयमेव द्वितीयहरिहर इति चरित्रकारैरभा णीति परिशोधनेन विज्ञायते। परिशीलयन्तु विज्ञास्सहृदयभावेन॥



नमस्कुर्वतः कृताञ्जलीन् शरणार्थिन इत्यर्थः। तान् वैरियोधान् वीरान् शात्रवान्। संरक्ष्य परिपाल्य। तेषामभयदानेनेत्यर्थः। "न च हन्यात् स्थलारूढं न क्लीबं न कृताञ्जलिम्। न भीतं न परावृत्तं सतां धर्ममनुस्मरन्" इति मनुना कृताञ्जलिवधनिषेधस्मर णात्, "जित्वा संपूजयेद्देवान् ब्राह्मणांश्चैव धार्मिकान्। प्रद द्यात्परिहारांश्च ख्यापयेदभयानि च" इति विजयाङ्गत्वेनाभयदानस्य विहितत्वाच्चेति भावः। तादृशस्सन्। कृतः निर्वर्तितः स्वकुलपुरो हितादिभिरित्यर्थः। अभिषेकः आनीतसमुद्रजलादिभिर्यथाविधि विहित स्नानमहोत्सवः येन तथाविधः। कृतपट्टाभिषेकमहोत्सवस्सन्निति भावः। मेदिनीम् भूमिम्। कर्म। मरुत्वान् इन्द्रः स्वर्गाधिपतिः 'इन्द्रो मरु त्वान् मघवा' इत्यमरः। सः दिवम् स्वर्गमिव। महता वैभवेनेति भावः। शशास अन्वशात् परिपालयामास। शासु अनुशिष्टौ। लिट्। स्वर्गलोक इव भूलोके महान्ति सौख्यान्यन्वभूवंस्तस्मिन् धर्मोत्तरे राज्ञि प्रजा इति भावः। इत्थं मधुराविजयं संसाध्य वीरलक्ष्म्या राज्यलक्ष्म्या च विराजमानः पित्राज्ञया साकं देशं समुद्दधार वीरशिरो मणिरयं कम्पराजः। अलङ्कारः उपमा। शत्रूणामभयदानं प्रति रामा यणे श्रीराम एवमवादीत्— "मित्रभावेन संप्राप्तं न त्यजेयं कथंचन। दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम्" इति। रामवदयमपि धार्मिकशिरोमणिरिति सूचयन्ती शत्रूणामभयप्रदानमस्मिन् स्वभर्तरि वर्णयामास कवयित्री। धर्मरक्षणं स्वश्रेयोरक्षणमिति तस्मिन् प्रवर्ततेऽयं सदा नायकशिरोमणिः। तस्य परिपाक एव काञ्चीपुरविजयमधुरा विजयादि। धर्मरक्षणं प्रति मनुरित्थं वदति — 'धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः। तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत्" इति। अतएव श्रेयस्कामोऽयं वीरकम्पराजो मधुराविजय मित्थं संसाध्य वीरलक्ष्म्या राज्यलक्ष्म्या च समेतः पित्राज्ञया साकं देशं समुद्दधार स्वकीर्तिमुक्ताहारलतिकया दशदिशस्समलङ्कुर्वन्। अत्र

वृत्तविपरिणामो न जात इति सर्गोऽयं किञ्चिदवशिष्टो वर्तत इव प्रतिभाति ॥

इति
श्रीगङ्गादेव्या विरचिते
मधुराविजयनाम्नि वीरकम्परायचरिते
मधुराविजयसाधनं नाम
नवमसर्गः

* * * *

**इतीति** ॥ सर्वं पूर्ववत्। मधुरायाः मधुरानाम्न्याः नगर्याः विजयः शात्रवाभिभवपूर्वकवशीकरणम्। जि अभिभवे-एरच्। 'कर्तृकर्मणोः कृती' ति कर्मणि षष्ठी। अर्थात्कम्पराजः कर्ता। न च 'उभयप्राप्तौ कर्म' णीति षष्ठी। 'कर्म' णीति षष्ठीसमासनिषेधश्च शङ्क्यः। 'अथ शब्दानुशासन' मित्यादिमहाभाष्यकारवचनात्, 'उभयप्राप्तौ कर्म' णीति प्राप्तिग्रहणसामर्थ्याच्च कर्तृकर्मवाचकयोरुभयोः प्रयोग एव तत्प्रवृत्तेरभ्युपगमात्। इदं च वाक्यं 'मधुरायाः विजयः न त्वन्येषां नगराणाम्' इत्येवंरीत्याऽन्यनगरीनिवृत्तिपरम्। यथा वा 'शब्दानुशासन' मित्यत्र 'शब्दानामनुशासनम्, न त्वर्थाना' मिति। अतएव 'उभयप्राप्ता' वित्यस्य 'कर्मणि' चेत्यस्य चात्राप्रवृत्तिः। शेषषष्ठीयमिति यद्युच्यते तदा शङ्कासमाधानयोरेव न प्रसक्तिः। तस्य साधनम् संपादनम् तुरुष्कराजसंहरणेनेति भावः। नामेति प्रसिद्धौ। तेन सुविदित इत्यर्थः। अनेन तदङ्गतया नायकप्रतिनाय



कयोस्तत्सेनयोरुभयोरपि वर्णितं यद्यपि युद्धं नैव तदकथनं दोषाय। तादृशः। नवमः नवानां पूरणः नवसंख्यापूरकः। पूर्ववत् डट्। मट् च। (सर्गः इति समाप्तः) इति तु विशेषः॥

इति
श्रीपरमेश्वरीकृपासमुपलब्धशास्त्रसाहितीवैदुष्य
'साहित्यालङ्कार' 'विद्वत्कवीशान'
**पोतुकुच्चि सुब्रह्मण्यशास्त्रिणा**
'काव्यकलानिधि' 'महीशूरमहाराजास्थानमहाविद्वत्कवि'
श्रीचिदम्बरशास्त्रिणां भागिनेयेन विरचितया
**भावप्रकाशिका**ख्यव्याख्यया समलङ्कृतायाम्
श्रीगङ्गादेव्याः कृतौ मधुराविजये महाकाव्ये
मधुराविजयप्रशंसा नाम
**नवमसर्गः**

मूकस्य भाषणं काण दर्शनं पङ्गुलङ्घनम्।
यत्कृपालेशतस्साध्यं किन्त्वशक्यं तदाश्रयात्॥

श्रीपते मद्यशोमूर्तिं कृतिमेतां भवत्प्रियाम्।
न्यस्तां तावकहस्ताब्जे पालयाचन्द्रतारकम्॥

मङ्गलं महत्
॥ समाप्तम् ॥

* * * *

*

# मधुराविजयस्य

## मातृकावर्णक्रमेणानुक्रमणी

### ( अ )

3)





( क )



( ज )







# संस्करणीयाः संस्काराश्च

| संस्करणीयः | संस्कारः | पत्रम् | पङ्क्तिः |
|---|---|---|---|
| | A | | |
| प्रतिज्ञां | प्रतिभां | 1 | 8 |
| त्यप्यपि | त्यपि | | 16 |
| व्यथ | व्यध | | 25 |
| चाप | चापनाद | 7 | 25 |
| कुलध्वनिः | रुतानि तानि | | 2 |
| रुयामि | रुयायामि | 8 | 4 |
| सोऽयं भणिति | सोयं | 10 | 21 |
| सर्वधा | सर्वथा | 18 | 18 |
| तमकः | तमका | | 17 |
| | B | | |
| attrocities | atrocities | 41 | 1 |
| Ramayana | Ramayana, | | 3 |
| muslim | Muslim | | 9 |
| alround | alround, | | 22 |
| B.A.B.L. | B.A.,B.L., | | 28 |
| Cidananda | Chidananda | 43 | 19 |
| Commentaror | Commentator | 45 | 10 |
| P.H.D. | Ph.D. | | 13 |
| Krishnamacharya | Krishnacharya | 46 | 5 |
| Poet, | Poet | | 6 |
| Vykaarana | Vyakarana | 47 | 7 |
| Krishnamacharya | Krishnacharya | | 14 |
| sanskrit | Sanskrit | 48 | 7 |
| Often items | Oftentimes | | 21 |
| often time | oftentimes | | 23 |
| grammer | grammar | | 24 |
| sanskrit | Sanskrit | | 27 |

| | | | |
|---|---|---|---|
| sanskrit | Sanskrit | | 28 |
| Some times | Sometimes | 49 | 9 |
| does't | doesn't | | 13 |
| meaning | meaning, | | 13 |
| state craft | statecraft | | 17 |
| a d | and | 53 | 18 |
| d ubtful | doubtful | 54 | 20 |
| sirking | striking | 55 | 7 |
| Kancipuram | Kanchipuram | 56 | 26 |
| on | of | 57 | 6 |
| Sanskri | Sanskrit | | 13 |

C

| | | | |
|---|---|---|---|
| चिन्त्यमानेन | चिन्तयमानेन | 5 | 11 |

D

| | | | |
|---|---|---|---|
| योग | योगो | 3 | 8 |
| मका: | तिमका: | 6 | 3 |
| व्य.ख्यात् | व्याख्यत् | 10 | 12 |
| ख्यायाम् | ख्याभूमिकायाम् | 10 | 18 |
| सर्वधा | सर्वथा | 16 | 20 |
| स्तुवति | नुवति | 17 | 20 |
| श्रियते | श्रीयते | | 17 |
| तदगुरु<br>कालागुरु<br>कृष्णाग | तदगरु<br>कालागरु<br>कृष्णागु } | 23 | 23 |
| कर्पूर:<br>खण्ड: | कर्पूरा:<br>खण्डा: } | 38 | 6 |
| शतृ | शतु | 44 | 16 |
| विश | विंशति | 48 | 6 |
| स्मित् | स्मिन् | 71 | 25 |
| रजा | राजा | 82 | 10 |
| नरु | निरु | 86 | 10 |



| | | | |
|---|---|---|---|
| विर्ष्णि | विष्णुं | 89 | 18 |
| तद्रूपेण | तद्रूपया | 91 | 11 |
| दामनी | दामनि | 97 | 18 |
| मर्थ | मर्ध | 100 | 18 |
| स्पश | स्पर्श | 104 | 19 |
| क्रम | क्राम | 111 | 16 |
| राज्ञि | राजे | 111 | 19 |
| वेदा इति " | वेदा " इति | 114 | 25 |
| चीयन्त | चयन्त | 116 | 7 |
| चक्र | चक्रव | 124 | 7 |
| क्रया | क्रिया | 126 | 2 |
| भिाव: | भाव: | 126 | 9 |
| राजान: | राजा: | 151 | 20 |
| भवयते | भावयते | 157 | 7 |
| नवा | निवा | 157 | 26 |
| र्हणि | र्हाणि | 175 | 16 |
| राजभि: | राजैः | 198 | 12 |
| द्वितीय | तृतीय | 202 | 12 |
| त्साहि | त्साही | 230 | 14 |
| अथ | अध | 232 | 9 |
| त्यहुः | त्याहुः | 233 | 16 |
| एक्रदा | एकदा | 236 | 23 |
| मजहत | मजिहत | 239 | 4 |
| पुमन् | पुमान् | 240 | 9 |
| वयि | वयवि | [illegible] | 20 |
| अयु | आयु | 242 | 5 |
| अश्वीयम् | आश्वीयम् | 249 | 23 |
| कणः | क्रणाः | 251 | 13 |
| कन्ति | कान्ति | 252 | 14 |
| प्रण | प्राण | 252 | 19 |

| | | | |
|---|---|---|---|
| सेसु | सेषु | 252 | 20 |
| राजभि | राजै | 264 | 25 |
| व्यार्ध | व्यार्ध | 271 | 4 |
| चया | चाया | 372 | 12 |
| सरितुं | सर्तुं | 384 | 16 |
| नीम | नीम् | 393 | 4 |
| तादृशी | तादृश्यौ | 415 | 5 |
| दर्घ | दीर्घ | 425 | 11 |
| स्तमा | स्तमो | 431 | 11 |
| उदय्यत | उदाय्यत | 435 | 15 |
| तारकानि | तारकाणि | 48 | 10 |
| शुम्रम् | शुभ्रम् | 450 | 17 |
| मगाङ्क | मृगाङ्क | 461 | 4 |
| खमु | मुख | 463 | 10 |
| काष्ट | काष्ठ | 4 70 | 10 |
| प्रचाव्य | प्रच्याव्य | 474 | 6 |
| सतप्तन्तु | सप्ततन्तु | 474 | 24 |
| सदृश | तत्सदृश | 490 | 13 |
| खड्ल | खड्ग | 491 | 19 |
| व्यधा | व्यथा | 503 | 13 |
| किञ्च | किञ्चि | 514 | 25 |
| अप्राप | प्राप | 521 | 12 |
| स्फुलिङ्गाः | स्फुलिङ्गा | 532 | 13 |
| प्रर | पर | 534 | 15 |
| अभ्रश्यत | अभ्रश्यत् | 550 | 14 |
| | E | | |
| ममुष्य | मुपेत्य | 4 | 2 |





:o: